# विशिष्टाद्वैतसिद्धिः

# VISISHTADVAITA SIDDHI

BY

PANDITARAJA

T. TATACHARYA M. O. L

TIRUPATI

"सन्त श्रीरङ्गपृथ्वीशचरणत्राणशेखरा ।
जयन्ति भुवनत्राणपदपङ्कजरेणव ॥"

# विशिष्टाद्वैतसिद्धिः

# VISISHTADVAITA SIDDHI

BY

PANDITARAJA

D. T. TATACHARYA M. O. L

TIRUPATI

# विषयाः

[ चिदचिदशरीरकब्रह्मसिद्धेः सम्भविधानुपपत्तिपरीक्षायाः

भरस्यस्य च क्रमशः सौकर्यविरहात् यथोद्देशमत्र न योजिताः ।
आङ्गलभाषामयस्य द्वितीयसम्पुटस्यान्ते योजयिष्यन्ते ]

अस्य ग्रन्थस्य काश्यां मुद्रणसविधानशोधनभरं स्वीकृतवान् अस्मत्प्रियसुहृत् विख्यातवैदुष्यः श्रीनीलमेघाचार्यः प्रथम 'फार्' मुद्रणसमनन्तरमेव अतर्कित कालविशेषो बभूवेति विषीदामः । अनन्तरं प्रयाग विश्वविद्यालये द्राविडभाषाध्यापकेन अस्मत्प्रियभागिनेयेन आयुष्मता V S रङ्गनाथेन मीमांसाशिरोमणिना (M A, B O L) समारूढः निर्व्यूढश्च । तस्मै समग्रामाशिषं प्रयुञ्ज्महे ।

---

# शोधनिका

[ प्रथमं इमानि शोधनानि तत्र तत्र कृत्वा ततः परं ग्रन्थावलोकनं कार्यमिति प्रार्थना ]

| पृष्ठ | पङ्क्ति | |
|---|---|---|
| 2 | 21 | alone in the sense |
| 3 | 26 | the concerned |
| 4 | last | One year |
| 6 | 4 | The |
| 7 | 13 | He |
| , | 7 | blunders, |
| 8 | 9 | He |
| 13 | 22 | आत्मतत्त्वमनपेक्षित तथापि |
| 14 | 4 | स्यात् । न । |
| 16 | 5 | धूमज्ञानेन |
| 1[illegible] | 7 | साध्यत्वे हेतुः, न बाधकत्वे |
| , | 15 | न तावित्यत्वमभ्युपेतव्यम्" |
| 20 | 6 | यत्र यदध्यास |
| 29 | 1-7 | प्रथमपङ्क्तौ "अनुष्ठानेऽन्तस्य च" इत्यारभ्य सप्तमपङ्क्तौ "अर्गलभ्यमुत्तरत्र" इत्येतदन्तं अनन्तरपुटे 12 पङ्क्तेरनन्तरं ('सुस्पष्टमेतत्' इत्यतः परं) पठनीयम् । |

| पृष्ठे | पंक्तौ | |
|---|---|---|
| 29 | 11 | शिप् धातो |
| 30 | 3 | अतः पर इदमपि पठनीयम्— |

न्या सू ( 2 1 14 )

"तत्प्रामाण्ये वा न सर्वप्रामाण्यविप्रतिषेधः ।" इति ।

अत्र भाष्य वात्स्यायनस्य—"वीत्ययमुपसर्गः सम्प्रतिपत्त्यर्थे ।

न व्याघाते । अर्थाभावात् ।" इति ।

सम्प्रतिपत्तिः सम्यक् प्रतिपत्तिः । कश्चिद् विशेषविशिष्टतया प्रतीतिः । प्रतिषेधरूपमर्थं स्थित कृत्वा तत्र कञ्चन विशेष बोधयितु वीत्ययमुपसर्गः प्रयुक्त । न तु व्याघात विरोधमर्थं बोधयितुम् । अर्थाभावात्, तस्यार्थस्य इहानन्वयादित्यर्थः । विप्रतिषेधशब्दस्य द्वावर्थौ विरोधः विशिष्ट प्रतिषेधश्चेति । तत्र विरोधार्थस्य इहानन्वयात् अर्थान्तर गृहीत इति भावः ।

क्रव्यादेभ्य इव भूतानामदान्तेभ्यः सदा भयम् ।
तेषा विप्रतिषेधार्थं राजा सृष्टः स्वयम्भुवा ॥

इति महाभारतश्लोकोदाहरणपूर्वक अर्थान्तरं नवीनकोशकाराश्च दर्शयन्ति । न्यायवार्तिक च —"वीत्ययमुपसर्गः विशेषप्रतिषेधे । न व्याघाते" इति ।

| पृष्ठे | पंक्तौ | |
|---|---|---|
| 32 | 5 | प्रतिज्ञात्वेन |
| 32 | 11 | इति , इति |
| 33 | 6 | कारण |
| 36 | 10 | सिद्धिनाम्नीं |
| 36 | 17 | अशक्यमि |
| 40 | 6 | भगवता |
| 45 | 6 | was a |

| पुटे | पंक्तौ | |
|---|---|---|
| 47 | 5 | form |
| ,, | 9 | these |
| ,, | 11 | all. |
| ,, | 20 | effects |
| 48 | 5 | sat |
| 48 | 25 | Is it that |
| 49 | 20 | Soul, |
| 51 | 27 | existence |
| 52 | 7 | by this 'only one'. It was |
| ,, | 13 | Creation |
| 53 | 2 | expression, the |
| 54 | 25 | contrasts |
| 55 | 16 | requires |
| 56 | 12 | White |
| ,, | 16 | 'This" |
| ,, | 25 | intelligent |
| 57 | 4 | these |
| 60 | 27 | and the |
| 67 | 16-17 | with full life |
| 69 | 6 | unwonted |
| 81 | 17 | मपागात् |
| 83 | 20 | permanent |
| 85 | 10 | with you |
| ,, | 26 | attacks,it |

| पुटे | पङ्क्तौ | |
|---|---|---|
| 86 | 2 | Upanishads |
| 87 | 13 | pain factors |
| „ | 21 | accord |
| „ | the last | bound |
| 88 | 13 | Sankhyas |
| „ | the last | how |
| 92 | 1 | eternal |
| 93 | 12 | world, such Brahman as is |
| „ | 22 | woefully |
| „ | the last | and two |
| 94 | 11 | imagine |
| 95 | 10 | infinitum |

---

अन्यः

| पुटे | पङ्क्तौ | |
|---|---|---|
| ३ | १० | केवलदृश्यत्वदस्य |
| १२ | २४ | -वाच्यस्य |
| १८ | १२ | -असम्भव उच्येत । |
| २० | २ | -अनुविद्धत्वेन |
| „ | ६ | च । |
| „ | १८ | अत्रा |
| २१ | १२ | तस्या |
| २७ | २१ | -दूषणम् । |
| ३० | ६ | सन्नित्यनन्याभिलप्यत |

| पृष्ठ | पं० | |
|---|---|---|
| ३१ | ६ | वर्तत इति । |
| ,, | १६ | उपलभ्यते, |
| ,, | २१ | -बाधाभाव । |
| ४२ | १२ | स्वरूपत्वात् |
| ,, | २२ | अब्रह्मात्म |
| ४३ | २१ | वस्तुनो |
| ४६ | ५ | बाध्येत |
| ,, | ८ | दुस्समाधान |
| ,, | १२ | अविरोधेन |
| ४७ | ५ | नायं सर्पः |
| ४९ | २० | शब्दानुप |
| ५० | ७ | यजमानाभेदा |
| ५१ | ५ | निश्चितमात्रे |
| ५३ | १० | अनुदयात् |
| ५४ | १ | स्वतः |
| ५५ | ४ | असत्त्वानधि |
| ,, | ९ | शुक्तिरूप्यवत |
| ५६ | १० | -अभाववृत्तित्वात् |
| ,, | २५ | ११ परमार्थ |
| ५७ | १४ | रिक्तत्वव्या |
| ,, | २३ | १६. ह्रस्वत्व |
| ५८ | १ | मसद्विलक्षण |
| ,, | २१ | जानीम· |
| ५९ | १३ | द्रव्यत्वसमानाधिकरणत्वात् गुणाश्रयत्वात् |

| पृ० | पङ्क्तौ | |
|---|---|---|
| | | भाससाम्य च । मोक्ष |
| ,, | १४ | विषयस्वत्वात् |
| ६० | ५ | प्रतियोगि प |
| ,, | १० | धर्मिको |
| ६१ | १ | प्रपञ्च |
| , | ३ | प्रपञ्चस्य च |
| ,, | २१ | एवति एतद् |
| ६७ | ३ | ग्रहणमवश्य |
| ,, | ११ | मन्यथाना |
| ६६ | ६ | 'सूचस्त्वाभावाच्च' इत्यतः पर एव पठनीयम्—वस्तुतस्तु स्वच्छद्रव्यान्तवर्तित्वेन गृह्यमाणस्य बिम्बस्यैव प्रतिबिम्बत्वात् तत्र ग्रहणे विषयतया ऽवच्छेदकस्यान्तर्वर्तित्वस्य बिम्बे स्वरूपतोऽविद्य मानस्य वक्ष्यमाणरीत्या प्रयोजकत्व वा बिम्ब मिथ्यात्वापादकत्व वा न भवतीति ज्ञेयम् । |
| ७१ | १२ | उपलक्ष्यज्ञान |
| ,, | २१ | आपतत |
| ७२ | १७ | विषयि ज्ञानम् |
| ७३ | ८ | सत्यत्वापि |
| ७७ | १२ | तद्बाधक |
| ७६ | ११ | अनुपपत्ते स्या |
| ,, | १७ | सत्यत्व |
| ८२ | ८ | अतिरिक्ता |
| ८१ | ८ | उर्कायग्ना |

| पृष्ठ | पङ्क्ती | |
| --- | --- | --- |
| १२४ | १६ | स्थितावपि। |
| ,, | १९ | अधीन। |
| १२६ | २२ | च एवं |
| १३० | १२ | अस्मीति |
| १३१ | ३ | उपासनं |
| १३२ | ६ | त्यात्। |
| ,, | ,, | कर्तारं पितर्यपि |
| १३५ | १० | मनिष्ट |
| १३७ | ८ | प्रवृत्तिपक्षस्य |
| १३८ | १० | अवच्छिन्ना या |
| १४४ | १० | तथा च |
| १४७ | ११ | तदानीम् |
| १५० | १४ | पूर्वोत्पन्नविषय |
| १५२ | १९ | तद्बाधकत्व वाक्यत्वस्यैव हानेः। |
| १५४ | ११ | तत्फलभूत |
| १५७ | ५ | चन्द्रः चन्द्रत्व |
| १५९ | २ | सम्बन्ध्येव |
| ,, | १४ | साधनविवक्षणात् |
| ,, | २४ | वाच्यतावच्छेदकत्वात् |
| १६६ | १५ | अयमिति। |
| १६७ | ११ | त्यागेन |
| १६७ | २४ | किञ्चित्स्वरूपा |
| १६९ | ७ | सपक्षस्य |
| १७० | ४ | घटस्य महात्व |

| पृष्ठः | पंक्तौ | |
| --- | --- | --- |
| १७० | २३ | प्रमाणत्वेन |
| १७४ | १६ | निर्गुणश्चेति |
| १७६ | १ | बृह |
| १८५ | १४ | -धारणात् । |
| १८५ | २० | हि स्थानवगाहित्वा |
| १९९ | ४ | प्राप्नुयामिति । |
| ,, | १४ | इदमा |
| ,, | २४ | वान्यत्वात्, |
| २०० | २२ | पारमार्थिकमेव । |
| | २३ | प्रति कारणे अचिदंश एव कारणम्। एव चेतनांश प्रति |
| २०८ | २३ | ज्ञानत्वात् |
| २०९ | ६ | तत्र । |
| २१४ | १६ | कलहोद्धुरता |
| २१५ | २५ | तथा च |
| २१६ | १० | -न्मायिकी |
| २२० | १३ | -वकाश । एतेन |
| २२५ | २ | -मापाद्यते |
| २२६ | ७ | जीवाना मिथ, |
| ,, | ६ | -सिद्धमिद |
| २२८ | २० | फलं, |
| २३३ | १ | -कत्वात् । |
| ,, | १६ | भूतस्तयोस्तु |
| २३५ | १६ | नाद्यः । |

| पृष्ठः | पङ्क्तौ | |
|---|---|---|
| २३६ | ४ | च"यनत्वात् । |
| २३६ | २ | स्थिते च |
| २४० | १७ | मनुरभव |
| २५५ | १६ | ज्ञानात् ' परम |
| २५६ | ८ | तदि चिद |
| ,, | २० | बुद्धेर्गुणेन |
| ५७ | १५ | श्रुतिमित |
| ६० | १७ | प्राक्तने |
| २६१ | १६ | न्वयव्यतिरेकवशात् । |
| २६६ | १४ | मुक्त्यु पाय |
| २७३ | ८ | निमित्तस्यैव |
| २७४ | ४ | सौनिकाः । |
| २७६ | ८ | ज्ञानवत्त्व |
| ,, | १८ | वेदनानन्तरं |
| २८० | ३ | इत्यवोचाम । |
| २८१ | १४ | अज्ञातत्वात् । |
| ,, | १७ | मूर्तिमुक्ति |
| २८३ | २१ | भुङ्क्ते |
| २८४ | १४ | न च स |
| २८५ | ८ | उच्यत, न |
| २९१ | १६ | प्रमाणा तरा |
| २९२ | ६ | सधावस्थ |
| २९८ | ८ | महीमात्मन |
| ३०२ | ११ | सूचकत्व |

| पुटः | पङ्क्तौ | |
|---|---|---|
| ३०३ | २ | -अनुपपत्तेः। |
| ,, | ५ | शदेरु च |
| ,, | ,, | शुचेर्दृश्च |
| ३०६ | २० | प्रसिद्धेः। |
| ,, | १४ | प्रतिपाद्य दहर |
| ३१२ | २४ | चेन्, द्वे |
| ३१४ | १ | तथैव |
| ३१५ | ८ | स्वावलोकितत्व |
| ३१६ | ५ | मवोचन्। |
| ३२० | २३ | - मपीदम्। |
| ३२६ | ३ | परिणामादिभाषा |
| ३२७ | १७ | नभिप्रेत |
| ,, | २३ | -यद्यपि |
| | २५ | विरोधि, |
| ३२९ | १९ | शान् |
| ३३५ | ६ | ब्रह्मण एव |
| ३४० | १४ | वाजिनानिवेश |
| ३४२ | ५ | कृष्णादीना गोत्वादिविशिष्टाना |
| ३४३ | ११ | इति। पूर्वा |
| ३४५ | ६ | 'न किरिन्द्र |
| ३४८ | १८ | सर्वेषु वेदेषु |
| ३५८ | ६ | पूर्वोत्तरवत् |
| ३६३ | ११ | अभ्यवहार ( राघ ) यम्। |
| ३७४ | १२ | इति। बहूनां |

| पृष्ठ | पंक्ती | |
|---|---|---|
| ३७८ | ४ | पदपारम्यागस्य |
| ३८० | ५ | पर्यायेण |
| ३८४ | १६ | अ तगुं णामित्यस्य |
| ३८५ | १५ | त्वधिष्ठान |
| ३८६ | ८ | स विशेषतो |
| ३९२ | २२ | विपयाणि |
| ३९९ | १० | ऐकतन्त्र्य |
| ,, | २४ | -कृत्स्नता |
| ४०४ | २५ | सगुणत्ववाद |
| ४०५ | ४ | प्रतितन्त्र |
| ४०८ | १३ | -मुखेनैव । |
| ४१ | १७ | मारण |
| ४११ | ३ | ब्रुवन्ति |
| ४१६ | १५ | तथैव |
| ४१९ | १० | सम्यग्धवादित्व |
| ,, | २१ | -विगमात् |
| ४२० | ६ | -मन्त्रादेश्यम् |
| ४२१ | १ | -भक्षाभेद |
| ४४० | ५ | सम्पन्न |
| ,, | १६ | आदर्शो न्याय्य, आवश्यकः । |

श्रीः

# Preface

My acquaintance with Advaita is as old as that with Visishtadvaita When I began in 1919 studying the latter as expounded by Ramanuja in his Sri Bhashya, it may be said, I began studying also the former, since the work elaborately and in a detailed manner deals with this too, though for the sake of criticism Seen in the light of Ramanuja's criticisms Advaita appeared a weak and absurd philosophy. I wanted to know whether it was really so There arose a strong desire in me to satisfy myself as to whether Ramanuja's criticisms against Advaita were quite reasonable and justified and see whether it is not possible to defend it against them. With this end in view I had equal interest in understanding both the philosophies and read not only all the important works on Visishtadvaita but also those on Advaita

The question of Brahman's contact with maya or avidya, or to put it in another form, the question of *maya* or *avidya* eclipsing Brahman the absolute, is a very difficult one. It is absolutely impossible for me to connect with each other the two concepts: The Absolute, the Nirvisesha, Brahman and the false *maya* Saying this I am obviously confessing that I belong to the group of men whom Amalananda, the author of the Kalpataru, calls *manda*, meaning those of small intelligence. But I have made honest and sincere at-

tempt to find the nature of conception of Brahman in contact with *avidya* on the part of the most intelligent authors on Advaita So far as I could see none of them has explained the point in a convincing and satisfactory manner I am almost convinced that none of them has any direct and correct answer to the question. All of them are fully aware of the difficulty but taking the point for granted propound Advaita

Brahman the absolute as conceived and accepted in Advaita is not open to any change It is absolutely changeless It cannot change itself and it is uncapable of being affected in any way by any thing else And there is nothing else than itself which could affect it It is the one, secondless and attributeless reality How could the pure Brahman become an impure one?

Advaitins say in reply that *avidya* and its contact with Brahman are beginningless What is meant by this is this: No doubt Brahman is pure in itself But there was no time in the past when it remained alone, in the sense "without *avidya* It should not be thought that at first Brahman was in its perfect purity, and later on avidya came to it *Avidya* is always there It is as beginningless as Brahman itself

Some appear to hold the view that one *avidya* contacting Brahman is responsible for another *avidya* and this similarly in contact with Brahman is responsible for yet another *avidya* and in this way there is a long and beginningless chain of *avidya* Now we have got a series of *avidyas* instead of one. But the point

is how could there be any *avidya* at all occuring to Brahman which is eternally intrinsically and absolutely pure and changeless. Brahman as such cannot have any avidya happening to it. Where is the question of a previous *avidya* being responsible for a succeeding avidya ?

*Avidya*, also called by many as *maya* and positive ignorance, pertaining to Brahman is said to evolve itself into the world and all phenomena in it. It is not as if Brahman comes in contact with that kind of avidya already existing somewhere. It is one imposed on itself by Brahman Is the absolute Brahman capable of having any thing new happening to it ? If the answer is 'yes' then that capability will be a 'second reality and it will kill Advaita If on the other hand the answer is, as it should be according to Advaita, 'No' then how the Advaita Brahman could impose on itself *avidya* could never be explained. The postulation of a previous avidya to explain the subsequent one is absolutely useless For, the criticism applies equally to that also.

Even supposing there is some primary *avidya* it cannot help us out of the difficulty The Sankhya view about the ultimate cause of the world is rejected by Badarayana, the author of the Vedanta sutras and concerned sutras are explained by Sankara faithfully and correctly. The *purusha* accepted by Sankhya is just like the Advaita Brahman, incapable of any will or movement or action. Prakriti or matter is unintelligent ; it cannot take any initiative towards the creation of

the world How could the world come into existence? Just the same is the case with Advaita Brahman and *avidya* Brahman is absolutely indifferent It can neither influence nor be influenced by any thing else Avidya like matter, cannot act by itself So neither Brahman nor avidya could be the cau e of the world

There is however a difference between *prakriti* matter, accepted in Sankhya and *avidya* accepted in *Advaita* whereas the former has its own reality, its own existence, independent of *purusha* the latter owes itself to Brahman There could be no *avidya* unless Brahman errs Can Brahman ever err? That which errs can not be Brahman, and that which is Brahman can not err This fact renders the Advaita philsophy more irrational and more difficult to understand than Sankhya *Avidya* is beginningless just like Brahman may be an answer to the question -"When did avidya catch hold of Brahman ?' and not to the question— "how could any *avidya* happen in Brahman ?" Avidya in Brahman would be just like darkness in the midday sunshine One is as impossible as another

Such considerations as these forced upon me the conclusion that Ramanuja was justified in criticising Advaita and it is impossible to defend it

In the old princely state of Pudukkottai which con ducted a *Vidvatsabha* during *navaratri* festival every year, the Dewans used to invite all the pandits to their residence just in the evening preceding the *Sambhavana* day and listen to the speeches delivered by some of the eminent *vidvans* one year the Dewan

who was a follower of Advaita asked the same question as we considered above: How could the pure Brahman get affected by *avidya* or maya? He just wanted to know how it was possible. There were many great Advaita scholars in the gathering. One of them began to say something, first mentioning some example The Dewan at once intervened and said ' Let us consider examples afterwards I want to know first how it is possible for the absolute Brahman to be caught by *avidya*." Having waited for one or two minutes during which perfect silence prevailed in the hall the Dewan ordered distribution of pansupari. This incident well proved to me that the question is really a very difficult one and none of my Advaita friends who were very many help me to understand it

I am a writer of books from my young age and have written a few since. I could have written a book also on Vedanta putting forth my thoughts on Advaita But I refrained lest my advaita friends should feel unhappy and get displeased with me. These are days when Hinduism, the most ancient religion in the world and a religion vitally connected with the life of people all over the world, is fast disintegrating and threatening us with its total disappearance It behoves one and all of us, that belong to the great religion, to be completely united and find ways and means to save it from the impending peril In the circumstances it would be utter folly on any body's part to be in any way responsible for split and widening the gap among us It was this idea that prevented me

from writing any work criticising others philosophy

To refer to one more incident that took place in the same Pudukkottai *vidvat sabha*, but in another year the Dewan desired that three scholars representing the three schools of Vedanta might say something about their respective philosophy The Advaita gentleman said

> "Take the *sruti* text '*tat tvam asi*' Do'nt twist it Accept what its natural and clear meaning is Does it not tell us unequivocallly that *jiva* is identical with Brahman ? What is it but Advaita ? No doubt part of the word '*tat*' as well as *tvam*' is to be abandoned in order to warrant the identity, but it is inevitable When we ask our servant to bring the resting plank he will first get it vacated and then only bring it to us

The gentleman did not at all refer to such *Sruties* as *bhokta bhogyam preritaram ca matva*, whose meaning is clear enough to be understood even by an ordinary man and which insist on our knowing jiva, matter, and Brahman as entities quite distinct and different from each other, as if they do not exist at all. Besides his meaning of the text *tat tvam asi* is not a natural one Jiva is an individual soul undergoing all sorts of sufferings but Brahman is the Supreme Soul the universal soul absolutely free from all pains and sorrows. How could there be any identity between the two ? To get over this difficulty he had to give a forced and unnatural meaning to both the terms *tat* and *tvam* Regarding the example it may be pointed

out that a servant, if and when asked to bring the hand box of cash will never do so after opening it and removing all its contents and thus emptying it I was the next speaker But I did not say anything criticising his speeech on these lines I simply avoided making any reference to it and spoke on some uncontroversial general subject and finished my speech. Such has been my disinclination to write or say any thing criticising Advaita

M M Ananta Krishhna Sastri was a friend of mine and we knew each other since very many years back To write some thing attacking the Sri Bhashya and Visishtadvaita was his hobby. he was a hasty writer with little or no care for correctness of statements and worth or merit of the writings Parthasarathi Misra most probably a contemporary of Vachaspati Misra, is a famous Mimansa author Sastra Dipika is one of his great and valuable works In it he has subjected Advaita to trenchant criticisms He describes this as the prattling of those that have not studied well the rules of interpretation. In his introduction to this work published by the Nirnaya Sagara Press Bombay Sri Sastri says nothing regarding those criticisms but refutes the Visishtadvaita view that the Purva and Uttara Mimamsas constitute one Sastra,these two being only parts of that whole The two are concerned with the two parts of the Veda relating to Karma and Brahman respectively. So like Veda, Mimamsa which is nothing but a commentary on it is one consisting of two parts Sri Sastri

could not or would not understand this simple question His reasoning was so bad that I felt compelled to write a reply I wrote one with the title "Mimamsa Nyaya Sanchara' which may be found at the end of my Mimamsabhyudaya In that paper too I did not say anything against Advaita His subsequent works were too full of mistakes and blunder to keep me silent I however resisted the temptation he has written a commentary on the Advaita Vedanta Paribhasha, wherein he frequently criticises the good old commentary by Ramakrishna Dikshita, a profound scholar I began to write a commentary of my own on the Vedanta Paribhasha with a view to make known to the scholarly public the fact that wherever Sri Sastri differed from the old commentator the latter is always correct and the former always wrong Unfortunately the commentary could not be completed and published.

It is a matter for utmost regret and sorrow for all good men, for a well wishers of humani y, that H H Sankaracharya of Kamakoti Pitham is since very long back inducing and encouraging Advaita Pandits to write works refuting Visishtadvai a I fail to understand why at all any advaitin should look askance at the other philosophy I remember to have read somewhere in Sri S Radhakrishnan's work a line like "We are Advaitins in theory Visishtadvaitins in religion and Dvaitins in practice" That should be the attitude of Advaitins towards the other schools of Vedanta All that is

accepted in Visishtadvaita Advaitins may assign to the lower level, that of *vyavhara* and have the satisfaction that the truth their philosophy establishes pertains to a higher level, that of *paramartha* The body and soul relationship—sarira sariri bhava—between the world and Brahman is the hinge on which Visishta dvaita turns If this is accepted as a *vyavhara* reality what is lost to Advaita ? Sankara has not only not rejected this relationship but accepted it as may be seen from a passage of one of his minor works.

Common people are in need of such religion or philosophy as would make them God-fearing and *dharma*-minded, so that they may live a peaceful contented and prosperous life. For achieving this end a God full of auspicious qualities and capable of rewarding the virtuous and punishing the wicked is required and not a qualitiless absolute. Advaitins sole concern should be to get first themselves convinced and then prove that there is a *paramartha* reality other than the *vyavhara* one, and not to attack the other schools of Vedanta.

As soon as I came to know Sri Sastri's ridiculous attempt to criticise Desika's *Satadushani* it appeared to me that if I wrote now a work critically dealing with Advaita, not only I would not be misunderstood and accused of unnecessarily attacking that philosophy but I would be serving it by clearly pointing out the difficult points in it so that competent scholars may seriously consider and make if possible a genuine attempt to explain and elucidate them.

बलेन स्थाणौ पुरुष च पृथक् निश्चिते दोषवशात् क्वचित् स्थाणौ पुरुषत्वं वा पुरुषे स्थाणुत्वं वा अध्यस्यते । एवमध्यस्तं पुरुषत्वं वा स्थाणुत्वं वाऽनृतं भवति । न तु स्थाणुर्वा तद्वृत्ति स्थाणुत्वं वा पुरुषो वा तद्वृत्ति पुरुषत्वं वा । निश्चितप्रमाणभावस्वरूपप्रतीति सिद्धत्वात् । एवमेव आत्मा च अनात्मा च विरुद्धस्वभावौ स्वस्व प्रमाणबलात् पृथक् सिद्धौ । अथापि अविवेकिना तथा पृथक्स्थितस्य नहंतापादकेन संसर्गविशेषेण अन्योन्यात्मत्वाध्यासो भवति । तत्र अध्यस्तस्य आत्मत्वस्य अनात्मत्वस्य च बाधादनृतत्वेऽपि धर्मिणोरात्मानात्मनोर्वा तत्र विद्यमानयोरात्मत्वानात्मत्वधर्मयोर्वा अनृतत्वं कथमपि न भवति । यथा अहमर्थ आत्मा तथैव तद्वृत्तिज्ञानादिकं च, शरीरादिर नात्मा तद्वृत्तिगुणक्रियादिकं च पारमार्थिकमेव । अन्यथात्वे प्रमाणा भावात् । तथात्वे प्रमाणसत्त्वाच्च ।

अध्यास अविद्यमानस्य आरोप । स्थाणौ पुरुषात्मकत्वं नास्ति । तत् तत्र आरोप्यते अयं पुरुष इति । अस्य अध्यासस्य अविद्यात्वव्य पदेशः विद्याविरोधित्वात् । आरोपितस्य वस्तुनः वस्तुतोऽधिष्ठाने अवि द्यमानत्वात् तस्य तत्र गुणाधायकत्वं वा दोषाधायकत्वं वा नास्तीति युक्तमिदमुक्तम् । परन्तु किमर्थमिदमुक्तमिति चिन्तनीयम् । तत् पर स्तात् । यत्तु

तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमा णप्रमेयव्यवहाराः लौकिका वैदिकाश्च प्रवृत्ताः । सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि ।

इति तन्न । प्रमाणप्रमेयव्यवहारेषु आत्मानात्मनोरितरेतराध्यासस्य पुर स्करणीयत्वाभावात् । सत्यशुक्तिसत्यरजतरूपप्रमेयतत्प्रमाणव्यवहारे यथा शुक्तिरजताध्यासोऽन्यो वा कश्चिदध्यासो न पुरस्करणीयः तथा । कामं पुरुषस्य देहात्मभ्रमोऽस्तु । तत किं नाम देहात्मनो स्वस्वकार्ये

करणप्रवृत्तेर्भविष्यति। आत्मनो हि नियन्तुः स्वशरीरमिन्द्रियाणि च विधेयानि। स यथेच्छति तथा प्रवर्तन्ते। तदिच्छया चक्षुरुन्मीलति। स्वयोग्यं विषयं गृह्णाति। प्रमा जायते। एतदनुकूलयत्नवत्त्वात् आश्रयत्वाच्च आत्मा प्रमाता भवति। अत्र देहात्मनोरितरेतराध्यासस्य कोपयोगः। ननु निस्सङ्ग आत्मा। स कथं देहेन्द्रियप्रयोक्ता भवेदिति चेत् स कथमध्यासे कर्ता भवति। न स कर्ता अध्यासे, इति चेत् कस्तर्हि? देहेन्द्रियादि हि जडम्। न चान्यः कश्चिदस्ति योऽध्यस्येत्। तस्माद्यस्य अध्यासे कर्तृत्वं सम्भवति तस्य तथैव प्रमितावपि तत् सम्भवतीति नाध्याससापेक्षत्वं प्रमातृत्वस्य। प्रत्युत प्रमातृत्वपुरस्कारेणैव अध्यासो भवतीति वक्तव्यम्। यो हि प्रमाता स एव कदाचित् इन्द्रियगतेन विषयगतेन वा दोषेण अन्यदन्यस्मिन् अध्यस्यति। अध्यासकालेऽपि धर्मिविषये स प्रमातैव। यथाऽऽहुः "सर्वं ज्ञानं धर्मिण्यभ्रान्तम्" इति।

पश्वादिभिश्चाविशेष इत्यपि न साधु। पश्वादयो यद्यपि आत्मानात्मविवेकहीनतया प्रसिद्धमुग्धभावाः तथापि तेषां स्वहिताहितप्रमातृत्वे स मुग्धभावः कथमुपयुज्यते। अविवेकोऽन्यविषयः। प्रमितिरन्यविषया। विषयान्तरप्रमितिकर्तृत्वे विषयान्तरव्यामोहो नापेक्ष्यते। तस्मात् "अविद्यावद्विषयाण्येव प्रत्यक्षादीनि प्रमाणानि शास्त्राणि च" इति साक्षाद्विपरीतवादः।

शास्त्रीये च व्यवहारे बुद्धिपूर्वकारी नाविदित्वा आत्मनः परलोकसम्बन्धं अधिक्रियते। तस्यायमध्यासो न सम्भवति। यद्यपि तस्य वेदान्तवेद्यमशनायाद्यतीतं अपेतब्रह्मक्षत्रादिभेदं असंसार्यात्मतत्त्वं लोकान्तरानुभाव्यफलभोक्तृ अनश्वरमात्मतत्त्वमपेक्ष्यत एव। नचेदृशविवेकवतः उक्तविधोऽध्यासः सम्भवी। यत्तु 'ब्राह्मणो यजेत' इत्यादीनि शास्त्राणि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्तन्त इति तन्न। 'स्वर्ग-

कामो यजेत' इति देहात्मविवेकमाश्रित्य प्रवृत्तानां तेषां अविवेकमूलका
ध्यासाश्रयेण प्रवृत्त्ययोगात् । कथं तर्हि ब्राह्मणो यजेतेति । न
आत्मा ब्राह्मणो वा अन्यो वा । उच्यते । ब्राह्मणः ब्राह्मणशरीरक
इत्यर्थः । नन्वेवं गौणः शब्दः स्यात् । शरीरवाचिनां शब्दानां शरीरि
पर्यन्तत्वस्य श्रुतिप्रसिद्धत्वात् । अथापि गौणः स एष्टव्य एव ।
सिंहो माणवक इत्यादिवत् । देहात्मभेदस्य प्रमाणसिद्धत्वेन व्यापकस्य
तस्य निवृत्तौ व्याप्यं गौणत्वमपि निवर्तत इति वक्तुमशक्यत्वात् । 'अन्तु
अन्यशरीरिणः' इति निघण्टुपाठेन हि शरीरात्मभेदः सुप्रसिद्ध इति
ज्ञायते ।

ननु ब्राह्मणशरीरक इत्यर्थो लक्षणया, न तु सिंहो माणवक इतिवद्
गौण्येति चेत् काम तथा । जघन्यवृत्त्यभिप्रायेण तु गौणत्ववाचायुक्ति ।
नन्वारोपितार्थवृत्तित्वं गौणत्वम् । माणवके सिंहत्वमारोप्य तद्वाचितया
प्रयोगात् सिंहशब्दस्तत्र गौणो भवति । एवमात्मनि ब्राह्मणत्वमारोप्य
तद्वाचित्वेन प्रयुज्यमानो ब्राह्मणशब्दोऽपि गौण इति युक्तमिति चेन्न ।
प्रशंसातात्पर्यात् तत्र सिंहत्वारोपोऽभिमतो ज्ञायते । प्रकृते तु आरोपगमक
किमपि नास्ति । अत केवललक्षणैव । अथवा अस्त्वारोपः । तथापि
नायमविद्यारूपो भवदभिमतोऽध्यासः । विद्वदाश्रितत्वात् । न हि सिंहो
माणवक इति वदन् अज्ञो वा भ्रान्तो वा । तथैव ब्राह्मण इति वदन्नपि ।
तस्मादयमध्यासो विवेकमूलत्वाद् विद्यारूप एव नाविद्यारूपः । यस्तु तस्तु
आरोपितब्राह्मणत्ववतः ब्राह्मणशब्दार्थत्वे स्वस्मिन् ब्राह्मणत्वमारोप्य
क्षत्रियोऽपि ब्राह्मणधर्मेषु अधिक्रियेत । अतो ब्राह्मणशरीरक इत्येव
वेदे विवक्षितोऽर्थः बोद्धारोऽपि तमेवार्थं बुध्यन्त इति ज्ञेयम् ।

पुत्रभार्यादिषु विकलेषु सकलेषु वा अहमेव विकलः सकलो वेति
बाह्यधर्माध्यासोऽपि न भ्रमरूपः । पुत्रभार्यादेः आन्ध्ये जाते तद्धस्ते गृहीत्वा
नयन् पुरुषः न हि स्वयमन्ध इति भ्रमितुं शक्नोति । स्वस्य आन्ध्ये जाते

यावद् दुःखं स्यात् तावद्दुःखं जातमभिप्रेत्य तु अहमेव खिन्न इति व्यवहरति। एवं तस्मिन् सर्वसम्पत्समृद्धिमति तस्य यावत् सुखं तावत् सुखमात्मन इत्यभिप्रेत्य अहमेव सुखी इति। 'स्थूलोऽहं, कृशोऽहं' इत्यादौ स्थूलशरीरः कृशशरीर इत्यर्थेन विवक्षितम्। विवेकिना भ्रमासम्भवात्। मूकोऽहं काणोऽहमित्यादौ उपहतत्तदिन्द्रियोऽहमिति मन्यते। उक्तादेव हेतोः। अविवेकिना तु भ्रमः कामं भवति। परन्तु सः शुक्तिरजतरज्जुसर्पादिभ्रमसाधारणात्मा। न ततोऽस्य मात्रयाऽपि विशेषः। अत इह शास्त्रारम्भे अस्य विशिष्य निरूपणं निष्प्रयोजनम्। असङ्गतम्। अभिमतजगदुपादानभूताविद्यासाधनात्समम्।

कामसङ्कल्पादयः आत्मन एव धर्माः। नत्वन्तःकरणस्य। चेतनो हि कामयते सङ्कल्पयति विचिकित्सते अध्यवस्यति च। अतोऽत्राध्यासोक्तिर्न युज्यते। यत्तु "अहम्प्रत्ययिनमशेषप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तं च प्रत्यगात्मानं तद्विपर्ययेणान्तःकरणादिष्वध्यस्यति" इति तत् स्वमतप्रक्रियापन्यासमात्रम्। न विचारसहम्। अहमिति प्रत्ययो यस्य तस्य स प्रत्ययः स्वविषय एव। तस्य अन्यत्राध्यास इति कथमेतत्। अहं जानामीति हि स्वरूपत एव ज्ञानाश्रयो भवत्यहमर्थः। अहं गच्छामि पचामीति शरीरद्वारा गमनाद्याश्रयत्वम्। अविवेकिना तु देहमेव आत्मानं मन्यमानाना भवत्यध्यासः। स तु देहे आत्माध्यासः। अहमिति प्रतीतेः। आत्मन एवाहमर्थत्वात्। अन्तःकरणस्य तु आत्मन्यध्यासः केन प्रमाणेन सिद्ध्यति? न खलु तत् अहम्प्रत्ययि। जडस्य तस्य अहम्प्रत्ययानुपपत्तेः। प्रत्ययस्य चेतनधर्मत्वात्। अहमर्थः अन्तःकरणमेव। अतस्तस्य प्रत्यय उपपद्यत इति चेत् तर्हि तदेव ज्ञातृ कर्तृ भोक्तृ चेति तदतिरिक्त आत्मैव न सिध्यति। कुतस्तस्य तत्र अध्यासः। किञ्च प्रत्यय इति ज्ञानमुच्यते। प्रतीतिपर्यायत्वात्। स कथं जडस्यान्तःकरणस्य भवेत्। अथ अन्तःकरणवृत्तिरेव प्रत्ययः। तद्वचान्तःकरणमेवेति चेत् जडा अन्तः-

प्रतिपत्तिहेतव" इति तन्न। ह्रस्वत्वदीर्घत्वादिप्रतीतेरेव विद्यमानाया-स्तत्र हेतुत्वात्। अविद्यमानाना अन्यथमाणा हेतुत्वासम्भवात्। अविद्य-मानस्यापि हेतुत्वे वह्न्यभाववति पर्वते धूलीपटले धूमभ्रमेण जाताया वह्न्यनुमितेरपि प्रमात्वप्रसङ्गात्। आरोपितधूमजन्यत्वात्। न च वस्तुसता धूमज्ञाने जातत्वात् तत्रापि स प्रसङ्गः समान इति वाच्यम्। धूमप्र-माया एव प्रमात्मकानुमितिहेतुत्वात्।

"ज्येष्ठस्य चानपेक्षितस्य न बाध्यत्वे हेतु। बाधश्चात्र। रजतज्ञानस्य ज्यायस शुक्तिज्ञानेन कनीयसा बाधदर्शनात्" इत्यपि न युक्तम्। ज्यायस शुक्तिज्ञानस्यापि कनीयसा रजतज्ञानेन बाधप्रसङ्गात्। पूर्वं यथायत् शुक्ति गृहीतवतोऽपि पश्चाद् दोषवशात रजतभ्रमसम्भवात्। एतनात्र अपच्छे-दन्यायसङ्गमनमयुक्तमिति ज्ञापितम्। न हि प्रमाणाप्रमाणयोर्विरोधे परस्य तत्र प्राबल्यमुच्यते। अपि तु प्रमाणया सतोरेव द्वयो शास्त्रयो एकत्र पौर्वापर्येण सन्निपाते परस्यैव अनुष्ठापकत्व न पूर्वस्येति।

'येऽप्यहङ्कारास्पदमात्मानमाश्रियत तैरप्यस्य-आत्मन अहङ्कारा-स्पदस्यस्य—न सात्त्विकमभ्युपेतव्यम्" इत्यपि न। जीवात्मा हि न सर्व व्यापी। अपि तु प्रादेशिक एव। शरीरान्तमात्रवृत्तित्वात्। अत 'अहमिहैवास्मि सदने जानान' इति यथार्थ एवानुभव। एव सति आत्मनः अहङ्कारास्पदत्वं कुतो न तात्त्विकम्। यस्य तु देहातिरिक्तात्म विवेको नास्ति तदीये 'अहमिहैवास्मि सदने जानानः' इति व्यवहारे अहमिति देहस्यैव प्रत्ययात् तदीयमेव प्रादेशिकत्वं भाति। जानान इति देह एव आरोपितं ज्ञातृत्वम्। तथा च भ्रममूल अस्मिन् व्यवहारे शुक्ति रजतव्यवहारवत् न गौण इति युक्तमेवेदमुच्यते। विवेकिना तु व्यवहारे वस्तुत जीवात्मन प्रादेशिकत्वात् ज्ञातृत्वाच न गौणत्वप्रसङ्गः। यत्तु "परीक्षका अपि व्यवहारसमये न लोकसामान्यमतिवर्तन्ते" इति तन्न तथा। यदा परीक्षकः कश्चित् 'देहातिरिक्त आत्मेत्यहं मन्ये' इति प्रति-

जानाति तदा अहमिति तेन कोऽर्थोऽभिप्रेतः? न हि देह इति कथमपि युज्यते। नहि प्रत्यक्षानुमानशास्त्रैः नित्यं ज्ञानधर्माणं च आत्मानं निश्चितवता व्यवहारसमये भ्रमो भवतीति अस्ति सम्भवः। एवं निश्चयवन्तो यदि आत्मनः प्रादेशिकत्ववादिनः 'तर्हि अहमिहैव सदने अस्मि' इति मुख्य एव व्यवहार इत्युक्तम्। यदि तु विभुत्ववादिनः तर्हि देहगतं प्रादेशिकत्वं आत्मनि आरोप्य तथा व्यवहरन्तीति ज्ञेयम्। गच्छामि पतामीत्यादिर्हि व्यवहारः देहद्वारकसम्बन्धेनैवोपपादनीयः। तथा अयमपि। श्रोताऽपि यदि विवेकी गौणतयैव तं व्यवहारं गृह्णाति। तत्र वक्तृश्रोत्रोः सम्प्रतिपत्तिः। अविवेकी तु स्वानुरूपं प्रतिपद्यते। तत्र नास्त्येव सम्प्रतिपत्तिः। तावता व्यवहारस्य गौणत्वं न हीयते। आरोपितार्थवृत्तित्वस्यैवेह गौणत्वात्मकत्वात्।

एतेन "आत्मनः अणुपरिमाणत्वे स्थूलोऽहं दीर्घ इति न स्यादि"त्येतत् प्रत्युक्तम्। देहधर्मस्य स्थौल्यादेरात्मन्यारोपेण एव व्यवहारप्रवृत्तेः। अनेन स्वरूपगताणुत्वस्य विरोधाभावात्। एवं सुस्थत्वात् अहमनुभवप्रमाणभावस्य तस्य पूतिकूश्माण्डीकरणप्रयासो निष्फलः। अहम्प्रत्ययमिथ्याभावस्य सर्वप्रवादिप्रथितत्वाभिधानं अयथार्थमेव। श्रुतिस्मृतीतिहासपुराणप्रथितत्वाभिधानमपि तथा। जीवात्मनः प्रत्यक्षसिद्धस्य ज्ञातृत्वकर्तृत्वभोक्तृत्वादेर्निषेधे तेषामशक्तत्वात्। एतन्निषेधेन जीवात्मविलक्षणपरमात्मोपदेशतत्परत्वेन जीवात्मनि ज्ञातृत्वादिनिषेधे तात्पर्याभावाच्च।

अथ यत् मरीचितोयमनिर्वाच्यमिति साधनं तदप्यचारु। तथा हि। मरीचिषु तोयमध्यस्यत इति तावदयुक्तम्। इमास्तोयवत्य इति प्रतीतिप्रसङ्गात्। किन्तु तोयतादात्म्यम्। तोयत्वमिति यावत्। तत्तु सदेव। तोये विद्यमानत्वात्। असच्च मरीचिषु। आसु तोयत्वाभावश्च मरीचित्वरूपः। अस्याग्रहणात् मरीचय इति प्रतीतिर्न भवति। तोयत्वा-

रोपात्तु तोयमिति प्रतीतिः । तोयत्वेन मरीचीनामेव ग्रहणात् धर्मिभूतानां तासां पुरत एव दृश्यमानत्वात् इहेति प्रतीतिः । न तु गङ्गायामिति । एवं मरीचितोयप्रतीतेरन्यथैव समञ्जसतया उपपत्ते अनिर्वाच्यमरीचि-तोये न किञ्चित् प्रमाणम् । नतरां अनिर्वाच्यदेहेन्द्रियादिषु । बाधाभावेन पारमार्थिकत्वस्यैव तेषु दृढप्रतीतेः ।

'तत्रैवं सति तत्र यदध्यासः तत्कृतेन दोषेण गुणेन वा अणुमात्रे-णापि स न सम्बध्यते ।

इत्यध्याससाधनप्रयोजनप्रदर्शनपरं भाष्यं भामतीकार एव योजयति—'तत्त्वा-वधारणाभ्यासः अनादिमपि निरूढनिविडवासनमपि मिथ्याप्रत्ययमपनयति" इत्येतत्तात्पर्यकमिदमिति । इदं भाष्याक्षरानुगुणम् । अध्यस्तेन वस्तुना अध्यासाधिष्ठानस्य गुणरूपो दोषरूपो वा यः कोऽपि विशेषो न भवतीति भाष्यग्रन्थार्थः स्फुटः । तत्र विद्यया अविद्यायाः बाधेऽपि वासनानुवृत्ति-र्भविष्यतीति शङ्कायां वासनाया अपि निवर्तनक्षमा विद्येति समाधानस्य च का नामात्र सङ्गतिः । तर्हि कोऽत्र भाव इति चेत् उक्तमेतत् अध्यास-साधनप्रयोजनप्रतिपादनपरमिदमिति । कुत आत्मनः कर्तृत्वभोक्तृत्वादिक-मध्यासेनोपपाद्यते । पारमार्थिकमेव कुतो नेष्यते ? इत्यत्राह—तत्रेति । पारमार्थिकं चेत् विद्यया न निवर्तेत । अतोऽध्यस्तत्वं वाच्यम् । तदर्थ-मध्याससाधनम् । ननु अध्यस्तकर्तृत्वादेर्निवृत्तावपि तत्कृतो विशेषः आत्मनि स्थास्यत्येव । पुष्पसमुद्गके पुष्पापनयनेऽपि तत्परिमल इव । तथा च मुक्त्यभावप्रसङ्ग इति चेन्न । अध्यस्तेन अध्यासाधिष्ठाने यस्य कस्यापि विशेषस्यानुत्पादनात् । न हि शुक्तिरजतेन शुक्तौ कश्चन विशेष आधीयते । अतो नानुपपत्तिरिति ।

“एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्तृत्व-भोक्तृत्वप्रवर्तकः सर्वलोकप्रत्यक्षः” इति भाष्यम् । शरीरभेदेन अध्यास-भेदादेरनन्तत्वमनुपपन्नम् । देहेन्द्रियाद्युत्पत्त्यनन्तरमेव अध्यासप्रवृत्तेरना-

दित्वं नास्ति । बाह्यवस्तुषु वस्त्वन्तराध्यासकाले आत्मानात्माध्यासनिवृत्तेरनन्तत्वमपि नास्ति । प्रवाहतोऽनादित्वमनन्तत्व चेति चेत् तर्हि जगदुपादानतया ऽभिमता एकाऽविद्येति न सिद्धयेत् । मिथ्याप्रत्ययरूप इत्यस्य अनिर्वचनीय इति भामतीविवरणमनुपपन्नम् । विषयो हि मिथ्या । न तु प्रत्ययः । स तु सन्नेव । तस्य कथमनिर्वचनीयत्वम् । एव तावत् भाष्यभामतीकारयोरेव अद्वैतसिद्धान्तोपपादनं न हृदयङ्गमम् । किमुनेतरेषाम् ।

"सर्वथाऽपि अन्यस्य अन्यधर्मावभासतां न व्यभिचरति" इत्यध्यासलक्षणमाह श्रीशङ्करः। अनेन भ्रम एवाध्यास इत्युक्त भवति। स कथं ब्रह्मणो भवेत्। भ्रमश्च ब्रह्मणश्चेति हि विप्रनिषिद्धमेतत्। ब्रह्म चेत् न भ्रमवत्। नित्यनिर्दोषत्वात्। भ्रमश्चेत् न ब्रह्मण। हेयत्वात्। अथ जीवस्याय भ्रमः, न। ब्रह्मणोऽभिन्नो वा जीवः, भिन्नो वा। आद्ये उक्ताऽनुपपत्तिः। ब्रह्मणो न भ्रमसम्भव इति। अन्त्ये अद्वैतहानिः। अध्याससिद्धो जीव इति चेन्न। कस्य सोऽध्यास.। न ब्रह्मण इत्युक्तम्। न च जोवस्यैव। असतो जीवस्याध्यासायोगात्। सतोऽध्यासनिरपेक्षसिद्धिकत्वात्। इत्थमद्वैतसिद्धान्ताधारस्तम्भभूतोऽध्यासो नोपपद्यते। न जानीमः कथमद्वैतिन इममध्यासं बुद्धौ आरोपयन्ति, धारयन्ति चेति। शङ्कर एवात्र विशद किमपि नोक्तवान्। अत एव व्याख्यातॄणा विप्रतिपत्तिः ब्रह्माश्रिता अविद्या जीवाश्रितेति। प्रधानप्रश्नमिम उत्तिष्ठन्तं न न जानाति शङ्करः। जानाति, समाधानं च अनृजु किमपि वक्ति। तस्येमा उक्तय:—

"कस्य पुनरयमप्रबोध इति चेत् यस्त्वं पृच्छसि तस्य त इति वदामः। नन्वहमीश्वर एवोक्तः श्रुत्या। यद्येवं प्रतिबुद्धोऽसि नास्ति कस्यचिदप्रतिबोधः।"

इति सूत्रभाष्ये आत्मेति तूपगच्छन्तीत्यत्र। अत्र शङ्करयमाशयः।

ईश्वरस्य अप्रबोधो न सम्भवति। ईश्वरत्वहानेः। न जीवस्य। तदति रिक्तस्य जीवस्याभावादिति। तत्र 'यस्त्व पृच्छसि तस्य ते' इति न ऋजु सशयहर च उत्तरम्। अथापि जीवस्येति प्रतीतिर्भवति। तत्रानु पपत्तिं पश्यन् स्वाशय स्फुटीकुर्वन्निव पुन पृच्छति—नन्वहमीश्वर एवोक्त श्रुत्येति। ईश्वरादहमनतिरिक्त। ईश्वरस्य च नास्त्यप्रबोधः। तस्मादप्रतिबोधाश्रयो न कश्चिदस्ति। अतः आश्रयाभावात् सोऽनुपपन्न इति प्रष्टुरभिप्राय। तत्र यद्येवमित्यादि न समञ्जसमुत्तरम्। प्रतिबोधा-नन्तर नास्ति कस्यचिदप्रतिबोध इति काममिदमस्तु। तत प्राक्तनोऽ-प्रतिबोध कस्येति हि प्रश्न। तस्योत्तर नैव दत्तम्।

एवमन्यत्रापि "अत्राह साऽविद्या कस्यति" इत्युपक्रम्य साडम्बर-निस्सारबहुभाषणानन्तर "ननु ममैवाविद्या। जानासि तर्हि अविद्या तद्वन्तं चात्मानम्" इत्याह। अत्रापि अविद्यावानात्मा कोऽभिप्रेत इति न ज्ञायते। ईश्वरे तदसम्भवात् तदतिरिक्तस्य जीवस्याभावाच्च प्रसक्ता आश्रयानुपपत्ति न अत्र परिहृता।

एव स्वयमुत्तिष्ठन्ती अन्या अपि शङ्का उपक्षिप्य अद्वयमेव समा धानमाह। तत्र इयमेका शङ्का—"न ह्यपहतपाप्मत्वादिगुणो विपरीत गुणत्वेन शक्यत प्रहीतुम। विपरीतगुणो वाऽप्यपहतपाप्मत्वादिगुण त्वेन। अपहतपाप्मत्वादिगुणश्च परमेश्वरः। तद्विपरीतगुणस्तु शारीरः" इति। अत्र समाधानम्—'यदुक्त न विरुद्धगुणयोरन्योन्यात्मत्वसम्भव इति, नाय दोष। विरुद्धगुणताया मिथ्यात्वोपपत्तेः" इति। कथ मिथ्यात्वोपपत्ति। उभयमपि हि प्रमाणप्रमित-ईश्वरस्य अपहतपाप्मत्वा दिक, इतरस्य ससारित्व च। तत्र गुणाद् भेदे वक्तव्ये विपरीतगुण त्वस्य मिथ्यात्व कथ भवतु। शीतोष्णस्पर्शाभ्या हि जलानलयोर्भेद इष्यते। न तु अन्यतरस्पर्शस्य मिथ्यात्व कृत्वा उभयोरेकद्रव्यत्वमङ्गी क्रियते।

अन्या शङ्का—"ईश्वरस्य च संसार्यात्मत्वे ईश्वराभावप्रसङ्गः" इति। अत्र समाधिः—"यत् पुनरुक्तमीश्वराभावप्रसङ्ग इति, तदसत्। शास्त्रप्रामाण्यादनभ्युपगमाच्च।" इति। अत्र 'शास्त्रप्रामाण्यात्' इत्येतदुपहास्यम्। न हि शास्त्राणि एकमेव वस्तु विरुद्धधर्मद्वययोगितया युगपत् वर्तमानं बोधयितुं क्षमन्ते। एक एव हि आत्मा इष्यते। तस्य संसारित्वे ईश्वराभाव एव। संसारित्वं प्रत्यक्षसिद्धम्। तस्मादीश्वराभाव एव अभ्युपगन्तव्यो भवति। तत्र शास्त्रं किं करिष्यति। अनुपपन्नार्थं हि तद् गौणतया नेयम्। अथ यो द्वितीयो हेतुः 'अनभ्युपगमाच्च' इति स एव विवृतः—"न हीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यत इत्यभ्युपगच्छामः। किं तर्हि। संसारिणः संसारित्वापोहेन ईश्वरात्मत्वं प्रतिपिपादयिषितमिति। एवं च सति अद्वैतेश्वरस्य अपहतपाप्मत्वादिगुणता, विपरीतगुणता तु इतरस्य मिथ्येति व्यवतिष्ठते।" इति। नेदमाक्षेपस्य समाधानं भवति। काममस्तु शास्त्रे ईश्वरस्य संसार्यात्मत्वं न प्रतिपाद्यते। अपि तु संसारिणः संसारित्वापोहेन ईश्वरात्मत्वमिति। अथापि वस्तुवृत्तं तावत् कीदृशं भवति। एक एवात्मा छेदनभेदनानर्हः। स संसारी चेत् ईश्वरः कः? स नास्तीत्येव हि प्रसज्यते। एवं सति ईश्वरबाधकशास्त्रानर्थक्यं च दुष्परिहरम्। अस्य प्रसङ्गस्य 'न हीश्वरस्य संसार्यात्मत्वं प्रतिपाद्यत इत्यभ्युपगच्छामः' इत्येतेन कथं परिहारः। ईश्वरादन्यः संसार्यात्मा किं कश्चिदस्ति?

अपरा शङ्का—"संसारिणोऽपि ईश्वरात्मत्वे अधिकार्यभावात् शास्त्रानर्थक्यमेव। प्रत्यक्षादिविरोधश्च।" इति। परिहारश्च—"यदप्युक्तं अधिकार्यभावः प्रत्यक्षादिविरोधश्चेति। तदप्यसत्। प्राक् प्रबोधात् संसारित्वाभ्युपगमात्। तद्विषयत्वाच्च प्रत्यक्षादिव्यवहारस्य।" इति। अयमप्यनुपपन्न एव। प्राक् प्रबोधात् संसारित्वं कस्य। आत्मन एव हि। स च एक एव। सः प्राक् प्रबोधात् संसारी। प्रबोधे तु ईश्वरो

भवतीत्युक्तं भवति। तथा च प्रबोधात् प्राक् ईश्वराभाव एवेत्यभ्युपगच्छति तत्र भवान्। किमेवं वेदान्तशास्त्रं बोधयति। न हि कालिकाव्याप्यवृत्ति ईश्वरस्य ईश्वरत्वमिति श्रुतिराह। नित्यैश्वरत्वस्य सर्वविधपरिच्छेदराहित्यस्य च श्रावणात्। ननु संसारत्वं यद्यपि प्राक् ऽबोधादस्ति तथाऽपि तस्य मिथ्यात्वात् ईश्वरत्वमचलमिति चेत् तर्हि जीवाभावात् अधिकारिशून्यं शास्त्रमनर्थकं स्यात्। संसार्यात्मा हि जीवः। तस्य वस्तुतः संसारित्वविरहे जीव एव नास्तीति हि पर्यवस्यति। मिथ्याभूतमेव संसारित्वं जीवत्वमापादयतीति चेत् अनीश्वरत्वमापादयतीत्येवोक्तं भवति। जीवत्वेश्वरत्वे हि मिथो विरुद्धे। तथा च एकात्मवादे ईश्वराभावो वा जीवाभावो वा प्रसज्यमानो दुष्परिहरः।

तदेवं प्रमाणयुक्तिरहितं तद्विरुद्धं च अद्वैतम्। अत एव तद्रक्षणं अशक्यम्। श्रीशङ्कर इदं सम्यग् वेद। तथापि चिरन्तनसमीचीनवेदान्तदर्शनसम्प्रदायस्य तदानीं मन्दप्रचारत्वात् तं ज्ञातुमवसरमलभमानः, अन्योन्यविजयसंरब्धैः प्रबलैः सौगतैर्नैयायिकैश्च अनुसृतया न्यायपद्धत्या वेदान्तदर्शनस्य लोके अत्यन्तविलयमाशङ्क्य सन्त्रस्तः कथमपि तद्रक्षणीयमिति कृतदृढसङ्कल्पश्च धीरः श्रीशङ्करः गौडपादोपज्ञातैव सारणिः तदनुगुणेति मन्यमानः तदनुसारेण प्रवचनं ग्रन्थांश्च चकार। अन्ये च बहवः तमन्वगच्छन्।

भास्कराचार्यस्तु शङ्करानुसृतं पन्थानं अत्यन्तमनुपपन्नं पश्यन् स्वयमन्यदेव भेदाभेददर्शनं प्रादुर्भावयामास। लोके तस्य आदरोऽत्यल्पोऽभूत्। एवं यादवप्रकाशदर्शनस्यापि। अथ ब्रह्मसूत्रवृत्तिकारभगवद्बोधायनप्रभृति प्रवृत्तं, विशिष्टाद्वैतवेदान्तदर्शनं चिरानुवृत्तं यदा कालदैर्घ्यात् निलीनमिव बभूव तदा श्रीशठकोपमुनिशिष्यः श्रीमन्नाथमुनिः प्रवचनेन ग्रन्थकरणेन च तत्पुनः प्रावर्तयत्। तस्य पौत्रेण

श्रीयामुनाचार्येण पोषितं अस्य प्रशिष्येण भगवद्रामानुजेन श्रीभाष्यादिप्रणयनेन प्रतिष्ठापितं च तत् जगति पप्रथे ।

तत्त्वजिज्ञासया गाढविमर्शे कृते शाङ्करमद्वैत अत्यन्तमनुपपन्नमिति यः कोऽपि विपश्चित् स्वयं जानीयात् । अथापि भगवद्रामानुजात् प्राञ्चोऽद्वैतिनः तदेव वेदान्तदर्शनं, नान्यत् किमप्यस्तीति प्रतियन्तः तदेव कथञ्चिद् युक्तिभिः स्थापयितु यत्नमकुर्वन् । अर्वाञ्चस्तु श्रीभाष्यावलोकनेन दृढतरप्रतिपन्नाद्वैतासामञ्जस्या अपि कुलक्रमागतं दर्शन परित्यक्तुमनिच्छन्तः तदेव अधीयानाः परिचिन्वानाश्च आसन् । न तु विशिष्टाद्वैतसिद्धान्ते द्वेष तन्निरसनचिन्तां वा अकुर्वन् । विद्यारण्यप्रभृतय ईदृशाः ।

अप्पय्यदीक्षितः पुनः शतदूषणीप्रभृतिप्रौढग्रन्थखण्डने अप्रवृत्तः न्यायरक्षामणिप्रभृतिषु ग्रन्थेषु क्षुद्रोपद्रवान् कांश्चित् चकार । बहुज्ञोऽयं, ग्रन्थलेखननिपुणश्च । परन्तु अप्रतिष्ठितबुद्धिः । कदाचित् किञ्चिद् दूषयितुमिच्छति । तदनुगुण न्यायमालामुपन्यस्यति । कदाचित् किञ्चिद् भूषयितुमिच्छति । तदनुगुणा महतीं न्यायमालामुपन्यस्यति । तत्त्वनिर्णये न तथा श्रद्धालुः यथा वैदुष्यप्रकाशने । रागद्वेषाभ्या च कलुषमना भवति । तत्कारण यदयं अद्वैती सन् शैवेऽप्यभिनिविष्टोऽभवत ।

व्याससूत्रमिदं नेत्र विदुषा ब्रह्मदर्शने ।
पूर्वाचार्यैः कलुषित श्रीकण्ठेन प्रसाद्यते ॥

इति श्रीकण्ठभाष्योपक्रमस्थश्लोके तृतीयं पाद विवृण्वन् कलुषितत्वनिदर्शनाय श्रीभाष्यमेव प्रथमं गृह्णाति । प्रथमानुबन्धे अस्माभिः प्रदर्शितया रीत्या सूत्रभाष्यस्य बहुषु स्थलेषु श्रीकण्ठेन खण्डनात् खण्ड्यमानार्थप्रतिपादकमद्वैतभाष्यमेव निदर्शनीयम् । न तु श्रीभाष्यम् । विष्णु-

स्थाने शिवनिवेशनं विना तस्य क्वापि खण्डनाभावात् । गतेरर्थवत्त्वमिति सूत्रे स्फुटं खण्डनमिति केचिन्मन्यन्ते । वस्तुतस्तु तत्रापि शिवलोकपारम्यायैव 'उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवद्' इति सूत्रस्य पूर्वपठनेन पूर्वपक्षसूत्रस्य गतेरर्थवत्त्वमित्यस्य सिद्धान्तत्वं च आश्रितमिति खण्डनतात्पर्यं नैव ज्ञायत इति विभाव्यम् ।

कलुषितत्वं च अथतो वक्तुमुचितम् । तथा करणे निर्गुणब्रह्मपरमद्वैतभाष्यमपि अवश्यं निदर्शनीयं भवेदिति तत्परिहरन् शाङ्करं कलुषितत्वं श्रीभाष्ये कतिपयस्थलान्यादाय दर्शयति हठादेव । न तु तत्र वस्तुतः कालुष्यं दृश्यते । तथा हि । कृत्स्नप्रसक्त्यधिकरणे 'सर्वोपेता च तद्दर्शनात्' इति यत् सूत्रं तत्र सर्वोपेतेत्यस्य सर्वशक्त्युपेता परा देवतेति शाङ्करभाष्ये श्रीभाष्ये चार्थ उक्तः । श्रीकण्ठभाष्ये तु सर्वा शक्तिर्ब्रह्म उपेता आश्रिता इत्यर्थ उक्तः । "अयमेव वाच्यः । उपेतेति स्त्रीलिङ्गसामञ्जस्यात् । अर्थान्तरे अनुपस्थितदेवतापदाध्याहारप्रसङ्गात् । न हि पूर्वत्र वा विषयवाक्येषु वा देवतापदं श्रूयते । न च शाङ्करभाष्येऽप्ययं दोषः समान इति वाच्यम् । सर्वप्रपञ्चोपेता माया । ब्रह्म तु न परिणमते इति तत्र कृत्स्नैकदेशचोद्यस्य नैवावकाश इत्यर्थान्तरव्यञ्जनतात्पर्येण तत्र तथाऽकथनात् । न च श्रीभाष्येऽपि सर्वकार्योपेता प्रकृतिरित्यर्थान्तरद्योतनमभिमतमिति किं न स्यादिति वाच्यम् । ज्ञानेच्छादीनां कार्याणां प्रकृत्युपादानकत्वाभावेन प्रकृतेः सर्वकार्योपेतत्वासम्भवात् । महत्त्वकार्ये ब्रह्मण उरुत्वकौशलाच्छेदे च उक्तविकल्पप्रसराप्रतिक्षेपाच्च ।" इत्याह । अत्र वदाम ।

सूत्रार्थविवरणे पूर्वैरनाश्रितः अभिनवः कश्चन प्रकार आश्रयणीयः सति सम्भवे, इति सुदृढकुतूहलभरितान्तरङ्गाः प्रायः सर्वे अर्वाञ्चो ब्रह्मसूत्रव्याख्यातारः । तदेवात्र निदानं यत् श्रीकण्ठ इहार्थान्तरमाह । परदाश्रित्य भूषणादूषणप्रपञ्चनं दीक्षितस्य व्यसनमात्रम् । श्रीकण्ठोक्तोऽर्थ

अस्वरस एव। 'अधिकं तु' इति प्रथमान्ततयैव हि ब्रह्मोपस्थितिः। तस्येह द्वितीयान्ततया विपरिणामः क्रियत इत्येकोऽस्वरसः। ब्रह्म कारणं भवत्येव। सर्वशक्त्युपेतत्वादिति साक्षात् हेतुप्रतिपादकं सूत्र प्राचाम्। सर्वा शक्तिः ब्रह्म आश्रिता। अतः सर्वशक्तियुक्तत्वात् ब्रह्म कारणमिति अनपेक्षितमर्थं प्रथममुक्त्वा ततः पर अपेक्षितो हेतुः कल्पनीय इत्यपरोऽस्वरसः। 'यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः' इत्येतदनुसारेण, श्रीभाष्यरीत्या 'आत्मनि चैवं विचित्राश्च हि' इत्यस्मिन् सूत्रे 'विचित्राश्च' इत्येतदनुसारेण च सर्वाभिः शक्तिभिरुपेतेति शक्तिबहुत्वविवक्षा 'सर्वा' इति पृथक्पदत्वे न घटत इत्यन्योऽस्वरसः।

उपपन्नत्वात् ऐकपद्य श्रीभाष्यकारा आश्रयन्ति। न गतानुगतिकत्वात्। अन्यथा स्वप्राक्तनग्रन्थान्तरोक्तमर्थं गतानुगतिकतयैव शङ्कर आहेति कुतो न स्यात्। यत्तु सर्वप्रपञ्चोपेता मायेति अर्थान्तर व्यङ्ग्यमभिप्रेतमिति तदस्य केवल कल्पनामात्रम्। ज्ञापकलेशस्यापि विरहात्। प्रत्युत बाधकसत्त्वाच्च। ब्रह्मकारणत्वसमर्थनपर हि प्रकरणम्। तत्र सर्वकार्योपेता मायैव न ब्रह्मेति प्रतिपादने तत् कारणमेव न भवतीति पूर्वपक्ष एव स्थापितः स्यात्। यच्च ज्ञानेच्छादीना प्रकृत्युपादनकत्वाभावात् प्रकृति सर्वकार्योपेतेत्यर्थान्तरविवक्षा न सम्भवतीति, तदपि न। चेतनाचेतनभेदेन द्विविधत्वात् प्रकृतेः। गीत हि 'अपरेयमितस्त्वन्या प्रकृति विद्धि मे पराम्' इति। यदपि ब्रह्मरूपकार्यादौ विकल्पप्रसराप्रतिक्षेप इति तदद्वैतेऽपि समानम्। विवर्ताधिष्ठानत्व कृत्स्नस्य वा ब्रह्मणः तदेकदेशस्य वेति। विचित्रशक्तियोगात् परिहारः उभयत्र तुल्यः। अथ वा न तुल्यः। निर्विशेषस्य शक्तिमत्त्वायोगात्।

अथ यदस्य सर्वस्य दुर्लेखनस्य मूल देवतेति स्त्रीलिङ्गोपस्थितिरिह नास्तीति, तदप्यसत्। सदेव सोम्येत्येतत् बुद्धौ कृत्वा 'अधिक तु भेदनिर्देशात्' इति नपुसकलिङ्गप्रयोगः। कृत्स्नैकदेशविकल्पेन कृतस्य

परिणामाक्षेपस्य परिहाराय शक्तिमत्त्वे वक्तव्ये, न सर्वकार्यकरणसामर्थ्यमात्ररूपा शक्तिः अपि तु परिणामोपपादकचेतनाचेतनात्मिकाऽपि शक्तिर्वक्तव्येति स्थिते तत्समापकस्य 'हन्तेमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य' इति वाक्यस्योपस्थितौ, तत्रोपक्रमे 'सेयं देवैक्षत' इति परस्य ब्रह्मणः देवतात्वेनैव कीर्तनात् तद्विशेषणत्वमभिप्रेत्य सर्वोपेतेति स्त्रीलिङ्गादरणात्। एवमस्मिन् प्रकरणे सद्विद्यावाक्यं सूत्रकारबुद्धौ विपरिवर्तत इति व्यञ्जनायैव इतरव्यपदेशाधिकरणे 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति च "परा देवता" इति सूत्रभाष्ये देवतात्वेन परस्य ब्रह्मणो निर्देश इति।

दोषान्तरमाह। पाञ्चरात्राधिकरणे चरमसूत्रे विप्रतिषेधादिति पदस्य विस्मरणशब्दस्य स्मरण इव प्रतिषेधे शक्तिर्नास्तीति गौणी लक्षणा वा क्लिष्टा जघन्यवृत्तिराश्रितेति। नायं दोषोऽस्ति। विनिपातशब्दस्य निपात इव विनिवृत्तिशब्दस्य निवृत्ताविव विज्ञानशब्दस्य ज्ञान इव च प्रकृते शक्तिसद्भावात्। विस्मरणशब्दस्य क्वचिदपि विशिष्टस्मरणे प्रयोगाभावात् न स्मरणार्थत्वम्। वीक्षणपदस्य ईक्षण इव विप्रतिषेधपदस्य प्रतिषेधे अस्ति प्रयोगः। यथा आपस्तम्बधर्मसूत्रे "बुद्धे क्षेमप्रापणं तच्छास्त्रैर्विप्रतिषिद्धम्" इति। किञ्च यौगिकानां पदानां अर्थविशेषे प्रयोगप्राचुर्ये सत्यपि योगार्थविवक्षयैव प्रौढग्रन्थकाराः तानि पदानि प्रयुञ्जते। यथा कालिदासः 'छायाविनीताध्वपरिश्रमेषु' इति विनीतपदं अपनीतार्थे। 'अनिग्रहत्रासविनीतसत्त्वम्' 'स्वाभाविकं विनीतत्वम्' इति प्रसिद्धे विनयार्थे प्रयुञ्जान एव सः उत्तरत्र अपनयनार्थेऽपि तत् पदं प्रयुक्तवान्। एवं 'विरक्तसन्ध्याकपिशं पुरस्तात्' इति वैराग्यार्थे प्रसिद्धं विरक्तपदं अतिरक्तार्थे प्रयुङ्क्ते। न चात्र जघन्यवृत्तिः। रूढिमात्रस्य निरूढलक्षणामात्रस्य वा परित्यागात्। योगार्थस्य अभिधयैव प्रतीतेः।

"अनुकृतेस्तस्य च" इति दहराधिकरणसूत्रश्रीभाष्ये सविस्तरं दोषमाह। इदं, श्रीभाष्यभावं श्रुतप्रकाशिकास्पष्टोक्तिं च अनवहितवतो दीक्षितस्य केवल भ्रममूलमिति भावप्रकाशिकाया स्पष्टम्। सूत्रे दहराकाशपरामर्शी तच्छब्दः कर्मणि षष्ठ्यन्त इति श्रीभाष्यम्। जीवपरामर्शी कर्तरि षष्ठ्यन्त इति शैवभाष्यम्। दहराकाशानुकारः केनेत्यत्र जीवेनेत्यथ लभ्यं पूर्वत्र। जीवकर्तृकानुकारः किङ्कर्मक इत्यत्र दहराकाशकर्मक इत्यर्थलभ्यमुत्तरत्र। इदमत्र वाच्यम्। विस्मरणमित्यत्र उपसर्गः न स्मरणेऽन्वेति। अपि तु स्थानिनि गमने। विगत स्मरणं विस्मरणमिति। अतो विस्मरणपदस्य स्मरणार्थकत्व न भवति। विज्ञानादिपदेषु पुनः श्रुनधात्वर्थ एवान्वयः। अतो विशिष्ट ज्ञानमित्यादिरर्थो भवति। न चात्रापि अश्रुने शिणधातावेवान्वय इति वाच्यम्। तथापि श्रुनधात्वर्थगतविशेषबाधकत्वेन तन्निवृत्तिबाधकत्वाभावात्। ईदृश एव विप्रतिषेध इत्यत्र व्युपसर्गः। न ह्यत्र विगतः प्रतिषेधो वाच्यत। अपि तु विशिष्टप्रतिषेध एव। स विशेषः परस्परप्रतियोगिकत्वरूपः। शीतं स्वसमानाधिकरणमुष्ण प्रतिषेधति। एवमुष्ण स्वसमानाधिकरणं शीत प्रतिषेधति। अतोऽनयोर्विप्रतिषेधः। अयमेव अनयोर्विरोध इत्युच्यते। न तु विरोधत्वावच्छिन्ने विप्रतिषेधशब्दस्य शक्तिः। यौगिकशब्दत्वात्। असामानाधिकरण्यवध्यघातुकभावादिरूपस्य विरोधस्य पर्यवसानगत्या लभ्यत्वाच्च। साङ्ख्यमते पुरुषगतभोक्तृत्वनिर्विकारत्वयोरपि ईदृश एव विप्रतिषेध। भोक्तृत्व निर्विकारत्व प्रतिषेधति। इद नैवास्तीति प्रतीतिं जनयतीत्यर्थः। एव निर्विकारत्व भोक्तृत्व प्रतिषेधतीति। तच्छास्त्रैर्विप्रतिषिद्धमित्यत्र आत्यन्तिकत्वं विशेषः। शास्त्रैः अत्यन्त प्रतिषिद्धमित्यर्थः। पाञ्चरात्राधिकरणसूत्रे यस्मिन् तन्त्रे जीवस्योत्पत्तिरुक्तेति पूर्वपक्षिणा उच्यते तस्मिन्नेव विद्यमानत्वं प्रतिषेधस्य विशेषः। 'तस्मिन्नपि तन्त्रे' इत्यनेन श्रीभाष्ये इद व्यञ्जितम्। अतो विस्मरणपदेन

स्मरणाभाव इव विप्रतिषेधपदेन न क्वचित् प्रतिषेधाभावो बोध्यते । अपि तु सर्वत्र प्रतिषेधे प्रतीयमाने विशेष कश्चन बोध्यत इति नैव क्लिष्टा काचन वृत्तिरासिवेति ।

श्रीकण्ठ एव 'विप्रतिषेधात्' इति सूत्रस्य 'विशेषेणास्य प्रतिषेधो दृश्यते' इति विवरणं करोति । तत्र दीक्षित एव "विप्रतिषेधादिति सूत्रस्य निषेधादित्यर्थमभिप्रेत्य" इत्याह । इत्थं स्वयं प्रतिषेधार्थत्व वदन् श्रीकण्ठ तमर्थं वदद्भि प्राचीनभाष्यकारै सूत्रस्य कलुषितस्य कथमभि प्रेतयान् भवेत् । "निषेधात्" इत्यर्थमभिप्रेत्य" इत्यनेन इतः पूर्वं कथा न्तरमभिप्रैति श्रीकण्ठ इति व्यञ्जयति । तत्तु नास्ति । तत्रापि विशेषेण प्रतिषेधस्यैव तेन विवरणात् । विरोधार्थस्य वेदविरुद्धमिति विशेषणेनैवो क्तत्वेन विरोधादित्यर्थस्य तत्रासङ्गतत्वात् । अभिनिवेशातिशयकृतभ्रम व्याकुलतयैव अस्थाने दूषणसम्भ्रमी दीक्षित इति सुस्पष्टमेतत् ।

उभयत्र दहराकाशकर्मकत्व जीवकर्तृकत्व चाविशिष्टम् । दहराकाशो न जीवः इत्येव पूर्वसूत्रानुगुणाऽत्र प्रतिज्ञा । तथाऽपि इमामर्थलभ्यैति कृत्वा श्रीभाष्ये भावविशेषयञ्जनाय 'प्रजापतिवाक्यप्रतिपाद्य मुक्त बन्धः प्रत्यगात्मा न दहराकाश" इति विपर्यस्ता प्रतिज्ञा दर्शिता । तत्र 'तस्य दहराकाशस्य परस्य ब्रह्मणः' इति सन्दर्भार्थे उक्ते अर्था न्तरकथनकुतूहलात् श्रीकण्ठ 'तस्य जीवस्य' इत्याह । इत्थमत्र विशेषा भावेऽपि श्रीभाष्यदूषणवैयग्र्य दीक्षितस्य द्वेषमात्रमूलकम् । तदधीन-भ्रममूलकं च । वस्तुताऽत्र यो दोष' श्रीभाष्ये उक्तः, स न तत्र, अपि तु एतदादृते श्रीकण्ठभाष्य एव ।

तथा हि । "अत्र हि दहराकाशं प्राप्तस्य पाप्मकार्यान्ध्यत्वाद्यभावे सततोदितप्रकाशत्वे च प्राप्यस्य दहराकाशस्य अपहतपाप्मत्व हेतु त्वेनोच्यते ।" इत्याह श्रीकण्ठः । एव यदि कारणभूतं अपहतपाप्मत्वा-दिकं प्राप्यस्य दहराकाशस्य, कार्यभूतं तत् प्राप्तुर्जीवस्य च स्वप्रकरण

एवावगतं तर्हि तत एव भेदसिद्धेः साम्यापत्तिरूपानुकारेण साध्यं किमस्ति । अथ चेदभिप्रायोऽत्र सूत्रकारस्य 'भेदव्यपदेशाच्च' इत्येव सूत्र करणीयम् । न त्वनुकृतेरिति । यच्च

"तस्य तद्धेतुत्वं 'निरञ्जनः परम
साम्यमुपैति' इति श्रुत्यन्तरप्रसिद्धम् ।"

इति तन्न । विद्वान् साम्यमुपैतीति स्वगताया विद्यायाः साम्यापत्तिहेतुत्वमत्रोक्तम् । न त्वपहतपाप्मत्वादेर्गुणस्य ब्रह्मगतस्य । यदप्युपरि—

"तेन दहराकाश प्राप्तस्य उक्त फलावाप्तिः तत्साम्यापत्तिरूपा तदनुकृतिरिति लभ्यते"

इति, तदप्यसाधु । साम्य हि समानधर्मवत्त्वम् । अपहतपाप्मत्वादिधर्मयोगात् उभयोः साम्य तत एवावगम्यत इति श्रुत्यन्तरावसेयस्य कस्यचिदभावात् । एवं च भेदस्यैवात्र साध्यत्वात् तस्य च प्राप्यगुणस्य प्राप्तृगुणहेतुत्वप्रतिपादनेनैव सिद्धेः 'हेतुव्यपदेशाच्च' इत्येव सूत्रयितुमुचितम् । प्रागुक्तरीत्या भेदव्यपदेशाच्च इति वा । न तु 'अनुकृतेरिति' इति सूत्रमेवासमञ्जस' भवति श्रीकण्ठभाष्यानुरोधे । एव सति श्रीभाष्यदूषणं पापतरम् । अस्मिन् सूत्रे दहरविद्याप्रकरणस्थ वाक्यं किमप्यनुपादाय 'यदा पश्यः' इत्युपनिषदन्तरवाक्यमात्रमुदाहृत्य सूत्रार्थं वर्णितवतः श्रीभाष्यकारस्य गम्भीर भाव श्रुतप्रकाशिकायां विवृतमपि श्रीकण्ठो न जग्राहेति प्रतिपत्तव्ये स्वयमेव तथा अप्रतिपद्यमानः वैपरीत्येन दूषणसरम्भमपि बिभ्रत् दीक्षितः शोच्यः ।

'अनुकृतेस्तस्य च' 'अपि स्मर्यते' इति सूत्रद्वय भगवद्रामानुजवत् दहराधिकरणान्तर्गतमेव कृत्वा भाष्यं रचयन् श्रीकण्ठः तद् द्वयं पृथगधिकरणं कृत्वा 'तमेव भान्तमनुभाति सर्वं', इत्येतद्वाक्यविषयतया योजयन्त शङ्कराचार्यं सूत्रकालुष्यकारं मन्यत इति पक्षपातरहितैः प्रदर्श-

नीयम् । दीक्षितस्तु रागद्वेषपरवशः दूषणीय उपेक्षते । अदूषणीय अमार्गं गत्वा दूषयति।

पुनरपि भाष्यद्वयवाक्यान्तापातप्रतीतिमाश्रित्य श्रीभाष्ये दोषान्तरमाह ।

"शास्त्रयोनित्वादिति सौत्रहेतौ पूर्वसूत्र एव प्रतिज्ञातत्वेन योजयितुं शक्ये परभाष्ये ब्रह्म शास्त्रप्रतिपाद्यमिति प्रतिज्ञामध्याहृत्य हेतो साध्याविशिष्टत्वपरिहारार्थं अबभक्षादिवदवधारणागमतया शास्त्रेतरप्रमाणकत्वादिरर्थे पर्यवसानमुक्तम्। तदध्यतिक्लिष्टमिति स्पष्टमेव।"

इति। अहृदयमेव इदमुक्तमिति विदुषा सुग्रहम्। जगज्जन्मादिकारणं ब्रह्मेति पूर्वसूत्रार्थः। तत्र किं प्रमाणमिति चेदाह सूत्रकारः 'शास्त्रयोनित्वात्' इति श्रीकण्ठ इदं सूत्रमवतारयति। पूर्वाधिकरणे अयं 'यतो वा इमानि भूतानि जायन्ते' इत्यादिवाक्यं विषय ।" इत्युपक्रम्य अत्रोक्तं जन्मादिकारणत्वं न सम्भवतीति पूर्वपक्षं प्रापय्य 'अतो जगज्जन्मादिलक्षणं ब्रह्मेति सिद्धान्तं प्रतिपादयामास। एवं सति 'जगत्कारणं ब्रह्म किंप्रमाणकमित्यत आह इति प्रकृतसूत्रावतरणं नोपपद्यते । शास्त्रमुपादायैव जगत्कारणस्य ब्रह्मणः साधितत्वात् । पुनः मानापेक्षाया असम्भवात् । इमामनुपपत्तिं स्वयमुद्भाव्य परिहरति तस्मिन्नधिकरणे दीक्षित —

तत्र प्रमाणप्रदर्शनार्थमुत्तराधिकरणमित्यर्थः । यद्यपि तस्मिन्न 'यतो वा' इत्यादि शास्त्रं प्रमाणमिति पूर्वाधिकरणे एवोदाहृत, तथाप्यानुमानिके जगज्जन्मादिकर्तरि तत्सिद्धार्थानुवादक तद्वाक्यं न प्रमाणमिति तस्य पूर्वाधिकरणे तत्र प्रमाणतयोदाहरणमयुक्तमिति प्राप्ते शास्त्रप्रामाण्यादेव जगज्जन्मादिकारणं ब्रह्म न त्वनुमानप्रामाण्यादिति स्थापयितुमाक्षेपसङ्गत्या इदमधिकरणमारभ्यत इति भाव ।

२

इति। अत्र आरम्भे 'तत्र प्रमाणप्रदर्शनार्थमुत्तराधिकरणमित्यर्थः' इति भाष्यार्थो य उक्तः सः 'न त्वनुमानप्रामाण्यादिति व्यवस्थापयितु··· इदमधिकरणमारभ्यते' इत्यनेन निरस्तः। न हि प्रमाणप्रदर्शनार्थमिदमधिकरणम्। अपि तु प्रमाणान्तरप्रतिषेधार्थम्। अथ प्रतिषेधः सूत्रात् कथं लभ्यते। शास्त्रस्यैव प्रमाणत्वादित्यवधारणगर्भत्वात्। अनुमानस्याप्रमाणत्वादिति सूत्रार्थः पर्यवस्यति। अथ हेतुः ब्रह्म जगज्जन्मादिकरणमिति प्रतिज्ञया साक्षात् नान्वेति। अनुमानप्रमितार्थविषयतया यतो वेत्यादि शास्त्रं कारणे ब्रह्मणि न प्रमाणमिति ह्याक्षेपः। तत्परिहाराय इदं शास्त्रं तत्र प्रमाणं भवत्येव अनुमानस्य तत्राप्रमाणत्वात्, इत्युच्यते। शास्त्रप्राधान्येन प्रदर्शितोऽस्य प्रयोगः तद्वेद्यब्रह्मप्राधान्येन कारणं ब्रह्म यतो वेत्यादिशास्त्रवेद्यं तदितरप्रमाणागम्यत्वात्, इति यदि प्रदर्श्यते तत्र को दोषः। अतः

"ननु शास्त्रयोनित्वं ब्रह्मणो न सम्भवति। प्रमाणान्तरवेद्यत्वात् ब्रह्मणः" "यथोक्तलक्षणं ब्रह्म जन्मादिवाक्यं बोधयत्येव। कुतः। शास्त्रैकप्रमाणत्वाद् ब्रह्मणः।"

इति श्रीभाष्ये सूत्राभिप्रेतपूर्वोत्तरपक्षप्रदर्शनं निरवद्यम्। तदनुसार्येव

"अत्र जगत्कारणं ब्रह्म शास्त्रैकगम्यम्,
उत प्रमाणान्तरेणापि गम्यमिति सन्देहः।"

इति श्रीकण्ठभाष्ये सन्देहकोटिद्वयप्रदर्शनमपि। तस्मादत्रापि द्वेषमात्रेण दूषणसंरम्भः। रागातिशयेन दूषणीयदूषणे औदासीन्यम्। न परं तत्र औदासीन्यं, पोषणे आदरश्चेति सुमहद् धीमताम्।

कृष्णानन्दयतिः स्वकीये सिद्धान्तसिद्धाञ्जननाम्नि ग्रन्थे श्रीभाष्यखण्डनसंरम्भं प्रदर्शयति। पदे पदे क्रोधद्वेषप्रज्वलितमनाः श्रीभाष्यकारं निन्दति। अनेन क्रियमाणे परपक्षदूषणे स्वपक्षभूषणे वा सामञ्जस्यं अतिदुर्लभम्। लोकक्षेमङ्करस्य वैदिकमार्गस्य आत्यन्तिकलोपप्रसञ्जक-

घोरदुरवस्थाविषमेऽस्मिन् काले वैदिकानां मिथः कलहो न युक्त इति मत्वा परमतखण्डनपराङ्मुखा अपि वयं श्रीभाष्यदूषणानि अनेन कृतानि न तत्र लगन्तीति प्रमाणन्यायविरुद्धानीति च प्रदर्शनपरं ग्रन्थं कर्तुं महतामादेशेन विंशतेर्वर्षेभ्यः प्राक् आरभामहि। सति सौकर्ये तं समाप्य प्रकाशयिष्याम।

अथास्माकं चिरसुहृत् म० म० अनन्तकृष्णशास्त्री बाल्यात् प्रभृति विशिष्टाद्वैतसिद्धान्तदूषणपरं तत्र पैदपर्येण बहून् निबन्धान् प्रकाशितवान्। अयं निस्सारबहुभाषी। विषयाणां यथावदवगमे निरूपणे च न श्रद्धालुः। यथोपस्थितं झटिति लिखति प्रकाशयति च। अबद्धं चेत् अन्ये खण्डयन्तु इति वदति। खण्डने आगते यथाशील असारं प्रतिग्रन्थं कञ्चन त्वरया विलिख्य प्रकाश्य कृतकृत्यमात्मानं मन्यमानस्तृप्यति। अद्वैतवेदान्तपरिभाषायां श्रीरामकृष्णदीक्षितकृतं प्रौढं व्याख्यानं प्रसिद्धम्। तस्याः स्वयमभिनवं किमपि व्याख्यानं कुर्वन् शास्त्री अस्थान एव तत् प्राचीनं व्याख्यानं दूषयति। अत्र असामञ्जस्यप्रदर्शने तत्त्वतः कृते सति अद्वैतिनोऽपि विद्वांसः अस्य विलक्षणं वैदुष्यं यथावद् ज्ञास्यन्तीति मत्वा वयमपि तस्य ग्रन्थस्य अभिजाता नाम व्याख्यां निर्मातुं प्रावर्तामहि। इयमपि कृतिः असमाप्तैव वर्तते।

अथाद्य सन्निहिते काले श्रीमन्निगमान्तमहादेशिककृते शतदूषण्याः खण्डनमुद्दिश्य शतभूषणी नाम कञ्चन ग्रन्थं प्रकाशितवानित्यशृणुम। न तु तमपश्याम। न च तद्दर्शने अस्माकं कुतूहलम्। यत तस्य पाण्डित्यं लेखनचातुर्यं च ईदृशमिति प्रागेव जानन्तः तमदृष्ट्वैव तद्व्यलोकनस्य अत्यन्तवैफल्यं खण्डनप्रयासाङ्गीकरणोचितप्रौढिराहित्यं च निरधारयाम। महतामादेशेन तत्खण्डनार्थं परमार्थभूषणं नाम विस्तृतं सहस्राधिकपुटं ग्रन्थं प्रकाशितवन्तः 'अभिनवदेशिक'बिरुदभाजः श्री उत्तमूर् वीरराघवाचार्यस्वामिनः श्रीशास्त्रिणं प्रति उपोद्घाते एवं

लिखन्ति—

एष परीक्षकः शुद्धमुद्रण शतदूषणीग्रन्थ द्रष्टुमलब्धावकाशः अशुद्धवाक्यानि यथाभूतानि मत्वा वृथैव बहु लिखति। शुद्धवाक्यानामपि श्रुताना यथावस्थितमर्थं नावबुध्यते। पूर्वापरग्रन्थशैलीं न परिशीलयति। आपादचूड वादमेकैकमनुद्दश्य विवेचनकार्ये संरम्भं वहति। स्वानुकूलान् प्रतिकूलांश्च सर्वान् शतदूषणीविकल्पितान् कल्पान् स्वयं समर्थयितु यतते। तत्र तत्र प्रतिवादं स्वपक्ष मनागुपन्यस्य 'एतेनाय शतदूषणीभागो व्याख्यात। एतेनायम्' इत्येव लेखनमात्रेण समग्र ग्रन्थ खण्डित कलयति। खण्डनकारादिग्रन्थेषु शतदूषण्या सम्यक् खण्ड्यमानेषु तदशाविवेकेन खण्डनादिग्रन्थानुवादेन अपूर्वार्थप्रदर्शिनमात्मानमध्यवस्यति। श्रीभाष्यमतमिदमित्यविज्ञाय च स्वबुद्धिकल्पितं किञ्चिदारोप्य दूषण विस्तृणाति। 'प्राचीना अद्वैतिनः प्रायः पङ्क्त्यर्थं यथावदवबोद्धुं, तत्र यदंशे स्वय किञ्चिद्वक्तुमपारयन् तत्र किञ्चित् कर्तुं व्याप्रियन्त। अय तु अनवबुध्यैवार्थं आटोपेन अयथायथप्रपञ्चनेन कार्यं साधित मन्यते। अतः एतन्मात्रदूषणेन न कालः क्षेप्तव्य इति परिशील्य परमार्थभूषणग्रन्थोऽयमित्थमवतार्यते, यथाऽयं न केवलं शतभूषणीग्रन्थस्य, न वा एतत्समानकर्तृकवेदान्तरक्षामण्यादिमात्रसनाथस्य, न वा एतत्सुहृज्जनविहितसाम्प्रतिककतिपयग्रन्थमात्रयुक्तस्य, किं तर्हि अद्वैतसिद्ध्यादिप्राचीनानेकाद्वैतग्रन्थजातस्यापि खण्डनरूपः सन् अद्वैतसिद्धान्तस्य सर्वविधदौःस्थ्यदर्पणायमानः सूक्ष्मधिया प्राज्ञानामाराधनात विशिष्टाद्वैतसिद्धान्तसुधारससमास्वादनाच्च अशेषमनीषिजनानुग्रहभाजनमिम जनं कारयति।''

इति। अनन्तकृष्णशास्त्रिणः यं कमपि ग्रन्थमवलोकयतो यस्य कस्यापि विदुषः तं प्रति ईदृशोऽभिप्रायो न न भवेत्। यथा लोके नराणा तथा

ग्रन्थकरणे ग्रन्थकाराणामपि दया आवश्यकी । असाराप्रामाणिकार्थप्रति पादकग्रन्थकरणे तद्दर्शिनः सामान्यजना भ्रान्त्या विनष्टाश्च खलु भवेयुरिति भेतव्यम् । विदुषामपि तद्दर्शने विनियुक्तः कालः अत्यन्तं विफलो हि भवेदिति पर्यालोचनीयम् । नैवम्प्रकृतिः शास्त्री । कुग्रन्थान् कुर्वन्नेव वर्तते । स्वसिद्धान्तस्य अणुमात्राऽप्युपकारः तदीयैर्ग्रन्थैर्न भवति । परसिद्धान्त दूषणेऽपि अभिनवा काचिद् युक्तिर्न प्रदर्श्यते । प्राचीनग्रन्थपङ्क्तीरेव अयथार्थं विलिख्य विपयान् व्याकुलयति । तस्मादेतद्ग्रन्थनिराकरणे सर्वथा औदासीन्यमस्माकम् ।

सिद्धान्तसिद्धाञ्जनरूपात् कृष्णानन्दयतेरपि उत्कटतरं विशिष्टा द्वैताचार्येषु द्वेषं कुर्वन् करुणार्तं कृष्णशास्त्री सूत्रानुगुणभनाम्नी भाष्य निन्दावाक्यमात्रशरणा ग्रन्थान् कृतिमकरोत् । परनिन्दाप्रावण्यमेवास्य स्वमतविषयाणां समञ्जसापपादने मतान्तरस्य ऋजुना मार्गेण निरसने च असामर्थ्यं प्रकाशयति ।

इत्थमद्वैतस्योपरि श्रीभाष्ये उद्भाविताना दोषाणां परिहारो येन लभ्येत तथाविधे प्राचीने नवीने वा ग्रन्थे अत्यन्तं दुर्लभे सति वस्तुतः विशिष्टाद्वैतमेव सोपानपदं मतमिति अध्यवसातव्यमासीत् । न परं तत् । येन कथापि विदुषा अद्वैतं पारमार्थिकमिति वस्तुतो मन्तुमशक्यमि त्यपि प्रत्ययाऽजायत । एते सन्तु ग्रन्थाः । ये अद्वैतपण्डिताः सन्ति ते अद्वैतं स्वबुद्धौ कथं गृह्णन्ति कथं तत्र श्रद्धां कुर्वन्तीति ज्ञातुमिच्छा प्रबला अजनि । परन्तु प्रश्ने कृते दूषणप्रवृत्तं मा मत्वा झटिति प्रकुप्ये युरिति भिया तूष्णीम्भाव एव चिरमवालम्ब्यत ।

मतत्रयविदस्समवायवति कस्मिंश्चित् सदसि तदभ्यस्यदभिविति च्छता अद्वैतिना महापुरुषेण जिज्ञासुना शुद्धस्य चैतन्यस्य कथमविद्या सम्बन्ध इति कृते प्रश्ने समाधातुं प्रवृत्तः अद्वैतविदामग्रणीः कश्चित् आकाशातक्षमलिनत्वादिनिदर्शनमुपन्यसितुमारभत । सद्यः प्रष्टा 'निदर्शनं

पश्चाद् भवत्। प्रश्नः साक्षात् समाधेयः' इत्युक्तः सः जोषमेवास्त। सम्भावितेषु विद्वत्सु सदो व्यघटत। अन्यदा कदाचित् अद्वैतनस्च सदसि विवृण्वन् तद्वित् "पश्यत श्रुतिवाक्यस्वरससिद्धमद्वैत न वेति। पीठमानयेत्युक्तः कर्मकरः पीठे य उपविष्टः तं ततोऽपगमय्य हि पीठमानयति। तथा तत्त्वमसीत्यत्र तत्त्वम्पदाभ्या प्रतीतविशेषपरिहारेण अभेदो बोध्यत इति ननु सूपपन्नमेतत्" इति भाषते स्म। धनपेटीमानयेत्युक्तेन कर्मकरेण किं पेटीमुद्घाट्य अन्तः स्थित सर्वमपनीय केवला पेटी आनेया? तत्तद्वस्तुसामर्थ्येन हि ईदृशो विशेषोऽवगम्यते। न वाक्यस्वारस्येन। तत्त्वमसिवाक्यस्वारस्य तु सिंहो देवदत्तः, अयमात्मा ब्राह्मण इत्यादौ यादृशोऽर्थ तादृश एवार्थे। न निर्विशेषवस्तुनि। अप्रसिद्धत्वात्। एवमादिवृत्तैः "परमार्थतः अद्वैतवित् न कोऽप्यस्ति। न कोऽपि भवे" दिति निश्चिता मतिरभूत्। नाय पुरुषदोषः। अपि तु मतदोषः। सर्वप्रमाणोपपत्तिविरुद्धं मत धीमतामग्रेसरेणापि केन रक्षितु शक्यते। अथवा किं रक्षणोक्तथा। बुद्धावारोपयितुमेव केन शक्यते? कृत्स्नप्रसक्तिसूत्रे श्रीशङ्कर आह—

> नैष दोषः। अविद्याकल्पितरूपभेदाभ्युपगमात्। न ह्यविद्याकल्पितेन रूपभेदेन सावयव वस्तु सम्पद्यते न हि तिमिरोपहितनयनेन अनेक इव चन्द्रमा दृश्यमानोऽनेक एव भवति। अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते पारमार्थिकेन च रूपेण सर्वव्यहारातीत अपरिणत अवतिष्ठते

इति। चन्द्र एक एव। तिमिरोपहतनयनः पुरुषः नयनदोषेण तमनेकमिव पश्यति। तस्मिन् अनेकत्वमिदं पुरुषगतभ्रमरूपाविद्यया कल्पितम्। अतस्तस्य पारमार्थिकमेकत्वम्। अविद्याकल्पितमनेकत्वमित्युपपद्यते। चन्द्रमसः पुरुषेण वा अविद्यया वा न कश्चित् सम्बन्धः। अतः

एतत्कल्पितेन अनेनत्वेनापि तस्य नास्ति सम्बन्धः। न हि प्रकृते एव सम्भवति। ब्रह्म यदि सर्वव्यवहारातीतं अपरिणतमवतिष्ठते, कोऽन्यो ऽस्ति यस्याविद्यया तस्मिन् नामरूपतत्त्वरूपभेदं कल्प्यते। अन्यस्य सत्त्वे अद्वैतभङ्गः। असत्त्वे नामरूपव्यवहार एव न स्यात्। ब्रह्मैव स्वगतयाऽविद्यया विविधभेदवन्तमात्मानं पश्यतीति चेत् पारमार्थिक-रूपेणावस्थानप्रतिज्ञा परित्यक्ता स्यात्। अतः द्वैतगर्भदृष्टान्तैः अद्वैतो पपादनं न युक्तम्। उपपन्नत्वाद् दृष्टान्ताः बुद्धिमारोहन्ति। न तु दार्ष्टा न्तिकम्। यदभ्यात्। अनुपपन्नत्वात्। अतः न केनचित् सहृदय अद्वै तिना भवितु शक्यम्। सङ्केतमात्रेण अद्वैतिनः अद्वैतभाग्नियन्त इति प्रकारान्तरासम्भवेनाध्यवसीयते।

वस्तुस्थितेरीदृशत्वात् अस्थाने अस्मत्सिद्धान्तदूषणे सरम्भातिश यभाजाऽद्वैतिनः पराकृत्य स्वात्मानं यथा पश्येयु तथाऽस्माभिरपि किञ्चित् कर्तुमुचितामति जातमतय कालतः शतद्वयवर्षपत्त्याऽर्वाचीनत्वेऽपि विशिष्टाद्वैते तस्या यत् स्थानं तदेव स्थानं अद्वैते आतस्थुषीं अद्वैतसि द्धिमादाय विमर्शं कर्तु निरचिनुम।

अद्वैतसिद्धिकाराः मधुसूदनसरस्वती सर्वशास्त्रज्ञः प्रौढपाण्डित्य-महद्रष्टा ग्रन्थलखने पटिष्ठः। तत प्राक्तनेषु अद्वैतग्रन्थेषु यो यावान् साराश तस्य सर्वस्य अद्वैतसिद्धौ अनेन निबद्धत्वात् तेषां परिशीलन प्रयासा मुधेति ततः वयमुदास्महे। निपुणोऽपि उदारप्रकृतिरप्ययं मत स्यात्यन्तदुर्बलत्वात् तत्र तत्र अगत्या दुर्बलान् अनृजूनपि प्रतिवादान् प्रपञ्चयति। अद्वैते ब्रह्मण एव संसारित्वं अपरिहार्यम्। ततः ब्रह्माभाव प्रसङ्गश्च। अथापि इदमङ्गीकर्तुं नैच्छद् भाष्यकार इति पूर्वं प्रादर्श याम। सि द्धकारः पुनः तदुभयमङ्गीकुर्वन् स्पष्टमेवाह—

"अविद्यावशात् ब्रह्मैव एकं संसरति। स एव जीवः। तस्यैव प्रति शरीरं अहमित्यादिबुद्धिः।"

इति । "व्यवहारदशायामपि संसार्यन्यशुद्धब्रह्मभावापातात् ।" इति च । एवमन्या अपि दुरवस्था आपतन्त्यः सोढव्या एवेति ज्ञापयन् धीर ब्रवीति—

जीवैक्यस्य प्रमाणसिद्धत्वे संसारोपलम्भ एवातः पूर्वं तत्त्वज्ञानानुत्पत्तौ प्रमाणम् । न च तत्त्वविक्त्वेन श्रुत्यादिसिद्धानां शुकवामदेवादीनां मुक्तिर्नाभूत् । मम तु भविष्यतीति कथं श्रद्दध्यादिति वाच्यम् । शास्त्रप्रामाण्यदार्ढ्यादिति गृहाण । अन्यथा तेषां महानुभावानां मुक्तत्वेऽपि मम भविष्यति न वेति शङ्कापिशाच्या प्रवृत्तिप्रतिबन्धापत्तेः । ननु तर्हि श्रुतिप्रामाण्यबलादेव तत्सिद्धौ जीवभेदः पूर्वमपि केषाञ्चिन्मोक्षश्चाभ्युपेयताम् । श्रूयते हि—"तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्, तथर्षीणां, तथा मनुष्याणाम्", 'अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ।" "नित्यो नित्यानां चेतनश्चेतनानां" इत्यादि । स्मर्यते च—

"बहवो ज्ञानतपसा पूता मद्भावमागताः ।"

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ।।"

"सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ।।"

इत्यादि–इति चेन्न । उक्तवाक्यानां सार्वलौकिकभ्रमसिद्धभेदानुवादकत्वेन तत्परत्वाभावात् । जीवैक्यबोधकवाक्यानां च मानान्तराप्राप्तस्वार्थपरत्वात् । स्वप्नन्यायेन भेदस्य कल्पितत्वोपपत्तेश्च । ज्ञानस्तुतिपराणि वाक्यानि नात्मभेदं प्रमातुं प्रभवन्ति । तात्पर्यवद्वाक्याविरोधेन अतात्पर्यवद्वाक्यानां गुणवादत्वोपपत्तेः ।

अतीतानागताश्चैव यावन्तः सहिताः क्षणाः ।

ततोऽप्यनन्तगुणिता जीवानां राशयः पृथक् ।।

इत्यादिस्मृतिरपि जीवोपाधिभेदानुवादकतया व्याख्येयाः ।"

इति । अद्वैत तत्त्वमित्यातिष्ठमाने जगन्मिथ्यात्वयन् शुकवामदेव दी नामपि ज्ञानानुदय मुक्तभाव तत्प्रतिपादकवचनानामन्यपरत्व, अन्य- दपि सर्व निश्शङ्क वक्तव्यमिति भाव । तर्कबलादेव अद्वैत साध्यम् । न तत्र शास्त्रबलमस्ति । शास्त्रा[illegible] तु तदनुगुण नेतव्यानीत्ययमभिप्रैति । अत एव अनुमान प्रधानीकृत्य तेन विश्वामिथ्यात्वं साधयन् तत्र बाधो द्धारप्रसङ्गेन शास्त्र तदविरुद्ध नयति । अनुमानबलेनैव भगवतो लीला- विभूतिमिव नित्यविभूति गुणान् दिव्यमङ्गलविग्रह च निराकरोति । सर्वमिद नास्तिक्यपर्यवसायि । लोकायत पामरनास्तिक्यम् । अद्वैत तु पण्डितनास्तिक्यमिति विशेष । प्रपञ्चो नासीदस्ति भविष्यतीति पर मोऽद्वैतसिद्धान्त । प्रपञ्चभान स्वाप्नभानवत् । न च स्वाप्नभाननिवृत्ति मुद्दिश्य किमपि क्रियते, कर्तव्य वा । तथा जागरितभाननिवृत्त्यर्थमपि न किञ्चित् कर्तव्यम् । मिथ्यात्वात् । आत्मना नित्यमुक्तत्वात् । यदि केचन शास्त्राण्यधीयते, मुक्तिमार्गमन्विष्यन्ति, श्रवणमननादि कुर्वन्ति तत्सर्वमनिर्वचनीयानुपपन्नैकवेषाविद्याकार्य स्वाप्नप्रवृत्तिकल्पम् । वस्तुत परमार्थसत आत्मनो नित्यमुक्तत्वात् अन्यस्य सर्वस्य मिथ्यात्वात् विवेकवता न किञ्चित् कर्तव्यमस्ति । स्वच्छन्दवृत्तिाभर्भवितु शक्यम् । इति हि निगलित अद्वैतसिद्धान्तसार । किमिदमास्तिक्य उतान्यदिति अद्वैतिन एव पर्यालोचयितुमर्हन्ति । दायक्रमेण वा कारण- वशेन वा अद्वैतदर्शनमवलम्बितवन्त तत्र ग्रन्थान् कृतवन्तश्च सर्वे प्रौढा पूर्वाचार्या वस्तुतस्तत्र सङ्कुचवृत्तय एव । अत एव ते भग वत्स्तुतिपरा अभवन् । शङ्कराचार्य अन्तकाले विष्णुपादादिकेशान्त स्तोत्रमकरोदिति प्रसिद्धि । अद्वैते विस्रम्भवत कथमीदृशस्तुतिनिर्माणे प्रवृत्तिर्जाता स्यात् । भक्तिसाध्यस्य मोक्षस्य अनित्यत्वपरिहारे मार्गा- न्तरमपश्यन् स अद्वैतमेव तत्त्वमित्यास्थाय वेदान्तदर्शनरक्षणे प्राय तत । प्रासङ्गिमयरचामबन् । परन्तु स्वहृदये स वैष्णवापेसरः सन्

"भगवच्चरणारविन्दप्राप्तिरेव मुक्तिः। तद्भक्तिरेव साधनम्। एतदुपदेशतत्परा एवोपनिषदः।" इत्येव प्रत्ययमकरोत्।

स्पष्टतरमिदं मधुसूदनविषये। स हि भगवद्गुणविग्रहनिराकरणसमनन्तरमेव भक्तिरसस्यन्दि हृद्यं पद्यमिदं निबध्नाति—

वंशीविभूषितकरान्नवनीरदाभात्
पीताम्बरादरुणबिम्बफलाधरोष्ठात्।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्
कृष्णात्परं किमपि तत्त्वमहं न जाने॥

इति। समस्तकल्याणगुणाकरात् साक्षान्मन्मथमन्मथात् भगवतो वासुदेवात् परं ततोऽतीतं किमपि तत्त्वं निर्विशेषं वस्तु किञ्चित् न जाने अस्तीति न मन्ये। ननु इयता प्रबन्धेन निरूप्य कथं तदेवेदानीमपह्नुषे? न। 'अहं न जाने' इति मम हि मतमिदानीमुच्यते। कोऽभिप्रायः। पूर्वाचार्या अद्वैतदर्शनं प्रवर्तयामासुः। तस्य दूषणमपरे अकुर्वन्। एषां निरसनमिदानीं करोमि। एतावता मम स्वकीयं दर्शनं अद्वैतमेवेति न मन्तव्यमिति। किं तर्हि भवतः स्वकीयं दर्शनम्। अत्र तदीयमुत्तरमेवमनुसन्धेयम्। परतत्त्वमुक्तं कृष्ण एवेति। अवरतत्त्वमुक्तं-अहमिति। हितं मुक्तिसाधनं भक्तिः। तद् व्यज्यते पूर्वेण पादत्रयेण। भक्तिर्नाम प्रीतिरूपापन्नः स्मृतिसन्तानः। स्वस्य वर्तमानमिमं अभिलषति विशेषणैः। स्वगृहे स्वकर्मकरणपरोऽयमवर्तत। तदा भगवतः कृष्णस्य वेणुनादोऽस्य कर्णे पपात। सद्यः प्रधाव्य स यत्र अवर्तत तं देशमभजत। तत्र प्रथममस्य वंशीवादनपरौ भगवतः करौ दृष्टिगोचरावभवताम्। तावनुबभूव। ततः क्रमेण प्रकोष्ठौ, प्रगण्डौ, अंसौ, कण्ठः, भुजान्तरमिति दिव्यरूपस्य मध्यभागमन्वभवत्। तदाह नवनीरदाभादिति। तदनन्तरं अधोभागानुभवः पीताम्बरादित्यनेन व्यज्यते। अथोर्ध्वं प्रसृता दृष्टिः वंशीविभूषितौ करौ पुनरपि गोचरयामास। परं तु तदनुभवस्य

इति । अद्वैत तत्त्वमित्यातिष्ठमाने जगन्मिथ्यात्ववचनम् शुकवामदेव दी नामपि ज्ञानानुदय मुक्त्यभाव तत्प्रतिपादकवचनानामन्यपरत्व, अन्यदपि सर्वं निश्शङ्कं वक्तव्यमिति भाव । तर्कबलादेव अद्वैत साध्यम् । न तत्र शास्त्रबलमस्ति । शास्त्रं तु तदनुगुणं नेतव्यमितीत्ययमभिप्रैति । अत एव अनुमान प्रधानीकृत्य तेन विश्वमिथ्यात्व साधयन् तत्र बाधोद्धारप्रसङ्गेन शास्त्र तद्विरुद्ध नयति । अनुमानबलेनैव भगवतो लीला विभूतिमिव नित्यविभूति गुणान् दिव्यमङ्गलविग्रह च निराकरोति । सर्वमिद नास्तिक्यपर्यवसायि । लोकायत पामरनास्तिक्यम् । अद्वैत तु पण्डितनास्तिक्यमिति विशेष । प्रपञ्चो नासीदस्ति भविष्यतीति परमोऽद्वैतसिद्धान्त । प्रपञ्चभान स्वाप्नभानवत । न च स्वाप्नभाननिवृत्तिमुद्दिश्य किमपि क्रियते, कर्तव्यं वा । तथा जागरितभाननिवृत्त्यर्थमपि न किञ्चित् कर्तव्यम् । मिथ्यात्वात् । आत्मना नित्यमुक्तत्वात् । यदि केचन शास्त्राण्यधीयते, मुक्तिमार्गमन्विष्यन्ति, श्रवणमननादि कुर्वन्ति तत्सर्वमनिर्वचनीयानुपपन्नैकवेषाविद्याकार्यं स्वाप्नप्रवृत्तिकल्पम् । वस्तुत परमार्थसत आत्मनो नित्यमुक्तत्वात् अन्यस्य सर्वस्य मिथ्यात्वात् विवेकवता न किञ्चित् कर्तव्यमस्ति । स्वच्छन्दवृत्तिभिर्भवितु शक्यम् । इति हि निर्गलित अद्वैतसिद्धान्तसारः । किमिदमास्तिक्य उतान्यदिति अद्वैतिन एव पर्यालोचयितुमर्हन्ति । दायक्रमेण वा कारणवशेन वा अद्वैतदर्शनमवलम्बितवन्त तत्र ग्रन्थान् कृतवन्तश्च सर्वे प्रौढा पूर्वाचार्या वस्तुतस्तत्र सङ्कुचितहृदया एव । अत एव ते भगवत्स्तुतिपरा अभवन् । शङ्कराचार्यः अन्तकाले विष्णुपादादिकेशान्त स्तोत्रमकरोदिति प्रसिद्धि । अद्वैते विश्रम्भवत कथमीदृशस्तुतिनिर्माणे प्रवृत्तिर्जाता स्यात् । भक्तिसाध्यस्य मोक्षस्य अनित्यत्वपरिहारे मार्गान्तरमपश्यन् स अद्वैतमेव तत्त्वमित्यास्थाय वेदान्तदर्शनरक्षणे प्रावर्तत । प्रायेणाभयत्वाभवन् । परन्तु स्वहृदये सः वैष्णवापेसर सन्

"भगवच्चरणारविन्दप्राप्तिरेव मुक्तिः। तद्भक्तिरेव साधनम्। एतदुपदेश-तत्परा एवोपनिषदः।" इत्येव प्रत्ययमकरोत्।

स्पष्टतरमिदं मधुसूदनविषये। स हि भगवद्गुणविग्रहनिराकरण-समनन्तरमेव भक्तिरसस्यन्दि हृद्यं पद्यमिदं निबध्नाति—

वंशीविभूषितकरान्नवनीरदाभात्
पीताम्बरादरुणबिम्बफलाधरोष्ठात्।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात्
कृष्णात्परं किमपि तत्त्वमहं न जाने॥

इति। समस्तकल्याणगुणाकरात् साक्षान्मन्मथमन्मथात् भगवतो वासुदेवात् परं ततोऽतीतं किमपि तत्त्वं निर्विशेषं वस्तु किञ्चित् न जाने अस्तीति न मन्ये। ननु इयता प्रबन्धेन निरूप्य कथं तदेवेदानीमपह्नुषे? न। 'अहं न जाने' इति मम हि मतमिदानीमुच्यते। कोऽभिप्रायः। पूर्वाचार्या अद्वैतदर्शनं प्रवर्तयामासुः। तस्य दूषणमपरे अकुर्वन्। एषां निरसनमिदानीं करोमि। एतावता मम स्वकीयं दर्शनं अद्वैतमेवेति न मन्तव्यमिति। किं तर्हि भवतः स्वकीयं दर्शनम्। अत्र तदीयमुत्तरमेवमनुसन्धेयम्। परतत्त्वमुक्तं कृष्ण एवेति। अवरतत्त्वमुक्तं अहमिति। हित मुक्तिसाधनं भक्तिः। तद् व्यज्यते पूर्वेण पादत्रयेण। भक्तिर्नाम प्रीतिरूपापन्नः स्मृतिसन्तानः। स्वस्य वर्तमानमिमं अभिलपति विशेषणैः। स्वगृहे स्वकर्मकरणपरोऽयमवर्तत। तदा भगवतः कृष्णस्य वेणुनादोऽस्य कर्णे पपात। सद्यः प्रधाव्य स यत्र अवर्तत तं देशमभजत। तत्र प्रथममस्य वंशीवादनपरौ भगवत करौ दृष्टिगोचरावभवताम्। तावनुबभूव। ततः क्रमेण प्रकोष्ठौ, प्रगण्डौ, असौ, कण्ठः, भुजान्तरमिति दिव्यरूपस्य मध्यभागमन्वभवत्। तदाह नवनीरदाभादिति। तदनन्तरं अधोभागानुभवः पीताम्बरादित्यनेन व्यज्यते। अथोर्ध्वं प्रसृता दृष्टिः वंशीविभूषितौ करौ पुनरपि गोचरयामास। परं तु तदनुभवस्य

प्रकाशितत्वात् बाध्यमाना वशी यत्र धर्मी त अधरमनुभवति—अरुण बिम्बफलाधरोष्ठादिति । अथ कृष्णमुखमण्डलानुभवः-पूर्णेन्दुसुन्दर मुखादिति । इत्थमेकाग्रतया स्वसौन्दर्यमनुभवन्तं भक्तं भगवान् कृष्ण अनुकम्पासरिदम्बुजैरपाङ्गैरनुगृह्णाति । तद्व्यञ्जयति—अर विन्दनेत्रादिति ।

एवं हितशब्दवाच्या भक्तिर्व्यञ्जिता । अनन्यप्रयोजनाया भक्ते, ब्रह्मविदाप्नोति परम्' 'भक्त्या यान्ति मामपि' इति श्रुतिस्मृतिप्रमितायाः परतत्त्वरूपभगवत्प्राप्तेरेव फलत्वात् परमपुरुषार्थोऽपीह व्यञ्जित । इत्थं विलक्षणानामेव तत्त्वहितपुरुषार्थानामभ्युपगमात् अद्वयनिष्ठैवाद्वैते सिद्धिकारस्य । पूर्वकाण्डदेवताधिकरणान्ते

इति जैमिनिमतनिष्कर्षः । मम त्वेवं वदतोऽपि वाणी क्षुभ्यतीति हरिस्मरणमेव शरणम् ।

इति वदतो महामीमांसकस्य खण्डदेवस्य या पारमार्थिकी मनोवृत्ति सैवात्र मधुसूदनसरस्वत्या इति सुस्पष्टमेतत् । आत्मवञ्चनप्रावण्यविरहे एवमेव अद्यतना अपि सर्वे अद्वैतिना भवितुमर्हन्ति ।

द्वैतिग्रन्थोक्तसर्वानुपपत्तिपरिहारपरो भवन् सिद्धिकारः महान्तं ग्रन्थविस्तरं कृतवान् । यत्र तु अनेन कृताः तत्परिहारा साधवोऽन्यथा वेति विमर्शो दृष्टिमकुर्वन्तः अद्वैतसिद्ध्ये तेन यदुक्तं तत्र विशिष्टाद्वैत सिद्ध्ये यत् प्रतिवक्तव्यं तत्पर्यालोचनमात्रमुद्दिश्य विशिष्टाद्वैतसिद्धि ग्रन्थमिममलिखाम ।

विशिष्टाद्वैतप्रवर्तकान् पूर्वाचार्यान् प्रति द्वेषे तेषां कुत्सने च इतर सर्वातिशायिना कठिनकुटिलतरहृदयेन पोलक श्रीरामशास्त्रिणा कृत द्रमिडाम्नेयदर्शने, तत्रत्यः उपोद्घातः, शाङ्करकौस्तुभे जगदीश्वरशास्त्रिणः कृतौ चिदचिद्शरीरकब्रह्मसिद्धि, सप्तविधानुपपत्तिपरीक्षा चेति एषा चतुर्णां प्रत्याख्यानपराः चत्वारोऽनुबन्धा अन्ते योजिताः । श्रीरामशा

खिकृतचतुर्मतसामरस्यग्रन्थविमर्शनपरः पञ्चमोऽपि। अद्वैतिनः अन्ये च विद्वासः इमं ग्रन्थ अनुशन्धाश्च मध्यस्थदृष्ट्याऽवलोक्य गुणान् दोषान् वा यदि वदेयुः तदस्माकं महते आनन्दाय कल्पेत।

अस्मद्गृहे अवकरराशिरिति बहिः प्रासनाय गृहीते जीर्णमलिनका-कद्बन्धे यदृच्छया एक पत्रं दृष्टिगोचरतामगात्, यत्र स्थितमिदम् -

श्रीः

श्रीश्रीनिवासपरब्रह्मणे नमः।

श्रीमते निगमान्तमहादेशिकाय नमः।

---

## ऐश्वर्यसिद्धिः

—:.:—

तमप्यवति यः प्रीत्या यश्छिनत्ति स्वमाग्रहात्।
सर्वसिद्ध्यै मम श्रीमान् कल्पवृक्षः स कल्पताम्॥

श्रीवाससूरिचरणाम्बुजशेखरस्य
धन्यानि कानिचिदहानि मम व्यतीयुः।
स्वान्तेऽपि वाऽद्य दयया स न चेदभास्यत्
किं जीवितस्य फलमस्य बताभविष्यत्॥

ऐश्वर्यमैश्वरमपारमशेषमान-
सिद्धं यदस्ति तदपह्नुवतेऽतियत्नात्।
यस्त्वाहुरस्तमितसर्वगुणं च किञ्चित्
तन्नोपपद्यत इति प्रतिपादयामः॥

हृदि यन्त्र इव स्थितो ममाय
प्रकटत्वं गमितो निमित्तयोगात्।
कवितार्किकसिंहनाद एव
श्रवणं सम्प्रति वादिनामुपैति॥

सार विहाय पदवाक्यविकल्पकास
नानार्थलक्षणपरीक्षणदु स्थिवासु ।
सद्दा कथासु निगमा तनिगम्यमथ
मप्यद्य इत परिहासपदं विमनु ॥
सदद्य शुद्धा नयपद्धति श्रिता
विपश्चिता वेदविनिश्चितेश्वराः ।
निश घनेऽस्मन् ऋजुनैव वर्त्मना
यदुच्यते तद् विमृशन्तु जाग्रत ॥

बहुभ्यो वत्सरेभ्य पूर्व अद्वैतसिद्धिग्रन्थ अवलोकितवन्तो वय तत्र कृत भगवदैश्वर्यनिराकरण निरस्य समग्र तदैश्वर्यं साधनीयमिति मत्वा ऐश्वर्यसिद्धि नाम कञ्चन ग्रन्थ लेखितुं प्रवृत्ता इति परमतग्रन्थखण्डने तदवलम्बिना हृदयव्यथा नात्पादनीयेति सा प्रवृत्ति पर्यत्यक्तेति च इतोऽस्माकं स्मृतिर्भवति । अद्य तु प्रागुक्तरीत्या बहुभिरद्वैतिभि अकाण्ड एव विशिष्टाद्वैतदूषणसरम्भवहनात् दर्शनयोः तात्त्विकस्वरूप-प्रकाशनं प्राप्तकाल भवतीति इम ग्रन्थ प्रकाशयाम ।

श्रीपितुलाशुक्लनवमी
भृगुवासर । १३-११-१९६४

प्रबन्धा

# Visishtadvaitasiddhi

## *Introduction*

### 1. Visishtadvaita

The sage Uddalaka, had a son whose name was Svetaketu. Since the moment Svetaketu was born Uddalaka had the great ambition to initiate him as early as possible and make him a great scholar well-versed in all sastras and vidyas But he was very keenly disappointed. Svetaketu was very haughty boy. He never cared for learning. He always disobeyed his father. Whenever he thought his father would catch him he ran to his grandfather and fell into his lap which was always ready to receive and entertain him His grand-father, Aruna, was so fond of him that he took all interest in keeping him pleased rather than in his learning Uddalaka could not chide or chastise the boy in the presence of his esteemed father.

Svetaketu grew a boy of twelve His father was impatient and once finding him alone said—"Boy, learn Vedas. None born in our family remains without learning like a psudo Brahman." These words of his father hurt Svetaketu very deeply and severely That very moment he left home and approaching a guru studied all the Vedas and the ancillary *sastras* under him His extra ordinary intelligence and wisdom, aptitude for learning, fine conduct and behaviour,

and devoted and enthusiastic services to himself, all these combined in making the guru not only extremely kind to him but quite prepared to teach him all the time of the day and all that he knew so that he would become a con ummate scholar and that in as short a time as possible What others would require forty eight years to learn Svetaketu learned in twelve years and returned home, full of pride as if he was the most learned in the world and there was nothing more to be learnt by him This lack of virtue, this pride and impudence on the part of his son pained again Uddalaka He asked—"Boy you seem to think that your learning is perfect But did you seek to learn that commander, to know whom is to know all ?" This idea was quite new to Svetaketu, so new that he thought that such a thing such a commander, could never exist : "To know one is to know all ! No, there is no possibility for such an entity" So he put the question to his father ' Revered sir, how is that commander ?" The kind father, in order to help his son conceive that strange and important concept and convince him about it mentioned three *instances* The first was clay ' Take a mass of clay, of which several things are made, viz pot and other vessels or some other things All these things remain even then clay as they were originally When it lay as a mere mass the clay had no different forms or names but when several things are made out of it, it is that very clay that has taken those many forms and names in order to serve different purposes which a mere mass

of clay cannot serve All these productions are nothing but that original clay. So the comprehension of the clay is the comprehension of all these things. The substance of every thing made of the clay is covered by the comprehension of the clay, though the farm and name it takes later were not existing then and therefore cannot be the object of that comprehension. The other two instances are gold and iron

Uddalaka concluded his reply saying "Like there is that Commander". When Uddalaka mentioned the commander as one to know whom is to know all. Svetaketu could not understand, because the question at once arose within him "How can knowledge of one thing be knowledge of anything else, not to speak of knowledge of all." The examples cited by his father suggested the proper and convincing answer to the question. The effects are not separate and distinct from their material cause. They are identical with it The same substance in a state is the cause and in another the effeets In the former it is one and not many with different names. But in the latter it becomes many with different forms and names. The substance is the same though undergoing certain changes to become fit to be called effects There are certain philosophers who hold the view called *asat-karya-vada*, according to which the material cause and its effects, i.e, the thing made of it are separate substances, there is no identity between them Rejecting this view as untenable the Vedanta philosophy accepts the view called *sat karya-vada* In a mud pot we do not see two sepa-

rate substances—mud and pot Nor can we say that mud is gone and only pot is there, since the pot is mud and nothing else What is new in the effect is not any substance but the shape and name The substance already existing, *sat* takes a new form and name and this is its state as effect So this view of identity between the material cause and its effect is called *sat* karya vada When this identity between the material cause and its effect is borne in mind there will be no difficulty in understanding when it is said that cognition of mud is the cognition of all the things made of it So Svetaketu now clearly understood what was meant by his father s question to him Did you ask your guru to teach you about that Commander who is the material cause of the whole world ?" This was the meaning of it, he thought

The form of the question is significant Uddalaka did not ask Svetaketu "Did your teacher teach you that Commander " but Did you request your teacher to teach you that commander " In the former form the question may reflect on the teacher It may mean "was he kind to you and so taught you this great truth or is it that he was not so kind as to teach you that ?" So Uddalaka avoided this form The question as it is, means "Is that you asked him to teach you that and he did so, or is it that you did not ask him and therebore he did not teach,' If the latter was the case the fault lay with the disciple and not with the teacher

Svetaketu said in reply bluntly "Certainly my revered Guru himself did not know this. Otherwise

how could it be that he did not teach me that ? He knew well that it was not proper on his part to give expression to his guru's ignorance But he wanted to tell his father that it was neither his fault nor his guru's that he did not impart to him this knowledge. He craved his guru to teach him all that he knew and he was pleased to do so and said that he did so when he sent him home. There was another reason also for this plain statement of Svetaketu If he simply said that he did not ask his guru to instruct him in this *Vidya* his father might perhaps ask him to go again to his guru and get enlightened He therefore indicated beforehand that there was no use going again to his *gurukula*.

From the pedantic behaviour of Svetaketu his father knew quite well that he had not received instruction in the *Brahma Vidya*, for he thought a person possessing true knowledge of Brahman would never be so insolent and proud as Svetaketu was after his return from *gurukula* With a view to humble him and make him prone to receive Brahman-knowledge which he would impart if he saught for it he asked the question and it had the desired effect. Uddalaka, for indicating the world cause, the Supreme Soul Brahman, used purposely the term *Adesa* meaning commander or *Adeshta* in Sanskrit Svetaketu was too proud of his learning and capacity. He must be made aware of the fact that men are not their own masters There is the Supreme Lord who controls all men and things in the

world. Whatever happens in the world happens due to his will But for his will nothing good or bad will ever happen Svetaketu was intelligent and shrewd enough to understand all this and implored his father that he himself might teach him the great truth The father readily consented and taught him

This is the story which introduces the *Sadvidya* contained in the sixth chapter of the Chandogya upanishat This is meant for telling us that though born in good family and with all facilities available, boys turn to be indifferent and averse to learning The elders however should take all care to make them learned ones.

Uddalaka begins his teaching with the declaration ' Boy the existent alone was all this previously, only one without a second ' Explaining the exclusive 'alone' he then said ' Here some say that non existent alone was this previously, only one without a second But this is an impossible view How could the existent arise from the non-existent ?

We see the world is one that exists The cause of the world that exists must have been existent Can a thing come into existence out of nothing? If there is no clay there will be no pot So the cause of an existing thing must be an existent one This rule has no exception

One school of Buddhist philosophy holds the extreme view that void alone is the ultimate truth But this is quite untenable It is absolutely impossible for holders of this view to explain the phenomena of the world One may say this is all mere appearance But

one should seriously think how could there be even a bare appearance in the void Appearance itself is impossible not to speak of one to whom the appearance occurs and of that which appears Appearance implies these two. Without these two there could be no appearance

According to another school every thing is momentary A thing exists only for a moment. In the next moment the thing automatically perishes and becomes non-existent What we see in the *next moment is not* the same thing as existed in the first moment, but a new one but very closely similar to it This end of things in the next moment is called the uncognised or unobserved end When the pot is broken or the cloth is burnt that end of them is their *cognised or observed* end This view also is unacceptable There is no reason which will compel us to accept the uncognised end of things and a new thing coming into existence without a cause, against our well established experience of their continued existence

The view of Vaiseshika philosophers-asat-karyavada has been already explained Though it accepts an existing thing as the material cause of the effects, still holding that the effects are quite distinct and separate from the material, it has to face the difficulty in explaining how a new substance separate from its material cause can come into existent Uddalaka indicates that rejection of all these and similar wrong views is meant by 'alone' in his statement : "The existent alone was this at first"

What is meant by 'only one' becomes clear when we consider his next statement It is this —

'It saw I shall become many

I shall be born"

It was only one and it thought 'I shall become many' and became many as stated subsequently It is clear only one' in the previous statement indicates contrast 'with many' in the succeeding one After creation it became many But before it, It was only one' So the plurality which pertains to it during the creation period is excluded by this only one at first i e before creation not many as after creation

Now what does 'without a second' mean ? creation requires not only the material cause but also an agent It has been said that sat, the Existent was the material of which the world is made Was there also an Agent apart from Sat, who, using Sat as the material created the world ? No Sat itself was the creator It was the creator as well as the material This we know from the subsequent statement "It created fire' So previously there was not an agent separate from sat Therefore only sat without a second was there before creation 'Only one' excludes all created things and beings "Adv tiyam" excludes a being equal to sat as the creator

'It saw' implies that sat was an intelligent being After its will to become many and to be born what did it do ? It created fire To be consistent with 'I shall become many I shall be born' he might have said

'It became fire,' instead of 'it created fire' But he purposely made the change in expression The significance of which has been already indicated The teacher wanted to convey to his disciple the idea of oneness of the material cause and the agent cause of the creation and for that he invented and employed this device This is however a formula capable of conveying the idea of separateness between the creator and the created But this idea should be avoided So describing the next creation Uddalaka says "That fire saw I shall become many I shall be born" It is quite clear that 'fire' means here, the intelligent being, Sat, with the form of fire. We may understand from this that when Uddalaka said 'It created fire' he meant to say that it created for itself the form of fire, and came into existence in that-form This Sat with the form of fire, having the same will to become many and to be born created water and came into existence in that form Water again having the same will created the form of earth and existed as that

The first creation mentioned here is fire From a part of it, was evolved water and from a part of this again was evolved earth Thus Sat created these three forms for itself and existing in these three forms it became three There are many kinds of living beings in the world : born from wombs, born from eggs, and growing from earth The ultimate origin of all these Uddalaka declares, is these three elements : fire water and earth

Here arises the question what was the material from which fire was evolved ? Is it Sat itself or some thing else ? If it be the former we will have to accept that Sat itself undergoes changes where as there are unequivocal statements in the Upanishats declaring that it s absolutely changeless That some thing other than Sat was the material is equally unacceptable be cause there was nothing else than Sat before creation That some thing could come into existence out of no thing has been rejected In reply to this question we may say that we accept the second alternative Since nothing could come into existence from nothing there must have been something othe than the changeless Sat which served as the material cause of the fire Since fire is an insentient being its material cause also must have been so This material cause of fire is called matter, prakriti in Sanskrit Thus the statement ' It created fire" itself suggests and warrants the inference of matter existing even before creation The statement cannot be explained otherwise it would be mean ingless Such inference based on authoritative statements is called in Sanskrit *srutarthapatti*

There is no statement contradicting the existence of matter before creation It has been said that ' only one" in the previous statement contradicts Sat with 'many' which it becomes after creation It becomes many" means it assumes and exists in many forms Bearing this in mind we may easily understand that 'only one' in the previous sentence " only one with out a second' means the absence of created forms

which are responsible for Sat becoming and being many it had no forms then that would make it many Therefore It was only one Just as plurality pertains to Sat through the forms evolved from matter, oneness also pertains to it through matter in its original, formless state It was a subtle state There was not yet such change in it as to make it fit for evolving different forms So it was only one and with it Sat was only one Because there are many forms evolved from matter and Sat indwells each and every one of them Sat is many during the time of creation But during the time of destruction, matter remaining only one undifferentiated and subtle entity, Sat, indwelling it, also remains only one Thus it may be seen that 'only one' in the sentence is not only not opposed to the presumption of the existence of matter but require it for its explanation and justifies it

We saw that 'alone' after 'Sat' in the sentence excludes the non-existent, while '*advitiyam*'—without a second—excludes an agent separate from Sat. So these two also do not contradict the existence of matter before creation

Just as, due to *srutaarthaapatti*, we are compelled to take Sat in the sense 'Sat with matter in its original, changeless and undifferentiated state, so we have to take 'this' also in the sentence in a sense wider than it would ordinarily carry 'This' in the sentence means 'the world' that we see i.e. each and every one of things which constitute what we collectively call the world or universe. All those things

are we know evolved from matter and not from Sat There is no identity therefore between Sat and and the world These are entirely distinct and diffe-rent from each other How is then 'this' in the sen-tence put in coordination with Sat ?

The answer is that this co-ordination is intended to teach us some thing The world or any thing in it is not what our ordinary exprience shows it to be There *is some thing in it dwelling within it some thing to* which it is an adjunct, some thing of which it is a form 'This" here means that which has 'this' for its form, that which exists in this form 'white' we know is a colour, The colour of milk is white" we say But when we say 'Milk is white' white means the substance which has the white colour because 'white' is put in co-ordination with milk, a substance Similar is the case here This ordinarily means the world we see Svetaketu or any one else would take the word only in this sense and accordingly the sentence would seem to carry the idea that the world was previously the Existing one alone When however one realises that to be consistent with the following statement 'It saw I shall become many' 'the existent one' in this sentence should mean an in telligent being, the question at once arises, 'How could this world have been the inteligent being previously ? The identity seems impossible Since however the statement is an authoritative one and therefore cannot be rejected as an incorrect and meaningless one we have to interpret it so that it may convey a sensible and correct idea We saw in 'Milk is white' white has an extended meaning Like wise 'this' in the Upani shadic passage under consideration must have an ex-

tended meaning, and it can be 'That which exists in the form of this world' We do not and could not know through our worldly experience that there is some being indwelling the worldly things and there are merely the visible forms of it But this very passage of the Upanishat teaches us this truth by implication. What is here thus implied is expressly taught in the very opening line of the Isavasyopanishat: 'Whatever is there in this world all that is an abode of God" Take for instance a pot Our idea about it is that it is simply a thing made of clay But sastras tell us that it is a composite thing, the constituent parts being the visible clayish substance and the invisible Being The former of these two is the form of the latter The clay substance and the invisible inner Being both together make what is called pot, though our worldly experience is limited to the clay-substance alone. Now bearing this in mind we will be in a position to appreciate the philsophers when they say that though the names used in ordinary speech are intended to indicate only things evolved from matter the full significance of them covers their inner Being also Pot could meen that which exists with the form called'pot'. Applying this principle we are able to understand that the Upanishadic statement under consideration means. "that being which exists now with this world as its form was previously only Sat, the formless and nameless Existent" We have already seen that in the statement 'That fire saw I shall become many, I shall be born" 'fire' means Sat with the form of fire The same

principle is to be followed in interpreting this' in the passage we are now considering

Sat is the one reality There is nothing apart from it But that reality is not as has been already stated a simple reality Matter is its permanent adjunct It was said that matter remains in a subtle state, with no forms, no names, no difference whatsoever during the time of destruction But during the time of creation it is in a gross state Though this matter has changes and accordingly has different states it remains always an adjunct to Sat So Sat is always *visishta* a composite entity, and not a simple entity This fact explains the name of the philosophy *Visishtadvaita*, the view of oneness of truth which is a composite one

Sat possesses very many qualities also It was said it is an intelligent being It is omniscient. It has will and skill to do whatever it pleases, and its will never fails

"Having created the three elements", Uddalaka continued, 'the God saw "entering into these gods through this jiva-self I shall manifest forms and names Of these I shall make each one a triple one' The elements are mentioned here as gods because they are forms of God that dwells in them The three elements, fire, water and earth which were the first creation of Sat were incapable of producing the world and things in it. So they were admixed with each other, the process being called *trivrtkarana* or triple making Each one of them was divided into two halves, and one half of each of them

was again divided into two equal parts, i.e., two quarters Then the integral half of fire and a quarter of water and a quarter of earth were combined together and the combination made the fire from which all luminous things were evolved Similarly the half of original water with a quarter each of fire and earth added to it became the tripled water and the half of original earth together with a quarter each of fire and water became the tripled earth and all watery and earthen things were created respectively from these two triple elements Though each of these three triple elements is made of three different parts it retains the old name, fire etc because the particular part dominates over the other two

So far Uddalaka was speaking about two categories namely, Sat and matter Now, it must be noted he makes mention of a third category, *Jiva*. The individual soul is called *jiva*, because it lives being in close and indispensable cantact with breath, *prana* in Sanskrit The pronoun *anena*, meaning 'this' is used here as if pointing to *jiva* by finger with the purpose of indicating that *jiva* is quite different from Sat. A form with a name is created and Sat enters into it, putting within it only one *jiva* This explains the singular number of *jiva*. The *jiva* souls are countless Each and every form that is created has a *jiva* within it and Sat also is present there So each and every thing in the world is a group of three, the form, the soul and Sat which is the Supreme Soul This fact suggested to the ancient authors comparing our body to

Arjuna's chariot with him and Sri Krishna in it

Another very important point to be noted here is that unlike the elements, fire, water and earth *jiva* is not said to have been created it is simply referred to as 'this *jiva*' The implication is that it existed even during the time of destruction, though then having no body no breath, no organs, it was in no way better than the insentient matter, and it will exist forever Though thus *jiva* in itself is eternal it is said to have been created when it is provided with a body and organs When it comes to this world with a gross body it is said to be born and when it goes away leaving the body behind it is said to die For itself it has neither birth nor death In whatever state it is it is, like matter, an inseparable adjunct of Sat There are thus three truths or realities, namely, The Supreme Soul here called *Sat*, *jiva* and matter Since however the latter two are only adjuncts of *Sat* and have no independent existence *Sat* together with these two is considered and often spoken of as 'one truth'

It has been said that the three elements from which the world and all things in it were evolved were triple ones Illustrating this and referring for this purpose to fire, the sun the moon and lightning all of which pertain to the category of the triple fire element Uddalaka tells Svetaketu that the red part of each of them is that of fire, the white that of water and dark that of earth The triple fire in certain processes of its evolution become these things and get the names of fire the sun, the moon and lightning and serve diffe-

rent purposes. But when these states are gone we will find that only the three parts of the elements, red white and dark are there, these alone are of permanent nature Similarly all things in the world are effects of one or another of these triple elements

Proceeding Uddalaka said that the three elements being the material cause are not only responsible for all things in the world but in the form of edibles they also sustain the human and other beings We eat rice or some thing like that, drink water and take nourishing substances such as ghee and oil These are said to belong to the three elements, earth, water and fire respectivly Each of these, when taken in, undergoes a three fold change : one part of it becomes a gross one, another a middle one, and the third a subtle one. "The gross part of food," says Uddalaka, "forms excretion, the middle flesh and the subtle mind" The three parts of water form urine, blood and breath, while those of ghee form the bone, marrow and the speech organ respectively. Illustrating the three subtle parts becoming mind, breath and speech, Uddalaka says :—'just as the essence of curd when churned comes up and becomes ghee the essence of food water and ghee come up and form mind breath and speech.'

Uddalaka causes an experiment to be made in order to convince Svetaketu about the point he now explained He asked his son to fast for a fortnight though he could take water so that he would not die, breath getting nourishment from water On the sixteenth day he was asked to recite passages of the Vedas he had

lames coming together cannot become capable of walking

Now Maya itself is inexplicable an impossible category It could not be real in the sense in which Brahman is, because Advaita has no place for a second reality If unreal, as the Advaitins have to hold it to be, like the rope-serpent or shell silver it must be one imagined by somebody just as these instances are Now who is it that imagines it ? The absolute Brahman is incapable of it and there is none else than It, who could imagin it To say that it has been there always without anybody's imagination and it is unreal is to speek in contradictory terms If it is unreal it should necessarily be due to miscon ception on the part of some one, just like the stock instances the rope snake and shell silver Any thing that has its existance independent of one s false idea or perception must be a real entity, never an unreal one like the rope and shell or the real snake and sil ver If Maya is such, then it is the same as San khya's Prakriti and nothing else

Old authors on Advaita have said :

> "Jiva and God, difference between these two, the pure conscience (Brahman the absolute), Avidya (Maya), the contact between Avidya and Brahman, these six are for us beginning less "

If Avidya or Maya is as beginningless as Brahman and has absolute co-existance with it is it not to be considered as real as Brahman ? What is there to

make it unreal like the rope-snake and the shell-silver? Here is a dilemma from which it is difficult to escape. Maya if real will kill Advaita If otherwise there must be, whereas there is not, a sentient agent whose wrong conception would be responsible for its appearance Postulation of another Maya cannot help to get over the difficulty since the same question arises regarding it also and postulation of further Mayas will without helping in any way only result in *ad infin*

There is also another difficulty. We do not see that the shell-silver evolves itself into something else as mud or gold does into pot or other useful articles. Likewise the positive Avidya which is accepted by Advaitins as false in the same sense as the shell-silver is, cannot be the material cause of the world The fact that Advaitins are forced to accept the six categories as beginnigless clearly shows that they have realised the impossiblity of explaining the appearance of the world with one reality, the absolute Brahman and the false Maya. It has been however already pointed out that beginninglessness of Avidya and its falsity cannot go together It is of much interest to note that there is not a single one among the multitude of authors on Advaita including Sankara who has raised this question relating to Maya or Avidya and made a genuine attempt to answer it Every one of them takes Avidya and its contact with the absolute Brahman for granted and deals with several topics with a view to defend Advaita At times some

of these authors quite unable to meet criticisms made by others are driven to take such a ridiculous position as forces them to say *"Irrationality is an adoring virtue of Avidya and not a defect of it"*

It has been said that Sankara advocated Advaita, because he thought that except by being interpreted as Advaita the Vedanta philosophy could not be saved Many inherit this philosophy of Sankara and therefore stick to it But candidly speaking one who had thoroughly studied and understood it cannot help wondering, *how this most irrational and untenable* line of thinking not only rose to the level of philosophy but secured for itself and occupied a very important place among the philosophies of the world It appears that the wrong notion on the part of majority of scholars that the ultimate truth taught by philosophy must be devoid of all differences which pertained to this world of ours is responsible for it Anyhow it is, so far as I have studied it, a fact that Advaita is not yet established It is yet to be proved

श्री:

श्रीश्रीनिवासपरब्रह्मणे नमः

श्रीमते रामानुजाय नमः

श्रीमते निगमान्तमहादेशिकाय नमः

# ॥ विशिष्टाद्वैतसिद्धिः ॥

चराचरशरीराय सुरासुरनताङ्घ्रये ।
भयाभयनिदानाय घनाघनरुचे नमः ॥१॥

श्रियाऽभिजुष्टं श्रुतिभि प्रदिष्ट
तत्त्व विशिष्टं सुधिया यदिष्टम् ।
अद्वैतसिद्धिप्रसरोपरोधात्
प्रदर्शयाम परिनिष्ठित तत् ॥२॥

असावध्यासीन शिखरमुदयाद्रेरनुदिनं
जगद् भासा भास्वान् जयति विदधानो वितिमिरम् ।
समिन्धान पीठे महति महता ब्रह्ममहसा
गुरुं नः श्रीवासं स्मृतिपथमजस्र नयति य. ॥३॥

एवमेव व्यवहरन्ति । यथा चोदनासूत्रे शबरस्वामी—"न च निश्चितमवगम्यमानमिदं मिथ्या स्यात्" इति । "नाभाव उपलब्धेः" इति सूत्रं च स्थितमेव । ननु शुक्तिरूप्यादिकमपि दृश्यत एव । न च तत्सत्यम् । अतोऽनुपपन्न एवायं व्यवहार इति चेत्, तर्हि स्फीतालोकमध्यवर्तिनं घटं पश्यताऽपि भवता घटोऽस्तीति न प्रतिपत्तव्यम्, यस्माद् दृश्यते तस्मादस्तीति दर्शनास्तित्वयोः सम्बन्धानभ्युपगमात् । अथाभ्युपगम्यते, तर्हि पूर्वोक्तो लोकशास्त्रव्यवहारः समञ्जस एव । तथा च दृश्यत्वात् सत्यत्वे साधनीये मिथ्यात्वसाधनं विपरीतमेव । ननु सम्यग्दर्शनविषयत्वं सत्यत्वे हेतु', तदिह न विवक्षितमिति चेत्, तर्हि असम्यग्दर्शनविषयत्वात्मकं दृश्यत्व हेतुरिति स्यात् । तथा च हेतोरसिद्धि । न हि भ्रमात्मकदर्शनविषयत्वं घटादिषु वर्तते । न हि घटादिविषयस्य दर्शनस्य शुक्तिरजतादिविषयस्येव भ्रमत्वं प्रतिपक्षे सम्प्रतिपन्नम् । तत् पश्चात् साधयिष्यत इति चेत् निराकरिष्यते च । तत किमिदानीम् । यदि शुक्तिरूप्ये यादृशं दृश्यत्वं तादृशमिह हेतूक्रियते तर्हि तत् पक्षे नास्ति । अथ ततो व्यावृत्तं तर्हि तद् दृष्टान्ते नास्ति पक्षे विपरीतसाधकं च । अथोभयसाधारणं तर्हि दर्शितलोकशास्त्रव्यवहारविरोधस्तदवस्थः । दर्शनादिशब्दनां सम्यग्दर्शनादिष्वेव रूढेः । अत एव हि 'नास्ति घटोऽनुपलब्धे. यत् प्रत्यक्षं न तद् व्यभिचरति, यद् व्यभिचरति न तत् प्रत्यक्षम्' इति शास्त्रकृतां स्वरसवाही व्यवहारः । धूमे द्रव्यत्वस्येव प्रकृते केवलदृश्यत्वस्य व्याप्यतानवच्छेदकत्व चेत्यपारमत्र दौस्स्थ्यम् ।

## (२) प्रथममिथ्यात्वम्

अथ परिष्कृत साध्यादि विशिष्य परामृशेम । तत्र साध्यं मिथ्यात्वं निवृण्वन् 'मिथ्याशब्दोऽनिर्वचनीयतावचनः' इति पञ्चपादिका-

## (१) प्रस्तावः

"भोक्ता भोग्यं प्रेरितारं च मत्वा" इति चिदचिदीश्वरात्मकानि त्रीणि तत्त्वानि पृथग् ज्ञातव्यान्युपदिश्य "यस्य पृथिवी शरीरम्" इति चेतनानामचेतनानां च सर्वेषां वस्तूनां शरीरत्वं ब्रह्मणः शरीरित्वं चाभिधाय "सदेव सोम्येदमग्र आसीत्" "तदैक्षत बहु स्यां प्रजायेयेति" "असद् वा इदमग्र आसीत्" "तदात्मानं स्वयमकुरुत" "सच्च त्यच्चाभवत्" इति प्रलये सृष्टौ च विशिष्टमेव ईश्वरतत्त्वं प्रथत इति तावदसन्देहेन च शास्त्राणि प्रतिपादयन्ति। "अधिकं तु भेदनिर्देशात्" "अश्मादिवच्च तदनुपपत्तिः" "अवस्थितेरिति काशकृत्स्नः" "भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्" इति भगवता सूत्रकारेणापि तत् सुनिरूपितम्। अथापि अन्यमेव क्रमपि कुतर्कमवलम्बमाना अचित्तत्त्वस्य कृत्स्नस्य मिथ्यात्वं, चित्तत्त्वस्य परेण ब्रह्मणा ऐक्यं, ब्रह्मणः सकलविशेषरहितत्वं च आस्थाय अद्वैतमेव पारमार्थिकमिति प्रतिष्ठापने संरभन्ते। तत्र

कृते च प्रतिकर्तव्यमिति न्यायानुसारिणः।
विमर्शं कर्तुमिच्छामो न खण्डनकुतूहलात् ॥४॥

## (२) विश्वमिथ्यात्वानुमानम्।

यत्तावदत्र अद्वैतसिद्धिकृता पूर्वाचार्यदर्शितमनुमानमुक्तम् 'विमतं मिथ्या, दृश्यत्वात्, शुक्तिरूप्यवत्' इति, तत् लोकशास्त्रयोरत्यन्तविरुद्धत्वाद् आपातरम्यमपि न भवति। यस्मात् दृश्यते तस्मादस्ति, तस्मात् सत्यं न मिथ्या इति हि सर्वो वदन् दृश्यते। न तु य कोऽपि 'यस्मात् दृश्यते तस्मान्नास्ति, तस्मान्मिथ्येति' वदन्। शास्त्रकारा अपि

एवमेव व्यवहरन्ति । यथा चोदनासूत्रे शबरस्वामी—"न च निश्चित-मवगम्यमानमिदं मिथ्या स्यात्" इति । "नाभाव उपलब्धे." इति सूत्रं च स्थितमेव । ननु शुक्तिरूप्यादिकमपि दृश्यत एव । न च तत्सत्यम् । अतोऽनुपपन्न एवायं व्यवहार इति चेत्, तर्हि स्फीतालोकमध्यवर्तिनं घटं पश्यताऽपि भवता घटोऽस्तीति न प्रतिपत्तव्यम्, यस्माद् दृश्यते तस्मा-दस्तीति दर्शनास्तित्वयोः सम्बन्धानभ्युपगमात् । अथाभ्युपगम्यते, तर्हि पूर्वोक्तो लोकशास्त्रव्यवहार. समञ्जस एव । तथा च दृश्यत्वात् सत्यत्वे साधनीये मिथ्यात्वसाधनं विपरीतमेव । ननु सम्यग्दर्शनविषयत्वं सत्यत्वे हेतु., तदिह न विवक्षितमिति चेत्, तर्हि असम्यग्दर्शनविषयत्वात्मकं दृश्यत्व हेतुरिति स्यात् । तथा च हेतोरसिद्धि । न हि भ्रमात्मकदर्शन-विषयत्वं घटादिषु वर्तते । न हि घटादिविषयस्य दर्शनस्य शुक्ति-रजतादिविषयस्येव भ्रमत्वं प्रतिपक्षे सम्प्रतिपन्नम् । तत् पश्चात् साधयिष्यत इति चेत् निराकरिष्यते च । तत किमिदानीम् । यदि शुक्तिरूप्ये यादृशं दृश्यत्वं तादृशमिह हेतूक्रियते तर्हि तत् पक्षे नास्ति । अथ ततो व्यावृत्तं तर्हि तद् दृष्टान्ते नास्ति पक्षे विपरीत-साधकं च । अथोभयसाधारणं तर्हि दर्शितलोकशास्त्रव्यवहारविरोध-स्तदवस्थ: । दर्शनादिशब्दानां सम्यग्दर्शनादिष्वेव रूढेः । अत एव हि 'नास्ति घटोऽनुपलब्धे' यत् प्रत्यक्षं न तद् व्यभिचरति, यद् व्यभिचरति न तत् प्रत्यक्षम्' इति शास्त्रकृतां स्वरसवाही व्यवहारः । धूमे द्रव्यत्वस्येव प्रकृते केवलदृश्यत्वस्य व्याप्यतान-वच्छेदकत्वं चेत्यपारमत्र दौस्थ्यम् ।

## (३) प्रथममिथ्यात्वम्

अथ परिष्कृतं साध्यादि विशिष्य परामृशेम । तत्र साध्यं मिथ्यात्वं विवृण्वन् 'मिथ्याशब्दोऽनिर्वचनीयतावचन:' इति पञ्चपादिका-

(१) :

"भोक्ता भोग्यं प्रेरितार च मत्वा' इति चिदचिदीश्वरात्मकानि त्रीणि तत्त्वानि पृथग् ज्ञातव्यान्युपदिश्य "यस्य पृथिवी शरीरम्" इति चेतनानामचेतनानां च सर्वेषां वस्तूनां शरीरत्व ब्रह्मणः शरीरित्वं चाभिधाय "सदेव सोम्येदमग्र आसीत्" "तदैक्षत बहु स्यां प्रजायेयेति" "असद् वा इदमग्र आसीत्" "तदात्मानं स्वयमकुरुत" "सच्च त्यच्चा भवत्" इति प्रलये सृष्टौ च विशिष्टमेव ईश्वरतत्त्वं प्रथत इति तावदसन्देहगन्धं शास्त्राणि प्रतिपादयन्ति। "अधिकं तु भेदनिर्देशात्" "अश्मादिवच्च तदनुपपत्तिः" "अवस्थितेरिति काशकृत्स्नः" "भोक्त्रा पत्तेरविभागश्चेत् स्याल्लोकवत्" इति भगवता सूत्रकारेणापि तत् सुनिरूपितम्। अथापि अन्यमेव कमपि कुतर्कमवलम्बमाना' अचित्त त्त्वस्य कृत्स्नस्य मिथ्यात्वं, चित्तत्त्वस्य परेण ब्रह्मणा ऐक्यं, ब्रह्मणः सकलविशेषरहितस्य च आस्थाय अद्वैतमेव पारमार्थिकमिति प्रतिष्ठापने संरभन्ते। तत्र

कृते च प्रतिकर्तव्यमिति न्यायानुसारिणः।
विमर्शं कर्तुमिच्छामो न खण्डनकुतूहलात् ॥४॥

## (२) विश्वमिथ्यात्वानुमानम्।

यत्तावत्तत्र अद्वैतसिद्धिकृता पूर्वाचार्यदर्शितमनुमानमुक्तम् 'विमतं मिथ्या, दृश्यत्वात्, शुक्तिरूप्यवत्' इति, तत् लोकशास्त्रयोरत्य न्तविरुद्धत्वाद् आपातरम्यमपि न भवति। यस्मात् दृश्यते तस्मादस्ति, तस्मात् सत्यं न मिथ्या इति हि सर्वो वदन् दृश्यते। न तु य कोऽपि 'यस्मात् दृश्यते तस्मान्नास्ति, तस्मान्मिथ्येति' वदन्। शास्त्रकारा अपि

एवमेव व्यवहरन्ति। यथा चोदनासूत्रे शबरस्वामी—"न च निश्चित-मवगम्यमानमिदं मिथ्या स्यात्" इति। "नाभाव उपलब्धेः" इति सूत्रं च स्थितमेव। ननु शुक्तिरूप्यादिकमपि दृश्यत एव। न च तत्सत्यम्। अतोऽनुपपन्न एवायं व्यवहार इति चेत्, तर्हि स्फीतालोकमध्यवर्तिनं घटं पश्यताऽपि भवता घटोऽस्तीति न प्रतिपत्तव्यम्, यस्माद् दृश्यते तस्मा-दस्तीति दर्शनास्तित्वयोः सम्बन्धानभ्युपगमात्। अथाभ्युपगम्यते, तर्हि पूर्वोक्तो लोकशास्त्रव्यवहारः समञ्जस एव। तथा च दृश्यत्वात् सत्यत्वे साधनीये मिथ्यात्वसाधनं विपरीतमेव। ननु सम्यग्दर्शनविषयत्वं सत्यत्वे हेतुः, तदिह न विवक्षितमिति चेत्, तर्हि असम्यग्दर्शनविषयत्वात्मकं दृश्यत्वं हेतुरिति स्यात्। तथा च हेतोरसिद्धिः। न हि भ्रमात्मकदर्शन-विषयत्वं घटादिषु वर्तते। न हि घटादिविषयस्य दर्शनस्य शुक्ति-रजतादिविषयस्येव भ्रमत्वं प्रतिपक्षे सम्प्रतिपन्नम्। तत् पश्चात् साधयिष्यत इति चेत् निराकरिष्यते च। तत किमिदानीम्। यदि शुक्तिरूप्ये यादृशं दृश्यत्वं तादृशमिह हेतूक्रियते तर्हि तत् पक्षे नास्ति। अथ ततो व्यावृत्तं तर्हि तद् दृष्टान्ते नास्ति पक्षे विपरीत-साधकं च। अथोभयसाधारणं तर्हि दर्शितलोकशास्त्रव्यवहारविरोध-स्तदवस्थः। दर्शनादिशब्दानां सम्यग्दर्शनादिष्वेव रूढेः। अत एव हि 'नास्ति घटोऽनुपलब्धेः' 'यत् प्रत्यक्षं न तद् व्यभिचरति, यद् व्यभिचरति न तत् प्रत्यक्षम्' इति शास्त्रकर्तॄणां स्वरसवाही व्यवहारः। धूमे द्रव्यत्वस्येव प्रकृते केवलदृश्यत्वस्य व्याप्यतान-वच्छेदकत्वं चेत्यपारमत्र दौस्थ्यम्।

## (३) प्रथममिथ्यात्वम्

अथ परिष्कृतं साध्यादि विशिष्य परामृशेम। तत्र साध्यं मिथ्यात्वं विवृण्वन् 'मिथ्याशब्दोऽनिर्वचनीयतावचनः' इति पञ्चपादिका-

वचनमादाय, सदसदनधिकरणत्वरूपाऽनिर्वचनीयतेत्यभ्युपेत्य, सदसदनधिकरणत्वमपि सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयात्मकमित्यास्थाय, तदुपरि अत्र त्रिकालाबाध्यत्वरूपसत्त्वव्यतिरेको नासत्त्वम्, किं तु क्वचिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वम् तद्व्यतिरेकश्च साध्यत्वेन विवक्षित तथा च त्रिकालाबाध्यविलक्षणत्वे सति क्वचिदुपाधौ सत्त्वेन प्रतीयमानत्वरूप साध्य पर्यवसितम् एव च सति न शुक्तिरूप्ये साध्यवैकल्यम्। बाध्यत्वरूपासत्त्वव्यतिरेकस्य साध्याप्रवेशात्' इत्यद, अत्र ब्रूम । प्रथम तावत् 'मिथ्याशब्दोऽनिर्वचनीयतावचन' इत्येतदनुपपन्नम्। व्यवहारमूलो हि शब्दानामर्थनिश्चय । तत्र शुक्तिरूप्ये मिथ्येति यो व्यवहार स केन निमित्तेन? बाधितत्वेनेति चेत् साधु। तथा च तन्मात्रवचनो मिथ्याशब्द । अविद्यमानवचनो वा, बाधितस्याविद्यमानत्वात् । न तु भवदुक्त सत्त्वाभाववचनोऽपि । मानाभावात् । न हि शुक्तिरूप्य वस्तुतोऽसद्भिन्नमित्येतावताऽसत्त्वाभावस्य मिथ्याशब्दाभिधानावबोधो भवितुमर्हति । न हि घटादिशब्दानां वस्तुतोऽसद्भिन्नघटादिवाचिना असत्त्वाभाववाचित्वमिष्यते । तस्माद् बाध्यत्वेन निर्वचनीयवचन एव मिथ्याशब्द , न त्वनिर्वचनीयवचन इति ।

अथ यत् सत्त्वात्यन्ताभावासत्त्वात्यन्ताभावरूपधर्मद्वयात्मक साध्यमुक्त तत्र असत्त्वात्यन्ताभावांशे सिद्धसाधनदोष एव । यत्तु "गुणादिक गुण्यादिना भिन्नाभिन्नम्। समानाधिकृतत्वात्' इति भेदाभेदवादिप्रयोगे तावदङ्गीकृतस्य भिन्नत्वस्य सिद्धावप्युद्देश्यप्रतीत्यसिद्धेर्यथा न सिद्धसाधनं, तथा प्रकृतेऽपि मिलितप्रतीतेरुद्देश्यत्वान्न सिद्धसाधनम्। यथा तत्राभेदे घट कुम्भ इति सामानाधिकरण्यप्रतीतेरदर्शनेन मिलितासिद्धिरुद्देश्या, तथा प्रकृतेऽपि सत्त्वरहिते तुच्छे दृश्यत्वादर्शनेन मिलितस्य तत्प्रयोजकतया मिलितसिद्धिरुद्देश्येति

समानम्" इत्युक्तं तदयुक्तम्। असमानत्वात्। दृष्टान्ते हि घटः कुम्भ इत्यत्राभेदो वर्तते। न च तस्य सामानाधिकरण्यप्रतीतिप्रयोजकत्व भवतीति युक्त तत्रोभयसिद्धेरुद्देश्यत्वम्, प्रकृते तु सत्त्वराहित्यं कथं तुच्छस्य। त्रिकालाबाध्यत्वं हि सत्त्वम्। तदभावो बाध्यत्वमेव। न चेदं तुच्छे सम्भवति, कदाचिदप्यप्रतीयमानस्य बाधायोगात्। प्रतीतस्य निवर्तन हि बाधो नाम। एव बाध्यत्वाभावे तत्प्रयुक्तं दृश्यत्वमपि तुच्छस्य नास्तीति कुतोऽत्र मिलितसिद्धिरपेक्षणीया। ननु तुच्छे यदि सत्त्वात्यन्ताभावो न स्यात् तर्हि तत् सदित्यापद्येतेति चेत्, यदि स्यात तर्हि तद् बाधितमित्यापद्येतेति समानम्। त्रैकालिकाबाध्यत्वाभावो हि बाध्यत्वमेव। ननु कस्यचित् सत्त्व वा तदभाववत्त्व वा भवेत्। न प्रकारान्तरमस्ति, 'परस्परविरोधे हि न प्रकारान्तरस्थिति.' इति स्थितेः। तथा सति तुच्छस्य सत्त्वमपि नास्ति तदभाववत्त्वमपि नास्तीति कथमेतदिति चेत्, आत्मानमुपालभस्व, य· तुच्छमपि वस्त्विव कृत्वा ब्रह्मप्रपञ्चादिभिः सह समानं व्यवहरन् न मनागपि विशेष प्रतिपद्यते। वस्तुधर्मो ह्ययं सत्त्व वा तदभावो वा। अथ कथ तुच्छस्यासत्त्वमिति चेत् असत्त्वं तस्य केनेष्टम्। इच्छताऽपि भवता कच्चिदप्युपाधौ सत्त्वेन प्रतीयमानत्वानधिकरणत्वमित्यन्यादृशमेवेष्टम्। इदमपि तुच्छस्यासम्भवि। अवस्तुनो धर्मानाधारत्वात्। न चैतदभावो दृश्यत्वप्रयोजक, बाध्यत्वमात्रेण तदुपपत्तेरित्यास्तां तावत्। एतेन 'सत्प्रतियोगिकासत्प्रतियोगिकभेदद्वयं वा, सत्त्वात्यन्ताभाववत्त्वे सति असत्त्वात्यन्ताभावरूपं। विशिष्टं वा साध्य'मित्यपि प्रत्युक्त वेदितव्यम्, यथा जातिशून्यत्वं सामान्यविशेषसमवायाभावानां सामान्यमित्युक्ते तुच्छेऽतिव्याप्तिरिति कृत्वा तद्भिन्नत्वमपि न निवेश्यं तथाऽत्रापीति।

## (४) द्वितीयमिथ्यात्वम्

"प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वं वा मिथ्यात्वम् इत्यपरं मिथ्यात्वमुक्तम्। अत्र त्रैकालिकनिषेध इत्यत्यन्ताभाव इष्टः। येन रूपेण यदधिकरणतया यत् प्रतिपन्नं तेन रूपेण तन्निष्ठात्यन्ताभावप्रतियोगित्वं तस्य मिथ्यात्वमिति विवक्षितमिति स्वयमेव तद् विवृतम्। अत्र तद्वस्त्वधिकरण एव वर्तमानतया तद्वस्तुत्वस्यात्यन्ताभावो न प्रतिपत्तुं शक्यत इति विरोधः स्फुटः। अत इदं परित्यज्य "स्वमात्रनिष्ठात्यन्ताभावप्रतियोगित्वमेव मिथ्यात्वमित्याह। "सन्मात्रनिष्ठेति। स्वप्रकारकधीविशेष्यनिष्ठस्वव्यापकेत्यर्थः।" इति इदमप्यनुपपन्नम्। एवंविधस्य मिथ्यात्वस्य दृष्टान्ते शुक्तिरूप्ये पूर्वमगृहीतत्वेन तस्य व्यापकत्वाभावात्। बाधकप्रत्ययेन इदमर्थनिष्ठात्यन्ताभावप्रतियोगित्वमेव रजतस्य गृहीतम्। न तु इदमर्थनिष्ठस्वव्यापकात्यन्ताभावप्रतियोगित्वम्। हेत्वभावात् अनपेक्षितत्वात्। असम्भवि च सत्त्वव्यापकत्वमत्यन्ताभावस्य। सत्यरजते सत्त्वमपि रजतात्यन्ताभावाभावात्। ब्रह्मात्मकसत्त्वविवक्षया च शुक्तिरूप्ये तद्व्यापकत्वमहृद्यमुक्तम्। तस्मादिदमपि साध्यं न युज्यते।

## (५) तृतीयमिथ्यात्वम्

ज्ञाननिवर्त्यत्वं वा मिथ्यात्वमित्यन्यन्मिथ्यात्वम्। तच्च स्वयं व्यवृणुत, ज्ञानप्रयुक्तावस्थितिसामान्यविरहप्रतियोगित्वमिति। दृष्टान्त इह न सम्प्रतिपन्नम्। न हि शुक्तिरजतभ्रमे किमपि रजतं जातं पश्चान्निवर्तत इत्यनद्वैतिन इच्छन्ति। तथा साधयिष्यत इति चेत् आरम्भात् प्रभृति आवसानं सर्वं भवतां साध्यावस्थमेव। न तु कस्यचित् सिद्धिरस्ति भविष्यति वा। परं प्रति अप्रसिद्धविशेषणता तु स्थिता। प्रारब्धकर्मण्यव्याप्तिश्च, भोगैकनाश्यत्वात्। एतेन दृष्टान्तासिद्धिरप्यनुमानदूषणमिति ज्ञापितं भवति। शुक्तिरूप्यमिति कस्यचिद्वस्तुनोऽसम्प्रतिपन्नत्वात्।

## (६) चतुर्थमिथ्यात्वम्

स्वाश्रयनिष्ठात्यन्ताभावप्रतियोगित्वमितीतरत्। इदं विवृतं 'स्वात्यन्ताभावाधिकरण एव प्रतीयमानत्वम्' इति। अत्राधिकरणपदेन यदि प्रतिपन्नोपाधिर्गृह्यते तर्हि तत्र स्वात्यन्ताभावो दुर्ग्रहः। प्रतीयमानत्वं ह्यत्र शुक्तिरूप्यवन्न भ्रान्तिविषयत्वम्। अतः प्रतियोगी तत्र वर्तत एव। तथा सति तदत्यन्ताभावः कथं तत्र गृह्येत। अत एव साध्यत इति चेत् नूनं वह्नेरनुष्णत्वसाधनेऽपि कुशलो भवान्। अथ सन्मात्रं गृह्यते तर्हि दृष्टान्ते तन्निष्ठतया अत्यन्ताभावस्य प्रतियोगिनो वा अगृहीतत्वात् हेतुव्यापकत्वं न सिद्धम्। अत इदमपि साध्यमयुक्तम्।

## (७) पञ्चममिथ्यात्वम्

अथान्ते "सद्विविक्तत्वं वा मिथ्यात्वम्। सत्त्वं च प्रमाणसिद्धत्वम्। प्रमाणत्वं च दोषासहकृतज्ञानकरणत्वम्। तेन स्वाप्नादिवत् प्रमाणसिद्धभिन्नत्वेन मिथ्यात्वं सिद्ध्यति," इत्याह। इदमपि पक्षे दुर्ग्रहमेव। पृथिव्यादीनां हि प्रमाणसिद्धत्वनिश्चयोऽनद्वैतिनां वर्तते। ते कथं तत्र प्रमाणसिद्धभिन्नत्वं गृह्णीयुः। पृथिव्यादिप्रत्यक्षं न प्रमाणम्। दोषसहकृतज्ञानकरणकत्वादिति चेन्न। असिद्धेः, न हि पृथिव्यादिग्राहकचक्षुराद्युपघातिदोषविशेषसद्भावे किञ्चन प्रमाणमस्ति। अद्वैतश्रुतिः प्रमाणमिति चेत् तर्हि सैव परिशीलनीया। किमनुमानव्यसनेनेति।

## (८) मिथ्यात्वमिथ्यात्वम्

अथेदं साध्यं मिथ्यात्वं मिथ्या न वेति विकल्प्य, आद्ये प्रपञ्चः सत्यः स्यात्। एकस्मिन् धर्मिणि प्रसक्तयोर्विरुद्धधर्मयोरेकस्य मिथ्यात्वे अपरसत्त्वनियमात्। अन्त्ये मिथ्यात्ववदेव प्रपञ्चः सत्यः स्यात् उभयथाऽप्यद्वैतहानिरिति परैः कृतमाक्षेपं परिहरन् इदमाह—"मिथ्यात्वमिथ्या-

त्वेऽपि प्रपञ्चसत्यत्व न भवति। परस्परविरहरूपत्वेन परस्परविरह-
व्यापकत्वेन वा विरुद्धयोर्द्वयोरेकतरनिषेधे हि इतरसत्यमापतेत्। यथा
रजतत्वतदभावयो रजतभिन्नत्वरजतत्वयोर्वा शुक्तौ। तत्र निषेध्यता
वच्छेदकभेदनियमात्। प्रपञ्चसत्यत्वमिथ्यात्वयोस्तु परस्परविरहरूपत्व
वा परस्परविरहव्यापकत्व वा नास्तीत्युक्तम्। तेन दृश्यत्वादि एकमेव
प्रतिषेध्यतावच्छेदकम्। यथा गजे गोत्वाश्वत्वयोगजत्वात्यन्ताभाव-
व्याप्यत्वम्। न हि गोत्व न गजवृत्ति गजत्वात्यन्ताभावव्याप्यत्वादि
त्युक्ते अश्वत्वस्य गजवृत्तित्वं सिद्ध्यति। तस्यापि गजत्वात्यन्ताभाव
व्याप्यत्वात्। एव प्रकृते प्रपञ्चमिथ्यात्वस्य दृश्यत्वादिना मिथ्यात्वेऽपि
तत्सत्यत्वस्य नापत्ति। सत्यत्वस्यापि मिथ्यात्वस्येव मिथ्यात्वात्।
दृश्यत्वादिसाधारण्यात्।" इति। तदिद उपक्रान्ता जल्पकथा विस्मृत्य
शिष्यान् प्रत्युपदिशतीव क विदुषामुपहास्यम्। न हि वादिन प्रपञ्च-
मिथ्यात्व सिद्ध कृत्वा तन्मिथ्या सत्य वेति विकल्प्य चोदयन्ति, येनैव
मुपपत्ति क्रियेत। अनुमानदूषणतात्पर्येणैव एव विकल्पनात्। ते चैव
मन्यन्ते। दृश्यत्वादिलिङ्गजन्येय प्रपञ्चमिथ्यात्वानुमिति किं ब्रह्मप्रतीति
तुल्या, अथवा सत्यरजतप्रतीतितुल्या, यद्वा शुक्तिरजतप्रतीतितुल्या। आद्ये
प्रपञ्चस्य मिथ्यात्वेऽप्यस्य मिथ्यात्वस्य ब्रह्मवत् सत्यत्वेनाद्वैतभङ्ग। द्वितीये
प्रपञ्चसत्यत्वग्राहकप्रबलप्रत्यक्षविरुद्धतया बाधावश्यम्भावेन मिथ्यात्वस्य
मिथ्यात्वात् प्रपञ्चसत्यत्वं सुस्थितम्। अत एवाद्वैतभङ्गश्च। तृतीये
सुतरा तथेति। तदिद चोद्याभिप्रायमगृहीत्वैव यत्किञ्चिदुक्तम्। न तु
चोद्य समाहितमिति ज्ञेयम्। एतेन "परस्परविरहरूपत्वेऽपि व्यावहारिक
मिथ्यात्वेन व्यावहारिकसत्यत्वापहारेऽपि काल्पनिकसत्यत्वानपहारात्
तार्किकमतसिद्धसयोगतदभाववत् सत्यत्वमिथ्यात्वयो समुच्चयाभ्यु
पगमाच्च" इत्यादि निरस्तम्। प्रत्यक्षसिद्धप्रपञ्चसत्यत्वविरोधिनस्त-
न्मिथ्यात्वस्यानुमित्यसम्भवेन व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्य

त्वापहारोक्तेरत्यन्तमसङ्गतत्वात्। अत एव प्रपञ्चसत्यत्वस्य काल्पनिकत्वोक्तेरयोगाच्च। तदिहानुमीयमानं प्रपञ्चमिथ्यात्वं यदि ब्रह्मतुल्यं तर्हि अद्वैतासिद्धिः। यदि प्रपञ्चतुल्यं तर्हि तत्सत्यत्वेन विरोधादन्यतरबाधेऽपरिहार्ये प्रत्यक्षसिद्धस्य प्रबलत्वादनुमीयमानं मिथ्या भवति। तथा च प्रपञ्चसत्यत्वं निश्चलम्। शुक्तिरूप्यतुल्यत्वं तु प्रामाणिकं सत् अद्वैतभङ्गमयत्नसिद्धमापादयति। इत्ययं वादकुशलानामभियोगो दुर्निवारः प्रपञ्चापलापिनाम्। एतदुक्तं भवति। प्रकृतानुमानसाध्यस्य प्रपञ्चमिथ्यात्वस्य सत्यत्वमनिष्टम्। द्वितीयसत्यप्रसङ्गात्। शुक्तिरूप्यवन्मिथ्यात्वमप्यनिष्टम्। प्रपञ्चस्य सत्यत्वापत्तेः। परिशेषात् प्रपञ्चवत्सत्यत्वं वाच्यम्। तत्तु प्रपञ्चसत्यत्वेन विरुद्ध्यते। शुक्तिसत्यत्वेन शुक्तिरूप्यसत्यत्वमिव। शुक्तिसत्यत्वेन तदभावसत्यत्वमिव च। न हि प्रपञ्चसत्यत्वे सति तन्मिथ्यात्वसत्यत्वं भवति। अस्मिन् सति वा तत्। एवं प्रपञ्चसत्यत्वमिथ्यात्वयोः परस्परविरहात्मकत्वेन एकस्य साधकेनापरस्य बाधाद्विषमसत्ताकत्वमपरिहार्यम्। तत्र सत्यत्वसाधकं दृढं प्रत्यक्षं अनुमेयं मिथ्यात्वं बाधते। तथा चेदमनुमानं प्रपञ्चमिथ्यात्वं साधयितुमक्षममिति।

यत्तु "न च भावत्वाभावत्वात्यन्ताभाववत्त्वासम्भवः। सत्त्वासत्त्वात्यन्ताभावयोः परस्परपरिहारनियमादिति वाच्यम्, सत्त्वे तावन्न सत्त्वमस्ति। वृत्तिविरोधात्। न चासत्त्वम्, तथा सति सर्वशून्यतापातात्। एवमसत्त्वे नासत्त्वम्। वृत्तिविरोधात्। न सत्त्वम्। विरोधादेव। इति सदसतोरेकतरनिषेधस्येतरविधित्वनियमासिद्धेः।" इति न्यायचन्द्रिकायामुक्तं तदयुक्तमिति सुग्रहम्, ब्रह्मणोऽप्येवमनिर्वचनीयत्वापत्तेः। तत्र हि न सत्त्वम्। सविशेषत्वापत्तेः। नाप्यसत्त्वम्। शून्यतापत्तेः। अथ सत्त्वाभावेऽपि ब्रह्मणो नासत्त्वम्। अत एव न शून्यत्वम् तत् सत्त्वेऽपि तुल्यम्। घटो न नास्तीत्युक्ते घटसत्त्वप्रतीतिनियमानुपपत्तिश्च, असत्त्व-

त्वेऽपि प्रपञ्चसत्यत्व न भवति। परस्परविरहरूपत्वेन परस्परविरह व्यापकत्वेन वा विरुद्धयोर्द्वयोरेकतरनिषेधे हि इतरसत्त्वमापद्येत्। यथा रजतत्वतदभावयो रजतभिन्नत्वरजतत्वयोर्वा शुक्तौ। तत्र निषेध्यता वच्छेदकभेदनियमात्। प्रपञ्चसत्यत्वमिथ्यात्वयोस्तु परस्परविरहरूपत्व वा परस्परविरहव्यापकत्व वा नास्तीत्युक्तम्। तेन दृश्यत्वादि एकमेव प्रतिषेध्यतावच्छेदकम्। यथा गजे गोत्वाश्वत्वयोर्गजत्वात्यन्ताभाव व्याप्यत्वम्। न हि गोत्व न गजवृत्ति गजत्वात्यन्ताभावव्याप्यत्वादि त्युक्ते अश्वत्वस्य गजवृत्तित्व सिद्धयति। तस्यापि गजत्वात्यन्ताभाव व्याप्यत्वात्। एव प्रकृते प्रपञ्चमिथ्यात्वस्य दृश्यत्वादिना मिथ्यात्वेऽपि तत्सत्यत्वस्य नापत्ति। सत्यत्वस्यापि मिथ्यात्वस्येव मिथ्यात्वात्। दृश्यत्वादिसाधारण्यात्।" इति। तदिद स्वपक्षा ता जल्पकथा विस्मृत्य शिष्यान् प्रत्युपदिशतेव क विदुषामुपहास्यम्। न हि वादिन प्रपञ्च मिथ्यात्व सिद्ध कृत्वा स मिथ्या सत्य वेति विकल्प्य चोदयन्ति, येनैव मुपपत्ति क्रियेत। अनुमानदूषणतात्पर्येणैव एव विकल्पनात्। ते चैव मन्यन्ते। दृश्यत्वादिलिङ्गजन्येय प्रपञ्चमिथ्यात्वानुमिति किं ब्रह्मप्रतीति तुल्या, अथवा सत्यरजतप्रतीतितुल्या, यद्वा शुक्तिरजतप्रतीतितुल्या। आद्ये प्रपञ्चस्य मिथ्यात्वेऽप्यस्य मिथ्यात्वस्य ब्रह्मवत् सत्यत्वेनाद्वैतभङ्ग। द्वितीये प्रपञ्चसत्यत्वग्राहकप्रबलप्रत्यक्षविरुद्धतया बाधावश्यम्भावेन मिथ्यात्वस्य मिथ्यात्वात् प्रपञ्चसत्यत्व सुस्थितम्। अत एवाद्वैतभङ्गश्च। तृतीये सुतरा तथेति। तदिद चोद्याभिप्रायमगृहीत्वतैव यत्किञ्चिदुक्तम्। न तु चोद्य समाहितमिति ज्ञेयम्। एतेन "परस्परविरहरूपत्वेऽपि व्यावहारिक मिथ्यात्वेन व्यावहारिकसत्यत्वापहारेऽपि काल्पनिकसत्यत्वानपहारात् तार्किकमतसिद्धसयोगतदभाववत् सत्यत्वमिथ्यात्वयो समुच्चयाभ्यु पगमाच्च" इत्यादि निरस्तम्। प्रत्यक्षसिद्धप्रपञ्चसत्यत्वविरोधिनस्त- न्मिथ्यात्वस्यानुमित्यसम्भवेन व्यावहारिकमिथ्यात्वेन व्यावहारिकसत्य

त्वापहारोक्तेरत्यन्तमसङ्गतत्वात्। अत एव प्रपञ्चसत्यत्वस्य काल्पनिकत्वो-क्तेरयोगाच्च। तदिहानुमीयमानं प्रपञ्चमिथ्यात्वं यदि ब्रह्मतुल्यं तर्हि अद्वैतासिद्धिः। यदि प्रपञ्चतुल्यं तर्हि तत्सत्यत्वेन विरोधादन्य-तरबाधेऽपरिहार्ये प्रत्यक्षसिद्धस्य प्रबलत्वादनुमीयमानं मिथ्या भवति। तथा च प्रपञ्चसत्यत्वं निश्चलम्। शुक्तिरूप्यतुल्यत्वं तु प्रामाणिकं सत् अद्वैतभङ्गमयत्नसिद्धमापादयति। इत्ययं वादकुशलाना-मभियोगो दुर्निवारः प्रपञ्चापलापिनाम्। एतदुक्तं भवति। प्रकृतानु-मानसाध्यस्य प्रपञ्चमिथ्यात्वस्य सत्यत्वमनिष्टम्। द्वितीयसत्यप्रसङ्गात्। शुक्तिरूप्यवन्मिथ्यात्वमप्यनिष्टम्। प्रपञ्चस्य सत्यत्वापत्तेः। परिशेषात् प्रपञ्चवत्सत्यत्वं वाच्यम्। तत्तु प्रपञ्चसत्यत्वेन विरुद्ध्यते। शुक्तिसत्यत्वेन शुक्तिरूप्यसत्यत्वमिव। शुक्तिसत्यत्वेन तदभावसत्यत्वमिव च। न हि प्रपञ्च-सत्यत्वे सति तन्मिथ्यात्वसत्यत्वं भवति। अस्मिन् सति वा तत्। एवं प्रपञ्च-सत्यत्वमिथ्यात्वयोः परस्परविरहात्मकत्वेन एकस्य साधकेनापरस्य बाधा-द्विषमसत्ताकत्वमपरिहार्यम्। तत्र सत्यत्वसाधकं दृढं प्रत्यक्षं अनुमेयं मिथ्यात्वं बाधते। तथा चेदमनुमानं प्रपञ्चमिथ्यात्वं साधयितुम-क्षममिति।

यत्तु "न च भावत्वाभावत्वात्यन्ताभाववत्त्वासम्भवः। सत्त्वासत्त्वा-त्यन्ताभावयोः परस्परपरिहारनियमादिति वाच्यम्, सत्त्वे तावन्न सत्त्व-मस्ति। वृत्तिविरोधात्। न चासत्त्वम्, तथा सति सर्वशून्यतापातात्। एवमसत्त्वे नासत्त्वम्। वृत्तिविरोधात्। न सत्त्वम्। विरोधादेव। इति सदसतोरेकतरनिषेधस्येतरविधित्वनियमासिद्धेः।" इति न्यायचन्द्रिका-यामुक्तं तदयुक्तमिति सुग्रहम्, ब्रह्मणोऽप्येवमनिर्वचनीयत्वापत्तेः। तत्र हि न सत्त्वम्। सविशेषत्वापत्तेः। नाप्यसत्त्वम्। शून्यतापत्तेः। अथ सत्त्वाभावेऽपि ब्रह्मणो नासत्त्वम्। अत एव न शून्यत्वम् तत् सत्त्वेऽपि तुल्यम्। घटो न नास्तीत्युक्ते घटसत्त्वप्रतीतिनियमानुपपत्तिश्च, असत्त्व-

विरहस्य सत्त्वविधित्यनियमासिद्धिप्रसङ्गात् । कुत्रश्च सत्त्वे सत्त्वं नास्ति । स्वस्मिन् स्ववृत्तिविरोधादिति चेत् घटे सत्त्वमस्तीति व्यवहारं प्रामाणिकमभ्युपेत्य वा इदमुच्यते अनभ्युपेत्य वा । आद्ये जातिरूपं देशविशेषकालविशेषसम्बन्धित्वरूपं वा घटवृत्तिसत्त्वमन्यत् । अन्यच्च एतद्वृत्ति प्रामाणिकत्वादिरूपं सत्त्वमिति नास्ति वृत्तिविरोधः । अन्त्ये सार्वत्रिकव्यवहारबाधप्रसङ्गः सत्त्ववृत्त्यभावद्वयप्रतियोगिनोः सत्त्वासत्त्वयोः परस्परविरहात्मकत्वेन तदभावयोरैकाधिकरण्यं च दुर्घटम् । असत्त्वाभावेनाशून्यत्वं सत्त्वाभावेन शून्यत्वं चेति सत्त्वं शून्याशून्योभयात्मकं स्यात् । तुल्यमेतदसत्त्वेऽपि । तत्र तु असत्त्वे सत्त्वमस्त्येव । घटादेर्देशविशेषेऽविद्यमानत्वस्य प्रमाविषयत्वात् । इति ॥

यदुक्तं प्रपञ्चतन्मिथ्यात्वयोरेकब्रह्मज्ञानबाध्यत्वेन समसत्ताकत्वात् मिथ्यात्वबाधेन प्रपञ्चस्यापि बाधान्नाद्वैतक्षतिरिति, तन्न । उभयोरेकबाध्यत्वासम्भवात् । ब्रह्मज्ञानेन प्रपञ्चो निवर्तते । सा निवृत्तिरेव बाधः । तत्प्रतियोगित्वमेव प्रपञ्चस्य मिथ्यात्वम् । तत्त्वज्ञानाधीनेऽस्मिन् आविद्यकत्वविरहात् दृश्यत्वं नास्ति । तदुत्तरोत्पन्नब्रह्मज्ञानान्तराभावात् बाध्यत्वमपि नास्ति । तस्मात् प्रपञ्चस्य यदि मिथ्यात्वं स्यात् पारमार्थिकमेव तत् स्यादिति हतमेवाद्वैतम् ।

## (६) दृश्यत्वम्

अथ हेतुविमर्शः । तत्रेदमादौ वक्तव्यम् । दृष्टान्ते यन्निरूपिता व्याप्तिर्यस्मिन् गृहीता तयोः क्रमेण व्यापकत्वं व्याप्यत्वं च, प्रयोगे साध्यस्य हेतुत्वस्य चेति नैयायिकमर्यादा । इमामतिलङ्घमानो न विदुषां ग्राह्यवचनः । एवं सति शुक्तिरूप्यस्थले कयोर्व्याप्यव्यापकभाव इति द्रष्टव्यम् । दूरस्थत्वादिदोषवशात् शुक्तिं रजतं मन्यमानः तदूमहणायोपसृत्य नेदं रजतमिति तत्त्वं बुध्यते । अत्र पूर्वं प्रत्ययो बाध्यः, उत्तरो

बाधकः। अयथार्थत्वप्रकाशोऽत्र बाधः। तद्विषयत्वं बाध्यत्वम्। अयथार्थत्वं मिथ्यात्वम्। विषयस्य तु बाध्यत्वं बाधितप्रत्ययविषयत्वं बाधकप्रत्ययाधीननेतिप्रत्ययविषयत्वं वा। मिथ्यात्वं पुनः स्वधर्मिवृत्तिविरहप्रतियोगित्वम्। ज्ञानानां स्वतः प्रामाण्यात् स्वरसतः प्राप्तमर्थनिश्चायकत्वं पूर्वप्रत्ययस्य बाधकवशेनायथार्थत्वनिश्चयात् तेन दुष्टकरणजन्यत्वनिश्चयाच्च अपोद्यते। प्रत्युताप्रामाण्यमध्यवसीयते। तदभावे बाधकप्रत्ययादेरनुपपत्तेः। एवं च बाधितेन अत एवायथार्थेन दुष्टकरणजन्येन च प्रत्ययेन यद्यत्प्रकाशितं तत्सर्वं बाधितत्वेन स्वधर्म्यधिकरणकात्यन्ताभावप्रतियोगित्वरूपमिथ्यात्ववदिति व्याप्तिर्गृह्यते। वस्तुवृत्ते एवं स्थिते विशेषतः प्रतिपन्नस्यायथार्थदर्शनविषयत्वस्य हेतुतां विहाय सामान्यतो दृश्यत्वस्य यद्धेतुत्वं कल्प्यते यच्च मिथ्यात्वप्रत्यायकस्य अत एव तद्व्याप्यत्वेनाध्यवसेयस्य बाध्यत्वस्य प्रमाणासिद्धभिन्नत्वस्य वा व्यापकमिथ्यात्वरूपत्वं कृत्वा साध्यतया निर्देशः क्रियते, तदेतत् तत्रभवतां न्यायमार्गातिलङ्घनसाहसप्रियतामेव प्रथयति। शुक्तिरूप्येऽसमीचीनदृष्टिविषयत्वस्यैव हि मिथ्यात्वेन साहचर्यं दृश्यते। तथा सति समीचीनप्रत्ययविषयसत्यरूप्यसाधारण्येन दृश्यत्वमात्रस्य कथं व्याप्यत्वं भवेत्। न हि धूमस्य वह्निसाहचर्येण सामान्यतो द्रव्यस्य तद्व्याप्यत्वं भवेत्। तदिह मानाधीना मेयसिद्धिरिति क्रमं परित्यज्य आभिमानिकं मेयं किञ्चित्कृत्वा तदनुरोधेन मानव्यवस्थां कुर्वन्तो विपरीतं क्रमान्तरमाश्रयन्ति भवन्तः।

अथेदं दृश्यत्वं यदि वृत्तिव्याप्यत्वं तत्र वृत्तिपदार्थः कः। किमस्मदभिमतं धर्मभूतज्ञानं, उतान्यत् किञ्चित्। नाद्यः। जडान्तःकरणधर्मत्वाभ्युपगमात्। नान्त्यः। हेतोरसम्प्रतिपन्नत्वापत्तेः। न हि भवदभिमता वृत्तिरस्माकमिष्टा। अभ्युपगम्यापि तु ब्रूमः। वृत्तिव्याप्ये ब्रह्मणि हेतोः सत्त्वाद्व्यभिचारः, वेदान्तवेद्यं हि तत्। न च तस्य "यत्तदद्रेश्यम्" इति

अत्या दृश्यत्वं न सम्भवतीति वाच्यम् । तस्याश्चक्षुरादीन्द्रियजन्यप्रत्ययाविषयत्वपरत्वात् । 'मनसैवानुद्रष्टव्यम्' 'तस्मिन् दृष्टे परावरे ।' इति श्रुत्यैव तस्य दृश्यत्वोक्ते । ब्रह्मादिपदजन्यप्रतीतिविषयत्वस्यानुभवसिद्धत्वेन श्रुत्याऽदृश्यत्वस्य बोधयितुमशक्यत्वाच्च । अथेदं दृश्यत्वमुपहितस्यैव, न शुद्धस्य । उपहितस्य च मिथ्यात्वमिष्टमेवेति चेत् एवं वदत कोऽभिप्रायः । किमुपाधिवदुपधेयमपि मिथ्यैवेति । तथा चेत् शून्यवादप्रसङ्गः । अथ तत् स्वरूपेण न मिथ्या अपि तूपहितत्वरूपेणेति चेत्, अनेन किमुक्तं भवति ? किमुपाधेरेव मिथ्यात्वं, नोपधेयस्येति उतान्यत् किमपि । नाद्य । तद्द्वैत श्रुति मिथ्यात्वमेव, न तु प्रपञ्चमिथ्यात्वम् । स तु ब्रह्मवदेव सत्य इत्यपि सुवचत्वात् । नान्त्य । तदनिरूपणात् । यच्च शुद्धस्य न दृश्यत्वमिति, तत्प्रत्यक्षविरुद्धं स्वव्यवहारविरुद्धं च । शुद्धपदेन भवत्येव ह्यनुपहितप्रत्ययः । स कथमपह्नूयेत । शक्यं हि "घटपदेन केवलो घटो न प्रतीयते । अपि तु वृत्त्युपहित एव । तथा च तथाविधस्यैव तस्य मिथ्यात्वम् । केवलस्य तु वृत्त्यविषयत्वात्सत्यत्वमेव" इत्यपि वक्तुम् । अथोच्यते—शुद्धपदेनानुपहितं न प्रतीयते । तद्घटितस्य तु वाक्यस्य लक्षणयाऽन्योऽर्थो वाच्यः । यथा शुद्धं स्वप्रकाशमित्यस्य अशुद्धस्य अस्वप्रकाशत्वव्यापकमित्यर्थः । तथा चाशुद्धस्वन्या वृत्त्या शुद्धे स्वप्रकाशता पर्यवस्यति—इति । प्रत्यक्षापलापस्तावदत्र स्थित एव । कुटिलार्थान्तरवर्णनमतिरिच्यते । सत्यमेवोक्तं नीलकण्ठदीक्षितेन—'येनाऽन्यथा कर्तुमिह यतन्ते क्लेशेन तेषां हि स एव दण्ड' इति । अथ शुद्धे स्वप्रकाशता पर्यवस्यति इति भवदुक्ते कोऽर्थः ? यद्यत्रानुपहितस्य न प्रतीतिस्तर्हि प्रलापमात्रमिदं स्यात् । अथ प्रतीतिर्भवति तर्हि अनेन स्वव्यवहारेणापि विरुद्धं भवत शुद्धस्य वृत्तिविषयत्वशून्यत्वाभिधानम् । व्याख्याता प्रधानग्रन्थोऽप्यत्र कुटिलतराण्य

र्थान्तराणि कथयन् "अशुद्धत्वमुपहितत्वम् । न तु शुद्धभिन्नत्वम् । शुद्धस्य वृत्तिविषयत्वापत्तेः ।" "न चोपहितत्वाभावविशिष्टे स्वप्रकाशत्वाभावो न ज्ञायत इत्याद्युक्तवाक्यजबुद्धौ शुद्धभानमावश्यकमिति वाच्यम् ।" इत्यादि स्थलेषु अनुपहिततात्पर्येणैव शुद्धपदमसकृत्प्रयुङ्क्ते । अतिमात्रं हि सङ्गतमिदं यदाचार्या उपहसन्ति—स्वग्रन्थविरोधमपि न जानन्ति भवन्त इति । यत्तूच्यते शुद्धं ब्रह्मेति वृत्तिः स्वोपहितमेव ब्रह्म विषयीकरोति । तथा च वृत्तिदशायामनुपहितस्य विग्रहान् उपहितमेव विषयीभवति । तस्य च मिथ्यात्वमिष्टमेव । यद्वा विष्णवे शिपिविष्टाय, अग्नीषोमीयमित्यादौ प्रत्येकं देवतात्वाभाववत् प्रत्येकं विषयत्वं नास्ति । अतो न शुद्धस्य दृश्यत्वम् । नापि मिथ्यात्वमिति । तन्न । शिपिविष्टो नाम पृथग्देवता न प्रसिद्धा । प्रसिद्धा तु शिपिविष्टत्वगुणविशिष्टा विष्णुदेवता, अतस्तत्र पृथग्देवतात्वं नास्ति । तदुक्तं शास्त्रदीपिकायां षष्ठेऽध्याये तृतीयाधिकरणे—'दातृप्रदातृशिपिविष्टशब्दानां यौगिकानां प्रत्येकमग्न्यादिपदसामानाधिकरण्यात् पदद्वयप्रतिपादितं विशिष्टं देवताकारकम्' इति । अग्नीषोमीयमित्यत्र द्वन्द्वात्परमुत्पन्नस्तद्धितः उभयपर्याप्तं देवतात्वं गमयति । अतः प्रत्येकं देवतात्वपर्याप्तिर्नास्ति । न चैवं विशिष्टप्रतीतिस्थले उभयं विषयत्वपर्याप्त्यधिकरणं, न प्रत्येकमिति सम्भवति । विशेष्यताप्रकारतारूपेण विषयताभेदात् । प्रत्येकं तत्तद्विषयतापर्याप्त्यधिकरणत्वात् । अतो विषयत्वाभाववचनं तावदसङ्गतम् । उपहितस्यैव विषयत्वम् । तस्य च मिथ्यात्वमिष्टमितीदं रिक्तं वच इति वाच्यम्, न ह्युपाधिमिथ्यात्वातिरिक्तं किमपि उपहितमिथ्यात्वमित्यनेनोक्तं भवति । शिखाध्ययनमात्रनाशेन शिखी ध्वस्त इति यथा तथैव इदं सम्प्रतिपद्यते । न चेदं चोद्यस्य समाधानं भवति । शुद्धपदवाच्यस्यानुपहितस्य दृश्यत्वमस्ति । मिथ्यात्वं तु नास्ति । अतो हेत्वव्यभिचार इति परे,

न्योदयन्ति। तत्र उपहित मिथ्यैव, अतो न व्यभिचार' इति कथ समाधानं भवेत्। अनुपहितविषयो ह्याक्षेपः। उपहितविषयस्तु परिहार इति का सङ्गतिः। अनुपहितो न विषय इत्यत्र पर्यवसानात् सङ्गति रिति चेन्न। पर्यवसानमिति ।प्रतीतिरभिप्रेता न वा। आद्येऽनुपहितस्य तत्प्रतीतिविषयत्वात् "अनुपहितो न विषय" इति माता मे वन्ध्ये तिवत् व्याघात । अन्त्ये समाधानासङ्गतिरावश्यम्।

शाब्दवृत्त्या शुद्धस्योपधानमभ्युपेत्य एतावदुक्तम्। तदेव तु कथ मिति वक्तव्यम्। वृत्ते शुद्धचैतन्य प्रति को व्यापारोऽस्ति य उपधानमित्युच्येत। सत्यमेव व्यापारः। वृत्तिर्यदा वर्तते तदा शुद्धचैतन्यस्य विषयत्व भवति। अन्यदा नास्ति। तदुपधानमुपधानमिति चेन्न सर्व विषयसाधारण्यात्। यदा घटविषया वृत्तिर्वर्तते तदैव घटस्य विषय त्वम्, नान्यदा, तद्वत् शुद्धचैतन्यस्यापि भवतु। तेन को विशेष घटवदेव तस्यापि विषयत्वाच्चते। यदि त्वेवमपि उपहितमेव विषय इत्युच्यते घटोऽपि तथैव विषय इति स्यात्, नियामकाभावात्।

ननु शुद्धस्य दृश्यत्वाभावेऽपि स्वत सिद्धिर्भवति जडस्य घटा देस्तु दृश्यत्वाभावे अलीकत्वमापत्तेदिति चेन्न, स्वत ःसिद्धेन विषयिणा विषयाणामपि सिद्धिसम्भवात्। सर्वविषयविरक्तत्वाच्छुद्धचैतन्यस्य न तेनेतरसिद्धिसम्भव इति चेत्, तर्हि तत् स्वयमपि सेद्धु न क्षमत इति विभावयतु भवान्। यदि स्वाविषयकमपि चैतन्य स्वसिद्ध्यै अलम् तत् कथं पराविषयकमपि तत्सिद्ध्यै नाल भवेत्। तदेव शुद्धस्य दृश्यत्वमपरिहार्यमिति तदपि मिथ्या स्यात्। अन्यथा हेतोर्व्यभिचारो दुष्परिहर। प्रपञ्चवदेव शुद्ध प्रपञ्च सत्य स्यादित्यर्थान्तर च।

यत्पुनरत्र बौद्धदूषणम्—एतेन स्फुरणमात्रमेव मिथ्यात्वे तन्त्रम्। लाघवात्। अत स्फुरदपि ब्रह्म मिथ्यैवेति शून्यवादिमतम

पास्तम्। स्वतःस्फुरणतायाः शुक्तिरूप्यादावभावात। स्फुरणविषयत्वस्य ब्रह्मण्यसिद्धे"। इति, तत्रोच्यते। विषयस्य मिथ्यात्वप्रयोजकं स्फुरणं स्वमिथ्यात्वे न प्रयोजकान्तरमपेक्षते, आश्रयस्य चाक्षुषत्वप्रयोजक रूप स्वचाक्षुषत्व इव। तथा च विषयत्वतादात्म्यान्यतरसम्बन्धेन स्फुरणं मिथ्यात्वे तन्त्रमिति ब्रह्मकवलीकारेऽपि तत् क्षमत इति तत्तात्पर्यमिति। यदुच्यते साहसमात्रेण स्वत सिद्धं ब्रह्मेति। तत्र का सिद्धिर्नाम? संशयाद्यगोचरत्वमात्रं तुच्छेऽपीति संशयविपर्ययासहनिश्चयगोचरत्वमेव सेत्यकामेनाप्यभ्युपेयम्। तथा च दृश्यत्वमवर्जनीयम् मिथ्यात्वं तु नास्तीति व्यभिचारो वज्रलेपायते। सिद्धिश्चेय कस्य? किं केवलस्य ब्रह्मण एव, नास्माकम्, अथवाऽस्माकम्? आद्ये अस्माकमसिद्धं तत् गगनकुसुमप्रायमेव स्यात्। अन्त्ये, योऽयमस्माकमहम्प्रत्ययः अहमिदं करोमि घटमहं जानामि, ममेदं सुखावहमित्यादि स एव किं स्वत सिद्धिरित्यभिमतः उतान्या काचित् सा? आद्ये विशिष्टस्यैव स्वतःसिद्धिरुक्ता स्यात्। अन्त्ये का सेति निरूपणीयम्। तत्र केवलचिद्विषया वा तद्रूपा वा कथमपि सा न भवतीति वक्ष्यामः।

यच्च शब्दाजन्यवृत्तिविषयत्वमेव दृश्यत्वम्। तच्च वेदान्तजन्यवृत्तिविषयत्वेऽपि शुद्धस्य नास्तीति न व्यभिचार इति, तदप्ययुक्तम्। यागादिजन्यतया शब्दैकसमधिगम्ये स्वर्गेऽव्याप्ते। धूमेऽयोगोलकावृत्तित्वस्येव वृत्तौ शब्दाजन्यत्वस्य दृष्टान्ते व्याप्यतावच्छेदकत्वाग्रहणाच्च। एतेन सप्रकारकवृत्तिविषयत्वमेव दृश्यत्वमित्यपि प्रत्युक्तम्। सप्रकारकत्वस्य व्याप्त्यनन्तर्भूतत्वात्। तेन निष्प्रकारकज्ञानविषयीभूते शुद्धे न व्यभिचार इति स्ववचनेन निष्प्रकारकज्ञानविषयीभूतत्वप्रकारकवृत्तिविषयत्वस्य शुद्धे स्वयमेव भवता प्रदर्शनाच्च। नह्यत्र अनृजुरपि अर्थान्तरं विवक्षित, वक्तु शक्य वा।

"यथा कथञ्चित् चित्सम्बन्धित्वरूपं चिद्विषयत्वं वा दृश्यत्वम्। स्वव्यवहारे स्वातिरिक्तसंविदपेक्षानियतिर्वा। स्वापरोक्षत्वे स्वातिरिक्तानपेक्षत्वरूपस्वप्रकाशताराहित्यं वा। अवेद्यत्वे सति यदपरोक्षव्यवहारयोग्यत्वं तदभावो वा" इत्येतेऽपि दृश्यत्वविकल्पा न हेतुभावायालम्। दृष्टान्तेऽगृहीतव्याप्तिकत्वात्। अप्रयोजकत्वाच्च। दृग् दृश्यमिति पदार्थं द्वेधा विभज्य दृश्यस्य सर्वस्य मिथ्यात्वं कृत्वा तत्साधनौपयिकतया हेतुविशेषनिर्देशाय स्वबुद्धयोल्लिखिता ह्येते धर्मा न तु प्रमाणपारतन्त्र्योचिततया प्राक्तया दृष्टान्ते व्याप्यत्वेन गृहीताः।

ब्रह्मणः सिद्धिमद्वैती न प्रमाणेन वाञ्छति।
अवेद्यत्वाभ्युपगमात् स्वतः सिद्धिस्तु दुर्लभा ॥५॥
अतोऽस्य दुष्परिहरं शून्यवादे निमज्जनम्।
प्रमाणशरणानां तु दुर्निवारा विशिष्टधीः ॥६॥

## (१०) जडत्वम्

प्रपञ्चमिथ्यात्वे जडत्वमिति हेत्वन्तरं यदभिमतं तदपि पूर्ववदेव दुष्टम्। व्याप्त्यग्रहणात् अप्रयोजकत्वाच्च। जडत्वमस्तु, मिथ्यात्वं मा भूदिति हि सुवचमेव।

जडत्वं चाज्ञानत्वं वा अनानन्दत्वं वेति यदुक्तं तन्न युक्तम्। तथा हि। वस्तुतो ब्रह्मणि ज्ञानत्वादयो विशेषाः सन्ति न वा? आद्ये अद्वैतहानिः। अन्त्ये तस्याप्यज्ञानत्वान्मिथ्यात्वम्, हेतोर्व्यभिचारो वा। अद्वैतरक्षणाय निर्विशेषमपि व्यभिचारवारणाय विशेषाः सन्तीति चोभयथा भाषणं प्रामाणिकानां न शोभनम्। 'अर्थोपलक्षितप्रकाशस्यैव ज्ञानत्वेन मोक्षदशायामपि तदनपायात्" इति रिक्तं वचः। अर्थोपलक्षितत्वमिति कस्यचिद्विशेषस्य प्रकाशेऽनभ्युपगमात्। अभ्युपगमे नि-

स्ति सम्भव इति तद् धाष्टर्यमात्रेणोक्तम्। दर्शननियमविरोधेनापि यदि कस्यचिदर्थस्य सम्भव उच्यते, तर्हि वह्निं विनापि अस्ति धूमस्य सम्भव, शशोऽपि कदाचिदस्ति शृङ्गस्य सम्भव इति कथं नोच्येत। मा भूत् ज्ञान गुणो वा क्रिया वा अथापि पारतन्त्र्यनियमात् रत्नप्रभया रत्नस्येव, आलोकेन ज्योतिष इव चाश्रयस्यानुमान निराबाधमेव। ज्ञेयसम्बन्धश्च ज्ञेयव्याप्यत्वम्। तत्र यद्यत् ज्ञान तत्तत् किञ्चिदर्थाव गाहि इत्येवरूपम्। न तु तत्र देशस्य कालस्य वा घटनाऽस्ति। तदत्र न कस्यचित् दूषणस्यावकाश। जानातीति निराबाध व्यवहारबलाच्चा श्रयापेक्षा ज्ञानस्य सिद्धा। न चास्या कादाचित्कत्व सुवचम्। माना भावात्। अस्ति ब्रह्मेति सत्ताया अपि कत्रपेक्षा नियतैव। नित्यत्वेऽपि तत्सम्भवात्। न ह्युत्पादकत्वमत्र कर्तृत्वमिष्यते, येन सत्ताया नित्य त्वात् तत्कर्तृत्वासम्भवाद् उच्येत। अपि त्वाश्रयत्वम्। यत्तु नित्यत्वेन तदसम्भवात् साधुत्वाय एव तत्र कर्तरि लकार इति। तदयुक्तम्। ब्रह्म नास्तीत्यस्य साधुत्वापत्ते। सत्तानिरूपितकर्तृत्वाभाववत् ब्रह्मेति तत्र बोध। स चाबाधित एवेति। अथोच्येत—नञभावे यस्य बोध तदभाव एव नञा बोध्यते। अस्ति ब्रह्मेत्यत्र च कर्तृत्वस्य नास्ति बोध इत्युक्तम्। अतस्तदभावबोधो नञ्घटितस्थले न भवितुमर्हतीति। तर्हि नञभावस्थले कथं बोध इति विमर्शनीयम्। यदि सत्त्वाश्रयत्ववद् ब्रह्मेति, तर्हि सत्ताया अस्त्येवाश्रयापेक्षा। अथ सत्तैव ब्रह्मणि प्रकार तयाऽवैति, न लकारोक्ताश्रयत्वमपेक्षत इति मतम् तदनुपपन्नम्। नामार्थस्यापि साक्षात् क्रियान्वयाभ्युपगमेन विभक्तीनामपि साधुत्वाय त्वप्रसङ्गात्। घटोऽस्तीत्यादावपि चेतनधर्मस्य कर्तृत्वस्य दुर्घटत्वेन साधुत्वाय एव लकार इति प्रसङ्गाच्च। किञ्च केन सम्बन्धेन ब्रह्मणि सत्ताया अन्वय? यद्याश्रयत्वेन, आश्रयाकाङ्क्षाभ्युपगमप्रसङ्ग। यद्यभेदेन व्युत्पत्तिविरोधः। न हि धात्वर्थस्य कदाचिन्नामार्थेऽभेदेना

न्वयः कश्चिदप्युत्पन्नः। बाधश्च, न हि सत्तैव ब्रह्म। अलं तु सविस्तर विस्तरेण।

## (११) परिच्छिन्नत्वम्।

सत्यं ज्ञानमनन्तं ब्रह्मेति ब्रह्मलक्षणमाह श्रुतिः। अत्र ब्रह्मणः सत्यत्वाभिधानात् तदितरस्य कृत्स्नस्यासत्यत्वरूपं मिथ्यात्वं वक्तव्यमित्यातिष्ठमानास्तस्य साध्यधर्मत्वं कुर्वन्ति। अथ यद् ज्ञानमिति तत्र तत्प्रतिसम्बन्धि द्वयं भवति-ज्ञेयं ज्ञानभिन्नं च। तत्र ज्ञेयत्वं दृश्यत्वम ज्ञानभिन्नत्वं जडत्वम्। इदमुभयं हेतूकुर्वन्तीत्यवगच्छाम। अथ यदनन्तमिति तस्यापरिच्छिन्नमित्यर्थः। अनेन ब्रह्मभिन्नस्य सर्वस्य परिच्छिन्नत्वं लभ्यते। इदमपि हेतूकुर्वन्नाह—परिच्छिन्नत्वमपि हेतुरिति। अस्य पूर्वाभ्यां हेतुभ्यां मात्रयाऽपि न विशेषः। न हि शुक्तिरूप्यगतपरिच्छिन्नत्वस्य मिथ्यात्वस्य च महानसीयपरिच्छिन्नत्ववह्न्योरिव मिथः सम्बन्धं यः कश्चिद्यदाकदाचिद् गृह्णाति। तस्मादयमप्यहेतुः।

यदत्र सर्वसमर्थनसामर्थ्याभिमानातिरेकेणोक्तम् "अत एव घटादयः स्वानुगतप्रतिभासे वस्तुनि कल्पिताः विभक्तत्वात्। तथा सर्पमालादिकं स्वानुगतप्रतिभासे रज्ज्वादौ इदमंशे विभज्यते, एवं ब्रह्मण्यनुगच्छति घटादिकं विभज्यते सन् घटः सन् पट इति, इत्यानन्दबोधोक्तमपि साधु।" इति, तत् श्रद्धालुमात्रसह्यम्। नीलो घटः, जातो घटः, शुक्लः पटः, नष्टः पटः, इत्यादिवत् सन् घटः सन् पट इति प्रतीतिः कामं भवति। तत्र नैल्यादीनामिव सत्त्वस्यापि घटादिधर्मत्वे स्थिते तस्य ब्रह्मत्वं धर्मित्वं च प्रतिज्ञायमानं कथं तत्त्वविद्भिः सह्येत। न च गौर्गच्छति, अश्वो गच्छति, महिषो गच्छति, मनुष्यो गच्छतीत्यनुवृत्तप्रतिभासाया गमनक्रियाया कल्पिता गवादयः। न च रज्जुसर्पमालादीनां

मिथो विभक्तत्वात् कल्पितत्वम्। अपि तु बाधितत्वात्। एतेन "अत एव घटादिकं सद्रूपे कल्पितम्, प्रत्येकं तदनुविद्धत्वेन प्रतीयमानत्वात्। प्रत्येकं चन्द्रानुविद्धजलतरङ्गवत्, इति ब्रह्मसिद्धिकारोक्तमपि साधु।" इत्येतदपि निरस्तम्। यदा सत्त्वं प्रतीयते तदा 'सन्तमेनं ततो विदुः' 'भूतानामीश्वरोऽपि सन्' इत्यादाविव विद्यमानत्वाद्यात्मकधर्मरूपमेव हि तत् प्रतीयते। न त्वधिष्ठानतया ब्रह्मरूपतया च पूर्वं 'यत्तदद्रेश्य' मित्यादिनाऽदृश्यत्वमुपपाद्य पुनरत्र ब्रह्मणः सर्वेन्द्रियगोचरत्वोपपादनं काममतमपरं शोभते। यदि शुद्धमिदं सद्रूपं ब्रह्म तर्हि तस्यातीन्द्रियत्वेनाधिष्ठानत्वं न घटते। अथाशुद्धं तथाऽपि तस्यापि कल्पितत्वात् घटादिकल्पनाधिष्ठानत्वानुपपत्तिस्तदवस्थैव। भूतले सन् घटः कुड्ये असन् इति पामरसाधारणसद्व्यवहारविषयभूतं सत्त्वं हि न ब्रह्मात्मकं कथमपि भवितुमर्हति।

## (१२) अंशित्वम्।

अथ परयतोहरत्वकाष्ठागतैरुक्तमनुमानान्तरं दूषयितुमना इदमाह—"चित्सुखाचार्यैस्तु अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी। अंशित्वात्। इतरांशिवत्, इत्युक्तम्। तत्र तन्तुपदमुपादानपरम्। एतेनोपादाननिष्ठात्यन्ताभावप्रतियोगित्वलक्षणमिथ्यात्वसिद्धिः।" इति। अत्र सिद्धसाधनप्रयोजकत्वे पूर्ववत् स्थिते एव। बाधश्च। पक्षाप्रसिद्धिश्च। अयमिति हि एतद्देशकालसम्बन्धीत्यर्थः। पटश्च तस्मिन् काले तस्मिन् देशे नासीति साध्यते। अत इदमिष्टं भवतः। कालान्तरदेशान्तरावृत्तित्वं सर्वसम्मतम्। अतोऽप्रसिद्ध एव पक्षः। अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी न। एतत्तन्त्वारब्धत्वात्। व्यतिरेकेण पटान्तरवत्, इति प्रतिसाधनं च। अत्राह। "सोपाधिकत्वादिदं प्रतिसाधनं हीनबलम्। 'यत्र तत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वं तत्र

तत्तन्त्वारब्धत्वाभावः' इति हि व्यतिरेकव्याप्तिः। तत्र एतत्तन्तुनिष्ठ-प्रागभावाप्रतियोगित्वमुपाधिः। एतत्तन्त्वारब्धत्वाभावव्यापकस्य एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्य पक्षावृत्तेः पक्षवृत्तितया सन्दिह्य-मानैतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वाव्यापकत्वात्" इति। इदम-युक्तम्। एतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वस्य भवत्साधनेऽप्युपाधि-त्वात्। भवति ह्येतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगित्वरूपसाध्यव्यापकस्य तस्य पक्षावृत्तेः पक्षान्तर्भावेनाशित्वरूपसाधनाव्यापकत्वम्। एव एतत्तन्त्वनारब्धत्वमप्युपाधिः पूर्ववत्साध्यव्यापकत्वे सति साधनाव्या-पकत्वात्। यत्तु नायमुपाधिः। एतद्व्यतिरेकेण साध्यव्यतिरेके साध्यमाने सोपाधिकत्वस्योक्तत्वात्। अयं पटः एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी, एतत्तन्त्वारब्धत्वात्, इत्युपाधिव्यतिरेकेण साध्यव्यतिरेकः साध्यः। तत्र च यन्नैवं तन्नैवं, यथा अश्यन्तरमिति व्यतिरेकव्याप्तिर्वाच्या। यस्या चैतत्तन्तुनिष्ठप्रागभावाप्रतियोगित्वमुपाधिरुक्त इति, तन्न। अस्याप्युपाधेः सोपाधिकत्वस्य सुवचत्वात्। अय पट एतत्तन्त्वारब्धः, एतत्तन्तुनिष्ठ-प्रागभावप्रतियोगित्वादित्युपाधिविरहेण साध्यविरहे साध्यमाने यत्र एतत्तन्त्वारब्धत्वाभावस्तत्र एतत्तन्तुनिष्ठप्रागभावप्रतियोगित्वाभाव इति व्यतिरेकव्याप्तौ एतत्तन्तुनिष्ठरूपसामानाधिकरण्यविरहस्योपाधि-त्वात्। अस्ति हि तस्य एतत्तन्तुनिष्ठप्रागभावप्रतियोगित्वाभावव्यापकत्व पक्षावृत्तित्व, पक्षवृत्तितया सन्दिह्यमानैतत्तन्त्वारब्धत्वाभावाव्यापकत्व च। नात्र सन्दिह्यमानत्वमिति चेत् तुल्यमत्यन्ताभावप्रतियोगित्वेऽपि। विप्रतिपत्त्या सशय इति चेत् इदमपि तुल्यमेव। यदपि 'अव्याप्यवृत्ति-संयोगाभ्युपगमे तत्र व्यभिचारात् अत एव यत्र एतत्तन्तुनिष्ठात्यन्ता-भावप्रतियोगित्वं तत्र एतत्तन्त्वनारब्धत्वमिति साध्यव्यापकताग्रह-णस्याप्यसम्भवाच्च नास्योपाधित्वमिति, तदपि न। भवताऽप्याय संयोगानभ्युपगमात्। अभ्युपगमपक्षे एतत्तन्तुत्व [

त्वमत्यन्ताभावविशेषणं देयमिति स्वयमेवोक्तत्वाच्च। वस्तुतस्त्वत्रो पाध्युद्भावनं केवलं तार्किकविडम्बनामात्रम्। को हि नाम पृथिवी गन्धवत्त्वादित्यत्र, यत्र पृथिवीत्वाभावस्तत्र गन्धाभाव इति व्यतिरेकव्याप्तौ वायुत्वासमानाधिकरणानुष्णाशीतस्पर्शशून्यत्वमुपाधिः। गन्धाभावव्यापकस्य तस्य पक्षावृत्तेः पक्षवृत्तितया सन्दिग्धं पृथिवीत्वाभावाव्यापकत्वात्, इति ब्रूयात्। एवं हि सति वह्निमान् धूमादित्यत्रापि ह्रदावृत्तिद्रव्यत्वमुपाधिरिति कुतो न स्यात्। एतेनैतत्तुल्यमेवेदं सर्वमिति विभाव्यम्।

यत्तु लघुचन्द्रिकायां दीधितिकारोक्तलक्षणानुसारेण पृथिवीतरेभ्यो भिद्यते, पृथिवीत्वादित्यादौ व्यतिरेकव्याप्तौ पाकजरूपाभावादेरुपाधित्वं सन्दिग्धमित्युक्तं, तदयुक्तम्। साध्यव्यापकत्वे सति साधनाव्यापकत्वमुपाधित्वमिति प्राचीनलक्षणमाश्रित्यैव मूलकारेणो पाध्युद्भावनात्। लक्षणान्तरानुरोधे तदुद्भावितोपाधेरप्यसङ्गत्यापत्तेः। यत्पुनरस्य दोषस्य परिहाराय "उक्तोपाधौ तूक्तलक्षणमस्त्येव। उक्तप्रतियोगित्वरूपसाधनवत्त्वेनोभयथादिनिश्चिते एतत्तन्त्ववच्छिन्नभिदुपादानकसपादौ सत्पटोपादानोपादानकत्वरूपसाध्यासमानाधिकरणधर्मनिश्चयात्।" इत्युक्तं तदुपहास्यम्। तन्तुसपादौ तन्तुनिष्ठप्रागभावप्रतियोगित्वस्योभयथाविसिद्धित्वाभावात्। भ्रमस्थलेऽनिर्वचनीयोत्पत्तिवादिभिरेव हि तदभ्युपगम्यते। नेतरैरिति।

विपुलं कुटिलं क्लिष्टो ब्रह्मानन्दोक्तिविस्तरोऽसारः।
तस्मात्तस्य विमर्शो नातीव कुतूहलं भवति॥

अथ यदनुमानान्तरं दर्शयतोक्तम्—"एष च विमतं ज्ञानव्यतिरेकेणासत्, ज्ञानव्यतिरेकेणानुपलभ्यमानत्वात्। स्वाप्नादिवत्, इति विद्यासागरोक्तमपि साधु। ज्ञानव्यतिरेकेणासत्त्वमुक्तमिथ्यात्व—

साध्यम्। ज्ञानव्यतिरेकेणानुपलभ्यमानत्वं चिदाभासे सत्येवोपलभ्यमानत्वं हेतुरिति न किञ्चिदनुपपन्नम्।' इति, तत्र "वैधर्म्याच्च न स्वप्नादिव"दिति सूत्रकारेण कण्ठोक्त्या निरस्तमपीदं विद्यासागरेणादृतमनुमानं सौगतसौहार्ददार्ढ्यं व्यञ्जयतीति व्यलीकव्याविद्धमनसा स्वोक्तमेव साध्यादिकमिहाभिप्रेतमिति दर्शितमिति स्फुटमेतत्। अत्र चिदाभासे सत्येवोपलभ्यमानत्वं कथं मिथ्यात्वे हेतुरित्युपपादनीयम्। न ह्यालोके रूपे वा सत्येवोपलभ्यमानत्वं घटादेर्मिथ्यात्वं साधयति। न च तदपेक्षयाऽत्र कश्चन विशेषोऽस्ति। तस्मिन् सत्येव तदितरस्योपलभ्यमानत्वं तस्य तदितरोपलम्भे हेतुत्वं गमयतीति हि प्रामाणिकसरणिः। तदितरस्य मिथ्यात्वमिति कुत एतत्। निद्रोपहतमनोजन्यप्रत्ययविषयत्वात्तु स्वाप्नार्थमिथ्यात्वमित्यलं विस्तरेण।

## (१३) सोपाधिकत्वम्।

दृश्यत्वादिहेतूनां सोपाधिकत्वं परिहरता यदुक्तम्—'दोषप्रयुक्तभानत्वं तु भवति साध्यव्यापकम्। तच्च साधनव्यापकमपीति नोपाधिः। दृश्यत्वादिनैव मिथ्यात्ववत् तस्यापि साधना' दिति तदयुक्तम्। दृश्यत्वादीनामगृहीतव्याप्तिकत्वस्यासकृदुक्तत्वात्। यो बाधितः स एव हि प्रत्ययः स्वविषयस्य मिथ्यात्वं कारणस्य दुष्टत्वं च विना बाधानुपपत्तेस्तदुभयं गमयन् तेन सह स्वविषयत्वस्य व्याप्तिं ग्राहयति। तत्र अतिप्रसक्तस्य सामान्यस्य दृश्यत्वस्य तद्व्याप्यत्वं कथमुच्यते। यदा तु हठादेव व्याप्यत्वं सिद्धमिव कृत्वा तत् हेतूक्रियते तदा व्याप्यत्वासिद्धिप्रदर्शनाय दोषप्रयुक्तभानत्वरूपोपाध्युद्भावनं युज्यत एव। यथा मिथ्यात्वस्य तथा तस्यापि पक्षे सन्दिग्धत्वान्निराबाधमेव साधनाव्यापकत्वम्। यदि त्वेवमपि दृश्यत्वादिनैव पक्षे दोषप्रयुक्तभानत्वमनुमीयत इत्युच्यते तर्हि धूमवान् वह्नेरित्यत्र वह्निनाऽऽर्द्रेन्धनानुमानं

कुतो न भवेत्? अयोगोलकादौ आर्द्रेन्धनाभावस्य प्रत्यक्षसिद्धत्वेन तदनुमानं न सम्भवतीति चेन्न। भवत्सम्मतरीत्या सत्त्वस्येवाभावस्यापि दुर्निरूपत्वात्तद्ग्राहि प्रत्यक्षमसम्भवीत्येवं तर्कसन्ततेः सुभिक्षत्वात्।

"दृश्यत्वादिनैव मिथ्यात्ववत् तस्यापि साधनात् तत् साधनव्यापकमपि' इति वचनमुपहास्यम्। व्याहतेः। यदि उपाधित्वेनोद्भावित दोषप्रयुक्तभानत्वं पक्षे साध्याभसं तर्हि तस्य पक्षे सन्दिग्धत्वात् साधनव्यापकत्वाभिधानं न युज्यते। अथ पक्षे सिद्धं तत् तर्हि दृश्यत्वादिनैव मिथ्यात्ववत् तस्य साधनमिति वचनं न युज्यते। ननु प्रथमं दृश्यत्वादिना दोषप्रयुक्तभानत्वं साध्यते। ततः परं मिथ्यात्वमिति सिद्धं तस्य साधनव्यापकत्वमिति चेन्न। तन्मिथ्यात्वस्योपाधित्वात्। पक्षे तस्यासिद्धतया साधनाव्यापकत्वात्। साध्यव्यापकत्वाच्च। अथोभयमपि युगपत्साध्यते तर्हि परस्पराश्रो परस्परस्योपाधित्वमक्षतमेव।

## (१४) आभाससाम्यम्

जगन्मिथ्यात्वानुमानं सर्वमाभासरूपमेव, न त्वाभाससमम्। अथापि नैवमिति निरूपयन् प्रत्यनुमानेषु दोषानाह। तत्र "विमतं प्रातिभासिकं दृश्यत्वात्" इत्यत्र यदुच्यते, जगतो व्यावहारिकसत्त्वबाधे व्यवहारानुपपत्तिरिति, तत्र जगतस्त्रैकालिकनिषेधविषयत्वे अनित्यत्वव्यवहारानुपपत्तिरिति समानम्। न हि शुक्तिरूप्यमनित्यमिति केचिद्व्यवहरन्ति। व्यवहरन्ति च जगदनित्यमिति। "अनित्यमसुखं लोकम्' इति भगवता च गीयते। किञ्च मिथ्यात्वेऽपि व्यवहारानुपपत्तिस्तुल्या। शुक्तिरूप्येण व्यवहाराभावात्। मिथ्यात्वे प्रातिभासिकत्वस्यावर्जनीयत्वात्। मिथ्याभूतं हि वस्तु कालत्रयेऽपि न वर्तते, तस्य प्रतिभासमात्रशरीरस्य विना किमन्यद्रूपम्, येन प्रातिभासिकत्वं न

भवेत्। ननु मिथ्यात्वे समानेऽपि वस्तुरजतस्य व्यवहारौपयिकं रूपमस्ति। तेन तस्य शुक्तिरजतवत् न प्रतिभासमात्रशरीरत्वमिति चेन्न। शुक्तिरजतस्यापि अविद्यापरिणामतया उत्पत्त्यभ्युपगमेन रूपविशेषवत्त्वात्, प्रतिभासमात्ररूपत्वाभावात्। ननु तद्रूप प्रतिभासमात्रोपयोगि। न तु वस्तुरजतवत् व्यवहारोपयोगि। अतो वैलक्षण्यमिति चेन्न। वस्तुरजतस्यापि अविद्यापरिणामतया शुक्तिरजतवदेव व्यवहारोपयोगित्वस्य दुर्घटत्वात्। ननु दृश्यत एतत्। किं वय कुर्म इति चेत्, किं दृश्यते? वस्तुरजतस्य व्यवहारोपयोगित्व अन्यस्य तदनुपयोगित्व चेति चेत् साधु। दुरपह्नवोऽय विशेषः किन्निबन्धन इति विमर्शे एक वस्तुसत्। अतो व्यवहारक्षम भवति। अन्यत्तु असत्। अतो न तथेति वक्तव्यम्। तत्र असतो मिथ्यात्व युक्तम्। तद्दृष्टान्तेन सतो मिथ्यात्व कथ भवेत्। कथ तत्साधनोद्यमः क्रियते? एतत्प्रतिबोधनाय 'विमत प्रातिभासिक, दृश्यत्वात्" इति न्यायविद्भिः प्रातिभासिकत्वसाध्यकः अनुमानाभासो दर्शितः। प्रातिभासिकत्व साध्य निर्दिशता व्यवहारानुपपत्तिप्रसञ्जन एव तात्पर्यम्। यदि शुक्तिरजतवत् स्वय रजतस्यापि मिथ्यात्व भवेत् तर्हि तद्वदेव प्रातिभासिकत्व च भवेत् ततो व्यवहाराद्यनुपपत्तिश्च। तदत्र व्यवहारानुपपत्त्युद्भावनं अनुपदं दर्शयिष्यमाणरीत्या ब्रह्ममिथ्यात्वानुमाने शून्यवादापत्त्युद्भावनवत् असमञ्जसमिति ज्ञेयम्।

ननु ब्रह्मेतरज्ञानबाध्यं शुक्तिरजत प्रातिभासिकम्। तदबाध्य वस्तुरजतं व्यावहारिकमिति विशेष इति चेन्न। ज्ञानबाध्यत्वस्यैव प्रातिभासिकत्वव्यवहाराक्षमत्वयोः प्रयोजकत्वात्। ब्रह्मेतरज्ञानबाध्यत्वस्य तत्राकिञ्चित्करत्वात्। अन्यथा शुक्तीतरज्ञानाबाध्यत्वेन शुक्तिरजतस्यापि व्यावहारिकत्वप्रसङ्गात्, तस्मादप्रामाणिकाद्वैतस्था-

पनाशया उपन्यस्यमान विश्वमिथ्यात्वानुमान आभाससम तद्रूप चेत्येतद् दुरपलपम्।

यच्च 'प्रातिभासिकत्व ब्रह्मेतरज्ञानबाध्यत्व प्रतिभासमात्रशरीरत्व वा। आद्ये साध्ये देहात्मैक्ये व्यभिचार'। अप्रयोजकत्व च। द्वितीये दृष्टिसृष्टिमतेन सिद्धसाधनम् इति, तत्र ब्रूम'। देहात्मैक्ये नास्ति व्यभिचार, "अन्योऽन्तर आत्मा विज्ञानमय" 'समान वृक्ष परिषस्वजाते' 'वायुरनिलममृतम्।' 'अथेद भस्मान्त शरीरम्।' 'न जायते म्रियते वा विपश्चित्' 'न त्वेवाह जातु नास न त्व नेमे जनाधिपा। 'अन्तवन्त इमे देहा नित्यस्योक्ता' शरीरिण'' इत्यादिभिस्तस्य बाधितत्वात्। अत एव साक्षिबाधोद्धारप्रकरणे "ननु तर्हि देहात्मैक्यज्ञान उष्णा जलमित्यादि ज्ञान च प्रमा स्यात्। व्यवहारदशायां विषयाबाधात् इति चेन्न। आब्रह्मज्ञानमबाधितत्वेन तेषामपि घटादिज्ञानसमानयोगक्षेमत्वात्" इति शङ्कासमाधानमुखेन देहात्मैक्यज्ञानस्य प्रमात्वप्रतिपादनमत्यन्तमसमञ्जसम्। मम देह इति स्वानुभवेन, ज्ञातृत्वजडत्वादिकृतवैलक्षण्यहेतुकानुमानेन, आगमवचनशतेन च बाधस्य स्फुटत्वात् व्यवहारदशायां विषयाबाधोक्तेरयुक्तत्वात्। साधित च "एक आत्मन शरीरे भावात्' इत्यत्र सूत्रभाष्ये देहातिरिक्तत्वमात्मन। पूर्वकाण्डे एव चाय व्यतिरेक' सिद्ध। अन्यथा देहान्तरानुभाव्यफलेषु अधिकारानुपपत्ते। जलौष्ण्यबाधश्च "उष्णत्वमग्न्यातपसम्प्रयोगात् शैत्य हि यत्सा प्रकृतिर्जलस्य" इति व्यवहारदशायां सुप्रसिद्ध। बाधितत्वे कथमनुवृत्तिरिति चेत् कामलादिदोषानुवृत्तौ शङ्खपीतिमभ्रमानुवृत्तिवत् देहसम्बन्धस्य दोषस्यानुवर्तमानत्वात् अविवेकिनां भ्रमानुवृत्ति। विवेकिनां तु सा नैवास्तीति ज्ञेयम्। अतो व्यभिचार' सर्वथा दुर्वच। अप्रयोजकत्व मिथ्यात्वेऽपि तुल्यम्। सिद्धसाधनवादश्च न युक्त। जलाहरणादिव्यवहारानुपपत्तिप्रसङ्गात्।

न हि प्रातिभासिकेन व्यवहारो घटते। व्यवहारोऽपि प्रातिभासिक इति चेत् तर्हि भवदीयाद्वैतस्थापनयत्नस्यापि प्रातिभासिकत्वात् तद्विषयभूतमद्वैतमपि प्रानिभासिकमिति सिद्धमेतत्। दृष्टिसृष्टिवादश्च निराकरिष्यते।

अथ 'ब्रह्म मिथ्या व्यवहारविषयत्वात्' इत्यनुमान प्रत्याह-ब्रह्मणो मिथ्यात्वे शून्यवादापत्तिरिति। अत्रोच्यते। "अनुमानाभासेन प्रपञ्चमिथ्यात्वसाधनोद्यमो न शोभते। अन्यथाऽन्येनानुमानाभासेन शून्यवादस्य पि समर्थयितु शक्यत्वात्", इति ह्यत्र प्रतिवादिनस्तात्पर्यम्। एव सति शून्यवादापत्तिरिति कथं न प्रत्येवोच्यते। प्रपञ्चमिथ्यात्वे योगाचारमतप्रवेशापत्तिरिति भवन्तं प्रति यदि केनचिदुच्येत तादृगिदं भवति।

एतदुक्त भवति। सत् असत् व्यावहारिक प्रातिभासिकमित्येषां मिथो वैलक्षण्य तावदिष्यते। तत्र सदसद्व्यतिरिक्तद्वयवृत्ति दृश्यत्वादि भवता व्यावहारिकवस्तुमिथ्यात्वे हेतूक्रियते। एवमेव असद्भिन्नत्रितयवृत्ति व्यवहारविषयत्वं असद्विलक्षणत्वं च हेतूकृत्य ब्रह्मणोऽपि मिथ्यात्वानुमानं कुतो न भवितुमर्हति। द्वितयवर्तिनो वैलक्षण्यस्य यदि मिथ्यात्वप्रयोजकत्व भवति, तत् त्रितयवर्तिनः कुतो न भवेत्। एव सति शून्यवादप्रसङ्ग इति चेत् हेतुबलादापतन् शून्यवादोऽपि प्रामाणिकत्वादङ्गीकार्य एव। न हि घटपटादिवस्तुसत्ताङ्गीकारे गौरवमिति प्रत्यक्ष तत्र प्रमापयतीति वक्तु शक्यम्। तस्मात् शून्यवादप्रसङ्गरूपः प्रतिकूलतर्कोऽत्र न प्रत्यनुमानदूषणम् शून्यवादप्रसङ्गरूपानिष्टप्रसञ्जनतात्पर्येणैव तत्प्रयोगात्। किन्तु अप्रयोजकत्वमेव। व्यवहारविषयत्वमसद्विलक्षणत्व चास्तु, मिथ्यात्वं मा भूदित्युक्ते हि न किञ्चित् सदुत्तरं वक्तु शक्यम्। अप्रयोजकत्वस्य पारमार्थिकत्वात्। तथैवोभयविलक्षणत्वस्याप्यप्रयोजकत्वं पारमार्थिकम्। प्रपञ्चस्य ब्रह्म-

तुच्छोभयवैलक्षण्यमस्तु, मिथ्यात्वं मा भूदित्युक्ते प्रतिवचनस्याशक्यत्वात्। एवं वस्तुतत्त्वे स्थिते प्रत्यनुमानस्य यथाऽऽभासत्वं तथैव भवदनुमानस्यापि। तत्र यथा भवन्तं प्रति योगाचारमतप्रवेशापत्तिरिति प्रतिकूलतर्कोद्भावनमनुचितम्। इष्टत्वात्। तथैव शून्यवादापत्तिरिति प्रतिवादिनं प्रत्युद्भावनमप्यनुचितम्। तत्प्रसञ्जनाभिप्रायेणैव तेन प्रत्यनुमानप्रयोगाविति।

यच्च "ब्रह्मणि मिथ्यात्वे साध्ये सोपाधिके सिद्धसाधनम्। निरुपाधिके व्यवहारविषयत्वरूपो हेतुरसिद्धः। वेदान्तजन्यवृत्तिविषयत्वाभ्युपगमेऽप्यप्रयोजकः।" इति तदप्यसुन्दरम्। सिद्धसाधनत्वे ब्रह्म मिथ्येति निराबाधव्यवहाराभ्युपगमप्रसङ्गात्। ननु सोपाधिकस्य हि मिथ्यात्वमिष्यते, न निरुपाधिकस्य। निर्विशेषणं तु ब्रह्मपदमिह प्रयुक्तम्। तत् कथमयं व्यवहारो घटेतेति चेन्न। सच्चिदानन्दं ब्रह्म, सत्यं ज्ञानमनन्तं ब्रह्मेत्यपि व्यवहारस्यानुपपत्तिप्रसङ्गात्। निरुपाधिकस्यैव एवम्भूतत्वात्। तस्य च विशेषणस्यात्रानुपादानात्। 'निरुपाधिके' इति भवतैव व्यवह्रियमाणत्वेन हेतोरत्र सिद्धत्वाच्च। न च चर्कोऽर्थः कश्चिदिह वर्णनीयः। तं विनैव वक्तृश्रोत्रोरर्थसम्प्रतिपत्तेः। न चाप्रयोजकत्वम्। यदि ब्रह्मणो मिथ्यात्वं विनैव व्यवहारविषयत्वं स्यात् तर्हि प्रपञ्चस्यापि तथैव स्यादित्यापत्तेः सत्त्वात्। यच्च ब्रह्म मिथ्या असद्विलक्षणत्वात्, इत्यस्य दूषणाय यत्किञ्चिदुच्यते तत् बालव्यामोहनमात्रम्।

वस्तुतो ब्रह्मणः प्रपञ्चस्य शुक्तिरूप्यादेश्च असद्विलक्षणत्वमस्ति न वा। आद्ये साधिष्ठमेवेदमनुमानम्। न च ब्रह्मव्यावृत्तमसद्विलक्षणत्वं शिक्ष्यमाणं युज्यते। ब्रह्म असद्विलक्षणं न भवतीति व्यवहारस्य सामञ्जस्यप्रसङ्गात्। सोपाख्यत्वप्रतीत्यहत्वादिरूपं हि तदत्र निर्दो

च्यम्। अन्त्ये शून्यमेव तत्त्वमिति पर्यवस्यति। तदिह आभास-साम्यात् सर्वथा न मुक्तिरिति ध्येयम्।

(१५) प्रत्यक्षबाधः ॥

दृश्यत्वादिहेतूना बाधश्च दुरुद्धरः। घटोऽस्ति पटोऽस्तीति घट-पटादिसत्त्वस्य सर्वलोकप्रत्यक्षसिद्धत्वात्। यत्तु चक्षुराद्यध्यक्षयोग्य मिथ्यात्वविरोधि सत्त्वं न निर्वक्तुं शक्यमिति, तत् प्रतारणमात्रम्। निर्वचनाशक्त्या विषयानपायात्। "इक्षुक्षीरगुडादीना माधुर्य-स्यान्तर महत्। तथाऽपि न तदाख्यातु सरस्वत्याऽपि शक्यते।" इति स्थितेः। अन्यथा वह्निरनुष्णः पदार्थत्वात्, इत्यत्रापि बाधो न स्यात्, उष्णत्वस्य दुर्निरूपत्वेन तद्विषयाध्यक्षासम्भवात्। तद्धि न जातिः। अनभ्युपगमात्। नापि शीतान्यत्वम्। शीतत्वानिरुक्तेः। तस्योष्णान्यत्वेऽन्योन्याश्रयापत्तेश्चेति। यदि च प्रत्यक्षायोग्य सत्त्व कथं नाम घटोऽस्तीति सर्वजनसाधारणो व्यव-हारः। न चाय भ्रमः। मानाभावात्। न च सद्रूपब्रह्मविषयः तस्य प्रत्यक्षबुद्ध्यगोचरत्वात्। अस्तित्वस्य घटादिधर्मत्वेन निर्बाध प्रतीतेश्च। इह घटो नास्तीति बुद्धिप्रतिबन्धकतावच्छेदकविलक्षणधर्मरूपस्य सत्य-स्यावश्यमभ्युपगन्तव्यत्वाच्च। स च धर्मः तदधिकरणवृत्त्यत्यन्ताभावा-प्रतियोगित्व वा तदधिकरणनिरूपिताधेयत्व वा तत्तद्वस्तुसम्बन्धित्व वेति भवताऽपि वाच्यम्। अन्यथा सार्वत्रिकनिराबाधव्यवहारानुपपत्तेः। न चेद सर्वमननुगतम्। अननुगतेनाप्यनुगतप्रतीतौ जातिमात्रोच्छेद-प्रसङ्ग इति शङ्क्यम्। गोत्वादिजात्यनभ्युपगमस्य स्वयमेव भवता पूर्वमुक्तत्वात्। अननुगतत्वेऽपि प्रतियोगित्वविषयत्वेदन्त्वादेरेकरूपव्य-वहारदर्शनात्। कथञ्चिदनुगमस्य सर्वत्र शक्यत्वात्। प्रामाणिकस्य गौरवस्यादोषत्वात्। अन्यथा सर्वशून्यवादप्रसङ्गात्, सद्रूपब्रह्मानुगत-प्रतीतेरुपपादयितु सर्वथाऽशक्यत्वाच्च। तथा हि। इद रूप्यमितिवत्

सन् घट इ यत्रापि सवित्यविष्ठानभूत ब्रह्मैव प्रतीयत इति यदुक्त, तन्न क्षोदक्षमम्। नीलो घट इत्यत्र नीलरूपस्येव सन् घट इत्यत्र सत्ताया' प्रकारतयैव भानेन इदमित्यस्येव सन्नित्यस्य धर्मित्वाभावात्। योऽय सन् पदार्थं स घट इत्येवमाकारत्वेऽपि प्रत्ययस्य सन् घटो दृश्येत, असन् घटो न दृश्यते, इति व्यवहारवशेनाविद्यमानत्वप्रतियोगिविद्य मानत्वमेव पदार्थविशेषणभूतेन सन्नित्यनेनाभिलप्यत इति निस्स न्दिग्धमवगमेव ब्रह्मविषयत्वस्य तत्र दुर्वचत्वाच्च। अत एव सद्रूपस्या नुवृत्तिरपि परास्ता। असन् घट इत्यापि प्रत्ययात्। नीरूपस्य ब्रह्मण' प्रत्यक्षा गोचरत्वाच्च न ब्रह्मविषयत्व प्रत्यक्षस्य। न च कालवत् तदपि प्रत्यक्षयोग्यमिति वाच्यम्। अथात्र घटो वर्तत इत्यबाधिता नन्यथा सिद्धसार्वलिक प्रत्यक्षानुभवबलेन कालस्य तद्योग्यत्वाभ्युप गमात्। ब्रह्मणस्तत्कल्पने मानाभावात्। प्रत्युत "न सन्दृशे तिष्ठति रूपमस्य, न चक्षुषा पश्यति कश्चनैनम्', "न तत्र चक्षुर्गच्छति" इत्यादिभिस्तदयोग्यत्वस्यैवावधारणात्। किञ्च सन् घट इत्यत्र सन्निति किं ब्रह्मस्वरूपमात्रमभिप्रेतम् अथवा सत्तामात्रम्, अथवा सत्ता- विशिष्टम्। नाद्य। इद रूप्यमितिवत् अय घट इत्येव प्रत्ययस्वरू पस्य वाच्यत्वेन सन् घट इत्यभिलापानुपपत्ते। न द्वितीय' इय सत्ता घट इत्येव प्रतीतिप्रसङ्गात् वक्ष्यमाणदोषाच्च। न तृतीय'। तथाहि। केय सत्ता नाम। न तावज्जाति'। अनभ्युपगमात्। एकव्यक्तिवि श्रान्ततया जातिलक्षणाभावाच्च। नापि त्रैकालिकाबाध्यत्वम्। अस्य प्रत्यक्षायोग्यत्वात्। नापि स्वरूपसत्त्वम्। किमिह स्वरूपमेव सत्त्व न ततोऽतिरिक्त किमपीति विवक्षितम्। अथवा स्वरूपेण सत्त्व विद्य मानत्वमिति। आद्ये इद स्वप्रकाशाद्वितीयचैतन्य घट इत्येव प्रतीति स्यात्, न तु सन् घट इति। तद्रूपातिरिक्तस्य सत्त्वस्याभावात्। न च तद्रूपत्वस्यैव सत्त्वमित्यपर नामधेयम्। तेन सन्नित्यपि व्यवहार इति

वाच्यम्। तथापि कदाचित् स्वप्रकाशाद्वितीयचैतन्यं घट इति व्यवहारस्यापि प्रसङ्गात्। अयं घट इत्यस्य स्थाने 'अयं कलशः' इतिवत्। न च यदा कदाचिदपि तथा व्यवहारो भवति। वस्तुतस्तु सत्त्वमिति न क्वचित् स्वप्रकाशाद्वितीयचैतन्याभिधान दृष्टम्। अतः कालसम्बन्धित्वादिकमेव सत्त्वमितिवाच्यम्। तत्र ब्रह्मण इव घटादेरप्यन्याहतमिति तत्त्वस्थितिर्निर्णेतव्या। अन्ये इदानीमत्र वर्तमानो घट इत्येव प्रतीतिराविर्भवति। तथा वर्तमानत्वस्य च घटे साक्षादुपपन्नतया नीलो घट इत्यादिवत् अव्याहत सामानाधिकरण्यमिति न कुकल्पनायाः कस्याश्चिदवकाशो वर्तत इति तदेव घटास्तित्व-प्रत्यक्षस्य घटमिथ्यात्वविरोधिसत्त्वावगाहित्वमन्तरा कथमपि प्रका-रान्तरेणोपपादयितुमशक्य वान् तेन प्रबलेन बाधात् मिथ्यात्वानुमान नालमुदेतुमिति सिद्धम्।

यत्तु—"निश्चितप्रामाण्यमेव प्रत्यक्षमितरबाधक भवेत्। न चात्र प्रामाण्य निश्चितम्। आगमविरोधात् अनुमानविरोधात्, भावि-बाधाभावानिर्णयाच्च —इति, तदयुक्तम्। घटादिप्रत्यक्षप्रामाण्यस्य सुनिश्चितत्वात्। न ह्यत्र कारणदोषः कश्चिदन्विष्यमाणोऽप्युपलभ्येत, उत्तरकालिको बाधो वा। एव सति तत्प्रामाण्यं प्रति किमपर निश्चेयमस्ति। 'यस्य च दुष्ट करण यत्र च मिथ्येति प्रत्ययः स एवा-समीचीनः प्रत्ययो नेतरः' इति च शास्त्रतात्पर्यविदामुद्घोषः। भावि-बाधाभावानिर्णयाच्चेति यदुक्त तत् अत्यन्तदुर्घटस्वसिद्धान्तस्थापन-भरपीडितेन अहृदयमेवोक्तमिति प्रतीमः। प्रवृत्तिसामर्थ्येन सुप्रतिष्ठि-तत्वात् प्रामाण्यस्य निर्णीत एव हि भाविबाधाभाव तत्र कथमनिर्णय उच्यते। अन्यथा उदकाहरणार्थिनो घटदर्शनानन्तर तदुपादाने प्रवृत्तिर्न स्यात्। बाधाभावानिर्णयात्। न हि सम्भावनामात्रेण तत्र प्रवृत्तिरिति अनुभवमनपह्नुवानेन वक्तुं शक्यम्। अनुमानमात्र च

एव सत्युच्छिद्येत। भाविबाधाभावानिर्णयेन व्याप्त्यनिश्चयात्। अर्थक्रियासंवादेन प्रत्यक्षप्राबल्यमाश्रित्य वह्न्यौष्ण्यप्रत्यक्षस्य शैत्यानुमानबाधकत्वं भवतैवोच्यते। तत्कथं युज्येत यदि भाविबाधाभावानिर्णयेन प्रत्यक्षं दुर्बलं स्यात्। ननु शुक्तिरूप्यादौ यादृशो बाधः तादृशबाधाभावो घटादिप्रत्यक्षे निर्णीत एव। न तत्रास्माकं विप्रतिपत्तिः। वेदान्तवाक्यजन्यचरमसाक्षात्कारेण तु यो बाधः तदभावानिर्णय इहोक्त इति चेत् उपहास्यमिदम्। अदुष्टकारणजन्यं अबाधितं च घटादिप्रत्यक्षं स्वविषयसत्तां निश्चाययत् तन्मिथ्यात्वानुमानं निरुन्ध इत्यातिष्ठामहे। तत्रेत्र मिथ्यात्वं यदि ब्रह्मज्ञानबाध्यत्वरूपं विशिष्य गृह्यते तर्हि दृष्टान्ते साध्यवैकल्यम्। यदि तु सामान्यतो ज्ञानबाध्यत्वरूपं तत् तर्हि तद्विरोधिसत्त्वग्राहिप्रत्यक्षबाधो दुर्निवारः। अथोच्यते—प्रत्यक्षावगतं सत्त्वं सप्रकारकज्ञानबाध्यत्वात्मकशुक्तिरूप्यादितुल्यमिथ्यात्वविरोधि ईदृशमिथ्यात्वविषयमनुमानं बाधेत। प्रकृते तु निष्प्रकारकचरमसाक्षात्कारनिवर्त्यत्वरूपमिथ्यात्वस्य पर्यवसितत्वात् साध्यत्वात् प्रत्यक्षावगतसत्त्वस्य चैतदविरोधित्वान्न बाधप्रसङ्ग इति, तदप्ययुक्तम्। चरमसाक्षात्कारस्य कालान्तरे जायमानत्वेऽपि तदधीनमिथ्यात्वस्य कालत्रयसम्बन्धित्वात् सुदृढप्रत्यक्षावगतघटादिसत्त्वविरुद्धतया तदवगाहिनोऽनुमानस्यासम्भवात्। भवदभिमतनिष्प्रकारकचरमसाक्षात्कारस्याप्रसिद्धतया तद्बाध्यत्वरूपे मिथ्यात्वे पर्यवसानासम्भवाच्च। तस्मात् भाविबाधाभावानिर्णयेन प्रत्यक्षस्य दौर्बल्याभिधानं निरूपकाणां न शोभते। सम्भावितसर्वकारणदोषाभावनिश्चये प्रवृत्तिसंवादे च सम्पन्ने यत्र क्वाप्यदृष्टं सर्वलोकविलक्षणः कश्चन बाधो भावीतीदं किं कस्यचित् बुद्धिमधिरोहेत्, यस्याभावनिर्णयाय स्वप्रामाण्याय प्रत्यक्षेणापेक्षणीयः स्यात्। दुस्सिद्धान्तविपुप्लुतस्य अपरोऽयं पलायोद्भेद इति तु विपश्चितो निश्चिन्वन्ति।

यच्च आगमविरोधात् प्रत्यक्षप्रामाण्यं न निश्चितमिति, तन्न। प्रत्यक्षाविषय एव आगमप्रवृत्तेः। तथा च शास्त्रतात्पर्यविदामग्रणीर्महर्षिर्जैमिनिः औत्पत्तिकसूत्रे—"तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे" इति। विवृतं चेदं पार्थसारथिमिश्रेण—"न च साक्षाद् बाधकमस्तीत्यव्यतिरेकशब्देनोच्यते। अनुपलब्धार्थत्वाच्च नानुवादलक्षणमप्रामाण्यमस्तीति "अर्थेऽनुपलब्धे इत्यनेनोक्तम् ।—" इति। अनेन, "यल्लोके प्रत्यक्षादिना अस्तीति वा नास्तीति वा निश्चितं न तत्र शास्त्रं प्रवर्तते। अस्तीति निश्चितेऽर्थे प्रवृत्तौ अनुवादतयाऽप्रामाण्यापत्तेः। नास्तीति निश्चितेऽर्थे प्रवृत्तौ बाधितविषयत्वेनाप्रामाण्यापत्तेः", इति हि स्पष्टं प्रदर्शितं भवति। "शास्त्रं शब्दविज्ञानादसन्निकृष्टेऽर्थे विज्ञानम्" इति शाबरेण भाष्येण 'असन्निकृष्टवाचा च द्वयमत्र जिहासितम्। तादृप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि वा॥' इति तद्विवरणपरेण कौमारिलेन वार्तिकेन च तद् विशदीकृतम्। तस्मात् प्रत्यक्षनिश्चितार्थविरुद्धमर्थं शास्त्र बोधयतीत्येतत् शास्त्रकृतामसम्मतम्। प्रत्यक्षादिना प्राप्तमर्थं तथैव कृत्वा तत्राविदितमंशं पूरयति शास्त्रमिति तु स्थितिः। एतदाहुराचार्यचरणाः—

> विदितमनुवदन्तो विश्वमेतद्यथावद्
> विदधति निगमान्ताः केवलं यन्मयत्वम्।
> अविदितबहुभूमा नित्यमन्तर्विधत्ताम्
> हयवरवदनोऽसौ सन्निधिः सन्निधिं नः॥

इति। एवं प्रत्यक्षविषयपरिहारेणैव आगमस्य प्रवृत्तेः एतद्विरोधेन तस्य प्रामाण्यमनिश्चितमित्येतन्न युज्यते। यत्तु चन्द्रतारकादिपरिमाणप्रत्यक्षे अनुमानागमविरोधेनाप्रामाण्यं दृश्यत इति, तन्न। महदपि वस्तु दूरत्वदोषेण अल्पमिव दृश्यत इति हि शतशः प्रत्यक्षावगतमेतत्।

एव सत्युच्छिद्येत। भाविबाधाभावानिर्णयेन व्याप्त्यनिश्चयात्। अर्थक्रियासंवादेन प्रत्यक्षप्राबल्यमाश्रित्य वह्न्यौष्ण्यप्रत्यक्षस्य शैत्यानुमानबाधकत्वं भवतैवोच्यते। तत्कथं युज्येत यदि भाविबाधाभावानिर्णयेन प्रत्यक्षं दुर्बलं स्यात्। ननु शुक्तिरूप्यादौ यादृशो बाधः तादृशबाधाभावो घटादिप्रत्यक्षे निर्णीत एव। न तत्रास्माकं विप्रतिपत्तिः। वेदान्तवाक्यजन्यचरमसाक्षात्कारेण तु यो बाधः तदभावानिर्णय इष्ठोक इति चेत्, उपहास्यमिदम्। अदुष्टकारणजन्यं अबाधितं च घटादिप्रत्यक्षं स्वविषयसत्तां निश्चाययत् तन्मिथ्यात्वानुमानं निरुन्ध इत्याचक्ष्महे। तत्रेदं मिथ्यात्वं यदि ब्रह्मज्ञानबाध्यत्वरूपं विशिष्य गृह्यते तर्हि दृष्टान्ते सा यवैकल्यम्। यदि तु सामान्यतो ज्ञानबाध्यत्वरूपं तत्, तर्हि तद्विरोधिसत्त्वग्राहिप्रत्यक्षबाधो दुर्निवारः। अथोच्यते—प्रत्यक्षावगतं सत्त्वं सप्रकारकज्ञानबाध्यत्वात्मकशुक्तिरूप्यादितुल्यमिथ्यात्वविरोधि ईदृशमिथ्यात्वविषयमनुमानं बाधेत। प्रकृते तु निष्प्रकारकचरमसाक्षात्कारनिवर्त्यत्वरूपमिथ्यात्वस्य पर्यवसिततया साध्यत्वात् प्रत्यक्षावगतसत्त्वस्य चैतदविरोधित्वान्न बाधप्रसङ्ग इति, तदप्ययुक्तम्। चरमसाक्षात्कारस्य कालान्तरे जायमानत्वेऽपि तदधीनमिथ्यात्वस्य कालत्रयसम्बन्धित्वात् सुदृढप्रत्यक्षावगतघटादिसत्त्वविरुद्धतया तदवगाहिनोऽनुमानस्यासम्भवात्। भवदभिमतनिष्प्रकारकचरमसाक्षात्कारस्याप्रसिद्धतया तद्बाध्यत्वरूपे मिथ्यात्वे पर्यवसानासम्भवाच्च। तस्मात् भाविबाधाभावानिर्णयेन प्रत्यक्षस्य दौर्बल्याभिधानं निरूपकाणां न शोभते। सम्भावितसर्वकारणदोषाभावनिश्चये प्रवृत्तिसंवादे च सम्पन्ने यत्र क्वाप्यदृष्टः सर्वलोकविलक्षणः कश्चन बाधो भावीति किं कस्यचित् बुद्धिमाधिरोहेत्, यस्याभावनिर्णयः स्वप्रामाण्याय प्रत्यक्षेणापेक्षणीयः स्यात्। दुस्सिद्धान्तविषयुक्तस्य अपरोऽयं पक्षपातो मूढ इति तु विपश्चितो निश्चिन्वन्ति।

यत्र आगमविरोधात् प्रत्यक्षप्रामाण्यं न निश्चितमिति, तन्न। प्रत्यक्षाविषय एव आगमप्रवृत्तेः। तथा च शास्त्रतात्पर्यविदामग्रणी-र्महर्षिर्जैमिनिः औत्पत्तिकसूत्रे—"तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽ-नुपलब्धे" इति। विवृतं चेदं पार्थसारथिमिश्रेण—"न च साक्षाद् बाधकमस्तीत्यव्यतिरेकशब्देनोच्यते। अनुपलब्धार्थत्वाच्च नानुवाद-लक्षणमप्रामाण्यमस्तीति "अर्थेऽनुपलब्धे इत्यनेनोक्तम्।—" इति। अनेन, "यल्लोके प्रत्यक्षादिना अस्तीति वा नास्तीति वा निश्चितं न तत्र शास्त्रं प्रवर्तते। अस्तीति निश्चितेऽर्थे प्रवृत्तौ अनुवादतयाऽ-प्रामाण्यापत्तेः। नास्तीति निश्चितेऽर्थे प्रवृत्तौ बाधितविषयत्वेना-प्रामाण्यापत्तेः", इति हि स्पष्टं प्रदर्शितं भवति। "शास्त्रं शब्दविज्ञा-नादसन्निकृष्टेऽर्थे विज्ञानम्" इति शाबरेण भाष्येण 'असन्निकृष्ट-वाचा च द्वयमत्र जिहासितम्। ताद्रूप्येण परिच्छित्तिस्तद्विपर्य-यतोऽपि वा॥' इति तद्विवरणपरेण कौमारिलेन वार्तिकेन च तद् विशदीकृतम्। तस्मात् प्रत्यक्षनिश्चितार्थविरुद्धमर्थं शास्त्र बोधयती-त्येतत् शास्त्रकृतामसम्मतम्। प्रत्यक्षादिना प्राप्तमर्थं तथैव कृत्वा तत्राविदितमंशं पूरयति शास्त्रमिति तु स्थितिः। एतदाहुराचार्य-चरणाः—

विदितमनुवदन्तो विश्वमेतद्यथावद्
विदधति निगमान्ताः केवलं यन्मयत्वम्।
अविदितबहुभूमा नित्यमन्तर्विधत्ताम्
हयवरवदनोऽसौ सन्निधिः सन्निधिं नः॥

इति। एवं प्रत्यक्षविषयपरिहारेणैव आगमस्य प्रवृत्तेः एतद्विरोधेन तस्य प्रामाण्यमनिश्चितमित्येतन्न युज्यते। यत्तु चन्द्रतारकादिपरि-माणप्रत्यक्षे अनुमानागमविरोधेनाप्रामाण्यं दृश्यत इति, तन्न। महदपि वस्तु दूरत्वदोषेण अल्पमिव दृश्यत इति हि शतशः प्रत्यक्षावगतमेतत्।

तेन दविष्ठ चन्द्रतारकादि अल्पतया दृश्यमानमपि वस्तुतो महदेवेति दृश्यमेव प्रतीतिर्भवति। तत्र कियत् तत्परिमाणं भवेदिति जिज्ञासायां अनुमानं वा शास्त्रं वा प्रवर्तत इति न प्रत्यक्षस्य ताभ्यां विरोध।

एतेन देहात्मैक्यप्रत्यक्षमपि व्याख्यातम्। तत्र हि ममेदं शरीरमित्यप्यनुभवात् जातस्य शिशो स्तन्यपानप्रवृत्त्या पूर्वजन्माभ्यासनाया कल्पनीयतया तदनुगुणशरीरातिरिक्तात्मस्थितिपरामर्शाच्च, देहात्मैक्यप्रत्यक्ष स्वार्थवयात्वनिश्चयेऽसमर्थ भवति। प्रत्युत जपारागात् स्फटिकस्य रक्ततेव देहरागात् आत्मनस्तद्रूपता किं भातीति विमर्शाय अवकाशं ददाति। तत्र निर्णयस्य वैशद्यस्य वाऽपेक्षायां अनुमानागमयो प्रवृत्तिरिति नास्ति विरोधो वा बाध्यबाधकौ वा। तदेव निश्चितप्रामाण्यं प्रत्यक्ष तद्विषयाविरोधेनैव आगमानुमानयो प्रवर्तितु समर्थत्वात् तत्र च विरोधप्रसक्त्यभावात् विरोध सन्तमिव कृत्वा बलाबलचिन्तनं सर्वं निष्फलम्।

एतेनेद निरस्त वेदितव्य यदुक्तम्—"तात्पर्यलिङ्गैरुपक्रमादिभि द्वैतनिषेधपरत्वेऽवधृते अद्वैतश्रुतेरपि निरवकाशत्वात्" इति। श्रुते प्रत्यक्षसिद्धद्वैतनिषेधे तात्पर्यासम्भवात्। अन्यथा "आदित्यो यूप" इति श्रुतेरपि तदैक्यतत्परत्वप्रसङ्गात्।

प्रत्यक्षस्योपजीव्यत्वादपि नानुमानागमौ तद्विरुद्धार्थप्रत्यायने प्रवर्तेते। यत्तु नात्रोपजीव्यविरोध प्रत्यक्षस्वरूपमात्रस्योपजीवनात्। तस्य चानुपमर्दाद्। यत्त तस्य तात्त्विकत्व तदुपमृद्यते। न च तदुपजीव्यते। तात्त्विकप्रत्यक्षगोचरेणैव धर्मिणा भवितव्यमित्यनभ्युपगमात्, इति, तन्न। प्रकृतानुमानपक्षभूतधर्मिसमर्पकत्वमात्रेणास्माभि प्रत्यक्षस्योपजीव्यत्वानभिधानात्। आगमादि हि स्वप्रामाण्याय प्रात्यक्षप्रामाण्यमपेक्षते। तस्योपजीव्यत्वमिति। अत्राहु-एवरूप चेदुपजीव्यत्व विवक्षितं तर्हि व्याप्तिविरोधि नानुमित्युपजीव्यत्वे

स्यात्। लिङ्गाभासादपि वह्निमति वह्निप्रमादर्शनात्—इति तदयुक्तम्। अनुमितेः सर्वत्र स्वप्रामाण्याय व्याप्तिधीप्रामाण्यापेक्षित्वनियमात्। लिङ्गाभासाद्वह्निमति वह्निज्ञानस्य प्रमात्वं यादृच्छिकम्। अनुमितित्वेन तु तद् ज्ञानमप्रमाणमेव। तदुक्तमाचार्यचरणैः—

बाष्पारोपितधूमेन यादृच्छिकाग्निसिद्धिस्तु न भ्रमसामर्थ्याधीना। अन्यथा सर्वत्र तद्भ्रमे तत्सिद्धिप्रसङ्गात्। अत एव हि तत्र प्रामाण्यमपि नाङ्गीक्रियते इति। यदपि "परीक्षा हि प्रवृत्तिसंवादविसंवादाभावदोषाभावादिरूपा। तया च स्वसमानदेशकालीनं विषयाबाध्यत्वं प्रामाण्यस्य व्यवस्थाप्यते, धूमेन स्वसमानदेशकालीनवह्निरिव। तथा च व्यवहारदशामात्राबाध्यत्वं देहात्मैक्यसाधारण व्यवस्थितमिति कथमत्यन्ताबाध्यत्वाभावग्राहकागमानुमानयोः प्रवृत्तिर्न स्यात्" इति, तदपि दत्तोत्तरम्। यस्मिन् देशे यस्मिन् काले यो विषयो यथा गृहीतः तस्मिन् देशे तस्मिन् काले तस्य तथाविधस्यात्यन्ताबाध्यत्वं हि परीक्षया व्यवस्थाप्यते। भवदभिमतौ त्रिकालबाध्यत्वविषयौ अत एव तस्मिन् देशे तस्मिन् काले तस्य तथाविधस्य विषयस्य बाध्यत्वमप्यवगाहमानौ अनुमानागमौ कथं प्रवर्तेयाताम्। यद्यपि बाधकस्य देशकालौ भिद्येते तथाऽपि तत्फलस्य बाधस्य सर्वदेशकालवर्तिसर्ववस्तुविषयत्वात् अद्यतनपरीक्षितप्रत्यक्षग्राह्यार्थविषयत्वमपि भवतीति तदवगाहिनोरनुमानागमयोः प्रवृत्तिर्नैव सम्भवति। 'परीक्षया व्यवहारदशामात्राबाध्यत्व व्यवस्थाप्यते। तेन परमार्थदशाबाध्यत्व न विरुध्यते' इति न शक्यं वक्तुम्। न हि व्यवहारदशाऽतिरिक्ता परमार्थदशा काचिदद्यापि सिद्धा। यदि परमार्थदशाबाध्यत्व विशिष्य साध्येत तर्हि तस्य दृष्टान्ते न सद्भावः। यदि तु सामान्यतः त्रिकालबाध्यत्व साध्यते तर्हि उक्तरीत्या बाधो दुरुद्धरः। इदमपि पूर्वमेवोक्तम्। घटादिप्रत्यक्षप्रामाण्य न देहात्मैक्यप्रत्य-

त्वसाधारणमिति च वक्तव्यम्। एतदुक्तं भवति। अनुमेयं चरमसाक्षात्कारबाध्यत्वरूपं मिथ्यात्वं इदानीन्तनप्रत्यक्षप्रमितघटादिसत्त्वस्यापि भवति न वा। आद्ये प्रत्यक्षबाधान्नानुमानमुदेतुमलम्। अन्त्ये घटादिसत्त्वं पारमार्थिकमित्यद्वैतासिद्धिरिति।

एवं परीक्षितत्वेन उपजीव्यत्वेन च प्राबल्यात् प्रत्यक्षस्य तद्विरुद्धं मिथ्यात्वानुमानमिदं आभासरूपमेवेति स्थितम्। एतद्वैपरीत्येन मिथ्यात्वानुमानमेव प्रत्यक्षबाधकमिति निरूपणे प्रवृत्तैः तत्र प्रतिपक्षिभिरुक्तमनूद्य प्रतिक्षिपन्निदमाह —

नन्वेवं पशुत्वेन शृङ्गानुमानमपि स्यात्, 'लाघवात् पशुत्वमेव शृङ्गवत्त्वे तन्त्रम् न तु तद्विशेषगोत्वादिकम्। अननुगतत्वेन गौरवात्' इत्येतत्तर्कसध्रीचीनत्वेन प्रत्यक्षापेक्षया प्राबल्यात्। अनुकूलतर्कसाचिव्यमेव हि अनुमाने बलम्, एवं च येनकेनचित् सामान्यधर्मेण सर्वत्र यत्किञ्चिदनुमेयम्, लाघवतर्कसाचिव्यस्य सत्त्वात्। तावतैव प्रत्यक्षबाधकत्वात्, इति व्यावहारिक्यपि व्यवस्था न स्यात्, न ह्यत्र प्रत्यक्षबाधादन्यो दोषोऽस्तीति चेन्न,

अयोग्यशृङ्गादिसाधने प्रत्यक्षबाधस्यासम्भवेन तत्र व्याप्तिग्राहकतर्काभासत्वस्य त्वयाऽपि वक्तव्यत्वेन व्यवस्थाया उभयसमाधेयत्वात्, न हि तर्काभाससध्रीचीनमनुमानं प्रमाणमिति केनाप्यभ्युपगम्यते। अत उपपन्नं सत्तर्कसचिवमनुमानं प्रत्यक्षस्य बाधकमिति।

इति। अत्र ब्रूमः। दृश्यत्वादिना जगन्मिथ्यात्वानुमानं पशुत्वेन शृङ्गित्वानुमानं च समानयोगक्षेममेवेति सुप्रहं सर्वेषाम्। तत्र मिथ्यात्वानुमानेन सत्त्वग्राहि प्रत्यक्षं यथा बाध्यते तथा शशे शृङ्गित्वानुमानेन अशृङ्गित्वग्राहि प्रत्यक्षं बाध्यत इति वा, प्रत्यक्षबाधितत्वात् शृङ्गित्वानुमानमिव मिथ्यात्वानुमानमप्याभास इति वा वक्तव्यम्। अत्र प्रथमे

कल्पे दृष्टविरोधः। द्वितीये स्वसिद्धान्तहानिः। अत ऋजु उत्तर किमपि वक्तुमशक्नुवन् अन्यत् किमप्याह, अथापि निरूपकैर्विमर्शनीयम्, शशे शृङ्गित्वानुमाने प्रत्यक्षबाधो भवति न वा। भवति चेत् तथैव मिथ्यात्वानुमानेऽपि भवेत्। न चेत् कुतो न। अन्यथा हि वह्नौ शैत्यानुमानेऽपि न स्यात्। न चानयोर्विशेषः कश्चिदस्ति। नन्वयोग्यशृङ्गसाधने प्रत्यक्षबाधो न सम्भवतीति चेत् तत्र काम मा सम्भूत्। योग्यशृङ्गसाधने का वार्ता। तत्र हि बाध एव दोषो वाच्यः। ननु तत्र व्याप्तिग्राहकस्य तर्कस्य आभासत्व दोष इति चेत्, स कथं ज्ञायते, किं बाधेनैव उतान्येन केनचित्, अन्येनेति चेन्न। तददर्शनात्। बाधेनेति चेत् सुष्ठूक्तम्। तथा च समीचीनत्वेन गृहीतेनापि तर्केण सहितमनुमान बाधित्वा तर्कस्याप्याभासत्वमापादयति प्रबल प्रत्यक्षमिति सिद्धम्। एवमेव जगन्मिथ्यात्वानुमानेऽपीति द्रष्टव्यम्।

यत्तु "अयोग्य शृङ्गादिसाधने प्रत्यक्षबाधस्यासम्भवेन तत्र व्याप्तिग्राहकतर्कस्याभासत्व त्वयाऽपि वक्तव्यम" इति, तदयुक्तम्। प्रत्यक्षबाधासम्भवेऽप्यनुमानस्याभासत्व वक्तव्यमिति निर्बन्धाभावेन भवत्पक्षे प्रत्यक्षसिद्धसत्त्वाविरोधिमिथ्यात्वसिद्धेरिव प्रत्यक्षसिद्धयोग्यशृङ्गराहित्याविरोध्ययोग्यशृङ्गवत्त्वसिद्धेरप्यु युक्तत्वात्, अस्मत्पक्षे तु योग्यशृङ्गसाधने बाधेनैवाभासत्वस्य सुवचत्वात्, अयोग्यशृङ्गसाधने दृष्टान्ते साध्यवैकल्यस्य स्फुटत्वात्। असमीचीनदर्शनविषयत्वेन शुक्तिरूप्यस्य मिथ्यात्वे स्थिते हठादेव सामान्यतो दृश्यत्वस्य मिथ्यात्वप्रयोजकत्व वदतो हि भवतः प्रतिबोधनायोपहासाय च केवलं अनुमानाभासोऽयमनुमानवत्प्रयुक्तः। अश्वादावदर्शनेन पशुत्वस्य शृङ्गित्वव्याप्यत्वस्यैवासिद्धेः। तत्रोभाभ्यां वक्तव्य किमस्ति। यदि दृश्यत्वेन जगतो बाध्यत्वं भवेत् तर्हि तद्वदेव पशुत्वेन शशस्यायोग्यशृङ्गवत्त्वं भवेत्। यदि त्वस्याभासत्वं तर्हि तद्वदेव दृश्यत्वानुमानस्याप्याभासत्व

पि बाधकप्रत्ययशून्यत्वम्, यद्वा स्वप्रकाशाद्वितीयचैतन्यरूपत्व मिति। आद्ये ब्रह्म नित्यम्, प्रपञ्चोऽनित्य इति फलति। तदिष्टमेव। द्वितीये ब्रह्मणो यथा बाधकप्रत्ययो नास्ति तथैव प्रत्यक्षावगतघटादे रपीति उभयो सत्त्वस्य समानत्वात् तदभावो नागमेन बोधयितु शक्य इत्यपरिहार्यमर्थान्तरपरत्वम्। तृतीये जडत्व बोधित भवतीति न पारमार्थिकसत्त्वबाध'।

एतेन 'अपच्छेद न्यायेनाप्यागमस्य प्राबल्यम्' इत्येतदपि निरस्त वेदितव्यम्। एकैकापच्छेदमात्रवति प्रयोगे सावकाशयो द्वयो शास्त्रयो क्रमिकापच्छेदद्वयवति प्रयोगे प्राप्तयो पूर्वनिमित्तकशास्त्रा पेक्षया उत्तरनिमित्तकशास्त्रस्य प्राबल्यमपच्छेदाधिकरणे निर्णीतम् 'पूर्वबाधेन नोत्पत्तिरुत्तरस्य हि विद्यते'—इति। प्रकृते तु प्रत्यक्षप्रा माण्यस्य निरवकाशत्वान्न तस्य आगमेन बाधो भवितुमर्हति। यच्च व्यावहारिकप्रामाण्ये तत्सावकाशमिति तन्नेति प्रागेव सुनिरूपितम्। व्यावहारिकमिति तात्त्विकमिति चैकार्थोक्ते अर्थान्तराभावात्। किञ्च यत्र परस्परनैरपेक्ष्य तत्रैवापच्छेदन्याय'। यत्र तु सापेक्षता तत्र असञ्जातविरोधित्वेन पूर्वप्राबल्यमेव। तदुक्तम्—

पूर्वात्परबलीयस्त्व तत्र नाम प्रतीयताम्। अन्योन्यनिरपेक्षाणां यत्र जन्म धिया भवेत्॥ इति। स्वस्वरूपस्वप्रामाण्यादिहेतो प्रत्यक्षो पजीवी चागम'। तेन तस्य पूर्वत्वनियमात् उपक्रमाधिकरणन्याय स्यैवात्र प्रवृत्ते तदविरोधेनैव स्वार्थोऽनेन प्रतिपादनीय। यत्त्व न्योक्तम्—

एकवाक्यत्वपरस्परसापेक्षपदत्वेनोभयो साम्ये सति उपक्रम स्थवेदपदानुरोधेन उपसहारस्थअजादिपदानां जन्ममात्रवाचिनां कृत्स्नवेदपरत्वे निर्णीतेऽपि न प्रकृते तन्न्याय सम्भवति। उभयो साम्याभावात्। गृहीतप्रमाणभावप्रत्यक्षापेक्षया भ्रमविलक्षणत्वेनानि

श्रितस्य प्रत्यक्षस्य न्यूनबलत्वात्। अन्यथा इदं रजतमिति भ्रमोऽपि इयं शुक्तिरित्याप्तोपदेशापेक्षया प्रबल स्यात्।

इति तदुपहास्यम्। यदि प्रत्यक्ष भ्रमविलक्षणत्वेनानिश्चित कथं तत्रभवताऽत्रापच्छेदन्याय सङ्कार्यते। किन्नामापच्छेदाधिकरणे निश्चितानिश्चितप्रामाण्ययोः अत एव विषमयोर्द्वयोः पौर्वापर्ये पूर्वदौर्बल्य व्यवस्थापितम्। तथा चेत् प्रमानन्तरभ्रमस्यापि परत्वमात्रेण प्राबल्य स्यात्। कथं च प्रत्यक्षस्य भ्रमविलक्षणत्वानिश्चयः। कारणदोषाभावावधारणेन बाधकप्रत्ययात्यन्ताभावेन च सुप्रतिष्ठितं हि तस्य भ्रमविलक्षणत्वमिति।

इदमत्रावधेयम्। अपच्छेदनिमित्तकनैमित्तिकविशेषविधायके शास्त्रे द्वे अपि स्वार्थबोधने परस्परनिरपेक्षे। अत एव एकैकापच्छेदमात्रवति प्रयोगे तच्छास्त्रमात्रप्रवृत्तिः। तदिदं तयोः परस्परनैरपेक्ष्य तयोः पौर्वापर्यानियमे पर्यवस्यति। यस्मिन् प्रयोगे प्रथममुद्गातुरपच्छेदः पश्चात्प्रतिहर्तुः तत्रैतत्क्रमानुरोधेनोद्गात्रपच्छेदशास्त्रस्य पूर्वत्वम्। अन्यस्य परत्वम्। यस्मिंस्तु प्रयोगे प्रथमं प्रतिहर्तुरपच्छेदः पश्चादन्यस्य तत्र निमित्तक्रमवैपरीत्यात् शास्त्रयोरपि पूर्वत्वापरत्वयोर्वैपरीत्यं भवति। तस्मादनियतपौर्वापर्यस्थलेऽपच्छेदन्याय प्रवर्तत इत्याहुः। एकस्मिन्प्रयोगे यत्पूर्वत्वाद् बाध्यं तदेव प्रयोगान्तरे परत्वाद् बाधकं भवति। यच्च परत्वाद् बाधकं तदेव पूर्वत्वाद्बाध्यं च। तदेव अपच्छेदशास्त्रयोरुभयापच्छेदवति प्रयोगविशेषे अनियतबाध्यबाधकभावे सत्यपि एकापेक्षयेतरस्य प्रामाण्ये न कश्चिद्विशेषः।

ईदृशोऽयमपच्छेदन्यायः प्रकृते प्रत्यक्षाद्वैतागमप्राबल्यदौर्बल्यविषये नैव प्रवर्तितुमीष्टे। प्रथमं प्रत्यक्षम्। पश्चादागम इति क्रमो हि नियतः। प्रत्यक्षावगतं प्रपञ्चमनूद्य योऽयं प्रपञ्चः स नास्ति इति ह्यागमेन बोधनीयम्। अतोऽत्र क्रमान्तरस्य नैव प्रसक्तिः। एवं क्रमनैयत्ये

सति असञ्जातविरोधित्वात पूर्वं प्रवृत्त प्रबल पश्चात्प्रवृत्त दुर्बल च भवति वदापक्रमाधिकरणन्यायेन । अद्वैतागमप्रवृत्ते पूर्वं निश्चित-प्रामाण्येन प्रत्यक्षेणावगतस्य प्रपञ्चस्यानुवादस्तावत् तदवधिबाधक शङ्काया अप्यनुदयात् 'योऽय प्रत्यक्षप्रमित प्रपञ्च' इत्येव कर्तव्य । तादृशे प्रपञ्चे यथाश्रुतस्य नास्तीत्यस्यान्वयात् अब्रह्मात्मका नास्ती त्यर्थान्तरमभिधेयम् तदिहोपक्रमाधिकरणन्याय एव सङ्गतो न त्वपच्छेदन्याय ।

न चात्र सिद्धान्तलेशसङ्ग्रहोक्तरीत्या अद्वैतश्रुतः प्रत्यक्षेण एक-वाक्यत्वाभावात् 'नातिरात्रे षोडशिन गृह्णाति" षोडशिप्रतिषेध वाक्यस्येवाद्वैतागमस्य पूर्ववृत्तमविगणय्य स्वार्थबोधकत्वाविघातात् अपच्छेदन्यायप्रवृत्तिरप्रतिहतेति शङ्क्यम् । एकवाक्यतायास्तत्र क्रमनै-यत्यमात्रापयोगित्वात् । असञ्जातविरोधित्वस्यैव न्यायस्वरूपत्वात् । अन्यथा मुख्य वा स्यात् पूर्वचोदनाल्लोकवत् (१२ २७) इत्यादौ कर्मणामपि प्राथम्येन स्वाङ्गधर्मनिर्णय क्रियमाणोऽनुपपन्न स्यात् । न हि तत्रैकवाक्यताप्रसङ्गोऽस्ति । अत एव षोडशिप्रतिषेधवाक्यनिदर्शन-मप्यनुपपन्नम् । एकवाक्यताविरहेऽपि प्रतिषेध्यप्राप्त्यर्थं ग्रहणविधि वाक्यस्य नियमेन पूर्वमपेक्षणीयत्वात् । अपच्छेदवाक्य इव नैरपेक्ष्यस्य दुर्वचत्वात् । तदत्र पौर्वापर्यं नियतम् । तत्र पूर्वस्य विधिवाक्यस्य अनुपजातविरोधित्वेन प्राबल्यात् तदनुरोधेन निषेधवाक्ये नानुयाजे ष्वितिवत् पर्युदासाश्रयण वा 'न सोमे' इतिवदर्थवादत्वकल्पन वा प्राप्तम् । सोमनाथोक्तरीत्या तदुभयासम्भवेन तु तत्र विकल्प आश्रीयते । प्रकृते तु नियमेन परवाक्तनस्यात एव दुर्बलस्य नास्तीत्यस्य अब्रह्मात्म कत्वनिषेधपरत्व न्यायप्राप्तमाश्रीयमाण नानुपपन्नम । प्रत्युत रमणी यम् । अन्यथा हि न पर प्रत्यक्षस्य स्वात्मनोऽपि प्रामाण्यहानौ शास्त्र पर्यवस्येत् ।

तथा हि। प्रत्यक्षदृष्टं वस्तु किमपि परमार्थतो नास्तीति बोधयन्ती खल्वद्वैतश्रुतिः प्रत्यक्षगम्यः स्वात्माऽपि नास्तीति बोधयतीति वक्तव्यम्। अतः स्वात्मनोऽपि बाधः। न चैव परमपच्छेदशास्त्रं स्वात्मनोऽपि बाधं गमयति। अनेनापि हेतुनाऽत्रापच्छेदन्यायप्रवृत्तिरनुपपन्ना। अपन्याय एव केवलः परैरत्राश्रितः। न त्वपच्छेदन्यायः। ननु दृष्टान्तस्थं सर्वं नोपादेयम्। न हि मुखं चन्द्र इवेत्युक्ते चन्द्रवदाकाशस्थत्वं नास्तीति प्रत्यवस्थानं युज्यत इति चेन्न। विशेषसद्भावात्। अपच्छेदशास्त्रं हि स्वप्रामाण्यानुपघातवत्त्वात् परत्वनिमित्तं स्वप्राबल्यं प्राप्तमङ्गीकरोति। प्रपञ्चनिषेधशास्त्रं तु तद्वत् स्वप्राबल्ये सति प्रपञ्चान्तर्गतस्य स्वस्याप्यसत्त्वप्रसङ्गात् प्रमाणियतपूर्ववृत्तित्वरूपप्रमाणत्वभङ्गभिया तन्नाङ्गीकरोति। तदाह पूर्वतन्त्रपारदृश्वा पार्थसारथिमिश्रः शास्त्रदीपिकायां प्रत्यक्षसूत्रे—

> सत्यपि प्रत्यक्षविरोधे तदुपमर्देन प्रवर्तमानस्तद्बाधेनैवागमोऽद्वैतमवगमयतीति चेन्न। प्रवृत्त्यसम्भवात्। प्रत्यक्षं हि निरपेक्षं शीघ्रं जायमानं स्वविरुद्धस्यागमिकज्ञानस्य पदपदार्थसन्निध्यपेक्षायोग्यत्वन्यायालोचनसापेक्षतया विलम्बितप्रवृत्तेः प्रवृत्तिमेव निरुणद्धि। किञ्चाशक्यमेव श्रुत्या प्रपञ्चस्यासत्यत्वं बोद्धुम्। बुध्यमाने हि श्रुतिरपि प्रपञ्चान्तर्गतत्वादसती बोद्धव्या स्यात्। कथं च श्रुत्यैव श्रुतेरसत्त्वं बुध्येत। असत्त्वेन हि प्रतीयमाना न प्रामाण्यं स्यात्। प्रमाणत्वे त्ववस्थिते सत्तया प्रतीयमानायाः श्रुतेर्न मिथ्यात्वं शक्यं वक्तुम्। न ह्येकस्यैव वस्तुतो युगपदेव सत्त्वमसत्त्वं च समुच्चित्य बोद्धुं शक्यम्। अन्यतरोपमर्देनैव ह्यन्यतरद् बुद्धिमारोहति। ततश्च श्रुतिरस्तीति चेत् न प्रपञ्चस्याभावः सम्भवति। श्रुतेरपि प्रपञ्चत्वात्। नास्ति चेच्छ्रुतिः प्रमाणाभावादेव न प्रपञ्चापलापः सम्भवति।

इति। ननु प्रपञ्चाभावमुखेनैव श्रुतेरभावो वाच्यः। अतः श्रुत्यभावपक्षे प्रपञ्चाभावः सिद्ध एवेति नास्ति चेच्छ्रुतिः प्रमाणाभावादेव न प्रपञ्चापलापः सम्भवतीति कथमुच्यत इति चेदयमत्राभिप्रायः। प्रपञ्चासत्त्वं बोधयन्ती श्रुतिः प्रपञ्चान्तर्गतत्वात् स्वस्य स्वाभावमपि बोधयतीति वाच्यम्। न चायं बोधः प्रतितिष्ठति। असतः स्वस्याप्रमाणतया स्वजनिता प्रतीतिरयथार्थेति बुद्धेरनुपदमुदयावश्यम्भावात्। अतश्च भ्रमविषयः प्रपञ्चाभाव इति प्रतीतिमता प्रपञ्चो नास्तीति साधने प्रवृत्तिरसम्भाविनीति। अद्यतनः कश्चित्, नियतपौर्वापर्यस्थलेऽपच्छेदन्याय इति मीमांसाग्रन्थेषु क्वापि नोक्तमित्याह। तद्वेदेषु क्वापि उत्पत्त्यपूर्वं परमापूर्वं वा नोक्तमिति मीमांसकान् प्रति क्रियमाणदूषणमिवोपहासार्थम्। उपक्रमोपसंहारपदप्रयोगेणैव हि पौर्वापर्यनियमः स्थाप्यते। तद्वैलक्षण्यात् केवलपौर्वापर्योक्त्या अनियमः स्थाप्यते।

एतेनैव जगन्मिथ्यात्वानुमानस्य वह्न्यनुष्णत्वशैत्याद्यनुमानतुल्यत्वाभावप्रतिपादनप्रयासोऽपि व्यर्थ इति ज्ञापितम्। प्रत्यक्षसिद्धघटादिसत्त्वविलक्षणतात्त्विकसत्त्वाप्रसिद्धेः अनुमानस्य तदभावावगाहित्वासम्भवेनाविरोधोपपादनस्याशक्यत्वात्। सप्रकारकज्ञानबाध्यत्वरूपमेव मिथ्यात्वं शुक्तिरूप्ये सिद्धम्। एतदभावात् घटादेः सत्यत्वम्। एवं च निष्प्रकारकज्ञानबाध्यत्वादिरूपमिथ्यात्वस्याप्रसिद्धत्वात् दृष्टान्तेऽगृहीतत्वाच्च न तदवगाहित्वं सम्भवतीति अनुमानस्य लोकप्रसिद्धमिथ्यात्वविषयत्वेऽवश्यम्भाविनि वह्निशैत्यानुमानवदेव प्रत्यक्षबाध्यत्वमिति। यत्तु अनुमित्यादिविषयस्य तात्त्विकत्वं साधयतोक्तम्—'परीक्षा च प्रवृत्तिसंवादादिरूपा व्यवहारदशायामबाध्यत्वं विनाऽनुपपन्ना तद्दशायाबाधग्राहिणं बाधते, नाद्वैतश्रुत्यनुमानादिकमित्युक्तमेव,' इति। तेन आक्षेपस्य कः परिहार उक्तो भवति। प्रत्यक्षस्य यादृशो विषयः तादृश एवानुमित्यादेः। तयोश्च विरोधे प्रबलं प्रत्यक्ष

स्वविषयबाधग्राहित्वादनुमानमागमं च बाधते । अविरोधावहविलक्षणबाधग्राहित्वमनुमानस्य नास्तीति हि आक्षेपः । तत्र 'नाद्वैतश्रुत्यनुमानादिक' मिति प्रतिज्ञामात्रेण कथं समाधानं स्यात् । पूर्वमपि भवता एतावदेवोक्तम् । नत्वनेन हेतुना अनुमानागमयोर्विलक्षणतात्त्विकार्थविषयत्वं सिद्ध्यतीत्युक्तम् । प्रत्युत भवन्निरूपणानुसारेण प्रत्यक्षवदनुमानागमयोरपि परीक्षितयोरपि व्यवहारदशायामेव प्रमाणत्वात् तद्वदेव एतद्दशागतमेव विरुद्धार्थग्राहित्वं भवतीति विलक्षणार्थग्राहित्वप्रत्याशाऽपि न युज्यते । तेन

पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः ।
विरोधादुपजीव्येन न बिभेति कदाचन ॥

इति वदन्तं खण्डनकारं प्रति तच्छाययैव

पारमार्थिकमद्वैतं दुर्लभं शरणं श्रुतेः ।
विरोधादुपजीव्येन सा बिभेति ततः सदा ॥

इत्युत्तरं पठनीयम् । नन्वेवं सत्यद्वैतश्रुतेः का गतिः । या धूम एवाग्नेरित्यादेः सैव । अविशेषात् । उक्तं च महामीमांसकेन पार्थसारथिमिश्रेण—"तस्माद् ब्रह्मणः प्रशंसार्थैरस्थायित्वेन प्रपञ्चस्यासत्त्वमुपचरद्भिरौपनिषदैर्वादैः" इति । ब्रह्मप्रशंसार्थवादैरित्यनेन दिवाचिरदर्शनप्रस्तरयजमानयूपादित्यादिवादापेक्षया अद्वैतवादस्य यद्वैषम्यं वक्तुमिष्यते तन्नास्तीति दर्शितम् । तात्पर्यलिङ्गैः अद्वैतश्रुतीनां स्वार्थनिष्ठत्वावगमात् सन्निहितविधिवाक्यशेषभूतवाक्यान्तरवत् अमुख्यार्थान्तरकल्पना न युज्यत इति हि मन्यन्ते । तन्न तथा । तासामपि मोक्षार्थब्रह्मविद्याविधिशेषत्वात् । 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इत्युक्तरीत्या ब्रह्मतृष्णाजननौपयिकतया प्रापञ्चिकवस्तुषु वैराग्यं जनयितुं प्रवृत्ता इमाः श्रुतयोऽर्थवादा एव । ततश्च प्रत्यक्षप्राप्तार्थविरोधेन औपचारिकमर्थमुक्त्वा ततो ब्रह्मप्राशस्त्य

इति। ननु प्रपञ्चाभावमुखेनैव श्रुतेरभावो वाच्य । अत श्रुत्य भावपक्षे प्रपञ्चाभाव सिद्ध एवेति नास्तिचेच्छ्रुतिः प्रमाणाभावादेव न प्रपञ्चापलाप सम्भवतीति कथमुच्यत इति चेदयमत्राभिप्राय । प्रप- ञ्चासत्त्व बोधयन्ती श्रुति प्रपञ्चान्तर्गतत्वात् स्वस्य स्वाभावमपि बोधयतीति वाच्यम्। न चाय बाध प्रतितिष्ठति। असत स्वस्या प्रमाणतया स्वजनिता प्रतीतिरयथार्थेति बुद्धेरनुपदमुदयावश्यम्भावात्। अतश्च भ्रमविषय प्रपञ्चाभाव इति प्रतीतिमता प्रपञ्चो नास्तीति साधने प्रत्युत्तरसम्भावनीति। अथतन कश्चिन्, नियतपौर्वापर्यस्थल ऽपच्छेदन्याय इति मीमासाग्रन्थेषु क्वापि नोक्तमित्याह । तद्वेदेषु क्वापि दत्पत्त्यपूर्वं परमापूर्व वा नास्तमिति मीमासकान् प्रति क्रियमाण दूषणमिवोपहास्यम्। उपक्रमोपसहारपदप्रयोगेणैव हि पौर्वापर्यनियम द्योत्यते । तद्वैलक्षण्यात् केवलपौर्वापर्योक्त्या अनियम स्थाप्यते ।

एतेनैव जगन्मिथ्यात्वानुमानस्य वह्न्यनुष्णत्वशैत्याद्यनुमानतुल्यत्वा भावप्रतिपादनप्रयासोऽपि व्यर्थ इति ज्ञापितम् । प्रत्यक्षसिद्धघटादि सत्त्वविलक्षणतात्त्विकसत्त्वाप्रसिद्धेः अनुमानस्य तदभावावगाहित्वा सम्भवेनाविरोधोपपादनस्याशक्यत्वात् । सप्रकारकज्ञानबाध्यत्वरूपमेव मिथ्यात्वं शुक्तिरूप्ये सिद्धम् । एतदभावात् घटादे सत्यत्वम् । एवं च निष्प्रकारकज्ञानबाध्यत्वादिरूपमिथ्यात्वस्याप्रसिद्धत्वात् दृष्टा न्तेऽगृहीतत्वाच्च न तदवगाहित्व सम्भवतीति अनुमानस्य लोक प्रसिद्धमिथ्यात्वविषयत्वेऽवश्यम्भाविनि वह्निशैत्यानुमानवदेव प्रत्यक्ष बाध्यत्वमिति । यत्तु अनुमित्यादिविषयस्य तात्त्विकत्व साधयतोक्तम् —"परीक्षा च प्रवृत्तिसंवादादिरूपा व्यवहारदशायामबाध्यत्व विना ऽनुपपन्ना तद्दशाबाधमाहिण बाधते, नाद्वैतश्रुत्यनुमानादिकमित्युक्त- मेव," इति। तेन आक्षेपस्य कः परिहार उक्तो भवति। प्रत्यक्षस्य यादृशो विषय तादृश एवानुमित्यादे । तयोश्च विरोधे प्रबल प्रत्यक्ष

स्वविषयबाधग्राहित्वादनुमानमागमं च बाधते। अविरोधावहविलक्षणबाधग्राहित्वमनुमानस्य नास्तीति हि आक्षेपः। तत्र 'नाद्वैतश्रुत्यनुमानादिक' मिति प्रतिज्ञामात्रेण कथं समाधानं स्यात्। पूर्वमपि भवता एतावदेवोक्तम्। नत्वनेन हेतुना अनुमानागमयोर्विलक्षणतात्त्विकविषयत्वं सिद्ध्यतीत्युक्तम्। प्रत्युत भवन्निरूपणानुसारेण प्रत्यक्षवदनुमानागमयोरपि परीक्षितयोरपि व्यवहारदशायामेव प्रमाणत्वात् तद्वदेव एतद्दशागतमेव विरुद्धार्थग्राहित्वं भवतीति विलक्षणार्थग्राहित्वप्रत्याशाऽपि न युज्यते। तेन

पारमार्थिकमद्वैतं प्रविश्य शरणं श्रुतिः।
विरोधादुपजीव्येन न बिभेति कदाचन॥

इति वदन्तं खण्डनकारं प्रति तच्छाययैव

पारमार्थिकमद्वैतं दुर्लभं शरणं श्रुतेः।
विरोधादुपजीव्येन सा बिभेति ततः सदा॥

इत्युत्तरं पठनीयम्। नन्वेवं सत्यद्वैतश्रुतेः का गतिः। या धूम एवाग्नेरित्यादेः सैव। अविशेषात्। उक्तं च महामीमांसकेन पार्थसारथिमिश्रेण—"तस्माद् ब्रह्मणः प्रशंसार्थैरस्थायित्वेन प्रपञ्चस्यासत्वमुपचरद्भिरौपनिषदैर्वादैः" इति। ब्रह्मणः प्रशंसार्थैर्वादैरित्यनेन दिवाचिरदर्शनप्रस्तरयजमानयूपादित्यादिवादापेक्षया अद्वैतवादस्य यद्वैषम्यं वक्तुमिष्यते तन्नास्तीति दर्शितम्। तात्पर्यलिङ्गैः अद्वैतश्रुतीनां स्वार्थनिष्ठत्वावगमात् सन्निहितविधिवाक्यशेषभूतवाक्यान्तरवत् अमुख्यार्थान्तरकल्पना न युज्यत इति हि मन्यन्ते। तन्न तथा। तासामपि मोक्षार्थब्रह्मविद्याविधिशेषत्वात्। 'परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि' इत्युक्तरीत्या ब्रह्मतृष्णाजननौपयिकतया प्रापञ्चिकवस्तुषु वैराग्यं जनयितुं प्रवृत्ता इमाः श्रुतयोऽर्थवादा एव। ततश्च प्रत्यक्षप्राप्तार्थाविरोधेन औपचारिकमर्थमुक्त्वा ततो ब्रह्मप्राशस्त्य

लक्षणया प्रतिपादयन्तीति कल्पनीयमिति । सेयं केवलमीमांसकमता दानुसारिणी योजना । आचार्यास्तु प्रपञ्चसत्यत्वाविरोधेन मुख्या वृत्तिमाश्रित्यैव अद्वैतश्रुतीर्निर्वहन्तीति विद्वांसः ।

यदि च ईदृशो न्याय्यः कश्चन पन्था नाश्रीयते तर्हि—"नन्वेव मग्न्यनौष्ण्यं तात्त्विकमिति तदनुमितिरपि न बाधेत व्यावहारिकौष्ण्य ग्राहिणा प्रत्यक्षेण । एवं च 'आदित्यो यूपः' इत्यादावपि 'तात्त्विकादि त्यता यूपस्याश्रित्य शास्त्रं श्रुतिं । विरोधाद्युपजीव्येन न बिभेति कदा चन ॥" इत्याद्यपि स्यात्' इतीदं चाद्य दुःसमाधानमेव स्यात् । यत्तु च्यते—अनौष्ण्यं तात्त्विकं स्यादिति कार्यं ? यदि तत्त्वत औष्ण्यं नास्तीति, तदाऽद्वैते पर्यवसानादिष्टापत्तिरेव,' इति तदयुक्तम् । वह्ने रनुष्णत्वेन ग्रहणप्रसङ्गात् । व्यावहारिकेणौष्ण्येन तात्त्विकस्यानुष्ण त्वस्य विरोधेन, विषयाबाधात् । तात्त्विकस्य विषयस्य व्यावहारिके ग्रहणं न भवतीति चेन्न । सद्रूपब्रह्मग्रहणस्याभ्युपगतत्वात् । व्यावहारि कस्यापि औष्ण्यस्य ग्रहणं तात्त्विकत्वेनाविरुद्धस्यापि अनौष्ण्यस्य ग्रहणं प्रतिबध्नातीति चेत्, तर्हि व्यावहारिकग्रहणप्रतिबन्ध्यग्रहण विषयो न तात्त्विक इत्येव स्यात् । अतात्त्विकस्य वह्नेस्तात्त्विकानुष्णत्वा धारत्वं च कथं भवेत् । तथा चेष्टापत्तिः कृताऽनुपपन्ना । तेन चाग्ने रुक्तयतात्त्विकानौष्ण्यसाधकानुमानतुल्यतया जगन्मिथ्यात्वानुमानमा भासरूपमेवेत्येतत् प्रकाशायते । एवमेव शैत्यानुमानमपि निदर्शनीयम् । एवं यूपस्यादित्यत्वाऽपि पारमार्थिकी श्रुत्यभिप्रेतेति स्यादेव । अन्यपर त्वेऽपि मुख्यार्थसम्भवे लक्षणाया अन्याय्यत्वात्, बाधकप्रत्यक्षस्य दुर्बलत्वात् व्यावहारिकभेदविषयत्वाच्चेति । अनन्यपरत्वेऽपि सति हेतौ लक्षणाया न्याय्यत्वेन प्रत्यक्षाविरोधाय अद्वैतश्रुतेरर्थान्तरपरत्वा ङ्गीकारो युक्त एव । न विधौ परः शब्दार्थ इत्यस्य सम्भवत्स्थलपरत्वात् अधमन्तर्वेदीत्यादौ विधेयसमर्पकेष्वेव पदेषु लक्षणाश्रयणात् । गोभि

श्रोणीतेति निदर्शनपुरस्सर एव भवतैवोत्तरत्रोक्तत्वाच्च ।

प्रत्यक्षदौर्बल्यापादनव्यसनितया पुनरपि वृथैव बह्वाह । तत्र तावत् नायं सर्पं इत्याप्तोपदेशस्य प्रत्यक्षमूलत्वनिश्चये सत्येव रज्जुसर्प-प्रत्यक्षबाधकत्व, नान्यथा । तथा चिरनिश्चेष्टत्वप्राण्यन्तरास्कन्द-नादिप्रत्यक्षमूलत्वादेव वायं सर्पं इत्यनुमानस्यापि तद्बाधकत्वम् । शुक्तिरजतप्रत्यक्षबाधकानुमानस्थलेऽप्येवं द्रष्टव्यम् । पीतशङ्खप्रत्यक्षं अप्रमाणतया गृह्यमाणमेवोत्पद्यते । शङ्खश्वेतिम्नः पूर्वं प्रत्यक्षतः सुनि-श्चितत्वात् । आजन्मसिद्धकामलस्य तु पुरुषस्य प्रत्यक्षमूलत्वेन गृहीता-देव आप्तोपदेशात् स्वप्रत्यक्षबाधः । नील नभः इति अस्मन्मते प्रमैव । नान्येन तद्बाधः । तन्नीरूपत्ववादिना तु सन्निकर्षे नीरूपत्वग्रहणात् दूरे नीलत्वधीर्जायमाना सन्दिग्धप्रामाण्यैव जायत इति तत्र युक्ति-रवकाशं लभते । अहमिहैवास्मि सदने जानान इत्यपि जीवाणुत्ववादि-नामस्माकं प्रमैव । न च तदणुत्वे युगपत् पादशिरोऽवच्छेदेन सुख-दुःखानुभवविरोधः । धर्मभूतज्ञानेन कृत्स्नशरीरव्याप्तेः । मम शरीरमित्यप्यनुभवस्य सत्त्वात् गौरोहमिति शरीराभेदनिश्चयात्मकः प्रत्ययो न भवतीत्युक्तम् । यत्तु गौरोऽहमिति शरीराभेदप्रत्यक्षे जाग्रति मम शरीरमिति प्रत्यक्षोत्पत्तेर्नास्त्यवकाश इति । तत्र विपरिवर्तः किं न स्यात् । तथा च जपासंसर्गिस्फटिकारुणिमवादद गौरत्वमिति निश्चयः प्रत्यक्षान्तरमूल इति किमनुपपन्नम् ।

ज्वालैक्यप्रत्यक्षेऽपि आश्रयाशस्य आश्रयनाशकत्व आश्रयनाशा-नन्तर स्वनाशश्च दृढप्रत्यक्षगृहीतमिति वर्तिनाशस्नेहक्षयप्रत्यक्षानन्तरं तन्मूलकानुमानोदयात् अन्ततः प्रत्यक्षमेव बाधकत्वेनावतिष्ठत इति विभाव्यम् । यच्च चन्द्रप्रादेशिकत्वप्रत्यक्षं ब्रह्मास्त्रीयति, तदपि व्यामोहमात्रमिति, प्रागेव व्यञ्जितम् । दूरत्वदोषेणेदमल्पत्वभान भवितुमर्हतीति धियः सद्य एव जातत्वेन तस्य प्रत्यक्षस्य स्वगृहीत-

परिमाणनिश्चायकत्वाभावात्।

यत्त्वत्र "न हि चन्द्रप्रादेशिकत्वप्रत्यक्षेऽपि प्रागेव दुष्टकारणत्वनिश्चय। नैकट्यस्यापि क्वचिद्दोषत्वेन सर्वत्र परिमाणज्ञानाविश्वासप्रसङ्गात्। किन्तु आगमादिना बाधानन्तरमेव" इत्युच्यते तत् प्रलापमात्रं परिदेवितं वा। नैकट्यमपि यदि क्वचिद्दोष, काम भवतु। कुत्र दोष कुत्र न दोष इति परीक्षया निश्चेतव्यम्। तावता दूरत्वस्य दोषत्वं दृष्टं कथमपह्नोतुं शक्यम्। भूमिष्ठाम् महत प्रासादान् गोपुराणि च किल सन्निहितपर्वतशृङ्गाग्रस्थ अत्यल्पान पश्याम। लोकानुभवमिम महाकविरसकृन्निबध्नाति— "दूरादयश्चक्रनिभस्य तन्वी तमालताली वनराजिनीला। आभाति वेला लवणाम्बुराशेर्धारानिबद्धेव कलङ्करेखा" इति, "सरिद् विदूरान्तरभावतन्वी" इति, "एतन्मुनेर्मानिनि शातकर्णे: पञ्चाप्सरो नाम विहारवारि। आभाति पर्यन्तवन विदूरान्मेघान्तरालक्ष्यमिवेन्दुबिम्बम्" इति च। भामतीकारश्च— "उच्चतरगिरिशिखरवर्तिषु महातरुषु भूमिष्ठस्य दूरादवालोनिर्भासप्रत्ययवत्" इति। ये आगमगन्धानभिज्ञा बाला तेऽपि हि सूर्यचन्द्रादिमहत्त्वं भूम्यपेक्षया महत्तरत्वमवधारयन्ति। तस्मादत्र प्रत्यक्षस्य प्रागेव दुष्टकरणत्वनिश्चय। न त्वागमादिना बाधानन्तरमिति ध्येयम्।

यच्च "युक्तिरेवैषा। यद् यद्दूरस्थाल्पपरिमाणज्ञान तत्तद्दूरदोषनिबन्धनमप्रमा। शैलाग्रस्थविटप्यल्पपरिमाणज्ञानवत्। इदमपि तथेति। तथा च एवरूपया युक्त्यैव चन्द्रप्रादेशिकत्वप्रत्यक्षस्य बाध वदन् 'युक्त्या न प्रत्यक्षस्य बाध' इत्यनेनाजैषी पर मन्दबुद्धमन्दाशो न तु परम्।" इति तदप्यस्थाने अविनयप्रदर्शनम्। शैलाग्रस्थविटप्यल्पपरिमाणप्रत्यक्षाप्रामाण्यस्य शैलाग्रमारुह्य विटपिसमीपं गत्वा लब्धमहापरिमाणप्रत्यक्षाधीनत्वात्। दूरस्य दोषत्वनिश्चयो हि अन्ततः प्रत्यक्षाधीन एव। एतन्निश्चयवता च जायमानं दूरवस्तुप्रत्यक्ष न सदारि-

माणनिश्चायकं भवतीति न तत्र बाधकान्तरापेक्षाऽस्ति। न हि वह्नि-रनुष्ण इति प्रतिज्ञाभासश्रवणसमनन्तरं 'यो यो वह्निः स स उष्णः यथा महानसः। अयमपि तथा' इति युक्त्यैव तद्बाध इति बुद्धिमान् कश्चिद् वक्तुमर्हति। तदनेनाप्युदाहरणेन प्रत्यक्षस्य अनुमानबाध्यत्वं वा आगमबाध्यत्वं वा दुस्साधमिति स्थितम्।

सर्वदोषविनिर्मुक्तस्याप्यनुमानस्याविश्वसनीयत्वं, प्राचीनैरुक्तं "यत्नेनानुमितोऽप्यर्थः" इति शास्त्रकाराणां श्लोकं भामत्युदाहृतं पठन् तत्र भवान् जानात्येव। तथा सति किं वक्तव्यं सर्वदोषदुष्टस्य जगन्मिथ्यात्वानुमानस्याविश्वसनीयत्वं प्रति। अनेनैव परीक्षितप्रत्यक्ष-बाधं साधयितुं प्रवृत्तेन तु नूनं भूतविशेषाविष्टेन भाव्यम्। कृत्स्नस्यैव सुपरीक्षितस्यापि प्रत्यक्षस्य भ्रमाविलक्षणत्वं अत एवाविश्वसनीयत्वं चोपयता "सर्वत्र परिमाणज्ञानाविश्वासप्रसङ्गा" दित्यापादनं विनोदाय कल्पते। ब्रह्महत्याशीलस्य पिपीलिकाकारुण्यार्द्रचित्तत्वं ह्येतत्। "यत्र पुनः विचारपदवीमुपारूढयोर्ज्ञानयोर्बलाबलचिन्तया बाधनिश्चयः तत्र नानुमानादिना प्रत्यक्षस्य मिथ्यात्वसिद्धिः।" इति विवरणग्रन्थो भव-त्पक्षविरुद्ध एव। अत्र हि प्रपञ्चसत्यत्वग्राहिणः प्रत्यक्षस्य तन्मिथ्यात्व-ग्राहिणोरनुमानागमयोश्च बलाबलचिन्तया बाधो निश्चेतव्यो भवति। तत्र प्रत्यक्षस्य नियमेन प्रबलत्वात् न तस्य मिथ्यात्वम्। अत्र यदुच्यते— "तदपि गृहीतप्रामाण्यकशब्दतदुपजीव्यनुमानातिरिक्तयुक्तिविषयम्" इति तत् काम तथा भवतु। तेन किं प्रकृतस्य। अद्वैतश्रुतिर्हि प्रपञ्च-मिथ्यात्वे अगृहीतप्रामाण्यक एव शब्दः। अत एव मिथ्यात्वानुमानं च गृहीतप्रामाण्यकशब्दानुजीव्येव। तथा हि। अप्राप्तार्थप्रापकं शास्त्रम्। तथा चाहुः—'अप्राप्ते शास्त्रमर्थवत्' इति। प्राप्तिश्च तत्त्वेन वा अतत्त्वेन वा। तत्र तत्त्वेन प्राप्तार्थबोधने अनुवादमात्ररूपत्वापत्तेः शास्त्रस्यार्थ-वत्त्वं हीयते। अतत्त्वेन प्राप्तार्थबोधने तु बाधितार्थत्वात्। तेन 'अग्निर्हि-

मस्य भेषजम्" इत्यस्य यथा न स्वार्थे गृहीतप्रामाण्यकत्वम्, लौकिक एव तथात्वेन प्राप्तत्वात्, तथा 'नेह नानाऽस्ति' इत्यादेरपि प्रपञ्चासत्त्व रूपार्थे न गृहीतप्रामाण्यकत्वम्, प्रपञ्चस्यासत्यविपर्ययेण, सत्त्वेन प्राप्तत्वात्। प्रपञ्चसत्त्वस्य प्रत्यक्षेण प्राप्तत्वात् तदप्राप्तासत्त्व श्रुतेस्तात्पर्यम्। अप्राप्तत्वरूपापूर्वत्वालिङ्गात्", इति ज्ञानरूपकाणां भ्रान्तानामयं वादः। प्रपञ्चासत्त्वं नास्ति' इति असत्त्वमपि हि नास्तित्वेन प्रत्यक्षतः प्राप्तम् प्रस्तरे यजमानाभेदाभाव इव। तस्मात् व्यतिरेकेण निश्चितत्वात् प्रपञ्चासत्त्वमपि प्राप्तमेवेति तादृशमपूर्वतालिङ्गं नास्ति। तदभावे च लिङ्गान्तराणि सर्वाणि असत्कल्पान्येवेति प्रत्यक्षबाधनक्षमा गृहीतप्रामाण्यकः शब्दो वा तदुपजीवी तर्को वा न कश्चन सम्भवतीति।

अथ प्रत्यक्षस्य भाविबाधमुपपादयन् इदमाह—

एवं च "भाविबाधनिश्चयाच्च' इति यदुक्तं तदप्युपपन्नमेव। प्रकारान्तरेणाबाधितस्य चन्द्रप्रादेशिकत्वप्रत्यक्षस्य यथा आगमेन बाधः, तथा प्रकारान्तरेणाबाधितस्य 'सन् घटः' इत्यादिप्रत्यक्षस्य मिथ्यात्वबोधकेनागमेन बाध इति निर्णयात्। वस्तुतस्तु बाधशङ्का माद्यापि प्रत्यक्षस्य बाधकतोद्धारः समीचीन एव। प्रत्यक्षशब्दयोर्बलाबलविचारात् प्राक् 'किमयं शब्द उपचरितार्थः आहोस्वित् प्रत्यक्षमप्रमाणम्?' इति शङ्कायामुभयोरबोधकत्वप्राप्तौ तात्पर्यलिङ्गैः श्रूयमाणार्थपरतया निश्चितस्यागमस्य उपचरितार्थत्वशङ्काव्युदासेन तद्बाधकत्वसम्भवात्।

इति। पूर्वं 'भाविबाधाभावानिर्णयाच्च' इति स्थितः पाठः। अत्र तु 'भाविबाधनिश्चयाच्चेति यदुक्तम्' इत्यनुवादो दृश्यते। कथमिदमिति विमर्शनीयम्। अत्रोक्तं सर्वं पूर्वमेव समाहितमिति पुनरिदानीं वक्तव्यं न किञ्चिदस्ति। 'किमयं शब्द उपचरितार्थः आहोस्वित् प्रत्यक्षमप्रमाण'मिति संशयोत्थानस्य वैदिकानां कुलेऽनास्ति सम्भवः।

प्रत्यक्षाविरुद्धार्थ एव वेदप्रामाण्यात् । सति चैव आगमेन प्रत्यक्ष-बाधः सुतरामसम्भवदुक्तिकः । अत्र असारं बहूक्त्वा अन्ते स्वमतर-हस्यं प्रकाशयन् इदमाह—'मैव मंस्थाः । यतः समत्वेन प्रमाणान्तरे उपस्थित एवं निश्चितेऽपि सत्वादौ शङ्का भवतीति ब्रूमः । न तु निश्चितमाने शङ्का भवतीति । तथा च यदुक्तं बौद्ध प्रति भट्टवार्तिके "दुष्टज्ञानगृहीतार्थप्रतिषेधोऽपि युज्यते । गृहीतमात्रबाधे तु स्वप-क्षोऽपि न सिद्ध्यति ॥" इति, तदपि न विरुद्ध्यते । गृहीतमात्रबाधस्य तच्छङ्कायाश्चानुक्तेः ।" इति, "आगमादिप्रामाण्यमूलकशङ्काया एव स्वीकारात्" इति च । प्रत्यक्षेण प्रपञ्चसत्वे निश्चिते, प्रकारान्तरेण तत्र शङ्कायाः कथमप्यसम्भवे स्थिते स्वाभिमतार्थाद्वैतश्रुतिबलादेव शङ्का भवतीत्याह । प्रत्यक्षाविरुद्धमप्यर्थं बाधयितुं प्रभवति वेद इत्येतत् यदि सिद्धं स्यात् तदा एवमपि वक्तुं कदाचिद् युज्येत । न च तत्सिद्धम् ।

> "प्रवृत्ता हि श्रुतिरनपेक्षतया स्वतः प्रमाणत्वेन न प्रमाणान्तर-मपेक्षते । प्रवर्तमाना पुनः स्फुटतरप्रतिष्ठितप्रामाण्यतर्कविरोधेन मुख्यार्थात् प्रच्याव्य जघन्यवृत्तिता नीयते । यथा मन्त्रार्थ-वादादिष्वर्थः ।"

इति भोक्त्रापत्त्यधिकरणभामत्या यदुक्तं स एव सर्वत्र वैदिकानां सिद्धान्तो भवितुमर्हतीत्यवगन्तव्यम् । तदेव प्रपञ्चसत्ताग्राहिप्रत्यक्ष-प्रामाण्य प्रति शङ्कायाः कथमप्ययोगात् तेन मिथ्यात्वानुमानस्य बाधो दुरुद्धर एव ।

## १६. अनुमानबाधः

अथ विमतं सत् परमार्थसद्वा प्रातिभासिकत्वानधिकरणत्वे सति असद्विलक्षणत्वात्, ब्रह्मवत्, व्यतिरेकेण शशशृङ्गवद्वा, इति मिथ्यात्वानु-मानबाधकं विश्वसत्यत्वानुमानं यद् दूष्यते तदपि न युज्यते । तथाहि । यदुच्यते 'त्वन्मते प्रातिभासिकस्याप्यसत्त्वेन व्यर्थविशेषणतया

व्याप्यत्वासिद्धेः इति तन्न । व्यर्थविशेषणत्वेऽपि व्याप्तेरनपायात् । तदुक्तं न्यायपरिशुद्धावाचार्यचरणैः —

व्यर्थविशेषणप्रयोगेऽपि विशेष्यमात्रव्याप्तेरनपक्रमाद् विशिष्टस्यापि व्यभिचाराभावेन व्याप्तिसिद्धेः । न हि कार्यत्वमनित्यत्वं न व्यभिचरति प्रयत्नकार्यत्वं तु व्यभिचरतीति सम्भवति । न च धूमवत्त्वालोकवत्त्वे प्रत्येकं पावकाविनाभूते । धूमवत्त्वे सत्यालोकवत्त्वादिति प्रयोगे तु अविनाभावं त्यजत इति युक्तिमत् । अतो व्यर्थविशेषणत्वेऽपि न व्याप्तिभङ्गः । पक्षादिविशेषणादिवैयर्थ्येषु तु न व्याप्यत्वासिद्धिप्रसङ्गोऽपि ।

इति । वस्तुतस्तु न प्रकृते विशेषणस्य वैयर्थ्यम् । असद्विलक्षणत्वादित्यत्र आत्यन्तिकासत्त्वविवक्षणात् । प्रातिभासिकस्य अत्यन्तासत्त्वाभावात् । भ्रमस्थले हि भ्रमविषयस्य धर्मिव्यतिरिक्ते क्वचित् सत्त्वमस्त्येव, न तु यत्र क्वाप्यसत्त्वं शशशृङ्गादेरिव । अत एव विधा सत्त्वोक्तौ इतरासत्त्वानुक्ते उभयोश्च मिलितयोः साध्यप्रयोजकत्वात् न विशेषणस्य वैयर्थ्यम् । यच्च 'अस्मन्मतमाश्रित्य हेतुकरणे च देहात्मैक्ये ब्रह्मज्ञानेतराबाध्ये व्यभिचारात्' इति तदपि न । तस्य प्रातिभासिकत्वेन तदनधिकरणत्वाभावात् । न च ब्रह्मज्ञानेतराबाध्यत्वमेव प्रातिभासिकत्वम् । देहात्मैक्यस्य च तन्नास्ति । यावत्संसारं तत्प्रतीत्यनुवृत्तेः । तदत्र साध्याभावेऽपि हेतोः सत्त्वात् दुर्निवारो व्यभिचार इति शङ्क्यम् । ब्रह्मज्ञानेतरेण मम देह इति प्रत्यक्षेण, स्तन्यपानादिदर्शनमूलेनानुमानेन च आत्मनो देहव्यतिरेकस्य निश्चिततया देहात्मैक्यप्रातिभासिकत्वस्यासन्देहगन्धमवधृतत्वात् । देहसंसर्गोपाधेरनुवर्तमानतया आत्मनस्तदैक्यप्रतीत्यनुवृत्तावपि तन्मिथ्यात्वावधारणस्य निर्विघातत्वात् । प्रतिभासमात्रनिष्पन्नशरीरत्वस्यैव प्रातिभासिकपदार्थत्वात् । अधिष्ठानवृत्त्यत्यन्ताभावप्रतियोगित्वरूपमिथ्यात्वप्रतीतेरेव बाध

पदवाच्यतया तस्याश्च उक्तविषमसत्तादिना जातत्वेन ब्रह्मज्ञानेतर-बाध्यत्वरूपस्यापि प्रातिभासिकत्वस्य तत्र सद्भावाच्च। प्रातिभासिकस्या-सत्त्वमिच्छन्तं परं प्रति दृष्टान्तासिद्धिरिति दूषणं भवदीयमिथ्यात्वा-नुमाने प्रसज्यमानं कुतो भवान् न जानाति? न हि शुक्तौ रूप्य-प्रतीतिव्यतिरेकेण शुक्तिरूप्यं नाम किञ्चित् परमते अस्ति।

अथ यद् व्यावहारिकसत्त्वमात्रेणैव उपपत्तेः उक्तहेतोरप्रयोजकत्व-मिति, तन्न। तदतिरिक्तपारमार्थिकसत्त्वे मानाभावात्। अत एव 'परमार्थसत्त्वं बाधानुपपत्तिलक्षणप्रतिकूलतर्कपराघातात्' इति स्वदर्श-नानुरागाविष्करणमात्रम्। बाधस्य अस्माभिरनिष्टत्वेन तदनुपपत्ति-लक्षणप्रतिकूलतर्कस्यानुदयात् बाधः सर्वथा न भविष्यति। अत एव प्रपञ्चः परमार्थसन् इति हि द्वैतिनः साधयन्ति। तान् प्रति बाधानुपपत्ति-लक्षणप्रतिकूलतर्कप्रदर्शने का कृतबुद्धिता। अस्मत्सिद्धान्तो यस्मान्नो-पपद्यते तस्माद् भवदनुमानं दुष्टमित्यभिधानं यादृशं तादृशं ह्येतत्।

यच्च 'ब्रह्मण्यसत्प्रातिभासिकोभयव्यावृत्तिरूपं हेतुं प्रति व्यावर्तक-तया प्रयोजकं परमार्थसत्त्वम्' इत्येतदसहमानेन किञ्चिदुक्तं तच्चायुक्तम्। पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानमिच्छन्तो हि शास्त्रविदः यथा एकैकस्मादितरस्मात् तथा द्वाभ्यां द्वाभ्यामपि अन्येषां पदार्थानां व्यावृत्ताकारं विविच्य निर्धारयन्ति। तेन ब्रह्मणः असत्प्रातिभासिको-भयव्यावृत्ताकारः कः इत्येवमन्वेषणा परमार्थसत्त्वमेव स आकार इत्यवधारणा च युज्यत एव। उभयव्यावृत्तिर्हि एका वा उभयी वा समव्याप्ता कामं माभूत्। तथाऽपि तस्या एकप्रयोज्यत्वं कुतो न भवितु-मर्हति। एकानुष्ठानां हि बहूनामपि भेदानां एक एव धर्मः प्रयोजको दृष्टः। यथा पृथिवीतरपृथिवीगतानां तदितरसर्वभेदानाम्। तदिह परमार्थ-सत्त्वं ब्रह्मणि असत्प्रातिभासिकोभयव्यावृत्तिप्रयोजकमित्येतदत्यन्तं युक्तम्। न चात्र कल्पना काचिदस्ति। ब्रह्मणि परमार्थसत्त्वस्य सर्वो-

भ्युपगतत्वात् । तस्य च तदुभयव्यावृत्तिप्रयोजकत्वस्य सत सिद्धत्वादिति ।

अथ यदुक्तम्—'नित्यत्वमुपाधि । तुच्छप्रातिभासिकयो नित्यत्व व्यतिरेके साध्यव्यतिरेकदर्शनात्' इति, तत्र वदाम । नित्यत्वस्योपाधित्व न सम्भवति, अप्रयोजकत्वात् । न हि ब्रह्म नित्यत्वात् असत्प्रातिभासिकाभ्या व्यावृत्तम् । अनित्यात् व्यावर्तकं हि नित्यत्वम् । परमार्थसत्वादेव तु तत् ताभ्या व्यावृत्तम् । स्पष्ट चेद नित्यत्वव्यतिरेकेण साध्यव्यतिरेकसाधने । विमत परमार्थसन्न भवति नित्यत्वाभावा दित्यत्र हि प्रातिभासिकसत्तातिरिक्तसत्ताविरह अबाध्यत्वानधिकरणत्व वा उपाधिरिति । तदेव साध्यव्यतिरेकसाधन सोपाधिकत्वात् नित्यत्वमप्रयोजकमिति न तस्योपाधित्वमिति । तदस्मिन विश्वसत्यत्वानुमाने

एकस्य हेतोरिति दूषणानि
दत्तानि सर्वाणि समाहितानि ।
स एव हेत्वन्तरदूषणाना
पन्था निरासेऽप्यवलम्बनीय ॥

किन्तु—प्रमाणराजत्वपदेऽभिषिक्त
प्रत्यक्षरूप यदिद प्रमाणम् ।
विश्वस्य तेन प्रमितस्य सिद्धि
लब्धामहे लिङ्गबलेन कर्तुम् ॥

विश्वापलापनिरतस्य तु किञ्चिदस्ति
हित्वाऽनुमानमपर शरण न लोके ।
तेनानुमानसरणौ बहुचापलोऽसौ
तत्क्षेपणेषु सुधियो बहु सम्भ्रमाश्च ॥

## १७. विशेषानुमानानि

तदिदानीं विश्वमिथ्यात्वे तदीयानि विशेषतोऽनुमानान्येव विमृशामः। प्रायोऽत्र शब्दविन्यासभेद एव न तु प्रमेयभेद इत्यवगन्तव्यम । १ ब्रह्मज्ञानेतराबाध्य यत् ब्रह्मान्यत् तन्निष्ठ स्वसत्त्वानधिकरणत्व पारमार्थिकसत्त्वाधिकरणावृत्ति ब्रह्मावृत्तित्वात् शुक्तिरूप्यत्ववत परमार्थसद्भेदवञ्च ।" इत्यत्र ब्रह्मज्ञानेतरबाधितवृत्तित्वमुपाधिः। उक्तासत्त्वानधिकरण त्व पारमार्थिकसत्त्वाधिकरणवृत्ति प्रातिभासिकसत्वानधिकरणवृत्तित्वात् ब्रह्मत्ववत् इति सत्प्रतिपक्षता च। २. विमत मिथ्या ब्रह्मान्यत्वात् शुक्तिरूप्यत्ववत्, इत्यत्र हेतुर्व्याप्यत्वासिद्धः। न हि ब्रह्मान्यत्वे तत्र व्याप्तिर्गृहीता। अपि तु मिथ्याप्रत्ययविषयत्वे। व्यावहारिकेतरत्व प्रातिभासिकत्वं वा उपाधिश्च। विमतं न मिथ्या प्रातिभासिकेतरसत्त्ववत्त्वात ब्रह्मवदिति सत्प्रतिसाधनत्व च। ३. परमार्थसत्त्व स्वसमानाधिकरणान्योन्याभावप्रतियोग्यवृत्ति, सदितरावृत्तित्वात् ब्रह्मत्ववत्, इत्यत्र एकव्यक्तिवृत्तित्वमुपाधिः। परमार्थसत्त्वं स्वसमानाधिकरणान्योन्याभावप्रतियोगिवृत्ति, सत्त्वत्वात घटत्वादि समानाधिकरणव्यावहारिकसत्त्ववत् इति सत्प्रतिपक्षश्च। ४ ब्रह्मत्वमेकत्वं वा सत्त्वव्यापक सत्त्वसमानाधिकरणत्वात्, असद्वैलक्षण्यवत्, इत्यत्र हेतुरप्रयोजकः। न हि सामानाधिकरण्यमात्र व्यापकत्वे प्रयोजकम्। घटपटयोः सामानाधिकरण्येऽपि एकस्येतर प्रति व्यापकत्वाभावात। असद्वैलक्षण्यस्य सत्वव्यापकत्वं च यावत्सत्त्वाधिकरणवृत्तित्वात्, न तु सामानाधिकरण्यमात्रात्। ब्रह्मत्वमेकत्व वा न सत्त्वव्यापकम्, सत्त्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वात्, घटत्ववत तदेकत्ववद्वेति सत्प्रतिपक्षश्च। ५. व्याप्यवृत्तिघटादिः जन्याभावातिरिक्तस्वसमानाधिकरणाभावमात्रप्रतियोगी अभावप्रतियोगित्वात्, अभिधेयत्ववत् इत्यत्र केवलान्वयित्वमुपाधिः। घटादिः उक्तविधाभाव

मात्रप्रतियोगी न भवति, अत्यन्ताभावप्रतियोगित्वात्, व्यतिरेकेणा
भिधेयत्ववदिति सत्प्रतिपक्षः । ६ अत्यन्ताभावः प्रतियोग्यवच्छिन्न
वृत्तिः नित्याभावत्वात् अन्योन्याभाववत्, इत्यत्र हेतुरप्रयोजकः ।
अत्यन्ताभावः प्रतियोग्यवच्छिन्नवृत्तिर्न भवति, प्रतियोगिविरुद्धत्वात्
तत्प्रतियोगिविरुद्धतत्तद्गुणात्यादिवदिति सत्प्रतिपक्षश्च । अत्य
न्ताभावः प्रतियोगिकालावच्छिन्नप्रतियोग्यधिकरणवृत्तिर्न भवति
अत्यन्ताभावभिन्नाभावत्वात् प्रागभाववत् प्रध्वंसाभाववद्वेति च ।
७ एवमेव एतदनन्तरोक्तं अत्यन्ताभावत्वपक्षकमप्यनुमानं प्रत्या
ख्येयम् । ८ घटात्यन्ताभावत्वं प्रतियोगिजनकाभावसमानाधिकरण
वृत्ति, एतत्कपालसमानकालीनैतद्घटप्रतियोगिकाभावावृत्तित्वात् प्रमेयत्व
वत् इत्यत्र केवलान्वयित्वमुपाधिः । घटात्यन्ताभावत्वं प्रतियो
गिजनकाभावसमानाधिकरणवृत्ति न, एतत्कपालसमानकालीनैतद्घट
प्रतियोगिकानित्याभावावृत्तित्वात्, जलत्ववत्, इति प्रतिसाधनं च ।
९ एतत्कपालमेतद्घटात्यन्ताभावाधिकरणं आधारत्वात् पटादिवत्,
इत्यत्र एतद्घटानधिकरणत्वमुपाधिः । एतत्कपालमेतद्घटात्यन्ताभावा
धिकरणं न, एतद्घटाधिकरणत्वात् । यत् येन सम्बन्धेन यदधिकरणं तत्
तेन सम्बन्धेन तदत्यन्ताभावस्याधिकरणं न भवति, यथा घटवद्भूतलं
घटात्यन्ताभावस्य, ब्रह्म वा ब्रह्मत्वात्यन्ताभावस्य इति प्रतिसाधनं च ।
१ ब्रह्मत्वं न परमार्थसद्भिन्नान्योन्याभावप्रतियोगितावच्छेदकम्, ब्रह्म
वृत्तित्वात्, असद्वैलक्षण्यवत्, इत्यत्र यावत्सद्वृत्तित्वमुपाधिः । असद्वै
लक्षण्यं हि सर्वेषु सत्सु वर्तते न परमार्थसत्येव । तेन तस्य सर्वसद्
वृत्तित्वमेव परमार्थसद्भिन्नान्योन्याभावप्रतियोगितावच्छेदकत्वाभावे हेतु
र्न तु ब्रह्मवृत्तित्वमेव । ब्रह्मत्वं परमार्थसद्भिन्नान्योन्याभावप्रतियोगिता
वच्छेदकं, सत्त्वव्याप्यधर्मत्वात् आकाशत्ववदिति प्रतिसाधनं च ।
परमार्थसत्प्रतियोगिको भेदः न परमार्थसद्भिन्नः परमार्थसत्प्रतियोगित्वात्,

परमार्थसत्त्वावच्छिन्नप्रतियोगिकाभाववत्, इत्यत्र यावद्व्यक्तिप्रतियोगित्वमुपाधि । परमार्थसत्प्रतियोगिको भेदः सजातीयसन्निष्ठ । सत्प्रतियोगिकभेदत्वात् घटादिसद्भेदवदिति प्रतिसाधनम् । १२ भेदत्वावच्छिन्न सद्विलक्षणप्रतियोग्यधिकरणान्यतरवत्, अभावत्वात् शुक्तिरूप्यप्रतियोगिकाभाववत्, इत्यत्र बाधितप्रतियोगिकत्वमुपाधिः । ब्रह्मज्ञानेतराबाध्यप्रतियोग्यधिकरणकभेदसामान्यसत्त्वेन सजातीयप्रतियोग्यधिकरणकम्, अबाधितप्रतियोग्यधिकरणकाभावत्वात्, घटवृत्तिपटत्वाभाववदिति प्रतिसाधनम् । १३. परमार्थसन्निष्ठो भेदो न परमार्थसत्प्रतियोगिकः परमार्थसदधिकरणत्वात्, शुक्तिरूप्यप्रतियोगिकभेदवत् इत्यत्रापि बाधितप्रतियोगिकत्वमुपाधिः । घटनिष्ठो भेदो न घटप्रतियोगिक· घटाधिकरणत्वात् शुक्तिरूप्यप्रतियोगिकभेदवदित्याभासतुल्यता च । १४. मिथ्यात्व ब्रह्मतुच्छोभयातिरिक्तत्वव्यापकम्, सकलमिथ्यावृत्तित्वात् मिथ्यात्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वाद्वा दृश्यत्ववत्, इत्यत्र हेतोरप्रयोजकत्वम् । मिथ्यात्व उक्तोभयातिरिक्तव्यापक न भवति, बाधितमात्रवृत्तित्वात्, शुक्तिरूप्यत्ववदिति सप्रतिसाधनत्व च । यथा कश्चिद् ब्रूयात्—भ्रमत्व अज्ञानातिरिक्तत्वव्यापकम् सकलभ्रमवृत्तित्वात् भ्रमत्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वाद्वा ज्ञानत्ववत् इति, द्रव्यत्व तुच्छातिरिक्तत्वव्यापकम्, सकलद्रव्यवृत्तित्वात् द्रव्यत्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वाद्वा अभिधेयत्ववत् इति च, तादृगिदं भवतीत्याभासतुल्यता च । १५. दृश्यत्वं परमार्थसदवृत्ति अभिधेयमात्रवृत्तित्वात्, शुक्तिरूप्यत्ववत्, इत्यत्र बाधितवृत्तित्वमुपाधिः । दृश्यत्व परमार्थसद्वृत्ति प्रातिभासिकेतरवृत्तित्वात् ब्रह्मत्ववत् इति प्रत्यनुमान च । दृश्यत्व परमार्थसद्भिन्नत्वव्याप्यम्, दृश्येतरावृत्तिधर्मत्वात्, प्रातिभासिकत्ववत्, इत्यत्र पूर्ववदेवोपाधिर्वाच्यः । दृश्यत्वं परमार्थसद्भिन्नत्वव्याप्य न, प्रातिभासिकेतरवृत्तित्वात् ब्रह्मत्ववत्, इति प्रतिसाधन च ।

१७ उभयसिद्धमलक्षण मिथ्यात्वासमानाधिकरणधर्मानधिकरणम् आधारत्वात् शुक्तिरूप्यवदित्यत्र बाधितत्वमुपाधि । उभयसिद्ध अस द्विलक्षण मिथ्यात्वासमानाधिकरणधर्मानधिकरणत्वाभाववत् आधारत्वात् ब्रह्मवदिति प्रत्यनुमान च । न च दृष्टान्तस्य हेतुविकलता । काल्पनिकस्याधारत्वस्य सत्वात् । अकाल्पनिकस्य भवन्मते कुत्राप्य भावात । १८ प्रतियोग्यवच्छिन्नो देश अत्यन्ताभावाश्रय आधारत्वात कालवत्, इत्यत्र सर्वाधारत्वमुपाधिः । प्रतियोग्यवच्छिन्नो देश अत्यन्ताभावाश्रया न, प्रतियोग्यधिकरणत्वात् परमार्थसत्त्वाश्रयवत्, इति प्रत्यनुमान च । १९ आत्मत्वावच्छिन्न परमार्थसत्त्वाधिकरण-प्रतियोगिकभेदत्वावच्छिन्नरहितम, परमार्थसत्यात्, परमार्थसत्त्वाव च्छिन्नवत्, इत्यत्र हेतुरप्रयोजक । आकाशत्वावच्छिन्न गुणाश्रयत्वाधि-करणप्रतियोगिकभेदत्वावच्छिन्नरहितम, गुणाश्रयत्वात् गुणाश्रयत्वाव च्छिन्नवत्, इत्येतदाभाससाम्य च । २० 'शुक्तिरूप्य मिथ्यात्वेन प्रपञ्चान्न भिद्यते, व्यवहारविषयत्वात् ब्रह्मवत् । साध्यसत्त्वमत्र त्रेधा-स्यस्यामिथ्यात्वेन उभयोर्मिथ्यात्वेन उभयोरमिथ्यात्वेन वा । तत्रान्तिम पक्षस्यासम्भवात् पक्षे साध्यसिद्धिपर्यवसान मध्यमपक्षेण दृष्टान्ते तु प्रथमपक्षेणेति विवेक ।" इत्यत्र हेतुर्विवेचनीय । यदि व्यवहार-विषयत्व नाम हानोपादानविषयत्व न तत् पक्षे दृष्टान्ते वा वर्तते । यद्यभिधेयत्व तन्न दृष्टान्ते । ब्रह्मणोऽनभिधेयत्वाङ्गीकारात् । व्याख्याता तु व्यवहारत्वचिवक्षितमित्याह । तदपि विषयत्व नाम पक्षदृष्टान्त साधारण किमिति न जानामि । किञ्च दृष्टान्ते ब्रह्मणि मिथ्यात्वहेतुक-प्रपञ्चभेदवत्त्वाभाव तस्यामिथ्यात्वप्रयुक्त । पक्षे तु उभयमिथ्यात्वप्र-युक्त । ताविमौ भिन्नरूपौ द्वौ धर्मौ श्लेषभङ्ग्या एकधा उपादाय मिथ्या भूतस्य पक्षस्य परमार्थसद्ब्रह्म दृष्टान्तीकुर्वन् उक्तिवैचित्र्यकौशल दर्श-यति । काव्येषु किलेय शोभते न तत्त्वाभिनिवेश-गहनगम्भीरेषु शास्त्र-

ग्रन्थेषु। सेयं महती तार्किक विडम्बना। वृत्तोऽयं दिव्यस्थानम्, हरिविहरणाधिकरणत्वात् वैकुण्ठवत् इति यथा। विपर्ययस्य चेदनुमानं पठितुं शक्यम्—ब्रह्म अमिथ्यात्वेन प्रपञ्चान्न भिद्यते, व्यवहारविषयत्वात्, शुक्तिरूप्यवत्। साध्यसत्त्वमत्र त्रेधा-स्वस्य मिथ्यात्वेन उभयोरमिथ्यात्वेन उभयोर्मिथ्यात्वेन वा। तत्रान्तिमपक्षस्यासम्भवात् पक्षे साध्यसिद्धिपर्यवसानं मध्यमपक्षेण। दृष्टान्ते तु प्रथमपक्षेणेति विवेक इति। २१ विमतं मिथ्या मोक्षहेतुज्ञानाविषयत्वे सति असदन्यत्वात् शुक्तिरूप्यवत्, इत्यत्र हेतुरप्रयोजकः। बाधितत्वाद्धि तत्र मिथ्यात्वं न तु मोक्षहेतुज्ञानाविषयत्वादिना। विमतं न मिथ्या अयथार्थज्ञानाविषयत्वात् ब्रह्मवदिति प्रतिसाधनम्। २२ मोक्षहेतुज्ञानविषयत्वं परमार्थसत्त्वव्यापकम् परमार्थसत्त्वसमानाधिकरणत्वात् पारमार्थिकत्वेन श्रुतितात्पर्यविषयत्ववत्। इत्यत्र हेतुरप्रयोजकः। सर्वपरमार्थसद्वृत्तित्वमुपाधिः। पृथिवीत्वं द्रव्यत्वव्यापकम् द्रव्यत्वहेतुज्ञानविषयत्वं परमार्थसत्त्वव्यापकं न ज्ञानविषयत्वात् घटत्वाद्यवच्छिन्नज्ञानविषयत्ववत्, इति प्रतिसाधनञ्च। २३ एतत्पटात्यन्ताभावः एतत्तन्तुनिष्ठः एतत्पटानाद्यभावत्वात् एतत्पटान्योन्याभाववत् इत्यत्र पूर्ववदप्रयोजकत्वं स्थितम्। अविरुद्धप्रतियोगिकत्वमुपाधिः। एतत्पटात्यन्ताभावः एतत्तन्तुनिष्ठो न, एतत्पटानधिकरणवृत्तित्वात् पटान्तराधिकरणत्ववत्, इति प्रत्यनुमानं च। २४. यद्वा-समवायसम्बन्धावच्छिन्नोऽयमेतत्पटात्यन्ताभावः एतत्तन्तुनिष्ठः एतत्पटप्रतियोगिकात्यन्ताभावत्वात् सम्बन्धान्तरावच्छिन्नैतत्पटात्यन्ताभाववत् इत्यस्मिन्ननुमानान्तरेऽपि पूर्ववत् अप्रयोजकत्वोपाधिप्रत्यनुमानानि द्रष्टव्यानि। सम्बन्धविशेषावच्छिन्नोऽयं ब्रह्मत्वात्यन्ताभावः ब्रह्मनिष्ठः ब्रह्मत्वप्रतियोगिकात्यन्ताभावत्वात्, सम्बन्धान्तरावच्छिन्नब्रह्मत्वाभाववत् इत्याभाससाम्यं च दुष्परिहरम्। २५. अव्याप्यवृत्तित्वानधिकरणत्वे सति उक्तपक्षतावच्छेदकवत् स्वसमानाधिकरणात्यन्ताभावप्रति-

योगि अनात्मत्वात् सयोगवत् इत्यत्र अन्याप्यवृत्तित्वमुपाधिः स्फुटः। अप्रयोजकता च स्थितैव। उक्त पक्ष उक्तसाध्यया न प्रातिभासिकव्यति रिक्तत्वे सति व्याप्यवृत्तित्वात् आत्मत्ववदिति प्रत्यनुमानं प्रदर्शनीयम्। २६ नित्यद्रव्यान्यत् अव्याप्यवृत्तित्वानधिकरणमुक्तपक्षतावच्छेदकवत् केवलान्वय्यत्यन्ताभावप्रतियोगिपदार्थत्वात् नित्यद्रव्यवत्, शुक्तिरूप्यवद्वा इत्यत्र अप्रयोजकत्वं स्थितम्। अवृत्तिमिथ्यान्यत्वप्रतियोगित्वमुपाधिः। उक्त पक्षः केवलान्वय्यत्यन्ताभावप्रतियोगी न स्वव्यधिकरणाभावप्रतियोगित्वात् ब्रह्मत्ववत् परमार्थसत्त्ववद्वा इति प्रतिसाधनं च। ब्रह्म च परमार्थसत्त्व वा केवलान्वय्यत्यन्ताभावप्रतियोगि पदार्थत्वात् शुक्तिरूप्यवदित्येतत्सम च। २७ आत्मत्वावच्छिन्नधर्मिको भेदः न परमार्थसत्प्रतियोगिक आत्मप्रतियोगित्वात् शुक्तिरूप्यप्रतियोगिकभेदवत्, इत्यत्र हेतुरप्रयोजकः बाधितप्रतियोगिकत्वमुपाधिः। आत्मत्वावच्छिन्नधर्मिको भेदः न न परमार्थसत्प्रतियोगिकः तुच्छप्रतिभासिकान्यप्रतियोगिकत्वात्, आत्मत्वावच्छिन्नप्रतियोगिकभेदवत्, इति प्रत्यनुमानं च।

> नैकोऽपि हेतुः सुवदोऽनवद्यः
>
> प्रपञ्चमिथ्यात्वसमर्थनार्हः।
>
> परिस्फुरन्तं दिवि भानुमन्तं
>
> निह्नोतुमीष्टे निपुणोऽपि सम् कः॥
>
> मिथ्यानुमानशानमध्यनलं किलेदृक्
>
> मिथ्येति साधयितुमेतमुरु प्रपञ्चम्।
>
> पन्थानमागमनिदर्शितमायुदार
>
> माश्रित्य बौद्धमनुगच्छति यः स शोच्यः॥

## १८ आगमबाधः।

आगमबाधोऽपि प्रपञ्चमिथ्यात्वानुमानस्य दुरुद्धरः। स हि पूर्वोत्तर भागयोर्द्वयोरपि विविधभेदावलम्बनेनैव स्वाभिधानार्थान् विदधाति।

पञ्चसत्यत्वं च कण्ठत आह। न क्वचित् व्यङ्ग्यमर्यादयाऽपि मिथ्यात्वम्। 'श्वोऽभावा मर्त्यस्य यदन्तकैतत्' इति प्रापञ्चिकानां वस्तूनामनित्यत्वमाह। सृष्टिप्रलयप्रदर्शनेन प्रपञ्चस्य। तस्मादनित्यत्वेऽपि प्रपञ्चस्य परमार्थसत्त्वानपायात् एतत्प्रतिपादकेनागमेन बाधितमेव मिथ्यात्वानुमानम्। यत्तु विश्वसत्त्वप्रतिपादनमागमिकं अन्यपरत्वान्न स्वार्थतत्परमिति, तेन किमुक्तं भवतीति विवेचनीयम्। वायुर्वै क्षेपिष्ठा देवतेत्यस्य हि अन्यपरत्वेऽपि याथार्थ्यलक्षणं प्रामाण्यं नापैति। अवश्यं चान्यपराणामपि वाक्यानामबाधितार्थत्वाय यथार्थवस्तुप्रतिपादकत्वे यतनीयम्। तत्र आदित्यो यूप इत्यादौ गुणवादमाश्रित्य याथार्थ्यं कल्प्यते। वायुर्वै क्षेपिष्ठेत्यादौ यथाश्रुतार्थस्यैव यथार्थत्वात् स तथैव गृह्यते, न तु किञ्चित् कल्प्यते। वज्रहस्तः पुरन्दरः इत्यत्राप्येवमेव। वायुक्षेपिष्ठत्वं प्रत्यक्षावगतम्। पुरन्दरवज्रहस्तत्वं तु अनेनैव वेदवाक्येनावगम्यत इति विशेषः। न चानेनैव वाक्येनास्य स्वार्थस्य विधेयप्रशंसारूपस्य अर्थान्तरस्य चाभिधाने वाक्यभेद इति शङ्क्यम्। वज्रहस्तत्वात् प्रशस्तः पुरन्दर इति विशिष्टाभिधानस्य शाब्दत्वात्। पुरन्दरवज्रहस्तत्वस्य अर्थत आक्षेपात्। 'एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते' इति न्यायेन वाक्यभेदाभावात्। अन्यथा प्रशंसारूपतात्पर्यविषयार्थासिद्धेः। न हि वज्रहस्तत्वं वस्तुतः पुरन्दरस्य नास्तीति प्रतियतः तस्मिन् प्राशस्त्यबुद्धिरुदेतुमलम्। आहुश्च 'कथमसता गुणेन कथितेन स्तुतिर्भवति' इति। तस्मादन्यपरतयाऽपि वेदोक्तं विश्वसत्त्वं पारमार्थिकमेवेति। एतद्विरुद्धसाध्यसाधकतया निर्दिष्टो हेतुः कालात्ययापदिष्ट एव।

ननु प्रबलयाऽद्वैतश्रुत्या विश्वसत्त्वबोधकश्रुतिर्बाध्यत इति चेन्न। बाधासम्भवात्। श्रुतिश्च बाध्यते चेति विप्रतिषेधात्। ननु तार्तीयो बाधः दाशमिको बाध इति प्रसिद्ध एव वेदवाक्यसम्बन्धी बाधो वैदि-

कान्तं कुत इति चेन्न । विषयव्यवस्थामात्रे तत्र बाधशब्दोपचारात् । अयथार्थत्वाभिप्रायगन्धस्याप्यभावात् । ननु न वयमत्यन्तमयथार्थत्वं विश्वसत्त्वाभिधायिनः शब्दस्य ब्रूमः व्यावहारिकसत्त्वाभ्युपगमादिति चेन्न । नाममात्रभेदात् । व्यवहारकालेऽपि हि वस्तूनामसत्त्वं भवन्तः साधयन्ति । शुक्तिरूप्यवदेव च त्रैकालिकनिषेधप्रतियोगित्वं तेषामिष्यते । व्यवहारस्य सर्वस्य स्वप्नव्यवहारतुल्यत्वाभिधानात् । एवं च प्रपञ्चस्य सार्वकालिकमिथ्यात्वस्य भवद्भिरिष्यमाणत्वात् विश्वसत्त्ववादिना श्रुतिवाक्येन व्यावहारिकसत्त्वमुखेन मिथ्यार्थवादित्वमेवाभ्युपगतं भवति । न च स्वप्नाध्यायादितुल्यता । स्वाप्ना पदार्थाः सत्या इति तत्रानभिधानात् । यादृशाः स्वप्ना लोके प्रसिद्धाः तान् तथैव कृत्वाऽनूद्य तत्सम्बन्धिफलादिविशेषमात्रप्रतिपादनात् । प्रकृते तु स्वोक्त्या विश्वसत्यत्वोक्तेः । तस्यानुवादत्वेऽपि अन्यथासिद्धिविरहेण निरवकाशत्वात् ।

ननु वैदिकं विश्वसत्त्ववचनं लोकसिद्धानुवादमात्रम् । लोकत एव तस्य ज्ञातत्वात् । अतः यादृशं सत्त्वं लोकतोऽवगतं तादृशमेवात्रानूद्यत इति वक्तव्यम् । लोकतः सिद्धिश्च प्रत्यक्षादिना । इदं च प्रबलयाऽद्वैतश्रुत्या विरोधात् व्यावहारिकसत्त्वविषयमिति तत् तादृशमेव श्रुत्याऽनूद्यत इति नात्र काचिदनुपपत्तिरिति चेन्न । प्रत्यक्षेण तत्त्वेनातत्त्वेन वा विनिश्चितो योऽर्थः तद्व्यतिरिक्ते एवार्थे श्रुतिः प्रवर्तत इत्यस्यार्थस्य पूर्वमेवोपपादितत्वात् । विरोधे प्रत्यक्षापेक्षया श्रुतिप्राबल्यस्य शङ्कितुमप्यशक्यत्वात् । चन्द्रप्रादेशिकत्वप्रत्यक्षाप्रामाण्यस्य आगमप्रवृत्तेः पूर्वं लोकत एवावधारितत्वस्य निरूपितत्वात् ।

नन्वेवं सति अद्वैतश्रुतेः का गतिरिति चेत् यदि प्रपञ्चमिथ्यात्वपरा अद्वैतश्रुतिरिष्यते तर्हि अधोगतिरेव । ननु परिदृश्यता पर्यनिष्ठापन्दध्याऽद्वैतश्रुतिः कथमप्रमाणं स्यादिति चेत् तथाप्यतीवयुक्तमेव । प्रपञ्चमिथ्यात्वस्यापूर्वत्वाभावात् । नाज्ञाति निश्चितपूर्वत्वात् । मिथ्यात्वे व्यवहारानुप

पत्तिप्रसङ्गेन उपपत्तिरूपतात्पर्यलिङ्गविरहाच्च। इह किञ्चन आकाशादिक नास्ति त्रैकालिकाभावप्रतियोगि, इत्यर्थविवक्षाया 'वह्निरनुष्णः' 'अङ्गुल्यग्रे करिवरशतम' इत्यादिष्विव शाब्दबोधस्यैवनुदयात्। उदयेऽपि वा बाधितत्वेनैवोदयात्।

एतेनान्यशेषत्वनिरवकाशत्वतात्पर्यवत्त्वादिभिरद्वैतश्रुतेः विश्वसत्ताबोधकश्रुत्यपेक्षया प्राबल्यसाधनप्रत्याशा दूरोत्सारिता। शाब्दबोधजनन एवाक्षमत्वात्। अर्थबाधे सम्पन्ने हि इय श्रुतिरितरापेक्षया प्रबला दुर्बला वेति विचारस्यावसरो भवेत्, अनन्यशेषत्वादिना निर्णयश्च। तदेव तु नास्ति। निश्चितप्रामाण्यप्रत्यक्षबाधितत्वात् तस्यार्थस्य। यथा यूपे आदित्याभेदस्य।

अथोच्यते—शब्दश्रवणसमनन्तर सर्वत्र प्रामाणान्तरबाधाबाधविमर्श विना झटिति बोधो भवति। तदनन्तरं मानान्तरविरोधाविरोधविमर्शः, न्यायेन निर्णयश्च भवतः। एव सति अद्वैतश्रुत्या प्रपञ्चमिथ्यात्वबोधे जाते ततः तत्सत्त्वबोधकश्रुत्या विरोधे उपस्थिते, अनन्यपरत्वात् पूर्वस्याः स्वार्थनिष्ठत्व परस्या उपचरितार्थत्व च निश्चीयते। उपचरितार्थः व्यावहारिकसत्त्वम्, प्रत्यक्षावगतमपि सत्वमीदृशमेव। अन्यथाऽद्वैतश्रुत्यनुपपत्तेः।—इति। तदयुक्तम। सुचिरोपयुक्तसुदृढप्रमाणावसितार्थविरुद्धार्थप्रतिपादकात् वाक्यात विरोधप्रतीति विनैव शाब्दबोधोदयस्यात्यन्तमसम्भावितत्वात्। अन्यथा वह्निरनुष्णः आपः कठिना इत्यादिभ्योऽपि कदाचित् तथा बोधोदयप्रसङ्गात्। व्यावहारिकसत्त्वमित्यनेन मिथ्यात्वातिरिक्त न किञ्चिदुक्त भवतीति च पूर्वमेवोक्तम्। शुक्तिरूप्यादि स्वल्पकालप्रतिभासम। घटादिक तु दीर्घकालप्रतिभास, स्वप्नवत् व्यवहारप्रतिभासयुक्त चेत्येतावानेव हि विशेषः, न तु मिथ्यात्वे कश्चिदिति। तस्मादद्वैतश्रुत्यनुरोधे प्रत्यक्षस्य तत्समानविषयाणा वेदवाक्याना च अत्यन्तमेवापरोधात् तत्परिहारायासञ्जातविरोधिन्यायेन शास्त्रदीपि-

काकरीत्या अद्वैतश्रुतेरप्युपचरितार्थत्वं युक्तम्। नियतपौर्वापर्यपरस्परसा-पेक्षत्वाभ्यां उच्चैर्वा क्रियत इत्यत्रार्थवादविध्यो प्रकृते प्रत्यक्षाद्यद्वैत-श्रुत्योश्च समानत्वात् तस्य न्यायस्यात्र प्रवृत्तिर्निर्बाधेति विभाव्यम्।

यश्चान्यपरत्वान यपरत्वाभ्यां पक्षे विशेषोऽभिमत सोऽपि नास्ति। अद्वैतश्रुतेरपि ब्रह्मप्रतिपत्तिशेषत्वात्। ब्रह्मज्ञान हि मोक्षसाधन, न केवल प्रपञ्चमिथ्यात्वज्ञानमात्रम्। नापि ब्रह्मस्वरूपमात्रम्। 'ब्रह्मविदाप्नोति परम्' 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादिश्रुते। तद् ब्रह्म कथम्भूतमिति जिज्ञासायां 'नेह नानास्ति किञ्चन' इत्यादि प्रव त्ते। तस्मादिदमप्य-न्यपरमेवेति।

ननु नास्यान्यपरत्वमर्थवादत्वेन यूपादित्यादिवाक्यवत्। अपि तु अपेक्षितविशेषसमर्पकत्वेन, दध्ना जुहोतीत्याद्यङ्गविधिवाक्यवत। तस्मात् न विधौ परः शब्दार्थ इति न्यायेन गुणकल्पनाऽत्र न युज्यत इति चेत् सत्यम्। तथापि अस्य स्वार्थपरत्वे प्रत्यक्षस्य विश्वसत्यवादिश्रुतिवाक्या-न्तराणां च अत्यन्तपीडापत्तेः तदपेक्षयाऽत्र गुणकल्पनैव श्रेयसी। नह्येव सति यस्य कस्याप्यप्रामाण्यप्रसङ्गोऽस्ति। यदि चाद्वैतश्रुतिः स्वार्थपरा भवेत तर्हि कृत्स्नो वेद तदन्तर्गतमिद वाक्य च स्वयं मिथ्या भवेत्। तथा च कस्येदानीं मिथ्यात्व केन प्रमाणेन सिद्ध्येत्। तदिद प्राचीनैरे-वोक्त दूषण अद्याप्यपरिहार्यमेव वर्तते। न चासत्यादपि सत्यसिद्धि र्भवतीति कदाचित् बुद्धिमद्भिरङ्गीक्रियेत अन्यत्र अगतिकेभ्योऽभि-निविष्टेभ्यः।

सर्वमिदं आपाततो वा प्रपञ्चमिथ्यात्वाभिधायिनी श्रुतिरस्तीत्यभ्यु-पेत्योयुक्तम्। न तु सा काचित् वस्तुतोऽस्ति। प्रकृतमेव नेह नानेति वाक्यमत्रोदाहराम। इद व्याचक्षाणैरस्मदुपनिषद्भाष्यकारैः बृहदा-रण्यके एवमभाषि—

इह द्रष्टव्ये ब्रह्मणि। नानाशब्दा भावप्रधान। नानात्वमित्यर्थ।

यस्मिन् पञ्च पञ्चजना इति मन्त्रनिर्दिष्ट आत्मनि किञ्चन नानात्वं नास्ति। भेदलेशोऽपि नास्तीत्यर्थः। 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति"। इव शब्दोऽल्पार्थः। इह निखिलप्रपञ्चाधारभूते आत्मनि अल्पमपि नानात्व यः पश्यति स मृत्योर्मृत्युमाप्नोति, ससारात् ससारमाप्नोति। अत्यन्त संसारमाप्नोतीत्यर्थः। अस्य वाक्यस्य परैरप्येवमेव व्याख्यातत्वात्, नात्र वाक्ये प्रपञ्चमिथ्यात्वप्रतिपादनप्रत्याशा कार्या।

इति। विभुनो ब्रह्मस्वरूपस्य कृत्स्नस्य एकरूपत्वप्रतिपादनपरत्वेनास्य वाक्यस्य प्राचीनैरद्वैतिभिरपि व्याख्यातत्वात् प्रपञ्चमिथ्यात्वे नेद प्रमाणमित्युक्तं भवति। नवीनास्तु कूटस्थव्याख्यानमनादृत्य इह ब्रह्मणि नाना नानाभूत किञ्चन आकाशादिक किमपि नास्ति वस्तुतो न वर्तते। कल्पितम मिथ्येति यावदिति विवृण्वन्ति। तदयुक्तम। यदि तावत् काठक-प्रकरणस्थ एवायं मन्त्र इति गृह्यते तर्हि 'यदेवेह तदमुत्र यदमुत्र तदन्विह' इति पूर्वमन्त्रे अन्वयमुखेनोक्तस्यैव ब्रह्मस्वरूपैक्यस्य व्यतिरेकेण अर्थवादाभ्यासशिरस्कमुच्यमानत्वात् अर्थान्तरकथनं नोपपद्यते। यदि तु काठकप्रकरणमत्र नादर्तव्यमित्यालोच्यते तदा इह प्रपञ्चे नाना ब्रह्मणः पृथग्भूत ब्रह्मान्तर्यामिकतया तत्प्रकारत्वरहित किञ्चन किमपि वस्तु नास्तीत्यर्थो न्याय्यः। इहेति प्रत्यक्षदृष्टप्रपञ्चपरत्वस्वारस्यात्। कुतो नानेति जिज्ञासाया ब्रह्मण इति प्रकरणेन लाभात्। 'सर्वत्रास्त्यातसम्बन्धे श्रूयमाणे पदान्तरे। विधिशक्त्युपसङ्क्रान्तेः स्याद्धातोरनुवादता।' इति वार्तिकोक्तन्यायेन निषेधस्य नानात्वविषयतया सत्त्वविषयत्वाभावात्। 'ईशावास्यमिद सर्वं यत् किञ्च जगत्या जगत्' इत्यन्वयेनोक्तस्यार्थस्य व्यतिरेकेणेह प्रतिपादनमिति स्वरसत प्रतीयमानत्वात्। 'किमपि नास्ति सर्वं मिथ्या' इत्येतत्परत्वे इह नानेति पदद्वयवैयर्थ्याच्च। 'यस्मिन पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इति केषाञ्चित् तत्र प्रतिष्ठि-

सत्वे उक्ते न परं त एव, इह विद्यमानं सर्वं तत्रैव प्रतिष्ठितम् अतत्प्र-तिष्ठं किमपि नास्तीति प्रतिपादनाय मन्त्रस्य प्रवृत्तत्वात्, इह नक्षणि नास्तीत्युक्ते अन्यत्रास्तीति विरुद्धार्थप्रतीतेश्च। इह यत् कल्पितं तन्ना-स्तीति विवक्षायामध्याहारापत्तेः। नास्तीत्यस्य कल्पितमित्यर्थाङ्गीकारे लक्षणापत्तेः। तदियं श्रुतिः न प्रपञ्चमिथ्यात्वपरा। अन्या अप्येवमेवेति ज्ञेयम्। तथा च लौकिकप्रमाणनिश्चितं प्रपञ्चं तथैव कृत्वा तत्स्रष्टृत्व-रक्षकत्वसंहर्तृत्वनियन्तृत्वेश्वरत्वादिभिर्ब्रह्मणोऽपारं महिमानं तात्पर्येण प्रतिपाद-यताऽऽगमेन दुरुद्धरो बाधः प्रपञ्चमिथ्यात्वानुमानस्येति सिद्धम्।

नाभाव उपलब्धेः, वैधर्म्याच्च न स्वप्नादिवत्, इति स्वाप्नार्थविलक्षण-बाह्यार्थसत्त्वसाधनपरसूत्रविरुद्धश्चेदं प्रपञ्चमिथ्यात्वसाधनम्। यत्तु 'सतो ब्रह्मणो नाभावः न शून्यत्वं उपलब्धेः सत्त्वेन प्रमाणात्प्रतीतेः' इति स्वत-न्त्रसूत्रार्थवर्णनं तत् पराभ्युपगतार्थदूषणपरेऽस्मिन् पादे सङ्गत्यभावात् अह-दयमपव्याख्यानमित्येतत् सर्वसुगमम्। यच्च अर्थान्तरमुक्तं नाभावः ज्ञानातिरिक्तस्यार्थस्य नासत्त्वम्। किन्तु "व्यवहारदशाऽबाध्यार्थक्रिया-कारित्वरूपं सत्त्वमेव। उपलब्धेः ज्ञानातिरेकेण प्रमाणैरुपलब्धेः" इति तत्र नासत्त्वमिति पूर्वपक्षप्रतिपक्षतया 'किन्तु सत्त्वमेव' इत्येतावदेव वक्तव्यम्। तत्र व्यवहारदशेत्यादि विशेषणादानं तु अप्रामाणिकं स्वद-र्शनभङ्गमात्रविजृम्भितम्। 'स्वप्नवैधर्म्योक्तिर्बाध्यत्वाद्युपाधिप्रदर्शनाय' इति यदुक्तं तत् भवदुक्तमिथ्यात्वानुमानेऽपि तुल्यम्। यदि हि अबाध्य-त्वात् बाह्यार्थाः सन्ति न तु स्वाप्नार्थवत् सन्ति, तर्हि तथैव ते परमार्थं सन्तः न तु शुक्तिरूप्यवन्मिथ्येति कुतो न भवति।

## १९ असतः साधकत्वम्।

सर्वमिथ्यात्ववादिना तात्त्विकप्रमाणाभावात् स्वाभिमतार्थसिद्धिः कथमिति च वक्तव्यम्। दृश्यत्वादिहेतवो हि न वस्तुसन्तः। तैः कथं साध्यप्रमिति। यत्तु धूलीपटले धूमभ्रमादपि वह्न्यनुमितिप्रमा दृश्यते

इति, तत्र कामं तथा। ततः किम्। प्रमात्वग्रहणे हि उत्पन्नाऽनुमितिरप्रमेति बुद्धिर्भवति। तथा प्रकृतेऽपि दृश्यत्वं वस्तुतो नास्तीति ग्रहणसमनन्तरं अनुमित्यप्रामाण्यग्रहमवश्यभावि। यादृच्छिकं तत्र प्रमात्वं सन्निहितैः प्रत्यक्षात्, अन्यैः आप्तवचनाच्च गम्यते। हेतुबलात्तु अप्रमात्वमेव। प्रकृते तु प्रत्यक्षस्य वाऽऽप्तवचनस्य वाऽभावात् मिथ्याहेतुजन्याऽनुमितिः यादृच्छिकस्यापि प्रमात्वस्य प्रसङ्गविरहेण केवलमप्रमैव भवति।

ननु दृश्यत्वं न शुक्तिरूप्यादिवन्मिथ्या। व्यावहारिकसत्त्वाभ्युपगमात्, इति चेन्न। अविशेषस्योक्तत्वात्। शुक्तिरूप्यदृष्टान्तेन तादृशमेव हि मिथ्यात्वं सर्वेषां वस्तूनां भवद्भिः साध्यते। ज्ञानबाध्यत्वे सर्वथा दुर्वचं च शुक्तिरूप्यवैलक्षण्यम्। अर्थक्रियाकारित्वं हि विशेषो दृश्यत इति चेन्न। स्वाप्नानामप्यर्थानां तस्यामवस्थायामर्थक्रियाकारित्वदर्शनात्। न हि तत्र तेषां कश्चन विशेषो भवति। ननु ब्रह्मज्ञानेतराबाध्यत्वं विशेष इति चेन्न। अधिष्ठानज्ञानेतराबाध्यत्वस्य मिथ्यावस्तुषु सर्वेषु विद्यमानत्वेन तस्य विशेषानापादकत्वात्। अन्यथा शुक्तिज्ञानेतराबाध्यत्वेन शुक्तिरूप्येऽपि कस्यचन विशेषस्यापत्तेः। अतः शुक्तिरूप्यवन्मिथ्यात्वं वा अनित्यत्वेऽपि ब्रह्मवत् सत्त्वं वा प्रपञ्चस्याभ्युपगन्तव्यम्। न तु तृतीयः कश्चन प्रकारः सम्भवति, यो व्यावहारिकसत्त्वमिति पृथक् समाम्नायेतेति विभावयन्तु भवन्तः।

अथ असताऽप्यर्थेन अर्थान्तरसिद्धिर्भवत्येव, यथा प्रतिबिम्बेन बिम्बसिद्धिरिति चेन्न। न। प्रतिबिम्बस्य असत्त्वाभावात्। दोषवशात् स्वच्छद्रव्यान्तर्वर्तितया गृह्यमाणो बिम्ब एव हि प्रतिबिम्बः। स सन्नेव। स्वच्छद्रव्यान्तर्वर्तित्वं तस्य नास्ति। तथा च तेन रूपेण गृह्यमाणः प्रतिबिम्बोऽसन्नेवेति चेत् अस्तु। तथाऽपि सतो धर्मिणः असता धर्मेणावच्छिन्नस्य अन्वयव्यतिरेकबलात् साधकत्वं अभ्युपगम्यते। न हि दृष्टेऽनुपपन्नं नाम। द्विचन्द्रदर्शनवता हि तेन हेतुना नेत्रदोषोऽनुमीयते। अत्र

चन्द्रः सन्नेव । द्वित्वं तु असत् । असतोऽपि द्वित्वस्य स्वप्रकारकधी विषयतासम्बन्धेनावच्छिन्नस्यैव चन्द्रस्य दृश्यमानस्य नेत्रदोषेण व्याप्तिग्रहणात् तेनास्यानुमितिरुपपन्ना एवमेव स्वच्छद्रव्यान्तर्वर्तितया गृह्यमाणस्य बिम्बस्य देशान्तरवर्तिना तेनैव व्याप्तिगृहीतत्वात् तेनास्यानुमितिर्नानुपपन्ना । दृश्यत्वं तु स्वरूपेणैव नास्तीति कथं तस्य साधकत्वम् । न ह्यसतो धूमस्य वह्निसाधकत्वम् । न चासत्यपि धूमे धूमभ्रमादनुमितिर्जायत एवेति चेत् प्रकृतेऽपि दृश्यत्वभ्रमवत्तामनुमितिर्जायतां नाम यदि जायते । भवास्तु तस्य मिथ्यात्वं सुवेद । तस्य कथमनुमितिः । न हि धूलीपटलोऽयं, न धूम इति तत्त्वं जानतः वह्न्यनुमितिः सम्भाव्यते ।

यत्तु कश्चित् 'असत्यादपि तात्त्विकार्थसिद्धिस्वीकारे आरोपितेन धूमेन तात्त्विकवह्निः सिद्ध्यदिति शङ्का समादधन् साधकतावच्छेदकरूपवत्त्वं साधकताया प्रयोजकम् । नारोपितत्वमनारोपितत्वं वा । धूमाभासे साधकतावच्छेदकव्याप्तेरभावान्न साधकत्वम् न त्वसत्त्वात्' इत्याह तत्रासामञ्जस्यं बहु । तथा हि । आरोपितेन धूमेन तात्त्विकवह्निसिद्धिशङ्काया न परिहारः कृतः । धूमारोपाधिष्ठानेन तात्त्विकवह्निसिद्धिशङ्का न कृता । तस्याः परिहारः क्रियते । तत्र व्याप्त्यभावान्न साधकत्वमिति । व्याप्तिमत्त्वं साधकत्वे प्रयोजकम् । तदभावान्न धूमाभासस्य साधकत्वमित्यनेन व्याप्तेः सत्त्वं प्रयोजकं असत्त्वे नास्त्यनुमितिरिति स्पष्टमेवाङ्गीकृतम् । एवं च साधकस्य सत्त्वमनपेक्षितं प्रतिज्ञाय साधकतावच्छेदकसत्त्वस्य प्रयोजकत्वं ब्रुवता साधु असत्यात् सत्यसिद्धिः प्रतिष्ठापिता ।

ननु प्रतिबिम्बस्य वस्तुतः स्वच्छद्रव्यान्तर्वर्तित्वं नास्ति । अथापि तस्यानुमितिप्रयोजकत्वं भवतीति निराबाधमसतः साधकत्वमिति चेन्न । तन्मात्रस्याप्रयोजकत्वात् । परमार्थसद्वस्त्वन्तरघटितसामग्र्यन्तर्गततयैव प्रयोजकत्वम् । स्वच्छद्रव्यान्तर्गतत्वरूपस्य धर्मस्य बिम्बावर्तित्वे

ऽपि अन्यत्र क्वापि वर्तमानत्वेन स्वरूपतो मिथ्यात्वाभावाच्च। तस्य तत्र अनुमितिप्रयोजकतावच्छेदकत्वेऽपि प्रयोजकत्वाभावाच्च। एतेन स्वाप्नार्थादीनां भाविशुभाशुभसूचकत्वादि व्याख्यातम्। सर्वेषामेव तेषां क्वचित् काले क्वचिद्देशे वर्तमानत्वेन सत्यत्वात्। दण्डत्वस्य कारणतावच्छेदकत्वेऽपि कारणत्वाभाववत् तेषां सूचकतावच्छेदकत्वेऽपि सूचकत्वाभावाच्च।

रेखावर्णविषये यदाह "विवेके सत्यपि दृढतरसंस्कारवशात् नारोपनिवृत्तिः। अत एव ककारं पठति लिखति चेति सार्वलौकिको व्यवहारः" इति, तत्र लिखतीति रेखाविषयः, पठतीति तु रेखानुमितवर्णविषय एव व्यवहार इति युक्तं मन्यामहे। पाठस्योच्चारणात्मकस्य वर्णविषयत्वस्वारस्यात्। वर्णनित्यत्ववादिनामस्माकं ह्रस्वत्वदीर्घत्वादयस्तदीया एव धर्मा इति नात्र सङ्कटं किञ्चित्। श्रवणस्थले वर्णानामर्थबोधकत्वस्य क्लृप्तत्वात् पठनस्थलेऽपि अनुमितवर्णानामेव तद्युक्तम्। न त्वारोपितवर्णत्ववतीनां रेखाणामिति च ज्ञेयम्।

यच्च 'प्रतिबिम्बादिविज्ञानानां जनकत्वे च विशेषणतया प्रतिबिम्बादीनामपि जनकत्वे बाधाभावात् नोपलक्षणत्वपक्षो युज्यते' इति तन्न। प्रतिबिम्बस्य सत्यत्वे तस्य जनकत्वेऽपि असतोऽपि साधकत्वमिति भवत्पक्षासिद्धेः। असत्यत्वेऽसतस्तस्य कारणत्वानुपपत्तेः। कार्यनियतपूर्ववृत्ति हि कारणम्। असच्च कारणं चेति हि विप्रतिषिद्धम्। अत्राह 'स्वव्यापारजन्ये व्यापारिणोऽसतो जनकत्ववत् स्वज्ञानजन्येऽप्यसतो जनकत्वसम्भवात्। अतीतानागतावस्थस्य असत्त्वधर्माश्रयत्वेनैवाभ्युपगमात्' इति। इदमयुक्तम्। दृष्टान्ते हि आगमेन वा अन्वयव्यतिरेकाभ्यां वा कारणत्वेऽवधारिते पश्चात् सद्वारकमेव तत् कारणत्वमिति ज्ञातेऽपि, व्यापारेण व्यापारिणो नान्यथासिद्धिरिति स्थितेः, व्यापारो व्यापारं जनयित्वा विरमति, व्यापार एव साक्षात् कार्यं जनयतीत्यास्थीयते। तत्र व्यापारः

चन्द्रः सन्नेव । द्वित्वं तु असत् । असतोऽपि द्वित्वस्य प्रकारत्वधी-विषयतासम्बन्धेनावच्छिन्नस्यैव चन्द्रस्य दृश्यमानस्य तद्रूपेण व्याप्ति-ग्रहणात् तेनास्यानुमितिरुपपन्ना । एवमेव स्वच्छद्रव्यान्तर्वर्तितया गृह्य-माणस्य बिम्बस्य देशान्तरवर्तिना तेनैव व्याप्तिगृहीतत्वात् तेनास्यानु-मितिर्नानुपपन्ना । दृश्यत्वं तु स्वरूपेणैव नास्तीति कथं तस्य साधकत्वम् । न ह्यसतो धूमस्य वह्निसाधकत्वम् । नन्वसत्यपि धूमे धूमभ्रमादनुमिति-र्जायत एवेति चेत् प्रकृतेऽपि दृश्यत्वभ्रमवतामनुमितिर्जायतां नाम यदि जायते । भ्रमस्तु तस्य मिथ्यात्वं सुवेद । तस्य कथमनुमितिः । न हि धूलीपटलोऽयं, न धूम इति तत्त्वं जानतः वह्न्यनुमितिः सम्भाव्यते ।

यत्तु कश्चित् 'असत्यादपि तात्त्विकार्थसिद्धिर्भवेत्, आरोपितेन धूमेन तात्त्विकवह्निसिद्ध्येदिति शङ्कां समादधत् साधकतावच्छेदक-रूपवत्त्वं साधकताया प्रयोजकम् । नारोपितत्वमनारोपितत्वं वा । धूमा-भासे साधकतावच्छेदकव्याप्तेरभावान्न साधकत्वम् न त्वसत्त्वात्' इत्याह तत्रासामञ्जस्यं बहु । तथा हि । आरोपितेन धूमेन तात्त्विक-वह्निसिद्धिशङ्काया न परिहारः कृतः । धूमारोपाधिष्ठानेन तात्त्विकवह्नि-सिद्धिशङ्का न कृता । तस्याः परिहारः क्रियते । तत्र व्याप्त्यभावान्न साध-कत्वमिति । व्याप्तिमत्त्वं साधकत्वे प्रयोजकम् । तदभावान्न धूमाभासस्य साधकत्वमित्यनेन व्याप्तेः सत्त्वं प्रयोजकं असत्त्वे नास्त्यनुमितिरिति स्पष्टमेवाङ्गीकृतम् । एवं च साधकस्य सत्त्वमनपेक्षितं प्रतिज्ञाय साध-कतावच्छेदकसत्त्वस्य प्रयोजकत्वं ब्रुवता साधु असत्यात् सत्यसिद्धिः प्रतिष्ठापिता ।

ननु प्रतिबिम्बस्य वस्तुतः स्वच्छद्रव्यान्तर्वर्तित्वं नास्ति । तथापि तस्यानुमितिप्रयोजकत्वं भवतीति निराबाधमसतः साधकत्वमिति चेन्न । तन्मात्रस्याप्रयोजकत्वात् । परमार्थसद्धर्मान्तरघटितसामग्र्यन्तर्गत-तयैव प्रयोजकत्वम् । स्वच्छद्रव्यान्तर्गतत्वरूपस्य धर्मस्य बिम्बावर्तित्वे

ऽपि अन्यत्र क्वापि वर्तमानत्वेन स्वरूपतो मिथ्यात्वाभावाच्च। तस्य तस्य अनुमितिप्रयोजकतावच्छेदकत्वेऽपि प्रयोजकत्वाभावाच्च। एतेन स्वाप्रार्थादीनां भाविशुभाशुभसूचकत्वादि व्याख्यातम्। सर्वेषामेव तेषां क्वचित् काले क्वचिद्देशे वर्तमानत्वेन सत्यत्वात्। दण्डत्वस्य कारणतावच्छेदकत्वेऽपि कारणत्वाभाववत् तेषां सूचकतावच्छेदकत्वेऽपि सूचकत्वाभावाच्च।

रेखावर्णविषये यदाह "विवेके सत्यपि दृढतरसंस्कारवशात् नारोपनिवृत्तिः। अत एव ककारं पठति लिखति चेति सार्वलौकिको व्यवहारः" इति, तत्र लिखतीति रेखाविषयः, पठतीति तु रेखानुमितवर्णविषय एव व्यवहार इति युक्तं मन्यामहे। पाठस्योच्चारणात्मकस्य वर्णविषयत्वस्वारस्यात्। वर्णानित्यत्ववादिनामस्माकं ह्रस्वत्वदीर्घत्वादयस्तदीया एव धर्मा इति नात्र सङ्कटं किञ्चित्। श्रवणस्थले वर्णानामर्थबोधकत्वस्य क्लृप्तत्वात् पठनस्थलेऽपि अनुमितवर्णानामेव तद्युक्तम्। न त्वारोपितवर्णत्ववतीनां रेखाणामिति च ज्ञेयम्।

यच्च 'प्रतिबिम्बादिविज्ञानानां जनकत्वे च विशेषणतया प्रतिबिम्बादीनामपि जनकत्वे बाधाभावात् नोपलक्षणत्वपक्षो युज्यते' इति तन्न। प्रतिबिम्बस्य सत्यत्वे तस्य जनकत्वेऽपि असतोऽपि साधकत्वमिति भवत्पक्षासिद्धेः। असत्यत्वेऽसतस्तस्य कारणत्वानुपपत्तेः। कार्यनियतपूर्ववृत्ति हि कारणम्। असच्च कारणं चेति हि विप्रतिषिद्धम्। अत्राह 'स्वव्यापारजन्ये व्यापारिणोऽसतो जनकत्ववत् स्वज्ञानजन्येऽप्यसतो जनकत्वसम्भवात्। अतीतानागतावस्थस्य असत्त्वधर्माश्रयत्वेनैवाभ्युपगमात्' इति। इदमयुक्तम्। दृष्टान्ते हि आगमेन वा अन्वयव्यतिरेकाभ्यां वा कारणत्वेऽवधारिते पश्चात् सद्वारकमेव तत् कारणत्वमिति ज्ञातेऽपि, व्यापारेण व्यापारिणो नान्यथासिद्धिरिति स्थितेः, व्यापारो व्यापारं जनयित्वा विरमति, व्यापार एव साक्षात् कार्यं जनयतीत्यास्थीयते। तत्र व्यापारः

कार्यस्याव्यवहितपूर्ववर्ती । व्यापारी च व्यापारस्याव्यवहितपूर्ववर्तीति उभयो कारणत्वोपपत्तो असत कारणत्व नैवाभ्युपगम्यते । कार्योत्पत्तिकाले व्यापारिणोऽसत्त्वात् असत कारणत्व भवतीति चेन्न । तत्कालावच्छेदेन तस्य कारणत्वाभावात् । व्यापारजनकत्वेनैव कारणत्वात् । नियतपूर्ववृत्ति त्वस्यैव कारणलक्षणत्वात् अव्यवहितत्वस्य व्यापारिकारणे अनपेक्षितत्वात् ।

अतीतानागतावस्थस्य असत्त्वधर्माश्रयत्वेन अभ्युपगमो भवतु यदि भवितुमर्हति । तस्य कारणत्व तु दुर्वचम् । असत्त्वात् । अन्यथा असत्यपि दण्डे घटोत्पत्त्यापत्ते । अत एव घटेच्छानन्तरं घटोत्पादनयत्ने इच्छाया एव कारणत्व न तद्विषयस्य घटस्य । अन्यथा हि स्वस्यैव स्वकारणत्व स्यात् । एव बाधकसत्त्वादेव विषयस्य ज्ञाने न विशेषणत्वम् । उपलक्षणत्वेऽपि उपलक्षणज्ञानजनकतायुक्तत्वात् प्रयोजकत्वमस्त्येवेति चेन्न । स्वरूपेणासत प्रयोजकत्वासम्भवात् । न हि भवति पुष्प नास्ति तदीय सौरभं तु अस्तीति । नन्वेनमतीतानागतयो प्रतियोगित्वविषयत्वाद्यपि न स्यात् । न । दर्शनबलात् तदभ्युपगमात् । कारणत्व तु असतो न भवति । अदर्शनात् । असत्यपि कारणे कार्योत्पत्त्यापत्तेश्च ।

यदुक्तम्—'स्वप्ने जागरे च उत्कृष्टकलधौतदर्शनात् उत्कृष्ट सुखम्, उत्कृष्टसर्पादिदर्शनाच्च उत्कृष्ट भयादि दृश्यते । विषयस्याकारणत्वे तदुत्कर्षानुविधान कार्ये न स्यात्'—इति तत्र वदाम । जागरे विषयस्य सत्त्वात्, तदवगाहिनो ज्ञानस्येव ज्ञायमानस्य विषयस्यापि विनिगमनाविरहेण आपाततः कारणत्वस्याभ्युपगमे बाधकाभावाच्च युज्यत एव तस्य कारणत्वम् । स्वप्ने भ्रमे च पुन असतो विषयस्य कारणत्वायोगात् तदुपलक्षितस्य ज्ञानस्यैव कारणत्वम् । उत्कृष्टकलधौतावगाहिनो ज्ञानस्य उत्कृष्टसुखकारणत्वम् । उत्कृष्टसर्पावगाहिन उत्कृष्ट-भयकारणत्वमिति ।

यत्तु विषयस्योपलक्षणत्वे तेन ज्ञानगतधर्मविशेषोपस्थापनप्रसङ्ग-भीतेन विशेषणत्ववदुपलक्षणत्वमपि नाभ्युपगम्यते । किन्तूपाधित्वमित्युक्त, तन्न विचारसहम् । सर्पज्ञान भयजनकम् । तत्र स्वरूपतः सन्त आरोपित वा सर्प विषयीकुर्वद् ज्ञान सर्पज्ञानमित्युच्यते । तत्र सर्पस्यापि सत्त्वेन भयजनकत्वे विवक्षिते विशेषणत्वम् । असत्त्वेन अविवक्षिते उपलक्षणत्वम् । तत्र कस्तृतीयः प्रकारः । पङ्कजादिपदप्रयोगस्थलेषु च निर्दिशितेषु शब्दानुपात्तस्यैव पद्मत्वादेर्धर्मस्योपाधित्व दृश्यते । न हि तथा प्रकृते ज्ञान भयकारणमित्युक्ते स्वयं सर्पो व्यावर्तको भवतीति सुवचम् । तद्ज्ञान एव ज्ञानशब्दस्य प्राचीनप्रयोगाभावेन तस्य स्वयमुपस्थितेरसम्भवात् । शब्दोपात्ते च तस्मिन विशेषणत्वोपलक्षणत्वातिरिक्तस्य उपाधित्वाख्यस्याकारस्य प्रत्येतुमशक्यत्वात् । उपाधित्वसम्भवेऽपि तेनापि रूपेणासतो जनकत्व नास्तीति तु न विस्मतव्यम् । वस्तुतस्तु स्वरूपतो यत्र वैशिष्ट्य तत्रैव विशेषणत्वोपलक्षणत्वविकल्पः । यत्र तु विषयतया, तत्र तत्प्रसङ्ग एव नास्तीति बोध्यम् ।

यच्च 'ज्ञानस्य भयादिजनकत्वे सर्पाद्यवच्छिन्नत्वमेव कारणतावच्छेदकमास्थेयम् । ज्ञानत्वेन जनकत्वेऽतिप्रसङ्गात् । तथा मिथ्यावस्त्ववच्छिन्नत्वाकारेण ज्ञानस्य मिथ्यात्वान् भ्रमस्थले ज्ञानमात्रस्य जनकत्वेऽपि मिथ्याभूतस्य जनकत्वमागतमेव ।' इति, तदपि न । सत्यमिथ्यासाधारण्येन सर्पावगाहित्वमात्रस्य कारणतावच्छेदकत्वात् । भ्रमस्थलेऽपि विषयमिथ्यात्व हि तदानीं न गृह्यते । तद्ग्रहणे भयोत्पत्त्यनुपपत्तेः । न च वस्तुतो मिथ्याभूतसर्पविषयत्वात् ज्ञानस्वरूपस्य मिथ्यात्वम्, मा भूत् मिथ्यारजताधिष्ठानत्वेन शुक्तिस्वरूपस्य मिथ्यात्वम् । प्रपञ्चानुबन्धित्वेन च ब्रह्मणः । ज्ञानस्यामिथ्यात्वे विषयस्य कथ मिथ्यात्वमिति चेत् काऽत्रानुपपत्तिः । नेद रजतमिति बाधात् विषयो मिथ्या । रजतज्ञान मे नोत्पन्नमित्येवरूपस्य बाधस्य विरहात् ज्ञान न मिथ्या ।

यत्तु कश्चिदाह—भ्रमज्ञानं स्वरूपतोऽपि मिथ्यैव अविद्यावृत्तिरूपत्वात्। तदुक्तं—'स्वरूपतो बाधाभावे विपक्षतोऽन्यथाप्रसङ्गात्' इति इति। तदिदमसम्बद्धाभिधानम्। अद्वैतसिद्धौ प्रमाज्ञानमपि स्वरूपतो मिथ्यैव। अविद्यावृत्तित्वाविशेषात्। तथा च सता धूमेन यत्र प्रमात्मकवह्न्यनुमितिस्तत्राविद्यापरिणामत्वात् स्वरूपतो मिथ्याभूतेनैव धूमेन तज्ज्ञानेन च तादृशस्यैव वह्नेः सिद्धिरिति तत्सिद्धान्तस्थितिः। असत्त्वात् सत्यसिद्धिस्थापनप्रकरणे कथमिदं प्रमासाधारण्येन भ्रमज्ञानमिथ्यात्वकथाभिधानं सङ्गतमिति तपस्वी न वेद। 'स्वरूपतो बाधाभावे' इत्येतद्ग्रन्थवचनं तर्हि स्वरूपतो बाधे प्रामाण्यबाध इति व्याख्येयम्।

एतेन 'भयजनकतावच्छेदकसिंहत्वावच्छिन्नस्वरूपेण मिथ्याभूतस्य सिंहज्ञानस्य स्वरूपतः सत्त्वमसत्त्वं नातिरिच्यते। अनुपयोगात्' इत्येतदपि प्रत्युक्तम्। सिंहस्य भयजनकतावच्छेदकत्वं हि भयजनकज्ञानविषयत्वात्। एवं ज्ञानस्य स्वरूपसतो भयजनकत्वे सिद्धे तदनुपयोगाभिधानं तद्विदुषां विस्मयावहम्। ननु ज्ञानस्यानुपयोगो नोक्तः किन्तु तत्सत्त्वस्येति चेन्न। ज्ञानस्योपयोगोऽङ्गीकृते तत्सत्त्वोपयोगस्यापि अङ्गीकृतत्वात्। अन्यथा असत्यपि ज्ञाने भयोत्पत्तिप्रसङ्गात्। किञ्च अन्यो विषयः सिंहः। अन्यद्विषयिज्ञानम्। विषयमिथ्यात्वेन कथं विषयिणो मिथ्यात्वम्। न च वस्तुसतो मिथ्यात्वोपचारः वादगोष्ठ्यां शोभते।

अत्रेदं बोध्यम्। मिथ्याभूतसर्पावच्छिन्नत्वेन सर्पज्ञानस्य मिथ्यात्वमयमाह। अविवेकनिबन्धनमेतत्। विमर्शलेशाविलसितं वा। अविद्यमानस्य वस्तुनः स्वरूपतोऽवच्छेदकत्वे हि अवच्छिन्नस्य मिथ्यात्वं भवेत्। यथा घटत्वावच्छिन्नस्य पटस्य। घटत्वेन पटो नास्तीति प्रतीतेः सम्प्रतिपन्नत्वात्। विषयाणां तु ज्ञानावच्छेदकत्वं न स्वरूपतः। अपि तु विषयत्वेन। घटज्ञानं पटज्ञानमित्युक्ते घटविषयकं ज्ञानं, पटविषयकं ज्ञानमित्येव प्रतीतेः। विषयत्वेन ज्ञानावच्छेदकत्वं च विद्यमानस्यैव

अविद्यमानस्याप्यस्ति । यथा भूतभविष्यतोस्तज्ज्ञाने । अतः सर्पस्य सिंहस्य वा तत्राविद्यमानत्वेन मिथ्यात्वेऽपि विषयतया तदवच्छिन्नत्वस्य ज्ञाने अबाधात् न ज्ञानस्य मिथ्यात्व कथमपि भवति । न हि मिथ्यासर्पविषयकं ज्ञान नास्तीति यस्य कस्यचिदपि यदाकदाचिदपि प्रतीतिः भवतीति ।

यच्च 'दण्डत्वादिकमेव सत्त्वासत्त्वोदासीनमवच्छेदक वाच्यम् । तथा च जनकत्वानुसारेण न सत्त्वासत्त्वसिद्धिः' इति, तदप्ययुक्तम् । मृत् क्षेत्रे वर्तते, दण्डश्चारण्ये । ताभ्या कुलालगृहे घटः कुतो नोत्पद्यते । गृहे घटोत्पत्तेर्गृहे सती मृत्कारणम् । दण्डश्च । तयोस्तत्रासत्त्वाद् घटानुत्पत्तिरिति हि वाच्यम् । एवमारोपितमृत्त्ववता तादृशदण्डत्ववता च द्रव्येण सन्निहितेन कुतो न घटो जायत इति चेत् अनारोपितमृत्त्वदण्डत्ववती द्रव्ये कारणमिति हि वाच्यम् । तथा च हेतुतत्त्वान्तर्भूते एव सत्त्वासत्त्वे । तयोस्तद्बहिर्भाव वदन् खण्डनकारा भ्रान्त एव । द्वेषाभिनिवेशदूषितमनस्त्वात् । स्वोचितसम्बन्धेन तद्देशकालवर्त्येव हि वस्तु कारणं भवति । अन्यथा धूमभ्रमावषयेण धूलीपटलेन वह्न्यनुमितिः प्रमा स्यात् । भवत्येव कदाचिदिति चेन्न । यादृच्छिकी हि सा । सार्वत्रिकी तादृशहेतुबलात् स्यादिति तु आपाद्यते । न च भवति । तत् कुतः । वस्तुसद्धूमत्वावच्छिन्नत्वाभावादित्येव वाच्यम् । तेन धूमत्वादिसत्त्व हेतुतत्त्वान्तर्गतमेवेति स्फुटमेतत् ।

यच्च वितण्डारसिकेनोक्तम्—'अन्तर्भावितसत्त्व चेत् कारण तदसत् ततः । नान्तर्भावितसत्त्व चेत् कारणं तदसत् ततः ॥' इति । तत्र तयैव रीत्या 'अन्तर्भावितसत्त्व चेदधिष्ठानमसत् ततः । नान्तर्भावितसत्त्वं चेदधिष्ठानमसत् ततः ॥' इति प्रतिबन्दीदानं युक्तमेव । यत्तु अत्रोक्तम्—ममाधिष्ठाने स्वरूपत एव सत्ताङ्गीकारः । तव तु कारणे स्वरूपातिरिक्तसत्ताङ्गीकार इति विशेषात् इति । तदयुक्तम् ।

यत स्वरूपातिरिक्तसत्तानङ्गीकारे सत्ताशून्यत्वेन असदेवाधिष्ठानं स्यात्। स्वरूपे स्वरूपाभावेन स्वरूपमादाय सत्तावत्त्वस्य दुर्वचत्वात्। अथ सत्ता नाम अबाध्यत्वमभावात्मकम्। अभावस्य चाधिष्ठानेन भेदाभेदाभ्युपगमात् स्वरूपात्मकत्वे धर्मिधर्मभावश्चोपपद्यत इति न काचिदनुपपत्तिरिति चेत् तर्हि कारणान्तर्गतसत्तायामपि तादृशसत्ताया अङ्गीकारेऽनुपपत्त्यभावात् नासतः कारणत्वं कारणस्य चाऽसत्त्वम्।

वस्तुतस्तु सत्त्वविशिष्टस्य कारणत्वात् अवच्छेदकस्य सत्त्वस्य स्वपरनिर्वाहकत्वात् सत्त्वान्तरापेक्षा नैवास्तीति 'अन्तर्भावितसत्त्वं चेत् कारणं तद्सत् तत' इत्यापादनमसङ्गतमेवेति वदितव्यम्।

किञ्च कार्यकारणयोः सामानाधिकरण्यस्यावश्यम्भावात् कार्यतावच्छेदककारणतावच्छेदकसम्बन्धानुसन्धानकाले कारणस्य सत्त्वमन्तर्नीतमिति तस्य कारणतावच्छेदकत्वाभ्युपगमोऽनावश्यकः। अथवा किमियता प्रयासेन। कुलालो घटं करोतीत्युक्ते जीवन्निति स्वयं लभ्यते। आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायात्। तथा दण्ड-कारणमित्युक्ते सन्निति स्वयं लभ्यत इत्यास्तां तावत्।

तदेवमसतः क्वापि साधकत्वं नास्ति। भ्रमस्थले "प्रातीतिकस्य कुत्रापि कार्ये हेतुत्वास्वीकारात् तज्ज्ञानस्यैव हेतुत्वात्" इति लघुचन्द्रिकायामेव विषयस्याहेतुत्वोक्तेः। स्वस्यैव स्वकारणत्वापत्त्या कार्योत्पादनप्रवृत्तिजनकज्ञानविषयस्य कार्यस्य हेतुत्वासम्भवात्। रेखानुमितवर्णानामेवार्थबोधकत्वेन आरोपितवर्णत्वावच्छिन्नानां रेखाणां बोधकत्वाभावात्। बोधकत्वेऽपि वस्तुसतीनां रेखाणामेव बोधकत्वात्। आरोपितवर्णत्वावच्छिन्नानां रेखाणां वस्तुनः सत्त्वेनासत्त्वाभावात्। ह्रस्वदीर्घाद्यभिव्यञ्जकतत्तद्ध्वनिरूपस्यैवार्थाभिधायित्वेन ध्वनिधर्माणां तत्रारोपाभावात्। न च ध्वनिप्रतीत्यभावादारोपावश्यम्भाव इति वाच्यम्। काटिन्येन वेगाभावेऽपि धूमाद् वह्न्यनुमितौ व्याप्तिस्मरणा-

दीरिव तत्प्रतीतेरप्यवर्जनीयत्वात् । प्रतिबिम्बस्थलेऽपि प्रतिहतनयनरश्मिग्राह्यस्य बिम्बस्यैव प्रतिबिम्बत्वेन तस्य सत्यत्वात् । तेन साक्षाच्चक्षुर्ग्राह्यबिम्बानुमाने कस्यचिदसतो हेतुत्वाभावाच्च ।

एवं सर्वत्र स्थितावपि क्वचिदसतोऽपि साधकत्वमस्तीति कृत्वाऽपि ब्रूमः । तेन को भवतां लाभः । दर्शनबलात् तत्र तथा कामं भवतु । असतो लिङ्गस्य तु लिङ्गिप्रमाजनकत्वं न हि कुत्रचिदस्ति । तेन दृश्यत्वलिङ्गेन मिथ्याभूतेन प्रपञ्चमिथ्यात्वानुमानं प्रमात्मकं नैव भवितुमर्हति । भवदुदाहृतं "यथा सत्त्वाविशेषेऽपि चक्षुषा रूपमेव ज्ञाप्यते न रसः तथैवासत्यत्वाविशेषेऽपि वर्णदैर्घ्यादिना सत्यं ज्ञाप्यते न तु धूमाभासादिना" इतीदं वाचस्पतिवचनमेवात्र प्रमाणम् । तदिह असतः साधकत्वसाधनप्रयासः सर्वो निष्फल इति ज्ञेयम् ।

यदत्र 'कथमसतः सज्जायेतेति श्रुत्या, नासतो दृष्टत्वादिति सूत्रेण, शशविषाणादिभ्यः सदुत्पत्त्यदर्शनादिति भाष्येण च विरोधः ।' इत्याशङ्क्य "तेषां तुच्छे जनकत्वनिषेधपरत्वात् । अस्माभिश्च तुच्छे जनकत्वस्यानुक्तत्वात् । तस्मात् सद्विविक्तत्वं साधनम्" इति समाधानमुक्तम् तदनुपपन्नम् । तथा हि । कथमसतः सज्जायेतेत्यत्र सदसच्छब्दौ तावत् परस्परविरुद्धार्थवाचिनौ । तत्रासच्छब्दो यदि 'तुच्छवचनः' तर्हि सच्छब्दस्तदन्यवचनः । जायमानस्य तेजोऽबन्नादिरूपस्य प्रपञ्चस्य ईदृशं सत्त्वं सम्प्रतिपन्नं कृत्वा प्रपञ्चस्य यत् कारणं तत् सदेव भवितुमर्हति नासदित्ययमुपदेशोऽत्र क्रियते । एवं कार्यप्रपञ्चगतसत्त्वानुरोधेन अवधार्यमाणं कारणगतं सत्त्वं प्रपञ्चस्य यादृशं तादृशमेव भवितुमर्हति । कार्यकारणयोः सालक्षण्यनियमात् । न हि हेम्नो विकारः मृद्धटो भवति मृद्विकारो वा हेमघटः । तथा च ब्रह्मप्रपञ्चयोरेकरूपस्यैव सत्त्वस्य प्रामाणिकत्वात् सद्विविक्तत्वं साधनमित्येतन्न युज्यते तुच्छस्यैव सद्विविक्तत्वात् । तस्य च जनकत्वस्यानिष्टत्वात् ।

नासतोऽदृष्टत्वादिति सूत्रं न तुच्छकारणत्वनिषेधपरम् । वैभाषिक सौत्रान्तिक सिद्धान्तनिराकरणपरसमुदायाधिकरणस्थं हि इदं सूत्रम् । तत्रैव च भाष्यम्—"इतश्चानुपपन्नो वैनाशिकसमयः, यत स्थिरमनुयायि कारणमनभ्युपगच्छतामभावात् भावोत्पत्तिरित्येतदापद्यते । तस्माद भावग्रस्तेभ्यो बीजादिभ्योऽङ्कुरादीनामुत्पद्यमानत्वादभावाद् भावोत्पत्तिरिति मन्यते । तत्रेदमुच्यते 'नासतोऽदृष्टत्वात्' इति । नाभावाद् भाव उत्पद्यते" इत्यादि । एवमुपपादकतया च अदृष्टत्वादिति हेतुवश-विवरणतात्पर्येण "शशविषाणादिभ्योऽप्यङ्कुरादयो जायेरन्" "तस्माद सङ्कूय शशविषाणादिभ्यः सदुत्पत्त्यदर्शनात्" इत्यादि भाषितं, अभावग्रस्तेभ्यो बीजादिभ्योऽङ्कुराद्युत्पत्तौ अनुपपत्तिप्रदर्शनार्थतया । न तु स्वार्थप्राधान्येन । तस्मात् श्रुतिसूत्रभाष्यविरुद्धमेवेदं असतः साधक-त्वाभिधानम् ।

एतेन प्रत्यक्षप्रामाण्यस्य मिथ्यात्वात् तत्समर्पिता श्रुतिरपि मिथ्येति, तदुत्थज्ञानप्रामाण्यस्य मिथ्यात्वात् तदधिगम्यं अद्वैतमपि मिथ्येति च दर्शितं भवति । अत्राह—'न च तथापि वेदान्तजज्ञानप्रामाण्यमिथ्यात्वे कथं तात्त्विकाद्वैतसिद्धिरिति वाच्यम् । शब्दतज्ज्ञानतात्त्विकत्वं हि न विषयतात्त्विकत्वे तन्त्रम् । इदं रजतमित्यनाप्तवाक्यस्य तज्जन्यभ्रमस्य च स्वप्नवत् तात्त्विकत्वेऽपि तद्विषयस्यातात्त्विकत्वात्'—इति । वक्रोक्ति-वचनमात्रमेतत् । अग्न्यभावे धूमः कथं स्यादिति प्रश्ने 'अग्निसत्त्वं हि धूमसत्त्वे न तन्त्रम् । अयोगोले तत्सत्त्वेऽपि तदभावात्' इति प्रतिवचनं यादृशं तादृशं त्विदम् । यत्र यत्र वचनतज्ज्ञानमिथ्यात्वं तत्र तत्र विषयस्य तात्त्विकत्वं नास्तीत्युच्यते । न तु यत्र यत्र तत्सत्यत्वं तत्र तत्र तद्विषयतात्त्विकत्वमिति । केवलं व्यामोहनमिदम् । पुनरप्याह "प्रामाण्यमिथ्यात्वं हि न विषयमिथ्यात्वे प्रयोजकम् । भ्रमप्रमाबहिर्भूते निर्विकल्पके विषयबाधाभावात् । किन्तु तदभाववति तत्प्रकार

कत्वादिरूपमप्रामाण्यमेव तथा। तच्च प्रकृते नास्त्येव।" इति। इदमपि पूर्वतुल्यमेव। यत्र प्रामाण्यं प्रसक्तं तत्र हि तस्य मिथ्यात्वं विषयमिथ्यात्वप्रयोजकमिति परं आह। तत्र प्रामाण्य सांकरहितं निर्विकल्पकमादाय विषयमिथ्यात्वं नास्तीति कथमुच्यते।

ननु प्रामाण्यमिथ्यात्वं नाम प्रमाण्यविरह एव पर्यवस्यति। तस्मिन्न वर्तमानेऽपि निर्विकल्पके विषयमिथ्यात्वं नास्तीति व्यभिचारप्रदर्शनमत्र कृतमिति चेन्न। इदं रजतमिति प्रत्यक्षप्रमाण्यवर्हितपूर्वं निर्विकल्पके तदभाववति तत्प्रकारकत्वरूपाप्रामाण्यविरहेऽपि विषयबाधात् भवत्पक्षेऽपि व्यभिचारस्य तुल्यत्वात्। नन्वस्तु नामैवम्। तथापि वेदान्तजन्यचरमज्ञानस्य निर्विकल्पकस्य विषयाबाधात् प्रामाण्यं निर्विधातम्, न च तस्य मिथ्यात्वमिति चेत् कुतो न बाधः। मिथ्याभूतवेदजन्यत्वात् तद्विषयेण हि अवश्यं बाधितेन भवितव्यम्। तद्बोधकप्रमाणासम्भवात्, तस्य सर्वबाधावधित्वादिति चेन्न। बाधावश्यम्भावाभावात्। कारणदोषेणापि हि मिथ्यात्वमवगम्यते। अन्यथा शुक्तिरजतभ्रमवति पुरुषे तदनन्तरं त्वरयाऽन्यत्र गते उत्तरत्र बाधाभावेन विषयस्य मिथ्यात्वं न स्यात्। नित्यकामलपुरुषभ्रमविषयस्य शङ्खपीतिम्नश्च। देहात्मैक्यस्य च। शून्यमेव तत्त्वमिति बाधस्य सत्त्वाच्च। दुष्टकारणजन्यः स इति चेत् भवत्पक्षेऽपि तुल्यमिदमिति स्थितमेव। न च वेदान्तवाक्यान्निर्विकल्पकज्ञानसम्भव इति वक्ष्यते।

## २०. दृग्दृश्यसम्बन्धः

अथ "ननु मिथ्यात्वानुमानमप्रयोजकं, सत्यत्वेऽपि दृश्यत्वोपपत्तेरिति चेन्न। दृग्दृश्यसम्बन्धानुपपत्तेः," इति यौ चोद्यपरिहारौ तौ विवेचनीयौ। दृश्यत्वमस्तु मिथ्यात्वं मा भूत्, इत्यप्रयोजकत्वशङ्कायां कृतायां यदि सत्यपि दृश्यत्वे मिथ्यात्वं न स्यात् तर्हि प्रपञ्चस्य दृक्सम्बन्धो न स्यात्। अस्ति च सः। तस्मात् प्रपञ्चो मिथ्या, इत्ययमनुकूलतर्कोऽत्र विवक्षितो भवितु-

मर्हति। वह्निमान् धूमादित्यत्र यदि सत्यपि धूमे वह्निर्न स्यात् तर्हि धूमो वह्निजन्यो न स्यात्। वह्निजन्यश्च धूमः। तस्माद् वह्निमान् इति यथा तथा। तत्र धूमस्य वह्निजन्यत्वं यथा पक्षद्वये सम्प्रतिपन्नं तथा दृग्दृश्यसम्बन्धे सम्प्रतिपन्ने सत्येव अयं तर्कः इहावकाशं लभेत। योऽयं सम्बन्धो वर्तते सोऽयं नोपपद्यतेति सम्बन्धस्य सिद्धस्य हि अनुपपत्तिरापादनीया। अथवा तु तत्रैव विप्रतिपत्तिं कृत्वा इह विचारः क्रियते। स सम्बन्धस्तात्त्विकः अध्याससिद्धो वेति। तत्र च तात्त्विकस्यासम्भवात् आध्यासिक एवेति स्थापयितुमिष्यते। एवं सति स्वतन्त्रमिदं साधनान्तरं मिथ्यात्वे अवलम्बितं भवति, दृग्दृश्ययोस्तात्त्विकसम्बन्धानुपपत्तिरपि प्रपञ्चमिथ्यात्वमापादयतीति। तत्र अनुकूलतर्कत्वाभिधानं नोपपद्यते।

तथा हि। दृग्दृश्यसम्बन्धानुपपत्तेरित्यत्र किं सामान्यतः सम्बन्धानुपपत्तिर्विवक्षिता, यद्वा तात्त्विकसम्बन्धानुपपत्तिः अथवा आध्यासिकसम्बन्धानुपपत्तिः। नाद्यः। कस्यचित्सम्बन्धस्य उपपन्नतया सर्वैरभ्युपगतत्वेन सामान्यतः सम्बन्धानुपपत्तेरापादयितुमशक्यत्वात्। न द्वितीयः। विरुद्धत्वात्। मिथ्यात्वे हि तात्त्विकसम्बन्धानुपपत्तिः। न तु तदभावे। न च तात्त्विकसम्बन्धो भवता इष्टः, येन तदनुपपत्तिरापाद्येत। न तृतीयः। आध्यासिकसम्बन्धानुपपत्तेः परस्येष्टत्वेन तं प्रति तदापादनासम्भवात्। किञ्च दृश्यत्वं नाम दृक्सम्बन्ध एव। तत्र लिङ्गं दृश्यत्वमस्तु साध्यं मिथ्यात्वं मा भूदित्यप्रयोजकत्ववादिनं प्रति साध्यस्य मिथ्यात्वस्याभावे लिङ्गं दृश्यत्वं नोपपद्येत इतीयमापत्तिः कथं भवेत्। साध्याभावेऽपि हेतुसत्त्वमुपपन्नम् इत्येव हि परस्याभिप्रायः। तं प्रति नोपपन्नम् इत्येतावन्मात्रकथनेन किं कृतं भवति। अनेनापि हेतुनाऽयं अतर्कः। न हि धूमलिङ्गस्थले 'धूमोऽस्तु वह्निर्मा भूत्' इति वादिनं प्रति यदि वह्निर्न स्यात् तर्हि धूमो न स्यात् इत्ययं तर्को भवति।

किञ्च दृश्यत्वादिति भवत्प्रयुक्त हेतु शृण्वत परस्य स्वमतानुरोधेन तात्त्विक एव दृक्सम्बन्धोऽभिप्रेत इति धीः स्वभावतो भवति। अथ तु आध्यासिक एव सः न तात्त्विक इति कथने परं प्रति हेतुरसिद्धो भवति। तात्त्विकस्यैव तस्य प्रपञ्चे तेनेष्यमाणत्वात्। आध्यासिकसम्बन्ध-विरहात्। दृष्टान्तेऽपि तेनास्यागृहीतत्वेन व्याप्त्यसिद्धिश्च। तद्यथा कश्चित् साधन प्रयुञ्जीत धूमाभाववान् वह्नेरिति, तर्कं च धूमसत्त्वे वह्निसम्बन्धा-नुपपत्तिरिति। कथं वह्निसम्बन्धानुपपत्तिरिति पृष्टश्च विवृणुयात् न हि पक्षे वस्तुतः वह्निरस्ति किन्त्वध्यस्त एवेति, तादृगिद भवति। अथ हेतु-तया निर्दिष्ट श्रुतिव्याप्यत्वादिरूपं दृश्यत्वमन्यत्। अन्य एवाय दृक्सम्बन्धः यस्यानुपपत्तिरिहोच्यत इति चेत् अस्त्वेवम्। किन्तु दृश्य-त्वहेतोरप्रयोजकत्वमपरिहृत भवति। दृक्दृश्यसम्बन्धानुपपत्तेः। स्वात-न्त्र्येण मिथ्यात्वप्रयोजकत्वात्। हेतोः प्रयोजकत्वानुपपादकत्वात्।

इदमपारमसामञ्जस्यमवदधाना एव प्राज्ञाः किमत्रार्थापत्त्या मिथ्या-त्वसाधनमभिप्रेत स्यादिति कल्पान्तरमुत्प्रेक्ष्य विमृशन्ति। वृथैव तु तेभ्यः कुप्यत्यत्र भवान् 'अनुकूलनर्कस्यैव प्रक्रान्तत्वेनार्थापत्तिर्वेत्यादि-विकल्पानवकाशात्' इति वदन्। अर्थापत्तिरपीय न भवति। तथा हि यदुच्यते--सत्वत्वे दृग्दृश्यसम्बन्धानुपपत्तिः। मिथ्यात्वं च तदुपपादकम्, इति। तन्न। घटस्येद ज्ञान, इद पटस्य, एतद्ज्ञानग्राह्यो घटः एत-द्ग्राह्यः पटः इति हि सार्वत्रिकौ प्रतीतिव्यवहारौ भवतः। तत्र काऽनु-पपत्तिः, यस्याः परिहाराय विषयमिथ्यात्वमपेक्षणीय स्यात्। अनुपपत्ति-प्रतिसन्धानमत्र नैव भवति। कारणाभावात्। तथा च सामान्यतस्स-म्बधरूपस्य दृग्विषयत्वस्य आक्षेपकत्वं नास्ति। अत एव मिथ्यात्वस्यो-पपादकत्वमपि नास्ति। अनपेक्षितत्वात्। अथायं सम्बन्धः क इति विशेषनिरूपणे संयोगसमवाययोः प्रसिद्धयोः सम्बन्धयोर्व्यतिरेकाव-धारणात् न तदनुपपत्तिरिहार्थापत्तिः, नापि मिथ्यात्वं कल्पनीयम्। परि-

मर्हति। वह्निमान् धूमादित्यत्र यदि सत्यपि धूमे वह्निर्न स्यात् तर्हि धूमो वह्निजन्यो न स्यात्। वह्निजन्यश्च धूमः। तस्माद् वह्निमान् इति यथा तथा। तत्र धूमस्य वह्निजन्यत्वं यथा पक्षद्वये सम्प्रतिपन्नं तथा दृश्यसम्बन्धे सम्प्रतिपन्नं सत्येव अयं तर्कः इत्यवकाशं लभेत। यादृशं सम्बन्धमाश्रयते सोऽन्यथा नोपपद्येतेति सम्बन्धस्य सिद्धस्य हि अनुपपत्तिरापादनीया। भवता तु तत्रैव विप्रतिपत्तिं कृत्वा इह विचारः क्रियते स सम्बन्धस्तात्त्विक आध्यासिको वेति। तत्र च तात्त्विकस्यासम्भवात् आध्यासिक एवेति स्थापयितुमिष्यते। एवं सति स्वतन्त्रमिदं साधनान्तरं सिध्यदेव अवलम्बितं भवति, दृश्यस्यतात्त्विकसम्बन्धानुपपत्तिरपि प्रपञ्चमिथ्यात्वमापादयतीति। तत्र अनुकूलतर्काभिधानं नोपपन्नम्।

तथा हि। दृश्यसम्बन्धानुपपत्तेरित्यत्र किं सामान्यतः सम्बन्धानुपपत्तिर्विवक्षिता, यद्वा तात्त्विकसम्बन्धानुपपत्तिः अथवा आध्यासिकसम्बन्धानुपपत्तिः। नाद्यः। कस्यचित्सम्बन्धस्य उपपन्नतया सर्वैरभ्युपगतत्वेन सामान्यतः सम्बन्धानुपपत्तेरापादयितुमशक्यत्वात्। न द्वितीयः। विरुद्धत्वात्। मिथ्यात्वे हि तात्त्विकसम्बन्धानुपपत्तिः। न तु तदभावे। न च तात्त्विकसम्बन्धाभावः इष्टः, येन तदनुपपत्तिरापाद्येत। न तृतीयः। आध्यासिकसम्बन्धानुपपत्तेः परस्येष्टत्वेन तं प्रति तदापादनासम्भवात्। किञ्च दृश्यत्वं नाम दृक्सम्बन्ध एव। तत्र लिङ्गं दृश्यत्वमस्तु साध्यं मिथ्यात्वं मा भूदित्यप्रयोजकत्ववादिनं प्रति साध्यस्य मिथ्यात्वस्याभावे लिङ्गं दृश्यत्वं नोपपद्यत इतीयमापत्तिः कथं भवेत्। साध्याभावेऽपि हेतुसत्त्वमुपपद्यत इत्येव हि परस्याभिप्रायः। तं प्रति नोपपद्यत इत्येतावन्मात्रकथनेन किं कृतं भवति। अनेनापि हेतुनाऽयं अतर्कः। न हि धूमलिङ्गस्थले 'धूमोऽस्तु वह्निर्मा भूत्' इति वादिनं प्रति यदि वह्निर्न स्यात् तर्हि धूमो न स्यात् इत्ययं तर्को भवति।

किञ्च दृश्यत्वादिति भवत्प्रयुक्त हेतु शृण्वत परस्य स्वमतानुरोधेन तात्त्विक एव दृक्सम्बन्धोऽभिप्रेत इति धीः स्वभावतो भवति। अथ तु आध्यासिक एव सः न तात्त्विक इति कथने परं प्रति हेतुरसिद्धो भवति। तात्त्विकस्यैव तस्य प्रपञ्चे तेनेष्यमाणत्वात्। आध्यासिकसम्बन्ध-विरहात्। दृष्टान्तेऽपि तेनास्यागृहीतत्वेन व्याप्त्यसिद्धिश्च। तद्यथा कश्चित् साधन प्रयुञ्जीत धूमाभाववान् वह्नेरिति, तर्कं च धूमसत्त्वे वह्निसम्बन्धा-नुपपत्तिरिति। कथं वह्निसम्बन्धानुपपत्तिरिति पृष्टश्च विवृणुयात् न हि पक्षे वस्तुतः वह्निरस्ति किन्त्वध्यस्त एवेति, तादृगिद भवति। अथ हेतु-तया निर्दिष्ट वृत्तिव्याप्यत्वादिरूपं दृश्यत्वमन्यत्। अन्य एवाय दृक्सम्बन्धः यस्यानुपपत्तिरिहोच्यत इति चेत् अस्त्वेवम्। किन्तु दृश्य-त्वहेतोरप्रयोजकत्वमपरिहृत भवति। दृग्दृश्यसम्बन्धानुपपत्तेः। स्वात-न्त्र्येण मिथ्यात्वप्रयोजकत्वात्। हेतोः प्रयोजकत्वानुपपादकत्वात्।

इदमपारमसामञ्जस्यमवदधाना एव प्राज्ञाः किमत्रार्थापत्त्या मिथ्या-त्वसाधनमभिप्रेत स्यादिति कल्पान्तरमुत्प्रेक्ष्य विमृशन्ति। वृथैव तु तेभ्यः कुप्यत्यत्र भवान् 'अनुकूलतर्कस्यैव प्रक्रान्तत्वेनार्थापत्तिर्वेत्यादि-विकल्पानवकाशात्' इति वदन्। अर्थापत्तिरपीय न भवति। तथा हि यदुच्यते--सत्यत्वे दृग्दृश्यसम्बन्धानुपपतिः। मिथ्यात्वं च तदुपपादकम्, इति। तन्न। घटस्येद ज्ञान, इद पटस्य, एतद्ज्ञानग्राह्यो घटः एत-द्ग्राह्यः पटः इति हि सार्वत्रिकौ प्रतीतिव्यवहारौ भवतः। तत्र काऽनु-पपत्तिः, यस्याः परिहाराय विषयमिथ्यात्वमपेक्षणीय स्यात्। अनुपपत्ति-प्रतिसन्धानमत्र नैव भवति। कारणाभावात्। तथा च सामान्यतस्स-म्बन्धरूपस्य दृग्विषयत्वस्य आक्षेपकत्वं नास्ति। अत एव मिथ्यात्वस्यो-पपादकत्वमपि नास्ति। अनपेक्षितत्वात्। अथायं सम्बन्धः क इति विशेषनिरूपणे संयोगसमवाययोः प्रसिद्धयोः सम्बन्धयोर्व्यतिरेकाव-धारणात् न तदनुपपत्तिरिहार्थापत्तिः, नापि मिथ्यात्वं कल्पनीयम्। परि-

शेषादध्यस्तत्व सम्बन्ध इति सिद्धे, दृश्यसत्यत्वे सति एतदनुपपत्ते कामं तन्मिथ्यात्वमाक्षिप्येत । न तु अध्यस्तत्वं दृग्दृश्यसम्बन्ध इति क्वचिद् दृष्टम् । न च तदुपस्थापकं किञ्चिदस्तीति तदाक्षेपस्य नास्ति कथमपि सम्भव । न च भवता अध्यस्तसम्बन्धेन आक्षेप इष्यते । "न हि अध्यस्तसम्बन्धत्वेनाक्षेपकता । किन्तु सम्बन्धत्वेन ।" इति स्वयमुक्तत्वात् । तदेवं सामान्यत सम्बन्धस्य नाक्षेपकता । यथा शतस्य पञ्चाशदाक्षेपकत्वं न तु सामान्यत सङ्ख्याया तथा । अध्यस्तत्वरूपविशेषस्य तु अद्याप्यसिद्धत्वात् क्वापि संयोगादिवत् सम्बन्धत्वेनाप्रसिद्धत्वाच्च नाक्षेपकता । सम्बन्धसामान्यस्य प्रतीतस्य अध्यस्तत्वरूपे विशेषे पर्यवसानमिति यदुच्यते तदप्ययुक्तम् । अध्यस्तत्वस्य सम्बन्धविशेषत्वायोगात् । न हि सर्पविशेषपरिगणने रज्जुसर्पोऽपि गण्यते । न च 'घटवद् द्रव्यम्' इत्युक्ते संयोगेन घटवद्भूतलम् समवायेन घटवत् कपालम्, अध्यस्तत्वसम्बन्धेन घटवत् कुड्यमिति विशेषग्रहणं भवति । तदेवमर्थापत्तिकथाऽप्यत्र नास्तीति वेदितव्यम् ।

किञ्चाध्यास सम्बन्ध इत्यत्र किं प्रमाणम् । परिशेष एव । न हि संयोग समवायो वा स भवितुमर्हति । न चान्य कश्चन तात्त्विक सम्बन्धः सुवचः । व्यापकानुपलब्ध्या बाधात् । तथा हि । तात्त्विकसम्बन्धस्य व्यापको देशकालविप्रकर्षाभाव । स चातीतादिविषयज्ञानादीनां नास्त्येवेति कथं तात्त्विकस्तेषां सम्बन्ध । एवं तात्त्विकसम्बन्धबाधात् आध्यासिकसम्बन्धसिद्धिरिति चेन्न । देशकालविप्रकर्षेऽपि ध्वंसनिरूपितप्रतियोगित्वस्य इच्छाविषयत्वस्य एवमन्यस्यापि तात्त्विकसम्बन्धस्य विद्यमानत्वेन देशकालविप्रकर्षाभावस्य तात्त्विकसम्बन्धव्यापकत्वाभावात् । ननु स सम्बन्ध सर्वो मिथ्या न तात्त्विक इति चेत्, संयोगसमवायादिरपि तव मिथ्यैव । अत्र को विशेष । तथाऽपि विप्रकर्षे कथं सम्बन्ध इति चेत् उच्यते । विप्रकर्षे सम्बन्धो न भवतीति कुतो

ज्ञायते । विन्ध्यहिमाचलयोरदर्शनादिति चेत् जलेऽदर्शनात् अग्नेरपि उष्णस्पर्शो न भवेत् । प्रत्यक्षसिद्धोऽयमिति चेन्न । तथैव ज्ञानज्ञेययोर्विप्रकृष्टयोरपि सम्बन्धसिद्धेः । अन्यदृष्टान्तसाम्यस्यानुरोद्धव्यत्वात् ।

ननु बाह्यस्यार्थस्यासम्भवाद् बहिर्वदवभासत इत्यध्यवसितम् । नायं साधुरध्यवसायो यत प्रमाणप्रवृत्त्यप्रवृत्तिपूर्वकौ सम्भवासम्भवावधार्येते । न पुनः सम्भवासम्भवपूर्वके प्रमाणप्रवृत्त्यप्रवृत्ती ।

इत्यभावाधिकरणसूत्रभाष्योक्तन्याय इहात्यन्तमवधेयः । ननु कोऽयं सम्बन्ध इति चेन्न । विषयविषयिभाव इति सर्वप्रसिद्धत्वात् । ज्ञानस्य स्वनिरूपित विषयत्वं ज्ञेयेन सम्बन्धः, ज्ञेयस्य स्वनिरूपितविषयित्वं ज्ञानेनेत्युक्तं भवति । संयोगादेरभावेऽपि ध्वंसादिप्रतियोगित्ववत् अभावपृथक्त्ववादिना विशेषणत्वरूपतत्सम्बन्धवच्च प्रकृतेऽपि प्रमाणबलात् विषयत्वाख्यः सम्बन्धः दृशा दृश्यस्याभ्युपगन्तव्य इति नात्र निरसनसम्भ्रमः प्रामाणिकाना युक्तः । प्रत्युत अध्यस्तत्वसम्बन्धोऽत्यन्तमप्रामाणिकः । अध्यस्तत्वं हि न जातिरखण्डोपाधिर्वा । पक्वत्वादिवत् यौगिकशब्दार्थत्वात् । अध्यासो नाम आरोपः । तथा चारोपविषयत्वमेव अध्यस्तत्वमित्यनेनोक्त भवति । न तु तदतिरिक्त किञ्चित् । किञ्च दृग्दृश्यसम्बन्धस्तावत् प्रतीयते । तत्र प्रतीतीनां स्वतः प्रामाण्यात् दृशमिव दृश्यमपि यथाप्रतिपन्न सत्य कृत्वा तयोः प्रतीयमानः सम्बन्धः किंरूप इति विचारे पूर्वप्रतिपन्नसत्यत्वाविरोधेन सम्बन्धस्वरूपं निश्चेतुं बुद्धिः प्रवर्तते । न तु तद्विरोधि । अत स्वाभिमतार्थसाधनौत्सुक्यातिरिक्तं न किमपि अध्यस्तत्वसम्बन्धोपक्षेपकमस्तीति बुद्धिमद्भिर्भाव्यम् ।

यत्तु "ज्ञानज्ञेययोरपि प्रतियोग्यभावादिसमकक्ष्य एव सम्बन्धाऽस्त्विति इममाक्षेप समादधानेन परस्पराध्यासात्मकसम्बन्धासम्भवेनैव सम्बन्धान्तरकल्पनात्, तत्सम्भवे तस्यैव सम्बन्धत्वात्" इत्युक्त तत् अद्वैतश्रद्धाजडान् स्वशिष्यान् प्रति वक्तुमुचितम् । न तु प्रौढान् प्राज्ञान्

प्रतिवादिनः प्रति । साक्षाद् विपरीता हि वस्तुस्थिति । यत्र सांस्थिक-सम्बन्धो न सम्भवति तत्र ह्यगत्याऽऽध्यासिकः सम्बन्धः कल्पनीयः । अन्यथा कथं रजतभ्रान्तिमान् तदुपादानाय प्रवर्तेत । आध्यासिक सम्बन्धस्यौत्सर्गिकत्वे तेनापेक्षापरणैव भाव्यम् । प्रतियोग्यभावादिस्थले च विलक्षणसम्बन्धाभ्युपगमेऽवर्जनीये का यायवित अपूर्वसम्बन्धान्तर कल्पनं सहेत । यच्च विषयत्वं नामेदमिति निर्वक्तुमशक्यमिति तत् काम तथा भवतु । निर्वचनाशक्त्या न प्रमेयमसद् भवत् । "स च संयोगादिव्यतिरिक्तो वा, स्वरूपं वा, पञ्चीकृतपदार्थान्तर्गतो वा, तदतिरिक्तो वेत्यन्यथा काकदन्तपरीक्षाया न नो निबन्धः" इति प्रतियोगित्वादिनिर्वचने परमा विरक्तिं प्रदर्शयतः विषयत्वनिर्वचनानुयोगे का परमा श्रद्धा । अद्वैतसिद्धेरिदमप्युपयुज्यत इति चापलं कथनमत्र हेतु । हन्त यथा यथा प्रमार्गो गम्यते तथा तथा दर्शनस्य दौर्बल्यमेव ख्यापितं भवति, न तु सुस्थितत्वमिति विदाङ्कुर्वन्तु भव त । प्रपञ्चमिथ्यात्वासिद्धिः दर्शनेनैव अशोकमन्यत् सर्वं निरस्तं भवतीति नेदानीं अधिकं ब्रूमः ।

इदं चात्र प्रष्टव्यम् । दृगिति किमत्र विवक्षितम्-शुद्धचैतन्यं वा वृत्तिर्वा । नाद्य । शुद्धचैतन्यस्य विषयाग्राहकत्वेन तत्र सम्बन्धविशेष विमर्शप्रसक्तिविरहात् । नान्त्य । वृत्तौ विषयाणामध्यासाभावेन तत्राध्यासिकसम्बन्धकल्पनानुपपत्तः । वृत्त्या अन्यत्र अध्यासे, भूतले देवदत्तेन दृष्टस्य घटस्य दर्शनं यज्ञदत्तस्य न स्यात् । तदध्यासासिद्धस्य वस्तुनोऽन्यदर्शनायोग्यत्वात् । यज्ञदत्तदृश्यस्याध्यासासिद्धोऽन्य एव घट इति चेत् निर्भिदं वेदान्तदर्शनं उत सौगतदर्शनमिति चिन्तनीयं तत्रभवद्भिः ।

## २१ प्रतिकर्मव्यवस्था ।

विश्वस्याध्यासिकत्वे प्रातिभासिकस्थल इव विषयेन्द्रियसन्निकर्षा

धीनायाः प्रतिकर्मव्यवस्थाया अनुपपत्तिर्दुष्परिहरैव । कर्म ज्ञानकर्म । विषय इत्यर्थ. । विषये विषये व्यवस्था दृश्यते भ्रमेतरस्थले, यत्र नाध्यासोऽस्ति । घटः सर्वेषा सर्वदा सर्वत्र घटत्वेनैव भासते । न तु कस्यचित् कदाचित् कुत्रचित् तदितरकिञ्चिद्वस्तुत्वेन । एव पटादि॰। इय व्यवस्था नोपपद्यते घटादेराध्यासिकत्वे । पुरुषकालदेशभेदेन अध्यासभेदात् । रज्जुर्हि कालदेशादिभेदेन सर्पतया वा भूदलनतया वा अम्बुधारात्वेन वा गृह्यते । न तत्र सर्पतयैवेति व्यवस्थाऽस्ति । तद्वत् घटादेरध्यस्तत्वे उक्तविधाव्यवस्था नोपपद्यते ।

यत्त्वत्र "प्रतिकर्मव्यवस्थायाः कस्यचित् पुसः कदाचिदेव कश्चिदेव विषयो ज्ञानकर्म, न सर्वस्य सर्वदा सर्वः, इति प्रतिनियतकर्मव्यवस्थायाः" इति ब्रह्मानन्दीय विवरण तन्न सम्यक् । दृष्टान्ताननुगुणत्वात् । रज्जुसर्पादिर्हि प्रातिभासिकः कस्यचिदेव कदाचिदेव कश्चिदेव ज्ञानकर्म भवति न तु सर्वस्य सर्वदा सर्वः । कथ तद्दृष्टान्तेन घटादिविषये अव्यवस्थाऽभिधान घटेत । समाधानाननुगुणत्वाच्च । उक्तामनुपपत्ति परिहरता हि एवमुक्तम्—"वृत्तेः पूर्वमेव घटादीना चैतन्येऽध्यासेन प्रातिभासिकस्थलापेक्षया वैलक्षण्यात्' इति वृत्तेः पूर्वमेव अध्यस्तघटसत्त्वाङ्गीकारेणात्र आपादिताया अव्यवस्थायाः परिहार उच्यत इति स्पष्टम् । न च सर्वस्य सर्वदा सर्वो विषय इतीयमव्यवस्था अनेन परिहृता भवति । प्रत्युत उक्तव्या भवति, पूर्वमेव सत्त्वात् तथा विषयो भवितुमर्हतीति । सिद्धस्य वस्तुत॰ प्रतीतिविपर्ययमन्या अव्यवस्था । इमामाशङ्क्य परिहारमुत्तरत्र वक्ष्यति—"यद्यपि प्रकाशकर्माधिष्ठानचैतन्यं सर्वगत, जीवचैतन्य चान्तःकरणावच्छिन्नम्, तथापि चैतन्याभेदेनाभिव्यक्तत्वात् व्यवस्थोपपत्ति. ।" इति । प्रकृता तु वस्तुनः सिद्धिहेतुर्योऽध्यासः तद्विषया अन्यैवाव्यवस्था । घटादिप्रत्यक्षात्मिका या वृत्तिः सैव घटादिकमध्यस्य गोचरयति । सा च कदाचित् घटस्थाने पटा-

द्विकमप्यध्यस्य प्रकाशयेदित्यव्यवस्था परेणापादिता । विषयेन्द्रिय सन्निकर्षाधीनप्रत्यक्षात्मकवृत्त्यैव न विषयाध्यास येनोक्ताऽव्यवस्था प्रसज्येत । किन्तु तत पूर्वमेव अध्यासेन सिद्धो घटादिः । तस्य यथा-स्थितस्य इन्द्रियसन्निकर्षात्प्रत्यक्षं जायत इति कथाव्यवस्थेति तत्परिहार इति ।

अयेम परिहार विमृशेम । वृत्त पूर्वमध्यासाभ्युपगममात्रेण आपादिताया अनुपपत्तर्नैव परिहारः कृतो भवति । पूर्वमपि अध्यास एव हि घटादेर्विषयस्य । आध्यासिकत्वे च विषयस्य अव्यवस्था प्रसज्यते प्रातिभासिकस्थल इव । तत्र वृत्तेः प्राक्तनेऽप्यध्यासे तुल्य एव प्रसङ्गः । यत्र घटाध्यास तत्रैव क्षणान्तरेषु पटाध्यास कुतो न भवति ? यथा रज्जौ सर्पाध्यासः कदाचित्, तत कदाचित् भूदलनाध्यास, तत कदाचित् अम्बुधाराध्यासः इति । पूर्वाध्याससिद्धो विषयः स्थिर इति चेत् आध्यासिकस्य स्वरूपमेव तावदसिद्धम् । तस्य स्थैर्यं कुतः । घटादीनां शुक्तिरूप्यादीनां स्थैर्यास्थैर्ये क्रमेण मानान्तरसंवादविसंवादाभ्यां स्थैर्यास्थैर्ये अवगम्येते इति चेत् अत एवानध्यस्तत्वाभ्युपगमे अपि सिद्ध्यत । दृग्दृश्य सम्बन्धानुपपत्त्यादिसहकृतानुमानात् कल्पितत्वे सिद्धे प्रत्यभिज्ञाबलात् स्थायित्व भवतीति चेत् दृढप्रत्यभिज्ञानुरोधेन स्थायित्वे सिद्धे कल्पित स्थायित्वस्य क्वचिदप्यदर्शनात् अकल्पितत्वनिश्चयेन मिथ्यात्वानुमानमेव आभासीक्रियत इति पश्यतु भवान् । दृग्दृश्यसम्बन्धानुपपत्तिश्च प्रागेव परिहृता । तथा च अद्वैताभिनिवेशेन तर्कागृहीतप्रमाणप्रमितं सर्वमन्यथाकर्तुमुद्यम क्रियते, न तु ऋजुमार्गावलम्बनेन स्वमत किमपि स्थापयितुं शक्यत इत्यत्र इदमपर निदर्शन भवतोऽस्त्वेतत् ।

सर्वस्य सर्वदा सर्वो विषयः स्यादिति प्रसङ्गोऽपि भवतो दुष्परिहर एव । अवच्छेदकान्तःकरणतद्वृत्त्यादिभेदेऽप्यवच्छेद्यस्य चैतन्यस्यैकत्वात् । यथा चैत्रस्य पत्युः शिर पाणिपादाद्यवयवभेदेऽपि तत्तदवच्छेदेन

जायमाना सर्वा वेदना अनुभाव्या भवति तथा। अत एव हि सूत्रम्—"असन्ततेश्चाव्यतिकरः" इति। सन्ततौ व्यतिकर एवेति हि तात्पर्यम्। ननु केवलस्यान्तःकरणस्य नानुभवः जडत्वात्। नापि केवलस्य चैतन्यस्य। निस्सङ्गत्वात्। अपि तु अन्तःकरणोपरूढस्य चैतन्यस्य। तस्य च विभिन्नत्वात् नास्त्यव्यवस्थेति चेन्न। उपाधिभेदेऽपि चैतन्यस्यैकत्वात्। न खलूपाधयः चैतन्यं खण्डयित्वा भिन्नाभिन्न खण्डमुपदधति, येन विषयानुभवो व्यवतिष्ठेत।

## २२. प्रतिकूलतर्कः

प्रतिकूलतर्कपराहत चेदं मिथ्यात्वानुमानम्। तथा हि। विश्वं यदि ब्रह्मणि कल्पितं स्यात् तर्हि प्रतीयमानब्रह्माधिष्ठानकं स्यात्। न चैवम्। अयं घटः अयं पट इति इदमा देशकालविशेषवर्तिब्रह्मेतरवस्तुमात्रनिर्देशात्। ब्रह्मणः सर्वथा प्रतीतिविरहात्। न च सन् घट सन् पटः इति बहुल व्यवहारात् तत्र च सच्छब्देन ब्रह्मण एव निर्दिश्यमानत्वात् प्रतीयत एवाधिष्ठानमिति वाच्यम्। अस्मिन् व्यवहारे ब्रह्मणः सच्छब्दार्थत्वाभावात्। न हि ब्रह्मतात्पर्येण एव व्यवहरन्ति। सन्, न त्वसन् इति घटाद्युद्देशेन विद्यमानत्वबोधनमात्रे तात्पर्यात्। अतोऽत्र सच्छब्दस्य ब्रह्मार्थकत्वाभावात् उद्देश्यत्वविरहेणाधिष्ठानपरत्वाभावाच्च नायं व्यवहार ब्रह्मात्मकाधिष्ठानप्रतीतौ प्रमाणम्। न च तादृश व्यवहारान्तरमस्तीति अप्रतीयमानब्रह्माधिष्ठानकमेव विश्वम्।

किञ्च सविशेषाधिष्ठानं स्यात्। सामान्येन ज्ञातत्वे सति अज्ञातविशेषवत एवाधिष्ठानत्वात्। यत्तु लाघवात् विशेषवत्त्वेनाज्ञातत्वमेव प्रयोजकम्, न त्वज्ञातविशेषवत्त्वमित्युक्तं तन्न हृद्यम्। शुक्तिरजतभ्रमे शुक्तेः काठिन्यचाकचक्यादिरूपविशेषवत्त्वेन ज्ञाततया अज्ञातत्वाभावेनाधिष्ठानत्वानुपपत्तिप्रसङ्गात्। भ्रमविरोधिनावच्छेदकविशेषवत्त्वेनाज्ञात-

त्वोक्तौ च गत लाघवेन। तादृशो विशेषोऽस्ति न तु स ज्ञात इत्यभ्युपगत च भवति।

यदुक्त "कल्पितसामान्यविशेषवत्त्व ब्रह्मण्यपि सुलभमेव। अकल्पित सामान्यविशेषवत्त्व चाप्रसिद्धम्। सत्यत्वानन्दत्वादिकमेव कल्पित व्यक्तिभेदेन सामान्यम्। परिपूर्णानन्दत्वादिश्च विशेष।" इति। अत्र ब्रूम॰। अकल्पितसामान्यविशेषवत्त्वमप्रसिद्धमिति नदानीं युक्त वक्तु भवतः। द्रव्यत्वादे शुक्तित्वादेश्च सामान्यस्य विशेषस्य च कल्पितत्वा-सम्प्रतिपत्ते। विश्वाध्यासोपपादकाना सामान्यविशेषधर्माणा कल्पितत्व च न घटते। एषा कल्पनोपपत्तये पुन सामान्यान्तरविशेषान्तरान्वेषण प्रसङ्गात्। तदेभिर्धर्मै सविशेषत्वमधिष्ठानभूतस्य ब्रह्मणा दुर्निवारम्। परिपूर्णानन्दत्वादे कल्पितत्वे अज्ञातत्व च न घटते। कल्पन हि नाम ज्ञानगोचरीकरणमेव। अज्ञातस्य कल्पनमेव नास्तीति स्यात्।

ननु परिपूर्णानन्दत्व नाम स्वरूपमेव। न तद्व्यतिरिक्त किञ्चित्। तथा सत्यत्वादिकमपि। तस्मादेतैर्धर्मैर्न सविशेषत्वमिति चेन्न। ज्ञाता-ज्ञातयोरेकत्वायोगात्। स्वरूपज्ञाने सत्येव हि परिपूर्णानन्दत्व न ज्ञायते। ज्ञायमानातिरिक्तत्व कथमज्ञायमानस्य स्यात्। स्याच्चेत् घटतद्रूपयोरपि स्यात्। तमसि स्पर्शनेन घटोपलम्भेऽपि अनुपलम्भेन हि घटातिरेको रूपस्याभ्युपगम्यते। तुल्य तत् प्रकृतेऽपि।

एवं सत्यत्वादेरपि प्रकारतया भानेन प्रकारिस्वरूपता व्यतिरेकोऽव-श्यम्भावी। ज्ञायमानत्वेन अज्ञायमानपरिपूर्णानन्दत्वादितश्च। तेन "एकस्यैवानन्दाद्यात्मना तिरोहितस्य सदात्मना प्रकाशसम्भवात्" इति यदुच्यते तत धर्माणा धर्मिस्वरूपात् परस्पर च व्यतिरेकानङ्गीकारेऽभिधीयमान रिक्त वच इति ज्ञेयम्। निर्विशेषमेक वस्तु केनचिद्रूपेण भाति, केनचिद्रूपेण न भातीत्युक्तेर्व्याहतत्वात्। धर्मत्व कल्पितमिति चेत् दत्तो त्तरमेतत्। धर्मत्वेन प्रकाशे सति हि कल्पितत्व वाच्यम्। अप्रकाशमा-

नस्य किं कल्पनेनेति। यदपि भ्रमविरोधिज्ञानाभाव एव तन्त्र, न तु विशेषाज्ञानमिति तदपि न युक्तम्। प्रतिबन्धकाभावमात्रस्य कार्यं प्रत्य-हेतुत्वात्। न हि शुक्तिमपश्यता शुक्तित्वज्ञानाभावमात्रेण शुक्तिरूप्यभ्रमो भवति। तस्मात् भ्रमसामग्र्या निरूप्यमाणाया अवश्य विशेषाज्ञान तदन्तर्गतं वाच्यमिति न सङ्कटान्मुक्तिः।

किञ्च दोषमूलकाविद्याध्यासस्सिद्धं स्यात्। यत्तु अनाद्यविद्याध्यासस्य दोषानपेक्षत्वमिति। तन्न। प्रतिज्ञामात्रेणार्थासिद्धेः। न हि लोके कश्चि-द्ध्यासो दोषाजन्यो दृष्टः येनात्र तथा सम्भावनाऽपि तावद् भवेत्। शुक्तिरूप्यदृष्टान्तेन चात्र भवान् विश्वमिथ्यात्व साधयति। तस्मात् तद्वदेवाध्यासेन भवितव्यम्। तदध्यासरूपेण दृढलिङ्गेन अनाद्यविद्याध्या-सस्य आपतद् दोषमूकत्व केन प्रमाणेन बाध्यते। अद्वैतसिद्धये ति चेत् न हि सा अद्यापि निष्पन्ना। अभिलषिताद्वैतरक्षाप्रत्याशया प्रमाणं विनैव धाष्टर्यादेव दोषानपेक्षत्व प्रतिज्ञायत इति तु विदन्ति विद्वासः। यच्च 'शबरस्वामिना, यस्य च दुष्टं करण यत्र च मिथ्येति प्रत्ययः स एवा-समीचीनः प्रत्ययः, नान्य., इति वदता दुष्टकारणजन्यत्वमन्तरेणापि अर्थान्यथात्वप्रयोजकमप्रामाण्यमुक्तम्" इति, तन्न। अप्रामाण्यज्ञापक-मात्रस्य एव विभागात्। दोषस्यैव सर्वत्र अप्रामाण्यजनकत्वस्येष्टत्वात्। तथा च तदीयमेवेतः प्राक्तन भाष्यम्—"यदा हि क्षुदादिभिरुपहत मनो भवति, इन्द्रिय वा तिमिरादिभिः, सौक्ष्म्यादिभिर्बाह्यो वा विषयः, ततो मिथ्याज्ञानम्। अनुपहतेषु हि सम्यग् ज्ञानम्। इन्द्रियमनोऽर्थसन्निकर्षो हि सम्यग्ज्ञानस्य हेतुः। असति तस्मिन् मिथ्याज्ञानम्। तदुभयगतो दोषो मिथ्याज्ञानस्य हेतुः। दुष्टेषु हि ज्ञान मिथ्या भवतीति"। इति।

किञ्च अनर्थक्रियाकारि स्यात्। प्रापञ्चिक हि वस्तु सर्वमर्थक्रियाकारि भवति। न च तदध्यस्तत्वे युज्यते। शुक्तिरूप्यस्य कार्यायोग्यत्वात्। अत्राह। स्वाप्नमायादौ व्यभिचारात् अर्थक्रियाकारित्वं न पारमार्थिक-

सत्त्वप्रयोजकमिति । नैतदेवम् । स्वाप्नादिपदार्थो वाऽत्र विवक्षित तज्ज्ञानं वा । आद्ये असतस्तस्य अर्थक्रियाकारित्वाभावान्न व्यभिचारः । अन्त्ये तस्य परमार्थसत्त्वान्न व्यभिचार इति । ननु स्वाप्नेन असिना स्वाप्नस्य शत्रो शिरश्छिद्यत इति चेत् कामं तथा । तथैव शुक्तिरजतमपि किञ्चित् कार्यमुत्पादयतु पात्रं वा आभरणं वा अन्यद्वा । प्रातिभासिकं शुक्तिरजतं न कार्यकरणक्षममिति चेत् स्वाप्नोऽसि किं व्यावहारिकः, येन कार्यक्षमो भवति । तस्य व्यावहारिकत्वे को दोष ? इति चेत् शुक्तिरजतमपि व्यावहारिकमस्तु, को दोष । ब्रह्मज्ञानव्यतिरिक्तशुक्तियाथार्थ्य ज्ञानबाध्यत्वात् तस्य न व्यावहारिकत्वमिति चेत् समं तत् स्वाप्ने असावपि । प्रबोधे बाधात् । स कथमर्थक्रियाकारीति चेत् तन्निदर्शिता भवता तदुपपादनीयम् । नास्माभिः । अथवा ब्रूम, श्रूयताम् । यथा असि तथा शत्रु तस्य शिरश्छेदः तत्र असे करणभाव, इति सर्वं मिथ्या । सर्वं केवलं प्रातिभासिकम् । न तत्र कार्यं वा तत्कारित्वं वा प्रातिभासिकस्यास्ति । बाधस्य समानत्वात् । अतः परव्यामोहनायापि भवता स्वाप्नो व्यवहारो न दृष्टान्तीकर्तव्य । आध्यासिकस्य स्वप्ने वा जागरे वा अर्थक्रियाकारित्वं नास्तीत्येतत् तत्त्वं न शक्यमपह्नोतुम । न तदपह्नवं चापलं कर्तव्यम् । तथा च विश्वस्याध्यासिकत्वे दृश्यमानस्य अर्थक्रियाकारित्वस्यानुपपत्तिर्दुष्परिहारा ।

किञ्च उत्पत्तिशून्यं स्यात् । लोके हि पदार्था उत्पद्यमाना दृश्यन्ते । यद्यनध्यस्तं कारणं कार्यं च तर्हि दृष्टा उत्पत्तिरिय उपपद्यते । आपणस्य रजतात् खलु कुण्डलमन्यद्वा उत्पद्यमानं दृश्यते । न तु शुक्तिरजतात् । तेन उत्पद्यमानं वस्तु स्वकारणमनध्यस्तं निश्चाययति, स्वं च । नन्वध्यस्त त्वाविरोधि व्यावहारिकसत्त्वमेवानेन निश्चीयते न तु पारमार्थिकसत्त्व मिति चेन्न । व्यावहारिकातिरिक्तपारमार्थिकसत्त्वे मानाभावस्योक्तत्वात् । प्रातिभासिकातिरिक्तस्यैव प्रमितस्य पारमार्थिकत्वात् । अत उत्पत्तिश्च

णात् अनध्यस्तमेव विश्वम्। ननु स्वाप्नप्रपञ्चस्याप्युत्पत्तिः श्रूयत इति चेन्न। विकल्पासहत्वात्। किं स्वाप्नप्रपञ्चो नास्ति। तथाप्युत्पद्यत इत्यभिप्रायः। अथवाऽस्ति उत्पन्नश्चेति। आद्ये विनाऽपि सामग्रीं घटाद्युत्पत्त्यापत्तिः। असत उत्पत्त्यभ्युपगमात्।अन्त्ये इष्टापत्तिः। यदुत्पत्तिमत् तत् सदित्यव्यभिचारात्। "अथ रथान् रथयोगान् पथः सृजते" इत्यस्याः श्रुतेः कोऽर्थ इति चेत् कोऽत्र क्लेशः। एषामसत्त्वपक्षे सृजते प्रतिभासविषयान् करोतीत्यर्थः। सत्त्वपक्षे तु तत्कालमात्रानुभाव्यान् एतान् पदार्थान् सृजतीति यथाश्रुत एवार्थः। अयमेव च पक्षोऽस्मत्सम्मतः।

किञ्च अनीश्वरसृष्टं स्यात्। ईश्वरसृष्टं हि जगदामनन्ति 'इदं सर्वमसृजत' इति। न चेदमध्यासे उपपद्यते। कल्पितस्यापि व्यावहारिकसत्त्वमादायोपपद्यत इति चेन्न। व्याघातात्। कल्पितं च व्यावहारिकं चेति व्याहतं ह्येतत्। व्यावहारिकमिति तात्त्विकस्यैवाभिधानात्। तदतिरिक्तस्य तात्त्विकस्याभावात्। तस्य च कल्पितत्वायोगात्। एतेन ईश्वराध्याससिद्धत्वात् तत्सृष्टत्वोक्तिरिति परास्तम्। आध्यासिकस्य व्यावहारिकत्वायोगात्। 'अध्यस्तस्यापि सर्पस्य भयकम्पादिजनकत्ववत् वाय्वादीनां तेजआदिजनकत्वमप्युपपन्नम्' इति यदुच्यते तदसत्। असतः सर्पस्य कारणत्वायोगेन तज्ज्ञानस्यैव भयादिजनकत्वस्योक्तत्वात्। अन्यथा दष्टृत्वस्यापि कदाचित् प्रसङ्गात्। वाय्वादीनां तु तेजआद्युपादानभूतानां स्वरूपेणैवोपयोगेन कल्पितत्वानुपपत्तेः।

यत्तु "मध्यन्दिने भूयिष्ठप्रकाशाद् बहिर्देशात् सालोकमपवरकं प्रविष्टस्य तमःप्रतीतिर्भवति, तत्रत्यानां घटादीनामप्रतीतिश्च। तत्र कल्पितस्य तमसो वस्त्वाच्छादकत्वं दृश्यते" इति तन्न। तत्र तमोभ्रमस्य यो हेतुः तत एव तत्रत्यवस्तुप्रतीतिविरहोपपत्तेस्तदाच्छादकान-

पेक्षणात्। भूयिष्ठो हि प्रकाशो नेत्ररश्मीनां प्रसरं मन्दीकरोति। तस्यामवस्थायां अपवरकं प्रविष्टस्य नायनरश्मिप्रसरमान्द्यमेव क्षणकालं तमोभ्रमं वस्त्वमहणं च आपादयति। तत्र कः कल्पितस्य तमस उपयोगः।

## २३ मिथ्यात्वश्रुतिः।

प्रकृतानुमानस्य श्रुत्यनुग्रहं दर्शयितुं प्रवृत्तः, एकमेवाद्वितीयमित्येतदद्वैतपरं कृत्वा, "तत्स्वरूपप्रामाण्ययोग्यतादीनां मिथ्यात्वेऽपि तज्जन्यस्य बोधस्य न मिथ्यार्थविषयत्वम्। मिथ्यात्वप्रयोजकरूपस्य तत्राभावात्। यथा सदर्थबोधकस्याप्नदेवतावाक्ये' इत्याह। तदयुक्तम्। मिथ्याप्रमाणजन्यबोधविषयत्वस्यैव मिथ्यात्वप्रयोजकत्वात्। अन्यथा लिङ्गभ्रमेणापि सर्वत्र लिङ्गिप्रमित्यापत्तेः। न च सदर्थस्वाप्नदेवतावाक्ये व्यभिचारः। प्रबोधकाले चर्मचक्षुर्गोचरस्य परिहरन्त्याः स्वसङ्कल्पेन स्वयमेव स्वप्ने प्रादुर्भवन्त्या देवताया स्वरूपस्य वा वाक्यस्य वा पारमार्थिकत्वेन मिथ्यात्वकथागन्धस्यापि विरहात्। स्वप्नद्रष्टृपुरुषमतिविभ्रमकल्पितत्वाभावात्। कथमिदमवगम्यत इति चेत् वाक्यस्य सदर्थत्वादेव। तस्माद् वदस्वरूपादेर्मिथ्यात्वेऽपि तत्प्रमेयमद्वैतं सत्यं भविष्यतीति प्रत्याशा अयुक्तैव। उपजीव्यप्रत्यक्षविरोधात् अद्वैतं न श्रुत्यर्थ इति वाच्यम्। उपजीव्यं ह्यस्य स्वप्रामाण्यं व्यावहारिकम्। न तद्बाध्यम्। बाध्यं प्रामाण्यं तात्त्विकम्। न तदुपजीव्यम्। इतीयं कल्पना निर्मूलेति चोपपादितम्। तात्त्विकस्य प्रामाण्यस्यानुपजीवने कस्यापि तात्त्विकस्यार्थस्यासिद्धेः। जगत इव ब्रह्मणोऽप्यतात्त्विकत्वापातात्। न हि भवति स्वप्नदृष्टसङ्ख्या मिथ्या। तदन्वदृष्टं रत्नं तु सत्यमिति। तस्य सत्यत्वमुपदिश्यत इति चेत् जगतोऽपि उत्पत्तिस्थित्यादिवादेन 'कथमसतः सज्जायेते'ति सत्त्ववादेन च सत्यत्वमुपदिश्यत एव। अद्वैतश्रुत्याऽस्य मिथ्यात्वं इति चेत् तर्हि तथैव सद तर्गतवेदमिथ्यात्वद्वारा तत्प्रमेयस्य ब्रह्मणोऽपि मिथ्यात्वं बोध्यत

एव। तस्य श्रुत सत्यत्व कथ योऽर्यामीति चेत् जगतो यथा तथैव। द्वितीयत्व मिथ्यात्वप्रयोजकम्। तद् ब्रह्मणि नास्ति। तत्कथ तस्य मिथ्यात्व भवेदिति चेदुक्तमेतत्। द्वितीयान्तर्गतस्य प्रमाणभूतस्य वेदस्य मिथ्यात्वे तत्प्रमेयस्य सतोऽपि मिथ्यात्वमापततीति। तथा च कल्पितसत्त्ववदेकमासीदिति श्रुत्यर्थो वाच्यः। सत्यत्व ब्रह्मस्वरूपमेव। अतो न तस्य कल्पितत्वमिति चेत् तर्हि सत्यत्व ब्रह्मेति स्यात्। न तु सत्यं ब्रह्मेति। धर्मत्व कल्पितमिति चेत् तर्हि जगदपि ब्रह्मस्वरूपमेव। सर्वं खल्विद ब्रह्मेति श्रवणात्। अतो न तत् कल्पितम्। भेदमात्र कल्पितम्। तदेव निषिध्यत इति स्यात्। तस्मात्

त्यज वा ब्रह्मसत्यत्व भज वा विश्वसत्यताम्।
ब्रह्म सत्य जगन्मिथ्येत्येषा ते दुर्लभा स्थितिः॥
अनुमन्येत मिथ्यात्वमात्मनोऽपि यदि श्रुतिः।
परिशेषयितु ब्रह्म शक्येत न कथञ्चन॥

## २४. अद्वैतश्रुतिः

परीक्षितप्रतिष्ठितप्रामाण्यस्य घटपटादिद्वैतप्रत्यक्षस्य सम्भवदप्रामाण्यचन्द्रप्रादेशिकत्वप्रत्यक्षतुल्यत्व न भवतीति. तेन तस्याद्वैतश्रुतिविरोधित्व भवतीति च पूर्वमेवोक्तम्। विरोधे प्रत्यक्ष प्रबलम्। अतः तदविरोधेनैव श्रुत्यर्थो वाच्य इति च। अन्यथा वेदमिथ्यात्वात् तद्वेद्यब्रह्ममिथ्यात्वमप्यापतेदिति च ब्रह्मणो वा तत्सत्यत्वस्य वा जगद्वदेव हि अध्यस्तत्व अपरिहार्यमापतति। न हि वक्तुर्वाक्यमन्यथा गृहीतवतः श्रोतुः मिथ्याभूततद्वाक्यबोध्यस्यार्थस्य प्रमाणान्तरेण संवादो भवति। यदि कदाचिद् भवति स याद्दच्छिकः, प्रमाणान्तरावसेय। औत्सर्गिकस्तु विसवाद एव। न च ब्रह्मणः सत्यत्वे सवादि प्रमाणान्तरं सुवचम्। अतो मिथ्यावाक्यजन्यमिथ्याज्ञानविषयत्वात् मिथ्यात्व दुर्वारम्।

अथ यदुच्यते "प्रत्यक्षं नियतविषयं, श्रुतिः सर्वविषया। तथा च यत्र प्रत्यक्षेण भेदो न गृहीतः तत्रैवाभेदश्रुतेरवकाशः।" इत्यादि खण्डनकारोक्तमनुवदता, तत् सर्वमत्यन्तमसङ्गतम्। तथाहि। यथा कस्यचिदनवाप्तविपक्षप्रबला पार्थिवमहासेना काचित् क्वचिद्देशमवरुध्य तदीयां विभूतिं सर्वामात्मसात्कुर्वीत तथा अगृहीतस्वभेदा काचन धीर्यदा भासते तदा लब्धावकाशा अद्वैतश्रुतिः प्रत्यक्षराज्यत्वेनाभिमतायाः स्वात्मशायाः ऐश्वर्यमिव तया सह ऐक्यं बोधयित्वा निर्बाधा सती सर्वाभेदे पर्यवस्यतीत्युच्यते। तत्र वक्तव्यम्। यद्यपि काचन घटपटादिधीः स्वभेदाविषया तथापि अद्वैतश्रुतिः स्वावगाह्यया एकधियं तया सहैक्यबोधनाय अवकाशं कथं लभेत। परस्परं विषयभेदात्। घटादिविषया ह्येका धीः। भेदाभावविषया चान्या। तत एव तयोरपि भेदात्। "अर्थेनैव विशेषो हि निराकारतया धियाम्।" तथा च भेदत्वेन स्वभेदविषयत्वाभावेऽपि स्वावगाह्यस्वभेदग्राहिण्येव सर्वा धीरिति धियोर्भेदो न शक्यो बाधितुम्।

नन्वद्वैतश्रुतिः धियोरभेदं बोधयित्वा तद्विषययोरप्यैक्यं बोधयिष्यतीति चेत्। विषयभेददार्ढ्यात् तत्राभेदबोधनाशक्ता तत एव धियोरपि तद्बोधने अप्रभवन्ती सा क्रुद्धा कृत्येव स्वोत्पादकम् अद्वैतमेव हन्तीति पश्यतु भवान्। अभेदवादेऽपि हि सुखदुःखधर्माधर्मादेर्व्यावहारिको भेदोऽवर्जनीयो भवति। न च प्रकृतिप्रत्ययभेदं, पदभेदं, तत्तदर्थभेदं, स्वयमुपदेष्ट्री सती उपदेष्टव्यपुरुषभेदं च सिद्धवत्कृत्य प्रवर्तमाना श्रुतिः सर्वभेदनिषेधे क्षमते। अत परीक्षितप्रामाण्यत्वात् प्राथम्यात् अपरोक्षत्वात् उपजीव्यत्वात् प्रत्यक्षं बाधितुमशक्यत्वाच्च प्रत्यक्षस्य तदविरोधेनार्थः श्रुतेर्वाच्यः। यत्तु 'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि'। इति, तत्तथैव। 'अङ्गुल्यग्रे करिशतम्' इत्यादेरपि बोधकत्वात्। परन्तु 'अबाधात्तु प्रमामत्र स्वतः प्रामाण्यनिश्चलाम्' इति तन्नास्ति। प्रबल-

प्रत्यक्षबाधसत्त्वात्। अतो भवदभिमतादन्य एवार्थोऽद्वैतश्रुतेर्वक्तव्यः।

## २५. एकमेवाद्वितीयम्।

नन्वेकमेवाद्वितीयमिति पदत्रयेण सकलभेदनिषेधः स्फुटमवगम्यते। यथाहुः—

वृक्षस्य स्वगतो भेदः पत्रपुष्पफलादिभिः।
वृक्षान्तरात्सजातीयो विजातीयः शिलादितः॥
तथा सद्वस्तुनो भेदत्रयं प्राप्तं निवार्यते।
एकावधारणाद्वैतप्रतिषेधैस्त्रिभिः क्रमात्॥

इति। अयमर्थः। वृक्षस्य पत्रपुष्पफलादिसत्त्वप्रयुक्ता स्ववृत्तिस्वव्यतिरिक्तवस्तुमत्ता, वृक्षान्तरसत्त्वप्रयुक्ता स्वसजातीयस्वव्यतिरिक्तवस्तुमत्ता, शिलादिसत्त्वप्रयुक्ता स्वविजातीयस्वव्यतिरिक्तवस्तुमत्ता च दृश्यते। ईदृशस्वव्यतिरिक्तत्रिविधवस्तुमत्ता पदत्रयेण ब्रह्मणो व्यवच्छिद्यत इति एतेनात्र "भेदशब्दः अन्योन्याभावपरो वा भिन्नवस्तुपरो वा। आद्ये फलादिभिरिति तृतीयानुपपत्तिः। पञ्चमी ह्यपेक्ष्यते। स्वगत इत्यव्यावर्तकं च। त्रयाणामप्यन्योन्याभावानां वृक्षनिष्ठत्वात्। अन्त्ये वृक्षान्तरादिति पञ्चम्यनुपपत्तिः। वृक्षान्तरं सजातीयो भेद इति हि वाच्यम्। तदयमनन्वितः श्लोकः" इति दूषणं निरवकाशमिति बोध्यम्। तत्कथमन्योऽर्थोऽभिधातुं शक्य इति चेन्न। समञ्जसस्यार्थान्तरस्य आचार्यैरभिहितत्वात्।

"सर्वज्ञं सर्वशक्ति ब्रह्मैव सर्वकारणमित्युपदिशन् स होवाच—सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्—इति। अत्र इदमिति जगन्निर्दिष्टम्। अग्र इति च पूर्वकालः। तस्मिन् काले जगतः सदात्मकतां सदेवेति प्रतिपाद्य, तत् सृष्टिकालेऽप्यविशिष्टमिति कृत्वा, एकमेवेति सदापन्नस्य जगतस्तदानीमविभक्तनामरूपता

प्रतिपाद्य तत्प्रतिपादनेनैव सतो जगदुपादानत्वं प्रतिपादितमिति स्वव्यतिरिक्तनिमित्तकारणमद्वितीयपदेन प्रतिषिद्धम् ।"

इति । इदमुक्तं भवति । अस्मिन् वाक्ये सदिति सत्तायोगस्य, आसीदिति भवनक्रियायाः, अग्र इति कालस्य, उपरि तदैक्षतेत्यादिना ईक्षणादेश्च वचनात् सकलभेदशून्यब्रह्मप्रतिपादनप्रसङ्गः सर्वथा अत्र नास्ति । बहु स्यामिति उपरि वक्ष्यमाणावस्थाविलक्षणावस्थाप्रतिपादकतया एकशब्द एवकारोत्तरः प्रलयकालिकाविभक्तनामरूपत्वावस्थां सावधारणमाह । सदेवेति ब्रह्मण उपादानत्वप्रतिपादनात् निमित्तकारणमन्यत् स्यादित्युदयमानां शङ्कां वारयति अद्वितीयशब्दः निमित्तकारणीभूतवस्त्वन्तरशून्यमित्यर्थः । मुख्येन केनचित् सद्वितीयत्वस्य एकमेवेत्यनेनैव निवारितत्वात् शङ्का केनचित् सद्वितीयत्वनिवारणे सत्येव हि अद्वितीयपदं सार्थकं भवति, इति ।

अनुपपन्नं च पदत्रयस्य सकलभेदनिषेधपरत्वम् । तथाहि । घट एकः मनुष्य एक इत्युक्ते धर्मिगतसङ्ख्यान्तरव्यवच्छेदमात्रप्रतीतेस्तत्रैव एकशब्दो व्युत्पन्नः । न तु तद्गतगुणान्तरजात्यादिनिषेधे । अव्युत्पत्तेः । अतः प्रकृते स्वगतभेदनिषेधस्तावन्नास्ति । सत् एकमित्यनेन सच्छब्दवाच्यं धर्मि नानेकं न बहु इत्येतावन्मात्रावगमात् । वक्ष्यमाणसृष्टिकालीनबहुत्वावस्थाविपरीतावस्थाविरूपमात्रबोधने तात्पर्यात् । अथ एकमेवेत्येवकारस्य एकत्वावधारणमात्रपरत्वात् सजातीयव्यवच्छेदकत्वं नास्ति । न हि चन्द्र एक एवेत्युक्ते सूर्यो नास्तीति गम्यते । एवं अद्वितीयपदेन सदृशाद्वितीयनिषेधस्यैव प्रतीयमानत्वात् विजातीयनिषेधपरत्वं नास्ति । कारणचेतनत्वेन सदृशाद्वितीयनिषेधेन उपपद्यमानं तत् कथं विजातीयनिषेधपरतया हठाद्व्याख्येत ।

एवं पदसामर्थ्यविरुद्धं सकलभेदनिषेधपरत्वं पदत्रयस्येति बोध्यम् । तदैक्षत बहु स्यामिति स्वगतभेदोक्तेः तन्निवारणपरत्वमसम्भवि । अनेन

जीवेनेति इदमा निर्देशपूर्वक जीवात्मोक्तेः तेजोऽसृजत अपोऽसृजत अन्नमसृजन्तेति तेज आदिसृष्टिवचनाच्च सजातीयविजातीयनिवारणपरत्वमप्यसम्भवीति । किञ्च नेद ब्रह्मलक्षणपरं वाक्यं सत्य ज्ञानमनन्तमितिवत्, येनैवमतिक्लिष्टार्थवर्णनप्रयासः सोढव्यः । ब्रह्म वा इदमग्र आसीत्, आत्मा वा इदमग्र आसीदित्यादिवत् जगतः सृष्टिप्राक्कालावस्थामात्रप्रतिपादकत्वात् । अग्रे आसीदिति कालविशेषग्रहणात् । न हि तदानीमेव त्रिविधभेदशून्य ब्रह्मेष्यते ।

किञ्च समस्तकल्याणगुणाकरेण सता तदात्मकपारमार्थिकजगत्सृष्टिप्रतिपादकतया कृत्स्नप्रकरणसामञ्जस्ये सति प्रथमं सकलभेदशून्यब्रह्मपरतया किञ्चिद्वाक्य व्याख्याय उपरि प्रतिपाद्यमानस्यापूर्वस्य अर्थजातस्य कृत्स्नस्य मिथ्यात्वाभिधान कथ युज्येतेति ।

## २६. ज्ञाननिवर्त्यत्वानुपपत्तिः

तरति शोकमात्मवित्, तथा विद्वान्नामरूपाद्विमुक्तः, भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ इत्यादिश्रुतिस्मृतिबोधितज्ञाननिवर्त्यत्वानुपपत्तिरपि बन्धमिथ्यात्वे प्रमाणम् । सत्यत्वे ब्रह्मवदनिवर्त्यत्वापत्तेः इति यदुक्तं तदपि न । यथा प्रत्यक्षविरोधात् श्रुतेर्भवदभिमतमद्वैतं नार्थः तथैव तत एव हेतोः बन्धनिवर्तकतया भवदभिमत ज्ञान न श्रुतिस्मृतिप्रतिपाद्योऽर्थ इति स्थितेः । "ओमित्यात्मान ध्यायथ "स्मृतिलम्भे सर्वग्रन्थीना विप्रमोक्षः," "आत्मेत्येवोपासीत" इत्यादिभिरन्यादृशमेव हि ज्ञान बन्धनिवर्तकतयापदिश्यते, न तु भवदभिमतनिर्विकल्पकवृत्तिरूपमिथ्याज्ञानम् । ननु आत्मवित् ब्रह्मविदिति केवल वेदन श्रूयते । सत्यम् । छागो वा मन्त्रवर्णादिति न्यायेन तस्योपासनरूपे विशेषे पर्यवसान

प्रतिपाद्य तत्प्रतिपादनेनैव सतो जगदुपादानत्वं प्रतिपादितमिति
स्वव्यतिरिक्तनिमित्तकारणमद्वितीयपदेन प्रतिषिद्धम् ।"

इति । इदमुक्तं भवति । अस्मिन् वाक्ये सदिति सत्तायोगस्य, आसीदिति भवनक्रियायाः, अग्र इति कालस्य, उपरि तदैक्षतेत्यादिना ईक्षणादेश्च वचनात् सकलभेदशून्यब्रह्मप्रतिपादनप्रसङ्गः सर्वथा अत्र नास्ति । बहु स्यामिति उपरि वक्ष्यमाणावस्थाविलक्षणावस्थाप्रतिपादकतया एकशब्दः एवकारोत्तरं प्रलयकालिकाविभक्तनामरूपत्वावस्थां सावधारणमाह । सदेवेति ब्रह्मण उपादानत्वप्रतिपादनात् निमित्तकारणमन्यत् स्यादित्युदयमानां शङ्कां वारयति अद्वितीयशब्दः निमित्तकारणीभूतवस्त्वन्तरशून्यमित्यर्थः । सृज्येन केनचित् सद्वितीयत्वस्य एकमेवेत्यनेनैव निवारितत्वात्, स्रष्ट्रा केनचित् सद्वितीयत्वनिवारणे सत्येव हि अद्वितीयपदं सार्थकं भवति, इति ।

अनुपपन्नं च पदत्रयस्य सकलभेदनिषेधपरत्वम् । तथाहि । घट एकः मनुष्य एकः इत्युक्ते धर्मिगतसङ्ख्यान्तरव्यवच्छेदमात्रप्रतीतेस्तत्रैव एकशब्दो व्युत्पन्नः । न तु तद्गतगुणान्तरजात्यादिनिषेधे । अव्युत्पत्तेः । अतः प्रकृते स्वगतभेदनिषेधस्तावन्नास्ति । तत् एकमित्यनेन सङ्ख्यैव वाच्यं धर्मि नानेकं न बहु इत्येतावन्मात्रबोधात् । वक्ष्यमाणसृष्टिकालीनबहुत्वावस्थाविपरीतावस्थाविशेषमात्रबोधने तात्पर्यात् । अथ एकमेवेत्येवकारस्य एकत्वावधारणमात्रपरत्वात् सजातीयव्यवच्छेदकत्वं नास्ति । न हि चन्द्र एक एवेत्युक्ते सूर्यो नास्तीति गम्यते । एवं अद्वितीयपदेन सदृशद्वितीयनिषेधस्यैव प्रतीयमानत्वात् विजातीयनिषेधपरत्वं नास्ति । कारणचेतनस्य सदृशद्वितीयनिषेधेन उपपद्यमानं तत् कथं विजातीयनिषेधपरतया हठाद्व्याख्येत ।

एवं पदसामर्थ्यविरुद्धं सकलभेदनिषेधपरत्वं पदत्रयस्येति बोध्यम् । तदैक्षत तदसृजतेति स्वगतभेदोक्तेः तन्निवारणपरत्वमसम्भवि । अनेन

जीवेनेति इदमा निर्देशपूर्वकं जीवात्मोक्तेः तेजोऽसृजत अपोऽसृजत अन्नमसृजन्तेति तेज आदिसृष्टिवचनाच्च सजातीयविजातीयनिवारण-परत्वमप्यसम्भवीति । किञ्च नेदं ब्रह्मलक्षणपरं वाक्यं सत्यं ज्ञान-मनन्तमितिवत्, येनैवमतिक्लिष्टार्थवर्णनप्रयासः सोढव्यः । ब्रह्म वा इदमग्र आसीत्, आत्मा वा इदमग्र आसीदित्यादिवत् जगतः सृष्टि-प्राक्कालावस्थामात्रप्रतिपादकत्वात् । अग्रे आसीदिति कालविशेषग्रह-णात् । न हि तदानीमेव त्रिविधभेदशून्यं ब्रह्मेष्यते ।

किञ्च समस्तकल्याणगुणाकरेण सता तदात्मकपारमार्थिकजगत्सृष्टि-प्रतिपादकतया कृत्स्नप्रकरणसामञ्जस्ये सति प्रथमं सकलभेदशून्यब्रह्म-परतया किञ्चिद्वाक्यं व्याख्याय उपरि प्रतिपाद्यमानस्यापूर्वस्य अर्थ-जातस्य कृत्स्नस्य मिथ्यात्वाभिधानं कथं युज्येतेति ।

## २६. ज्ञाननिवर्त्यत्वानुपपत्तिः

तरति शोकमात्मवित्, तथा विद्वान्नामरूपाद्विमुक्तः, भिद्यते हृदय-ग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ इत्यादिश्रुतिस्मृतिबोधितज्ञाननिवर्त्यत्वानुपपत्तिरपि बन्ध-मिथ्यात्वे प्रमाणम् । सत्यत्वे ब्रह्मवदनिवर्त्यत्वापत्तेः इति यदुक्तं तदपि न । यथा प्रत्यक्षविरोधात् श्रुतेर्भवदभिमतमद्वैतं नार्थः तथैव तत एव हेतोः बन्धनिवर्तकतया भवदभिमतं ज्ञानं न श्रुतिस्मृतिप्रतिपाद्योऽर्थ इति स्थितेः । "ओमित्यात्मानं ध्यायथ" "स्मृतिलम्भे सर्वग्रन्थीनां विप्र-मोक्षः," "आत्मेत्येवोपासीत" इत्यादिभिरन्यादृशमेव हि ज्ञानं बन्ध-निवर्तकतयापदिश्यते, न तु भवदभिमतनिर्विकल्पकवृत्तिरूपमिथ्या-ज्ञानम् । ननु आत्मवित् ब्रह्मविदिति केवलं वेदनं श्रूयते । सत्यम् । छागो वा मन्त्रवर्णादिति न्यायेन तस्योपासनरूपे विशेषे पर्यवसानं

भवति। उक्तं च वाक्यकारेण 'वेदनमुपासनं स्यात् तद्विषये श्रवणात्' इति।

इदमत्र बोध्यम्। श्रुतिस्मृतिबोधितस्य कथं ज्ञाननिवर्त्यत्वस्य। अविषयज्ञानवादिनो हि भवन्त। प्रतीतिबाधाभ्यां प्रपञ्चस्य मिथ्यात्वे सिद्धे अधिष्ठानतत्त्वसाक्षात्कारनिवर्त्यत्वं अन्वयव्यतिरेकाभ्यां लोकतः प्राप्तम्। पुरुषपरतन्त्रत्वाभावाच्च ज्ञानं न विधेयमिति वदन्ति। अतो लोकतः प्राप्तस्य ज्ञाननिवर्त्यत्वस्यानुवादमात्रं श्रुतिस्मृतिवचनेषु, इति स्थिते प्रपञ्चमिथ्यात्वसिद्ध्यधीनसिद्धिकस्यानुवाद्यस्य ज्ञाननिवर्त्यत्वस्यानुपपत्त्या तन्मिथ्यात्वं सिद्ध्यतीति विपरीतनिरूपणे प्रवृत्तिः न युज्यत इति।

## २७ दृष्टिसृष्ट्यनुपपत्तिः

आत्मतत्त्वसाक्षात्कारं जगत्स्थायि। स साक्षात्कारः कदाचिद् भविष्यति। तदा रज्जुसर्पादिवत् जगद् बाधितं भविष्यतीत्येतादृशेन जगन्मिथ्यात्वेनातृप्यन् "यत् किमपि वस्तु यदा ज्ञायते तदाऽस्ति यदा न ज्ञायते तदा नास्तीति इमं दृष्टिसृष्टिवादमवताय समर्थयितुमीहते। न च शक्यः समर्थयितुम्। अतिदौस्थ्यात्। जीवेशादीनामपि घटपटादिवदेव दृष्टिसृष्टित्वापत्तेः 'षडस्माकमनादयः' इत्यनेन विरोधात्। न च तदितरविषय एव दृष्टिसृष्टिः स्वीक्रियत इति वाच्यम्। भवत्स्वीकारास्वीकारयोरतन्त्रत्वात्। यदि घटादिषु सा उपपन्ना कुतो न जीवेशादिषु। किञ्च घटादिशून्ये देशे अस्मद्दृष्टिप्रसरे सति घटादिकं कुतो नोत्पद्यते? घटमपेक्षमाणः पुमान् अन्यं नियुज्य तेनानीतं आदत्ते। स्वदृष्टिमात्रेण स्रष्टुं शक्तः किमिति अन्यं प्रेरयति? कुलालकुविन्दादिदृष्ट्यैव घटपटाद्युत्पत्तौ तेषां मृत्तन्त्वाद्यार्जनप्रयासः किमर्थः? प्रत्यभिज्ञानेन विश्वस्य स्थायित्वप्रतिपादकसूत्रभाष्यविवरणादिभिर्विरोधश्च दुष्परिहारः। यत्तु, कारणात्मना स्थायित्वं स्वीक्रियते। तावतैव बौद्धाभिमतक्षणिकत्वनिराकरणस्योपपत्तेर्नाकरविरोध इति, तदसत्। कार्यस्य

घटस्य उत्पत्तिक्षणादारभ्य विनाशक्षणपर्यन्तं स्थैर्यं हि बौद्धसम्मतक्षणिकत्वनिराकरणेन सिद्धान्तिभिः स्थाप्यते । कारणभूताविद्यात्मना क्षणिकत्वं तैर्नेष्यते । नापि सिद्धान्तिभिर्निराक्रियते । अत इदमसङ्गतम् ।

यच्चात्र "प्रतीतिमात्रशरीरत्वेन नियतकारणाजन्यत्वे स्वर्गाद्यर्थज्योतिष्टोमादिविधिप्रभृतीनामनुपपत्तिः" इत्याक्षेपस्य "स्वाप्नकार्यकारणाभावबोधकवाक्यवदुपपत्ति" इति समाधानमुक्तं तेन अद्वैतनिष्ठा नास्तिक्यफलेति स्वयमेव स्फुटं प्रकाशितम् । स्वाप्नवाक्यं, कारणत्वेन कार्यत्वेन च तद्बोध्ये वस्तुनी, तयोः कार्यकारणभावः, इति हि सर्वमिदं मिथ्या । यदि तत्तुल्यमेव वेदतदर्थकार्यकारणभावादि सर्वं तर्हि आस्तिक्यकारणं किमन्यदवशिष्यते । वेदान्तवाक्यतन्मीमांसादिकमस्तीति चेन्न । तस्यापि स्वाप्नाविशेषात् । बाधाबाधाभ्यां विशेष इति चेन्न । स्वाप्नबाधाबाधयोर्वस्तुतत्त्वनिर्णयाहेतुत्वात् । न हि भूतले सन् घटः स्वप्ने तन्निवृत्त्या निवर्तते । मृतस्य पुरुषस्य वा स्वाप्नसद्भावेन सद्भावो भवति । यत्तु दोषप्रयुक्तत्वाज्ञानेनाबाधोपपत्तिरिति व्याख्यायामुक्तं तत् जागरे घटादिप्रत्ययानामपि तुल्यम् । एषा दोषप्रयुक्तत्वज्ञानसम्भवं वेदान्तवाक्यजन्यब्रह्मप्रत्ययस्यापि तथैव सम्भवति । अतो न कथमपि विशेषः सुवचः ।

एवमेव "तृप्त्यर्थं भोजने परप्रत्यायनार्थं शब्दादौ च प्रवृत्तेरयोगेन स्वक्रियाव्याघातः" इत्याक्षेपस्य "स्वाप्नव्यवहारवदुपपत्तिः" इतीदं न समाधानम् । स्वपतः पुरुषस्य यच्छरीरं यानि च चक्षुःपाणिप्रभृतीनि ज्ञानकर्मेन्द्रियाणि तानि निर्व्यापाराणि तिष्ठन्ति । तन्निरपेक्ष एव स्वाप्नो व्यवहारः सर्वः प्रवर्तते । तत्र स्वक्रियाव्याघातमापादयतामयमभिप्रायः —यथा स्वप्ने सर्वं प्रतीतिमात्रशरीरं तथैव चेत् जागरेऽपि तर्हि स्वप्नवदेवात्रापि सर्वप्रत्यक्षशरीरेन्द्रियनिरपेक्ष एव भोजनादिव्यवहारः प्रवर्तताम् । इति । अत्र समाधातुरयमभिप्रायः—स्वाप्नभोजनादिकमपि शरी-

रेन्द्रियव्यापारपूर्वकमेव । तानि तु शरीरेन्द्रियाणि प्रतीतिमात्रशरीराणीति सम्प्रतिपन्नम् । एवमेव तदानीं निर्व्यापाराण्यपि जागरावस्थायां व्यापारवन्ति शरीरेन्द्रियाणि दृष्टिसृष्टित्वात् प्रतीतिमात्रसाराण्येव । तथा च जागरव्यवहारोऽपि सर्वं स्वाप्नव्यवहारतुल्यं भवति ।

अत्रेदं वाच्यम् । स्वाप्नवस्तुना मिथ्यात्वं सिद्धवत्कृत्य तद्दृष्टान्तेन अन्येषामपि मिथ्यात्वं भवान् साधयितुमिच्छति । विपरिवर्तं कुतो न भवति । शायितं शरीरं सत्यम् । तथैव स्वाप्नमपि शरीरं सत्यमिति । सत्यत्वे किं प्रमाणमिति चेत् प्रतीतिरेव । यत्प्रतीयते तदस्ति । आत्मवत् । प्रतीतस्यापि उत्तरकालबाधे न सत्यत्वमिति चेत् तर्हि बाधनिबन्धनमसत्यत्वमित्यास्थेयम् । बाधितत्वात् स्वाप्नशरीरादि असत्यमिति । एवं सति स्वापकाले शयानस्य अन्यदा चेष्टमानस्य च शरीरस्य अबाधितस्य कथं स्वाप्नतुल्यत्वं स्यात् । एतदुक्तं भवति । बाधितं स्वाप्नं भोजनं वस्तुतो नास्ति । अतस्तस्य वास्तवशरीराद्यपेक्षा न भवति । जागरकालिकभोजनमपि यदि स्वाप्नवत् वस्तुतो न स्यात् तर्हि स्वाप्नभोजनवदेव वास्तवबाह्यशरीरादिव्यापारापेक्षं न स्यात् । एतत्सापेक्षं तु भवति । अतो न स्वाप्नव्यवहारतुल्यत्वमिति । स्वाप्नजागरव्यवहारयोः बाधाबाधाभ्यां वैलक्षण्ये स्थिते वास्तवबाह्यशरीरादिनिरपेक्षत्वसापेक्षत्वाभ्यामपि वैलक्षण्यं दुर्वारम् । अतो जाग्रद्भोजनादिव्यवहारस्य स्वाप्नव्यवहारतुल्यत्वं तद्वदेव स्वप्नदर्शिमनोमात्रकल्पितानन्यदृश्यतत्कालमात्रभाविशरीरेन्द्रियप्रवृत्तिसाध्यत्वेन मातापितृप्रसूतसर्वदृश्यशरीरादिप्रवृत्त्यनपेक्षत्वात् स्वक्रियाव्याघाता दुष्परिहार एवेति ।

अत कर्मव्यवस्थाविरुद्धश्चाय दृष्टिसृष्टिवादः । यत्तु मन्दाधिकारिविषया सेति, तदयुक्तम् । तदनङ्गीकारे प्रसज्यमानाया अव्यवस्थाया अमन्दाधिकारिभिः दृष्टिसृष्टिवादिभिरपरिहारात् । यदि हि दृष्टचैव

वस्तु सृज्यते पूर्वदृष्टो घटः कालान्तरे कथं घट एव दृश्यते न गर्दभः। दृश्यत एव हि स्वप्ने एकमेव वस्तु अन्यथा अन्यथा परिणममानम्। उक्तं च मायामात्रसूत्रभाष्ये—"रथोऽयमिति हि कदाचित् स्वप्ने निर्धारितः क्षणेन मनुष्यः सम्पद्यते। मनुष्योऽयमिति निर्धारितः क्षणेन वृक्षः" इति। एकस्मिन् वस्तुनि भ्रमश्च बहुधा। यथा रज्जौ सर्पः भूदलनमम्बुधारेति। एतेन "पुरुषान्तरप्रतीतेन सह एककालावच्छेदेनापि घटादौ प्रत्यभिज्ञानं भ्रम एव। प्रतिभासस्य भेदात्। यथा एकस्यामेव मन्दान्धकारवर्तिन्यां दशानां युगपत् सर्पभ्रमेण पलायमानानां परस्परसंवादेन एक एव सर्पः सर्वैरनुभूयत इति प्रत्यभिज्ञा भ्रमः। अन्यभ्रमसिद्धस्यान्येन ज्ञातुमशक्यत्वात्" इति यदुक्तं तन्निरस्तम्। तथा हि। बहुभ्रमस्थले सर्वे एकधैव भ्रमन्तीति नियमो नास्ति। रज्जौ हि कदाचित् कश्चित् सर्प इति भ्राम्यति। अन्यः भूभेद इति। अपरः अम्बुधारेति। नैवं प्रमास्थले अनियमो भवति। अभ्रान्ताः सर्वेऽपि घटं घटमेव पश्यन्ति, न तु यः कश्चिदपि अघटम्। दृष्टिसृष्टौ अयं नियमो नोपपद्यते। यद्यप्येकः रज्जुं रज्जुत्वेनेव घटं घटत्वेन पश्येत् तथाप्यन्ये रज्जुं सर्पत्वादिनेव घटं घटभिन्नकिञ्चिद्वस्तुत्वेनापि पश्येयुः, यदि रज्जुसर्पवत् दृष्टिसृष्टिमात्रात्मा घटः स्यात्। दृष्टान्ते दशपुरुषभ्रमसिद्धा दशसर्पाः सन्ति। तेषामैक्यं भ्रान्तिसिद्धमित्येतदनुपपन्नम्। भ्रमात्मकप्रतीतिमात्रस्य तत्र सत्त्वात्। बहिः सर्पात्मकविषयसिद्धौ मानाभावात्। ज्ञानस्य हि सर्वत्र सविषयत्वं दृष्टम्। न तु क्वचिदपि स्वविषयोत्पादकत्वम्। अतः सोऽयं घट इति कालान्तरे यत्प्रत्यभिज्ञानं, दशानां युगपद्दर्शने च संवादेन यदैक्यज्ञानं तदुभयं प्रतीतिनिरपेक्षस्वकारणसिद्धबहिर्वस्तुसत्तां बोधयत् दृष्टिसृष्टिवादस्य दुष्टदृष्टिमूलतां स्पष्टदृष्टियोग्यामापादयतीति ज्ञेयम्। प्रवसन् दृष्टिसृष्टिवादी स्वगृहजनान् असतो मन्यमानः किं तदुचितं सर्वमाचरतीति च विमृश्यम्।

किञ्च अन्धकारावृते गृहे एको घटोऽस्तीति आप्तवचनश्रवणानन्तरं तद्ग्रहणाय प्रवृत्तयोः हस्तौ प्रसार्य प्रसार्य तदुपलम्भाय यतमानयोर्द्वयो रेकस्तमुपलभ्य गृह्णाति, अपरो न । कस्तत्र हेतुः ? क्षीरस्य दध्नो दधित्व-परिणामः भूम्यन्तर्निहितस्य बीजस्याङ्कुरप्रादुर्भावानुगुणपरिणामश्च कस्य दृष्टया सृज्यते ? भवद्गृहस्थस्य वस्तुनः च येन दृष्टस्य तद्दृष्टिसृष्ट-त्वेन तत्स्वामित्वापत्तेः कः परिहारः ?

यत्तु नेह नानास्ति किञ्चनेत्यादिश्रुतिभिः प्रपञ्चस्य मिथ्यात्वेऽध्यस्त रज्जुसर्पादिवत् प्रतिभाससमानशरीरत्वमेव प्रतिभासकालातिरिक्तकालसत्त्व बाधकम् । अतो भिन्नकालीना प्रत्यभिज्ञा भ्रान्तिरिति कृत्वा प्रातर्दृष्टस्य घटस्य सायं जायमाना प्रत्यभिज्ञा भ्रान्तिरित्युच्यते, तद्विपरीतं द्रष्ट-व्यम् । इदम्प्रत्यभिज्ञाबलेन वाक्यान्यथैव नेह नानेति श्रुतिः प्रपञ्चस्य मिथ्यात्वं न बोधयतीत्यवधारणात् । 'एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि (सर्व एत आत्मानो) व्युच्च रन्ति' इति श्रुतिर्दृष्टिसृष्टौ प्रमाणम् । अस्या अयमर्थः । सर्वे प्राणाः जीवा लोकाः, भुवनानि, देवा इन्द्रियाणि, सर्वाणि भूतानि, देवमनुष्या दिरूपाणि अस्मात् 'य एषोऽन्तर्हृदय आकाशः' इति पूर्वं निर्दिष्टात् आत्मनः परमात्मनः व्युच्चरन्ति सुषुप्त्यवस्था विहायोद्गच्छन्तीति । 'क्वैष तदाऽभूत्, कुत एतदागात्, इति द्वौ प्रश्नौ पूर्वं पृष्टौ । तत्र आद्यस्योत्तरं 'एवमेवैष एतच्छेते' इत्यनेनोक्तम् । अथ द्वितीयस्योत्तराभिधानप्रकरणे इदमाम्नायते । जीवस्य सुषुप्तौ परमात्मनि शयनम् । तत एवागच्छति प्रबुध्यमान इति प्रश्नयोः समाधाने उक्ते । अत्र दृष्टिसृष्टिकथायाः कोऽवकाशः । यत्तु 'न तु तद् द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' इत्यादिना सुषुप्तौ सकलकार्यप्रपञ्चलयश्रवणात् पुनः प्राणादिसृष्टिरुच्यते इति तन्न । अस्याः श्रुतेः स्वातिरिक्तज्ञेयाभावेन स्वातिरिक्तज्ञेयविषयक-ज्ञानसामान्यविरहप्रतिपादनपरत्वात् । दृष्टिविनाशित्वेन तदानीमपि

सद्भावमुक्त्वा द्रष्टव्यविषयाभावेन दर्शनाभावो ह्यत्र विवक्षितः। 'यद्वैतन्न पश्यति पश्यन् वै तन्न पश्यति। न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्" इति पूर्ववाक्यश्रवणात्। ननु ज्ञेयाभावो ज्ञेयतयादेवेति चेन्न। ज्ञेयस्य स्वरूपेणाऽभावाऽनुक्तेः। इन्द्रियाणामुपरमे तु ग्रहणयोग्यं किमपि नास्ति। अतो न तद्ग्रहणमिति तात्पर्यात्। ततः प्राज्ञात् अथवा द्रष्टुर्जीवात् यद्वा दृष्टेः अन्यत् विभक्तं पृथग्भूतं द्वितीयं योग्यं किमपि नास्ति यत्पश्येत् द्रष्टा, इति श्रुत्यर्थात्। अत्र पिता अपिता भवतीत्यादिना जागरावस्थायां पितृत्वादिधर्मैः गृह्यमाणानां सुषुप्तौ तथा ग्रहणाभावतात्पर्येण हि अपितृत्वादिकमुच्यते। न तु पिता नास्ति माता नास्तीति स्वरूपतस्तेनामभावमभिप्रेत्य। सर्वकार्यप्रपञ्चलये 'तदभावो नाडीषु तच्छ्रुतेरात्मनि च' इति नाडीपुरीतद्ब्रह्मणां प्रासादखट्वापर्यङ्कन्यायेन समुच्चयसिद्धान्तविरोधात्। सुषुप्तशरीरस्य तदुच्छ्वासनिश्वासयोश्च प्रत्यक्षत्वेन सकलकार्यलयस्य बाधितत्वाच्च। "तौ ह पुरुषं सुप्तमाजग्मतुः" इति श्रुत्यैव तत्सत्त्वज्ञापनाच्च। यदत्र परिभाषायामुक्तं—"न च सुषुप्तावन्तःकरणस्य विनाशेन तदधीनप्राणादिक्रियानुपपत्तिः। वस्तुतः श्वासाद्यभावेऽपि तदुपलब्धेः पुरुषान्तरविभ्रममात्रत्वात्। सुषुप्तशरीरोपलम्भवत्" इति तत्र प्रत्यक्षापह्नवेन प्रमाणतिरस्कारित्वं स्पष्टम्। नूनमत एवानुशयवान् स पुनराह—"यद्वान्तःकरणस्य द्वे शक्ती ज्ञानशक्तिः क्रियाशक्तिश्चेति। तत्र ज्ञानशक्तिविशिष्टान्तःकरणस्य सुषुप्तौ विनाशः न क्रियाशक्तिविशिष्टस्येति प्राणाद्यवस्थानमविरुद्धम्।" इति। अत्र कोऽभिप्रायः अशद्वयारब्धमन्तःकरणम्। तयोरेकः ज्ञानशक्तिविशिष्टः। अन्यः क्रियाशक्तिविशिष्टः। अनयोराद्यः सुषुप्तौ नश्यति, न द्वितीय इति वा? अखण्डमन्तःकरणम्। तस्य ज्ञानशक्तिर्नश्यति क्रिया शक्तिविशिष्टं तु तदस्तीति वा? आद्ये एकस्य अन्तःकरणांशस्य सत्त्वात् अन्त्ये कृत्स्नस्य तस्य सत्त्वाच्च अन्तःकरणलयो नास्तीत्यभ्युपगतं

भवति। एव चान्तःकरणवदेव अन्यदपि सर्वमस्तीति वक्तु शक्यत्वात् सुषुप्तौ सकलयोपरिरप्रामाणिकी। तेन उत्थितस्य दृष्टिसृष्टिप्रसङ्ग एव नास्तीति ज्ञेयम्। एतेन 'अस्मादात्मन' इति जीवस्य परामर्श। तेन तस्यत्र सृष्टिरुच्यत इति निरस्तम्। एष जीव कुत एतदागादिति प्रश्नोत्तरतया प्रवृत्ते सन्दर्भे अपादानतया निर्दिश्यमानस्य य एषोऽन्त हृदय आकाशस्तस्मिञ्छेत इति पूर्वं सुषुप्तिकालीनशयनस्थानतया निर्दिष्टपरमात्मत्वावश्यम्भावात्। अत एव प्राणा इति जीवाभिधानम्। देवा इतीन्द्रियाणि व्युच्चरन्तीति च उद्गमनार्थकम्। नोत्पत्त्यर्थकम्। अस्वरसत्वात्। पूर्वं 'प्राणान् गृहीत्वा' इति ग्रहणमात्रोक्तेश्च। यत्र यदा एष प्रकृतो जीव सुप्तोऽभूत् तदा एष क्वाभूदिति प्रश्नस्य य एषोऽन्त हृदय आकाश तस्मिन्नभूत् इत्युत्तरमिहोक्तम्। कुत आगादिति प्रश्नस्य च यस्मिन्नभूत् तस्मादेव परस्मादात्मन इत्युत्तरम्। तथा च श्रुति सत आगम्येति। सूत्र च 'अतः प्रबोधोऽस्मात्' इति। तदिह दृष्टिसृष्टि प्रतिपादनप्रयास क्षीरसागरे लवणोपलम्भप्रयासमनुगच्छतीति ज्ञेयम्।

## २८ एकजीववाद

"स च द्रष्टा एक एव। तन्नानात्वे मानाभावात्" इत्येक-जीववादं प्रस्तुत्य निस्सङ्कोच निर्भय निर्लज्ज च लिखति—'अविद्या वशाद् ब्रह्मैक संसरति। स एव जीवः। तस्यैव प्रतिशरीरमहमित्यादि बुद्धि' इति। उपरि च शङ्कापरिहारौ—"अथ ब्रह्मण एव जीवत्वेन तस्यैव बन्धमोक्षाविति तस्य नित्यमुक्तत्वादश्रुतिविरोधः। न। मुक्तेः स्वस्वरूपत्वेन बन्धस्य चाविद्यकत्वेन तदविरोध। न हि मृगतृष्णिका कल्पितोदकेन स्वभावशुष्का मरुभूमिरार्द्रा भवति।" इति। तत्र सुख दुःखव्यवस्था जीवनानात्वे प्रमाणमिति सर्वसम्मतम्। 'सेय देवैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति अहमित्यस्मदा निर्दिष्टाद् ब्रह्मणः अनेन जीवेनेति

इदमा निर्दिष्टस्य जीवस्य व्यतिरिक्तत्वं, 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' इति तन्नानात्व च श्रुतिसिद्धमपि। एव प्रमाणसिद्ध परित्यज्य अप्रामाणिक प्रमाणविरुद्धं चेदुच्यते—अविद्यावशाद् ब्रह्मैव ससरति, स एव जीव इति। न हि जीवब्रह्मणोरैक्यपर किमपि श्रुतिवचनमस्ति। 'ऐतदात्म्यमिदं सर्वम्। तत्सत्यम्। स आत्मा' इति सर्वस्य आत्मा ब्रह्मेत्युक्त्वा स तवाप्यात्मेत्यावेदनपरत्वेन तत्त्वमसीति वाक्यस्य ऐक्यपरत्वाभावात्। न हि सर्वस्यात्मा ब्रह्मेति लोकतः प्राप्तिरस्ति, येन तत्र श्रुतेस्तात्पर्यं न स्यात्। न चास्मिन् प्रमाणान्तराबाधके प्रमाणान्तराबाध्ये प्रमाणान्तराप्राप्ते चार्थे स्थिते लोकवेदसर्वप्रमाणक्षोभकारि अर्थान्तरं स्वीकर्तुं युक्तम्। नेह नानास्तीत्यपि ब्रह्मस्वरूपं कृत्स्न्येन ज्ञानानन्दात्मकमेव, न तु क्वचिदपि तस्मिन् अन्यथात्वमस्तीति वा अब्रह्मात्मक किमपि वस्तु नास्तीति वा बोधयतीति नाद्वैतपरम्। एवमन्यदपि। अतो ब्रह्मणो जीवत्वमप्रामाणिकम्। अपहतपाप्मा विजरो विमृत्युः विशोको विजिघत्सो विपिपासः, अनश्नन्नन्यो ऽभिचाकशीति, निरवद्य निरञ्जनम्, भोक्ता भोग्यं प्रेरितारं च मत्वा, इत्यादिप्रमाणशतविरुद्ध च। यस्य स्मरणमात्रेण जन्मससारबन्धनाद् विमुक्तिरिष्यते तस्यैव संसारित्वाभिधान वैदिकानामतिमात्रसुदुःसहम्। न च मृगतृष्णिकोदकमरुभूमिदृष्टान्त इह सङ्गतः। न हि मरुभूमिरुदकेन सिक्ताऽस्मीति परितप्यते। पुनः शुष्कीभवनाय वा त्वरते। तदुपाय वा ऽन्वेषयति। उपदिश्यते वा केनचित् सः। भवास्तु ब्रह्मैवाविद्यावशात्संसरति स एव जीव इत्यातिष्ठते। तेन बन्धमोक्षौ तस्यैवोक्तौ भवतः। आविद्यकत्वेऽपि बन्धस्य अपुरुषार्थत्वमस्ति न वा। आद्ये तद्वतो ब्रह्मणो नित्यमुक्तत्वविरोधः। अन्त्ये मुक्त्युपायोपदेशवैयर्थ्यम्। तदेवम्

हीयेत ब्रह्मभावाद्वा जह्याद्वा ब्रह्म जीवताम्।
नत्वस्ति योग उभयोस्तेजस्तिमिरयोरिव॥

भवति। एवं चान्तःकरणवदेव अन्यदपि सर्वमस्तीति वक्तुं शक्यत्वात् सुषुप्तौ सकलशोषित्वमप्रामाणिकी। तेन जात्यतस्य दृष्टिसृष्टिप्रसङ्ग एव नास्तीति ज्ञेयम्। एतेन 'अस्मादात्मन' इति जीवस्य परामर्श। तेन तत्कर्तृका सृष्टिरत्रोच्यत इति निरस्तम्। एष जीव कुत एतदागादिति प्रश्नोत्तरतया प्रवृत्ते सन्दर्भे अपादानतया निर्दिश्यमानस्य य एषोऽन्त हृदय आकाशस्तस्मिञ्छेत इति पूर्वं सुषुप्तिकालीनशयनस्थानतया निर्दिष्टपरमात्मत्वावश्यम्भावात्। अत एव प्राणा इति जीवाभिधानम्। देवा इतीन्द्रियाणि व्युच्चरन्तीति च उद्गमनार्थकम्। नोत्पत्त्यर्थकम्। अस्वरसत्वात्। पूर्वं 'प्राणान् गृहीत्वा' इति ग्रहणमात्रोक्तेश्च। यत्र यदा एव प्रकृतो जीव सुप्तोऽभूत् तदा एष क्वाभूदिति प्रश्नस्य य एषोऽन्त-र्हृदय आकाशः तस्मिन्नभूत् इत्युत्तरमिहोक्तम्। कुत आगादिति प्रश्नस्य च यस्मिन्नभूत् तस्मादेव परस्मादात्मन इत्युत्तरम्। तथा च श्रुति सत आगम्येति। सूत्र च 'अतः प्रबोधोऽस्मात्' इति। तदिह दृष्टिसृष्टि प्रतिपादनप्रयास क्षीरसागरे लवणोपलम्भप्रयासमनुगच्छतीति ज्ञेयम्।

## २८ एकजीववाद

"स च द्रष्टा एक एव। तन्नानात्वे मानाभावात्" इत्येक-जीववाद प्रस्तुत्य निस्सङ्कोच निर्भय निर्लज्जं च लिखति—'अविद्या वशाद् ब्रह्मैवैकं संसरति। स एव जीवः। तस्यैव प्रतिशरीरमहमित्यादि बुद्धि' इति। उपरि च शङ्कापरिहारौ—"अथ ब्रह्मण एव जीवत्वेन तस्यैव बन्धमोक्षाविति तस्य नित्यमुक्तत्वादमुक्तिविरोधः। न। मुक्ते स्वस्वरूपत्वेन बन्धस्य चाविद्यकत्वेन तदविरोध। न हि मृगतृष्णिका कल्पितोदकेन स्वभावशुष्का मरुभूमिरार्द्रा भवति।" इति। तत्र सुख दुःखव्यवस्था जीवनानात्वे प्रमाणमिति सवार्थदतम्। 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इति अहमित्यस्मदा निर्दिष्टाद् ब्रह्मणः अनेन जीवेनेति

इदमा निर्दिष्टस्य जीवस्य व्यतिरिक्तत्वं, 'नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्' इति तन्नानात्वं च श्रुतिसिद्धमपि। एवं प्रमाणसिद्धं परित्यज्य अप्रामाणिकं प्रमाणविरुद्धं चेदमुच्यते—अविद्यावशाद् ब्रह्मैव संसरति, स एव जीव इति। न हि जीवब्रह्मणोरैक्यपरं किमपि श्रुतिवचनमस्ति। 'ऐतदात्म्यमिदं सर्वम्। तत्सत्यम्। स आत्मा' इति सर्वस्य आत्मा ब्रह्मेत्युक्त्वा स तवाप्यात्मेत्यावेदनपरत्वेन तत्त्वमसीति वाक्यस्य ऐक्यपरत्वाभावात्। न हि सर्वस्यात्मा ब्रह्मेति लोकतः प्राप्तिरस्ति, येन तत्र श्रुतेस्तात्पर्यं न स्यात्। न चास्मिन् प्रमाणान्तराबाधके प्रमाणान्तराबाध्ये प्रमाणान्तराप्राप्ते चार्थे स्थिते लोकवेदसर्वप्रमाणक्षोभकारि अर्थान्तरं स्वीकर्तुं युक्तम्। नेह नानास्तीत्यपि ब्रह्मस्वरूपं कार्त्स्न्येन ज्ञानानन्दात्मकमेव, न तु क्वचिदपि तस्मिन् अन्यथात्वमस्तीति वा अब्रह्मात्मकं किमपि वस्तु नास्तीति वा बोधयतीति नाद्वैतपरम्। एवमन्यदपि। अतो ब्रह्मणो जीवत्वमप्रामाणिकम्। अपहतपाप्मा विजरो विमृत्युः विशोको विजिघत्सो विपिपासः, अनश्नन्नन्यो ऽभिचाकशीति, निरवद्यं निरञ्जनम्, भोक्ता भोग्यं प्रेरितारं च मत्वा, इत्यादिप्रमाणशतविरुद्धं च। यस्य स्मरणमात्रेण जन्मसंसारबन्धनाद् विमुक्तिरिष्यते तस्यैव संसारित्वाभिधानं वैदिकानामतिमात्रसुदुःसहम्। न च मृगतृष्णिकोदकमरुभूमिदृष्टान्त इह सङ्गतः। न हि मरुभूमिरुदकेन सिक्ताऽस्मीति परितप्यते। पुनः शुष्कीभवनाय वा त्वरते। तदुपायं वा ऽन्वेषयति। उपदिश्यते वा केनचित् सः। भवास्तु ब्रह्मैवाविद्यावशात्संसरति स एव जीव इत्यातिष्ठते। तेन बन्धमोक्षौ तस्यैवोक्तौ भवतः। आविद्यकत्वेऽपि बन्धस्य अपुरुषार्थत्वमस्ति न वा। आद्ये तद्वतो ब्रह्मणो नित्यमुक्तत्वविरोधः। अन्त्ये मुक्त्युपायोपदेशवैयर्थ्यम्। तदेवम्

हीयेत ब्रह्मभावाद्वा जह्याद्वा ब्रह्म जीवताम्।
नत्वस्ति योग उभयोस्तेजस्तिमिरयोरिव॥

ब्रह्मैव संसरतीति शश एव शृङ्गवानितिवद् व्याहतभाषितम्। जीवस्य ब्रह्मव्यतिरेके सिद्धे तन्नानात्वं सुखदुःखव्यवस्थादिभिः एको बहूनामित्यादिश्रुतिभिश्च सिद्ध्यतीति न तत्साधने अत्र यत्नः क्रियते। नित्यत्वचेतनत्वैकत्वानि यथा ब्रह्मणः परमार्थतः सन्ति तथा जीवस्य नित्यत्वचेतनत्वबहुत्वानि परमार्थत सन्तीति सहपाठतात्पर्यम्। नित्यत्व चेतनत्वयोरविशेषेऽपि असङ्ख्येयानां जीवानां सर्वेषां कामसम्पत्ति तदनु ब्रह्मायत्तेति तन्महिमातिशयं व्यनक्ति मन्त्रः।

स्यातां मुक्ततया प्रमाणवचनैर्देवानृषीन्मानवान्
निश्शङ्कं कथयन्ति मुक्तिरहितान्मुक्तान् तथा जीवत।
दीप्तार्थं प्रसभं नयन्ति वचसा गुम्भं प्रशंसापरं
दुर्व्याख्यातवचःकणाश्च यमहं मान्यत्वधीदुःस्थिता॥

## २६ अज्ञाने प्रत्यक्षम्

जगतो मिथ्यात्वसाधनोपयुक्तमुक्त्वा तदुपादानभूताज्ञाननिरूपणमारभमाण प्रथमं तस्य लक्षणमाह अनादिभावरूपत्वे सति ज्ञाननिवर्त्यत्वं वा ज्ञानत्वेन साक्षात् तन्निवर्त्यत्वं वा भ्रमोपादानत्वं वा तल्लक्षणम्, इति। अज्ञानमिति अविद्येति च पर्यायौ। अज्ञानमित्यस्य ज्ञानाभाव इति मुख्योऽर्थ। अत एवाहुः—

अप्रामाण्यं त्रिधा भिन्नं मिथ्यात्वाज्ञानसंशयैः।

इति। अद्वैतसिद्धये तु जगतो मिथ्यात्वं ज्ञाननिवर्त्यत्वं च आस्थेयं भवति। त्रिगुणात्मिकाया परमार्थसत्याः प्रकृतेर्जगदुपादानत्वे तदयोगात् अज्ञानमुपादानमिति कल्पयन्ति। अस्य प्रसिद्ध्यनुरोधेन अभावरूपत्वे ततो भावरूपजगदुत्पत्त्यनुपपत्ते भावरूपमिदमज्ञानमित्याचक्षते। ईदृशे अज्ञाने प्रमाणत सिद्धे कामिमानि वा अन्यानि वा लक्षणानि भवेयुः। न खलु तद्विमर्शेन किमपि प्रयोजनमस्माकमस्ति। अतस्तमुपेक्ष्य तस्याप्रामाणिकत्वमेव प्रदर्शयामः।

तथा हि। यदुच्यते 'अहमज्ञो मामन्यं च न जानामि' इति प्रत्यक्षं प्रमाणम् इति, तन्न। गच्छति गमनाश्रयः, न गच्छति गमनाभावाश्रयः, करोति कृत्याश्रयः, न करोति कृत्यभावाश्रयः, इति यथा तथा, जानाति ज्ञानाश्रयः, न जानाति ज्ञानाभावाश्रयः, इति व्युत्पत्तिसिद्धेऽर्थे स्थिते अपूर्वार्थकल्पनाया अनवकाशात्। 'अहमज्ञः' इत्यभिलपनीयस्य प्रत्यक्षस्यान्यस्य वा ज्ञानस्य ज्ञानान्तराभावमात्रविषयत्वात्। नन्वभावज्ञाने प्रतियोग्यनुयोगिज्ञानं कारणम्। तदस्ति चेत् न जानामीति प्रत्ययो न घटते। तज्ज्ञानाश्रयत्वात्। नास्ति चेत् तदाऽपि न घटते। कारणभूतज्ञानाभावात्। तथा चानुभवसिद्धस्य प्रत्ययस्य ज्ञानाभावविषयकत्वानुपपत्त्या विलक्षणं विषयान्तरं सिद्ध्यतीति चेन्न। विलक्षणविषयत्वेऽपि व्याघातस्य तुल्यत्वात्। अहं घटं न जानामीति प्रतीतिर्हि घटाज्ञानविषया। तत्र घटज्ञानमस्ति न वा। आद्ये कथं तदज्ञानम्। अन्त्ये कथं घटविषयकाज्ञानवानहमिति प्रत्ययो भवेत्। एवमहमर्थज्ञानाज्ञानाभ्यामपि व्याघातो द्रष्टव्यः। ज्ञाने मां न जानामीति प्रतीत्ययोगात्। अज्ञाने अहं न जानामिति प्रतीत्ययोगात्।

अथाहमर्थतयाऽभिप्रेतं साक्षिचैतन्यं भावरूपमज्ञानं साक्षाद् विषयीकरोति। तद्द्वारा तदवच्छेदकं घटादिरूपं विषयं च। तेन विशिष्टप्रतीतिरुपपन्ना। न च कश्चन व्याघात इति। न। घटज्ञानविरहकाले सर्वदा घटमहं न जानामीति प्रतीत्यनुवृत्त्यापत्तेः। अपेक्षणीयान्तराभावात्। न हि तस्य तस्य वस्तुनः ज्ञानं वा तदभावो वेत्येतद् विना इदमहं न जानामि इदमहं न जानामीत्यज्ञाततया तत्तद्वस्तुनः तत्तद्वस्त्वज्ञानस्य वा पृथगनुभवो दृश्यते। किं नाम त्वमिदं जानासीति प्रश्नोत्तरतया तु कदाचित् इदमहं न जानामीति व्यवहारो भवति। तत्र इदमर्थस्य सामान्यतो ज्ञानसत्त्वेऽपि न जानामीति विशेषज्ञानप्रतिषेधान्नास्ति व्याघातः। घटमहं न जानामीति च घटशब्दवाच्योऽर्थः

ईदृशास्वरूपस्वभाव इति न जानामीत्येतदर्थकम् । "अथ धर्म प्रतिपन्नो वा स्यात् अप्रतिपन्नो व' इत्यादि धर्मजिज्ञासाधिकरणभाष्यमिहानुसन्धेयम ।

नन्वेवं ज्ञानविशेषप्रतिषेधस्थले उपपत्तावपि मयि ज्ञानं नास्तीति ज्ञानसामान्यनिषेधस्थले किं वक्तव्यमिति चेत्, कदाऽयं निषेध ? किं जागरे अथ वा सुषुप्तौ ? आद्ये यत्किञ्चिज्ज्ञानावश्यम्भावात् नायं निषेधः सम्भवी । अन्त्ये नतराम् । प्रतीतिसामान्यस्य तदानीमुपरमे । निषेध प्रत्ययासम्भवात् । कथं तर्हि मयि ज्ञानं नास्तीति प्रतीतिरुपपादनीयेति चेत् यदीय ज्ञानसामान्यविषया तर्हि भ्रान्तानामेव । विवेकिना तु यथोचितं तत्तद्विषयज्ञानविशेषावलम्बिनीति । एतेन त्वदुक्तमर्थं न जानामीति विशेषप्रत्ययमपि व्याख्यातम् । वक्तुः वाक्यप्रयोगात् स कञ्चिदर्थं वक्तीति, स्वमुद्दिश्य प्रयोगात् स्वस्य तज्ज्ञानजननं तेनोद्दिष्टमिति च जानन् श्रोता, वक्तृदोषाद्वा वाक्यदोषाद्वा स्वबुद्धिमान्द्याद्वा तमर्थम-जानन् तं प्रति 'त्वदुक्तमर्थं न जानामि' इति ब्रवीति । अत्र को व्याघातो नाम ? अज्ञानवादस्त्वत्रानुपपन्नः । तथा हि । एववादिन त्वदुक्तवाक्यश्रवणापेक्षा अस्ति न वा । आद्येऽपि दृष्टविषया वा अदृष्टविषया वा । न तावददृष्टविषया । प्रमाणाभावात् । यदि दृष्टविषया सत् किमर्थज्ञानजननार्थं अन्यथा वा । आद्ये अर्थज्ञानस्य जातत्वेन तदज्ञानविनाशात् न जानामीति तदनुभवो दुर्वच । अन्त्ये कथमिति वाच्यम् । तत्तु दुर्वचम् । अपेक्षा नास्तीति द्वितीयपक्षे यो दूरस्थः कश्चित् यो वा सन्निहितोऽन्धबधिर तस्यापि त्वदुक्तमर्थं न जानामीति प्रतीति स्यादिति ।

अथ "एतावन्त कालं न किञ्चिदवेदिषमिति परामर्शसिद्धं सौषुप्त प्रत्यक्षमपि भावरूपाज्ञानविषयमेव" इति यदुच्यते तदपि न युक्तम् । यो हि मातङ्गं न दृष्टवान् स 'किं मातङ्गमद्राक्षीः' इति पृष्टः नाहं दृष्टवानिति प्रत्येति वदति च । अयमस्य सार्वकालीन प्रत्यय मातङ्गदर्शन-

मात्र साधयति, न तु अदर्शनप्रत्यक्षम्। न हि स प्रातःकाले गजादर्शन मेऽस्तीति प्रतीतवान्। एवमेव प्रकृते न किञ्चिदवेदिषमिति सुषुप्ति-कालीनमवेदनं प्रबुद्धोऽनुसन्धत्ते। न तु ततोऽधिकं किमपि। अत अनेन परामर्शेन सौषुप्ते प्रत्यक्ष एवासिद्धे कुतस्तस्य भावरूपाज्ञानविषयत्वम्। ननु सुषुप्तावपि अहमर्थतया विवक्षित अज्ञानवृत्तिप्रतिबिम्बित चैतन्यं स्वानुभवशीलं भवति। तदेव स्वावच्छेदकाज्ञानप्रत्यक्षम्। तस्य च अहमिति परामृश्यमानत्वात् सौषुप्त प्रत्यक्ष परामर्शसिद्धमेवेति चेन्न। अहमर्थो य कोऽपि भवतु। तदनुभवोऽपि यः कश्चिदास्ताम्। परामर्शे 'न किञ्चिदवेदिष' मित्ययमशः किरूप इति विचारः सम्प्रति क्रियते। अवेदनमात्रमिह विषयः नत्ववेदनप्रत्यक्षमित्येतत् स्पष्टमेव। न च धर्म्यैव अवेदनप्रत्यक्ष भवतीति वाच्यम्। भवतु वा मा वा। अत्यन्तम-प्रसक्तविचारान्तरमेतत्। अहमवेदिषमित्युक्ते अहमर्थस्य वेदनाश्रयत्व प्रतीयते। नञ्योगे तत्प्रतिषेधः प्रतीयते। न किञ्चिदिति विषयनिर्दे-शाच्च प्रबोधकाले यद्वेदन भवति तस्य व्यतिरेकानुसन्धानमात्रे तात्पर्य-मिति गम्यते। तेनानेन परामर्शेन सुषुप्तिकाले अवेदनप्रत्यक्षसिद्धयभि-धानमनुपपन्नम्। परामृश्यमानमवेदन च वेदनाभावरूपमेव न भावरूप किञ्चित्। क्लृप्तेनैव प्रतीत्युपपत्तौ अपूर्वस्य कस्यचित् कल्पनायोगात्। अभावो हि भवताऽप्यङ्गीक्रियते। ज्ञानमभूदिति प्रध्वंसाभावः। नास्तीत्य-त्यन्ताभावः। भविष्यतीति प्रागभाव इति। न चात्र "उत्पत्तिभविष्यत्ता-मात्रमुच्यते। न प्रागभाव। अन्यथा दिनान्तरोत्पत्स्यमानघटे एतद्दिन-वृत्तिप्रागभावप्रतियोगित्वेन, अद्य घटो भविष्यतीति धीप्रसङ्ग" इति वाच्यम्। किमद्य घटोऽस्तीति प्रश्ने अद्य नास्तीति तात्पर्येणैव भविष्य-तीत्युत्तरदानेन तस्याभावविषयकत्वावश्यम्भावात्। अस्य चाभावस्य घटोत्पादकसामग्रीसमवधानव्यङ्ग्यत्वात् कालान्तरोत्पत्स्यमानघटप्राग-भावस्याद्य विद्यमानत्वेऽपि अद्य घटो भविष्यतीति न व्यवहार इति न

किञ्चिदेतत्। किमिदानीमत्र घट पश्यसीति पृष्ट न पश्यामीत्याह। किमत्र पवित्रं शृणोषीति पृष्टः न शृणोमीत्याह। दर्शनस्य श्रवणस्य चाभाव एव ह्यत्राभिप्रेत। न तु भावरूपमदर्शन वा अश्रवणं वा। प्रतीत्यननुरूपत्वात्। एवमेव प्रकृतेऽपि। सौपुप्तस्य अहमर्थानुभवस्य तन्मात्रविषयत्वमेव। न तु प्रकारतया विषयान्तरग्राहकत्व सम्भवतीति न ज्ञेयम्। अत एव 'एतावन्त काल न किञ्चिदवेदिषम्' इतीद न स्मरणम्। अवेदनस्य पूर्वमननुभूतत्वात्। अपि तु अर्थापत्त्या अनुमानेन वा जात परोक्षानुभव। ज्ञान जातमभविष्यच्चेत् अद्य अस्मरिष्यत। न च स्मर्यते। तस्मान्नासीदिति।

अत्राह। "नैवमनुमान सम्भवति। नियमेनास्मर्यमाणत्वहेतुना पूर्वकालिकज्ञानाभावसाधने तदा उपेक्षणीयज्ञानाभावासिद्ध। न चायमभावो न सिषाधयिषित इति वाच्यम्। तथा सति तस्मिन् अस्मर्यमाणस्वरूपहेतो सत्त्वेन पूर्वकाले अभावरूपसाध्यस्यासत्त्वेन च हेतोः सव्यभिचारत्वापत्ते। अतो न किञ्चिदवेदिषमिति भावरूपाज्ञानपरामर्श एवेत्यभ्युपगम्य तेनैव ज्ञानाभावानुमान वाच्यम्। सर्वत्राज्ञानस्य ज्ञानाभावव्याप्यत्वा"–दिति। तदिद न युक्तम्। उपेक्षणीयज्ञानाभावस्य अनेनैव परामर्शेन साधनीयत्वे निर्बन्धविरहात्। 'अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद' 'विनाशमेवापीतो भवति' इत्यादिभिस्तदवगमात्। अथस्य स्मर्तव्यस्य नियमेनास्मर्यमाणत्वमेव हेतुरिति तस्य उपेक्षणीयज्ञाने विरहाद् व्यभिचारोऽपि नास्ति। यत्तु इदमनुमान मदूष्य भावरूपाज्ञानेन ज्ञानाभावानुमानमास्थीयते तत् झारसङ्केङ्कारादिभिरुदकानुमान प्रतिषिध्य मृगतृष्णिकोदकेन उदकान्तरानुमानप्रयासतुल्यम्। सव्यभिचारश्चाज्ञानहेतु। ज्ञातविस्मृते ह्यज्ञान भवत्येव। न च तेन पूर्वकाले ज्ञानाभावः सिद्ध्यति। तदेव भावरूपाज्ञाने प्रत्यक्षाभावमस्ति।

## ३०. अज्ञानानुमानम्

नाप्यनुमानम् । तथा हि । विवादपदं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकम् , अप्रकाशितार्थप्रकाशकत्वात्, अन्धकारे प्रथमोत्पन्नप्रदीपप्रभावत् , इति विवरणोक्ते अनुमाने तावत् पक्षधर्म्यानुमितिर्यदि स्वविषयगतज्ञानत्वावरणस्वनिवर्त्यवस्त्वन्तरपूर्विका तर्हि अज्ञानान्तरसिद्ध्या अर्थान्तरम् । यदि न, तर्हि तत्र साध्याभावेऽपि हेतोः सत्त्वात् व्यभिचारः । प्रकाशप्रतिबन्धकनिवारकत्वमुपाधिश्च । प्रदीपप्रभा हि घटादिप्रकाशप्रतिबन्धकतमोनिवारिका । तेन तत्र साध्यव्यापकत्वम् । पक्षेऽन्तर्भावेन च साधनाव्यापकत्वमिति । अत एव विवादास्पदं प्रमाणज्ञानं उक्तसाध्यवन्न, ज्ञानत्वात्, यन्नैवं तन्नैवम् , यथा अन्धकारे प्रथमोत्पन्नप्रदीपप्रभेति प्रत्यनुमानं च । न चाप्रयोजकत्वम् । पदार्थान्तरकल्पनालाघवतर्कोपष्टब्धत्वात् ।

एतेन अप्रकाशितार्थप्रकाशकत्वरूपो हेतुः पक्षसपक्षसाधारणो दुर्वच इत्यपि ज्ञापितम् । प्रकाशकत्वं हि ज्ञानस्यैव मुख्यम् । प्रदीपप्रभाया अन्धकारनिरसनमात्रे उपयोगात् । यदि तु यथाकथञ्चित् प्रकाशकत्वमिष्यते तर्हि इन्द्रियसन्निकर्षादावतिप्रसङ्गः । यत्तु प्रकाशकपदवाच्यत्वं ज्ञानालोकयोः साधारणमिति, तदुपहास्यम् । पृथिव्याः शृङ्गित्वसाधकतया प्रयुक्तगोपदवाच्यत्वात्मकहेतुतुल्यत्वात् । अनुकूलतर्कसत्त्वासत्त्वे उभयत्र तुल्ये इति न ततः कश्चिद्विशेषः सुवचः । नन्वप्रकाशविरोधित्वमुभयसाधारणम् । ज्ञानमालोकश्च उभयं विषयप्रकाशकम् । तत्र ज्ञानं अज्ञानविरोधि सत् प्रकाशकम् । आलोकस्तु तमोविरोधी सन् । एवं ज्ञानालोकयोः अज्ञानविरोधित्वतमोविरोधित्वाभ्यां भेदेऽपि विषयस्योभयप्रकाश्यत्वात् उभयोरप्रकाशविरोधित्वं समानम् । तथात्र हेतुतयाऽभिमतमिति चेन्न । इन्द्रियसन्निकर्षादेरपि अप्रकाशविरोधित्वात् । न च साक्षादप्रकाशविरोधित्वविवक्षया निस्तारः । ज्ञानद्वारकत्वस्य प्रदीपप्रभायामपि

तुल्यत्वात्। तदितराद्वारकत्वस्य द्वि द्रव्यसन्निकर्षेऽपि सत्त्वात्। तमोनिरसनद्वारकत्वेन प्रदीपप्रभाया असिद्धेश्च। तस्मादिदमनुमानं नालं भाव रूपाज्ञानसाधनाय। नापि तत्त्वप्रदीपिकोक्तमनुमानम्।

तथा हि। 'चैत्रप्रमा चैत्रगतप्रमाप्रागभावातिरिक्तानादिनिवर्तिका, प्रमात्वात्, मैत्रप्रमावत्" इत्यस्मिन् तावत् विदुषामत्यन्तमुपहास्ये प्रयोगे चैत्रगतप्रमाप्रागभावातिरिक्तप्रागभावनिवर्तकत्वमुपाधिः। मैत्रप्रमाया चैत्रसुखादौ च तत्तत्प्रागभावनिवर्तकत्वात् साध्यव्यापकत्वमविहतम्। पक्षे च तत्प्रागभावातिरिक्तप्रागभावनिवर्तकत्वाभावात् साधनाव्यापकत्वम्। चैत्रप्रमा स्वप्रागभावातिरिक्तानादिनिवर्तिका न, प्रमात्वात्, मैत्रप्रमावत्, इति सत्प्रतिपक्षश्च। न चात्र प्रतियोग्यप्रसिद्ध्यादिदोषावकाशः। न च चैत्रगतप्रमाप्रागभावातिरिक्तस्य स्वजन्यव्यवहारप्रागभावस्य निवर्तकतया पक्षे साधनव्यापकत्वमेवास्तीति वाच्यम्। सिद्धसाधनस्यैव तत्रानुमानदूषणत्वात्। व्यवहारप्रागभावस्य व्यवहार एव निवर्तको न प्रमेति कृत्वा अव्यापकत्वाभिधानात्। विमतः कूपः स्वगतजलातिरिक्त अनुष्णाशीतेतरस्पर्शवद् यद् द्रव्यं तद्वान्, कूपत्वात्, कूपान्तरवत् इति कूपे वह्न्यनुमानतुल्यं चेदमनुमानम्। कूपस्य महिमातिशयसिद्ध्यादि च विपक्षे बाधकमप्यपि सुवचम्। 'विगीतो विभ्रमः एतज्जनकाबाध्यातिरिक्तोपादानकः, विभ्रमत्वात्, सम्मतवत्," इतीदं द्वितीयमप्यनुमानं पूर्ववदेव दुष्टम्। स्वव्यधिकरणस्योपाधित्वात्। विगीतो विभ्रमः स्वजनकाबाध्यातिरिक्तोपादानको न विभ्रमत्वात् सम्मतवत्, इति सत्प्रतिपक्षश्चेति। साध्याभाववत्तैव दृष्टान्तेन साध्यसाधनोपपन्नेनाऽमनः प्रयोगकौशले वा श्रोतृणां मौढ्ये वा दृढप्रत्ययमूयते।

एवं दुर्विनियोगेन शास्त्रज्ञानस्य लभ्यते।

श्रोतापहास्यतापात्रीभवनं केवलं फलम्॥

अथ यानि तादृशान्येव नव्यानमनुमानानि तेषु 'विमता प्रमा प्रमा

भावातिरिक्तस्यानादेर्निवर्तिका, कार्यत्वात् घटवत्' इत्यत्र प्रमाभावातिरिक्ताभावप्रतियोगित्वमुपाधिः। 'भ्रमानुत्तरप्रमा स्वभावातिरिक्तस्वविरोधिनिवर्तिका, प्रमात्वात्, प्रमोत्तरप्रमावत्' इत्यत्र विशेषगुणोत्तरोत्पन्नविशेषगुणत्वम्। ज्ञानत्व स्वविषयावरणनिवर्तकनिष्ठम्, अप्रकाशितार्थप्रकाशकवृत्तित्वात्, आलोकत्ववत् इत्यत्र विषयप्रकाशप्रतिबन्धकतमोनिवारकवृत्तित्वम्। अनित्यज्ञान अभावत्वानधिकरणस्वविरोधिसमानाधिकरणम्। प्रयत्नान्यत्वे सति सविषयत्वे सति अनित्यत्वात्, अनित्येच्छावत्। सा हि ताद्दग्द्वेषसमानाधिकरणा इत्यत्र अनुकूलज्ञानजन्यत्वम्। धेनोः पुच्छ क्षीरवत् शृङ्गादिभिन्नत्वे सति धेन्ववयवत्वात् स्तनवत् इत्येतत्तुल्यमिदम्। सर्वाणीमान्यनुमानान्यप्रयोजकानीति स्थितमेव। तर्कस्य दूषितत्वात्। यत्तु अपरमनुमानम्—"ज्ञानविरोधित्व अनादिभावत्वसमानाधिकरणम्, सकलज्ञानविरोधिवृत्तित्वात्, दृश्यत्ववत्' इति तत्र दृश्यत्व यदि मिथ्यात्वसाधकतया भवदुक्त विवक्षितं तदस्माकमसम्प्रतिपन्नमिति दृष्टान्तासिद्धिः। यदि तु सम्प्रतिपन्न ज्ञेयत्व तत् तर्हि भगवद्ज्ञाननिवर्त्यकर्मवासनादिरूपानादिभावत्वसामानाधिकरण्यमादाय सिद्धसाधनं दोषः। एवमेव अनाद्यभावविलक्षणत्व ज्ञानविरोधिवृत्ति, अनाद्यभावविलक्षणमात्रवृत्तित्वात्, अभिधेयत्ववत् इत्यनुमानान्तरेऽपि अनाद्यभावविलक्षणत्वस्य उक्तज्ञाननाश्यानादिकर्मवासनादिवृत्तित्वमादाय सिद्धसाधन द्रष्टव्यम्। इदन्तु प्रयोगद्वय प्रक्षिप्त मन्यामहे। तत् सिद्ध अनुमानेनापि न भावरूपाज्ञानसिद्धिरिति।

## ३१. अज्ञाने श्रुतिः

श्रुतिषु च भावरूपाज्ञानगन्धोऽपि नास्ति। 'तद्यथा हिरण्यनिधि निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एत ब्रह्मलोक न विन्दन्ति, अनृतेन हि प्रत्यूढा' इति छान्दोग्यवाक्ये गूढ़ निहितात् हिरण्यनिधेः तदुपरि सञ्चरतामिव

अहरहः प्रजानां भेदं दिने दिने आसां ब्रह्मगमनं च प्रतिपाद्य तथापीमा ब्रह्म न विन्दन्तीत्युच्यते। तत्र च कारणमुच्यते 'अनृतेन हि प्रत्यूढा' इति। 'तत्सुकृतदुष्कृते धूनुते' 'भागेन स्थितरे दर्शयित्वाऽथ सम्पद्यते' इत्यादिभिः कर्मसम्बन्ध एव बन्धः तन्नाश एव मोक्ष इति निश्चितम्। ततश्च बन्धदशायां प्रत्यहं ब्रह्म गच्छन्तीनामपि प्रजानां ब्रह्मप्राप्तिविरहे कारणतया निर्दिश्यमानं अनृतं च धर्कं कर्मैवेति स्वरसतः प्रतीयते। एवं सति अर्थान्तरस्यात्र कः प्रसङ्गः? यत्तु 'उत्तरत्र अपहतपाप्मेत्यादिना आत्मनोऽपहतपाप्मत्वप्रतिपादनेन दुष्कर्मप्रत्यूढत्वविरोध' इति तद् ब्रह्मणोऽज्ञत्व साधनव्यसनिनाऽभिधीयमानं न शोभते। नित्यशुद्धमुक्तस्याज्ञत्वं यदि भवति दुष्कर्मवत्त्वं कुतो न भवेत्। न च विरोधो भवति। मुक्तात्मस्वरूपस्य उत्तरत्र अपहतपाप्मत्वादिगुणगणाभिधानात्। इह तु बद्धावस्थायां अनृतप्रत्यूढत्वोक्तेः।

'सुषुप्तौ सर्वकर्मनाशे दुष्कर्मणोऽप्यभाव' इत्यप्यसाधु। प्रलयेऽपि कर्म न नश्यतीति 'न कर्माविभागादिति चेन्नानादित्वात्' इति सूत्रसिद्धान्ते स्थिते सुषुप्तौ कर्मनाशस्य का प्रसक्तिः। ननु न वयमत्यन्तनाशं तदानीं कर्मणां ब्रूमः। कारणात्मनाऽवस्थानमातिष्ठामहे एव। परं तु तत्कारणमज्ञानमेवेति वाच्यमिति चेन्न। 'कृतात्ययेऽनुशयवान्' इत्युक्तरीत्या आत्मन एव कर्मवत्त्वात्। अत एव "कर्मण आवरणत्वानुपपत्तेश्च। ब्रह्मवेदनप्रतिबन्धकतया अनादिब्रह्मावारकं ज्ञाननिवर्त्यं वाच्यम्। तथा च कर्मैव प्रधानमपि नानृतपदाभिधेयम्। तयोर्ज्ञानानिवर्त्यत्वात्।" इति निरस्तम्। कर्मण एव ब्रह्मप्राप्तिप्रतिबन्धकत्वात्। प्रतिबन्धकत्वं चास्य स्वाश्रयधर्मभूतज्ञानसङ्कोचद्वारेति ब्रह्मावरणकल्पने नास्ति प्रमाणम्। उपासनात्मकज्ञाननिवर्त्यत्वं चास्य भवत्येव। 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इति श्रवणात्।

'नासदासीन्नो सदासीत् तदानीं तम आसीत्' इत्यनेन पारमार्थिक-

तुच्छयोर्निषेधेन व्यवहारिकसत्त्वमुच्यते' इति यत् तन्न। प्रलयदशा-वर्णनं ह्येतत्। न च तदा व्यावहारिकं किञ्चिदस्ति। यद्यप्यस्ति, तदाऽपि सृष्टिकालेऽपि सत्त्वात् तदानीमासीदित्येतन्नोपपद्यते। एतेन अनिर्वचनीयमत्रोच्यते इत्यपि निरस्तं ज्ञेयम्। तस्यापि सृष्टिकालेऽपि सत्त्वात्। अतोऽत्र 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते' इत्यत्रैवार्था-न्तरमेव वक्तव्यम्। तच्चोक्तमाचार्यपादैः—"अचित्समष्टौ चिदचिद्व्य-ष्टिलयोऽत्रोच्यते'—इति।

'अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः' इत्यादिषु मायाशब्दोऽपि नाज्ञानवाची। अपि तु विचित्रार्थसृष्टिकर-वाची। एवम्भूता प्रकृतिरिति सैव माया। आह च भगवान् 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इति। ऐन्द्रजालिकादावपि विचित्रार्थ-प्रतिभानोत्पादकत्वादेव मायाशब्दप्रयोगः। अज्ञानवाचित्वे सर्वेश्वरस्य मायिनः अज्ञत्वमनिवार्यम्। यत्तु उपाधे प्रतिबिम्बपक्षपातित्वेन नेश्वरा-सार्वज्ञ्याद्यापत्तिरिति, सेयमपरा दुष्कल्पनापरम्परा। न हि शुद्धचैतन्ये, भावरूपाज्ञाने, तस्यास्मिन् प्रतिबिम्बने, एतत्कृते जीवेश्वरभेदे जगदु-त्पत्तौ वा प्रमाणलेशो वा उपपत्तिर्वा विद्यते। भावरूपमज्ञानं सर्वथा अप्रामाणिकमिति निरूपितं निरूप्यते च। उपपत्तिशून्यं च तत्। यदि भावरूपं, केवलज्ञानमात्रात्तस्य निवृत्तिर्न भवेत्, क्वाप्यदर्शनात्। न हि घटपटादिकं वस्तु क्वचित् ज्ञानेन नश्यद् दृष्टम्। रज्जुसर्पादिकं दृष्टमिति चेन्न। न हि रज्जुसर्पो नाम कश्चन भावोऽस्ति, यो ज्ञानेन निवर्तते। प्रमाणज्ञानेन पूर्वज्ञाने अप्रामाण्यमात्रज्ञापनात्। यदि च शुक्तिरूप्य-तुल्यमिदं भावरूपमज्ञानं तर्हि जगदुपादानं न स्यात्। यथा शुक्तिरूप्यं न द्रव्यान्तरोपादानं भवति। शुक्तिरूप्यादिवत् ज्ञाननिवर्त्यं च जगदु-पादानं चेति दुर्घटम्।

शुद्धचैतन्यस्य अस्मिन् प्रतिबिम्बनं चानुपपन्नम्। नीरूपत्वात्। न

च नीरूपस्याकाशस्य प्रतिबिम्बो दृश्यत इति वाच्यम्। तत्र बिम्बेऽपि वस्तुतो वा भ्रान्त्या वा रूपदर्शनम्। नील नभ इति सर्वानुभवात्। वायोर्हि न प्रतिबिम्बदर्शनं क्वचिदस्ति। अपि च प्रतिबिम्बद्रष्टा कः? न तावत् शुद्धचैतन्यम्। तस्याद्रष्टृत्वात्। न च प्रतिबिम्बमेव। चेतनस्य बिम्बस्यैव दर्पणादौ सर्वत्र द्रष्टृत्वात्। प्रतिबिम्बस्य दर्शनकर्मत्वेन कर्तृत्वानुपपत्तेः। न चाज्ञानं द्रष्टृ। तस्य जडत्वात्। तदेवं सर्वमनुपपन्नमिति स्थितम्। अथापि कल्प्यमानस्याज्ञानस्य ब्रह्मण्येव कल्पनीयत्वात् तस्याज्ञत्वं दुर्वारम्। उपाधेः प्रतिबिम्बपक्षपातित्वेनोपाधिगतस्य मालिन्यस्य प्रतिबिम्ब एव प्रतिभानेऽपि अज्ञानाश्रयत्वस्य ब्रह्मण्यनिवारणात्। अत इदमङ्गीकुर्वन्नवाह सार्वज्ञ्याद्यैश्वर्यस्य मायानिबन्धनत्वाचेति। अस्मदविद्यानिवृत्तये वेदान्तशास्त्रमिति कृत्वा तच्चिन्तायां प्रवृत्य परं ब्रह्मैव अविद्याग्रस्तं सिद्धान्तयद्भिः सुरक्षितस्तावत् वेदान्तसम्प्रदायः।

यः सर्वज्ञः सर्ववित्, सत्यकामः सत्यसङ्कल्पः, स्वाभाविकी ज्ञानबलक्रिया च, ज्ञाज्ञौ द्वावजावीशनीशौ, प्राज्ञेनात्मना सम्परिष्वक्तः, इति वचनशतेन तस्य स्वाभाविकं सार्वकालिकं सार्वज्ञ्यं श्राव्यते। तदस्यन्तमसत् कृत्वा प्रत्युत अज्ञत्वं यत् कल्प्यते तत्र किं प्रमाणलवलेशोऽपि वर्तते। इदं सम्यक् चिन्त्यमानमलं अद्वैतमशास्त्रार्थं इति प्रतिबोधं जनयितुम्। अथाऽपि यन्न प्रतिबुध्यन्ते तन्नूनं तथाविधा महतो भगवन्निमहसङ्कल्पात्।

"एवमेवैषा माया स्वव्यतिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासीकरोति माया चाविद्या च स्वयमेव भवति।" इति श्रुतिः प्रकृतं मायेत्यविद्येति च व्यवहारौचित्यं दर्शयति। यस्मादियं देवतिर्यङ्मनुष्यस्थावरात्मकानि स्वावयवानि अत्यान्तर्याणि क्षेत्राणि उत्पाद्य दर्शयति तस्मात् मायेति तस्या व्यवहारो युक्तः। यस्मात् स्वकी

येन गाढससर्गेण स्वस्मिन्नेव आत्मबुद्धिमुत्पाद्य जीवविषयकमाशविषयकं च ज्ञान आभास अयथार्थं करोति तस्मात् अज्ञानहेतुत्वात् अविद्येति व्यवहारो युक्त इति। अविद्याहेतुत्वादविद्येत्युक्त भवति। यथा गीतासु अमानित्वमदम्भित्वमित्यारभ्य गुणान् पठित्वा 'एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा' इति ज्ञानहेतुत्वात् तेषु ज्ञानत्वोक्तिः अन्येषु अज्ञानत्वोक्तिश्च तथाऽत्र द्रष्टव्यम्। शरीरेन्द्रियादिरूपेण प्रकृतिससर्गो ह्यस्माकं सर्वानर्थहेतुः। अतस्तद्धानाय तस्या अविद्याहेतुतयाऽविद्यात्वरूपणं क्रियते। न त्वज्ञानस्वरूपत्वमुच्यत इति विभावनीयम्। 'महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च' इत्युपक्रम्य हि 'इति क्षेत्र समासेन सविकारमुदाहृतम्।' इति गीयते। अतोऽत्र 'स्वाव्यतिरिक्तानि क्षेत्राणि' इत्युक्त्या सैवाभिप्रेतेति स्पष्टम्। नीहारतमःशब्दावपि जीवस्वरूपतिरोधानहेतुत्वेन तत्त्वज्ञानप्रतिबन्धकत्वात् यथार्हं प्रकृतौ वा कर्मणि वा अन्यत्र वा औपचारिकौ द्रष्टव्यौ। न तु भावरूपाज्ञानवाचिनौ। लोके शास्त्रे वा व्युत्पत्त्यभावात्। कल्पने प्रमाणाभावाच्चेत्यलमधिकेन।

## ३२. अज्ञाने अर्थापत्तिः

अथ यदर्थापत्ति दर्शयता उक्तम्—"जीवस्थानावच्छिन्नब्रह्मानन्दाप्रकाशानुपपत्तिश्च तत्र मानम्।" इति तदपि न हृद्यम्। कर्मतिरोहितस्वरूपत्वादेव तदप्रकाशात्। उपपादकान्तरानपेक्षणात्। कर्म हि सर्वाभ्युपगतम्। तनैवानुपपत्तिपरिहारे अर्थान्तरकल्पनाया नास्त्यवकाशः। यत् पुनः "भ्रमस्य सोपादानत्वान्यथानुपपत्तिरपि अविद्याया प्रमाणम्" इत्यर्थापत्त्यन्तरमुक्त तदुपहास्यम्। 'अद्वैतसिद्धान्तान्यथानुपपत्तिरपि तत्र प्रमाणम्' इति यावदुक्त भवति, तावदेव ह्यनेनापि। परेषा हि आत्मा ज्ञाता। ज्ञान तस्य धर्मः। तद् द्विविध यथार्थं चायथार्थं च। तत्र यथार्थं प्रमेत्युच्यते अयथार्थं भ्रम इति। उभयविधस्यापि ज्ञानत्वात

न भ्रमस्य पृथगुपादानापेक्षा वतत इति। एवं च भ्रमस्य पृथगुपादान-गौरवप्रसङ्गादपि अद्वैतं न शास्त्रार्थं इति ज्ञेयम्।

अथ सत्यत्रिगुण स्मन्प्रधानापादानत्वदूषणम् "सावयवत्वे अनादित्वभङ्ग। निरवयवत्वे परिणामित्वायोगा ब्रह्मवत्।" इति तत्र 'श्रुतेस्तु शब्दमूलत्वात्' इति सूत्रकारैरेव समाधानमुक्तं वेदितव्यम्। अजामिति हि तस्य अनादित्वमुच्यते। एकामित्येकत्वम्। बह्वीः प्रजा जनयन्तीमिति बहूत्पादकत्वं च। अतो धर्मिग्राहकमानसिद्धं प्रधानस्य सावयवत्वं च अनादित्वं च। अत एव सावयवत्वं नानादिभङ्गकम्। अपि तु कार्यत्वम्। यद्वा निरवयवस्यैव परिणामित्वं श्रुत्यभिमतम्। न च ब्रह्मणो निरवयवत्वादपरिणामित्वं भ्रमः। अपि तु प्रमाणाभावात्। निर्विकारमिति तत्प्रतिषेधाच्च। यथैव नेष्यते भवदभिमते अज्ञानेऽपि तुल्य चोद्यम्। यत्तु तस्या काल्पनिकत्वात् पर्यनुयोगायोग। काल्पनिकत्वं च युक्तिविरुद्धत्वं तच्च मिथ्यात्वमिति; तत् तत्त्वविदः परिहसन्ति। युक्तमथ्याक्रामेदिदमज्ञानम्। युक्तिविरुद्धस्वभावत्वादिति।

## ३३ अज्ञातप्रतीति

एवं जगतो मिथ्यात्वं वा तदुपादानतया भावरूपमज्ञानं वा न साधयितुं शक्यमिति दर्शितम्। अथापि तदुभयं सिद्धं मन्यमानं प्रतीतस्यैवाज्ञानस्य जगदुपादानत्वात् तत्प्रतीतिं साधयन्नाह—"सा चाविद्या साक्षिवेद्या। न तु शुद्धचित्प्रकाश्या। साक्षी चाविद्यावृत्तिप्रतिबिम्बितचैतन्यम्—" इति। अत्र शुद्धचैतन्यात् प्रतिबिम्बितचैतन्यस्य को विशेषः येन तस्य अस्थित वेदितत्वमस्य भवति। न खलु उपाधिना प्रतिबिम्बे कश्चन विकार आधीयते। उपाधिस्थं मालिन्यं स्वप्रतिबिम्बस्यतया बिम्बभूतश्चेतनं पश्यतीति हि दृष्टम्। अत्र तु बिम्बस्य शुद्धस्य वेदितृत्वं नास्तीति स्वयमाह। प्रतिबिम्बस्य तु वक्रोत्या नोपपद्यते। बिम्बे अस्थितस्य विशेषस्य प्रतिबिम्बे तदसम्भवयोगात्। तस्माद्-

ज्ञानस्य प्रतीतिदुर्घटैव । प्रतिबिम्बमभ्युपेत्येदमुक्तम् । तदसम्भवस्तु उक्तपूर्वः । वक्ष्यते च । अत. प्रतीत्यसम्भवेन कल्पनवैयर्थ्यादपि अज्ञान-कल्पन न युक्तमिति ज्ञेयम् ।

काल्पनिकत्वे च अज्ञानस्य अनादित्वमिष्ट भज्येत । कल्पनेरयुत्पा-दनाभिधानात् । यत्तु 'कल्पितत्वमात्र हि न दोषः अन्यधीमात्रशरीरत्वे सादित्वे वा तन्त्रम् । किन्तु प्रतिभासकल्पकसमानकालीनकल्पकवत्त्व सादिकल्पकवत्त्व विद्याऽनिवृत्त्यप्रयुक्तनिवृत्तिप्रतियोगित्वं प्रागभावप्रति-योगित्व वा तन्त्रम्", इति । तदनुपपन्नम् । कल्पित च अनादि चेति व्याहतार्थत्वात । अनादि हि न कल्पनामपेक्षते । कल्पनासापेक्ष च कल्प-नातः पूर्वमसिद्धत्वात् अनादि न भवितुमर्हति । 'कल्पनाऽनादिः । अतः तत्सिद्ध वस्त्वपि अनादि" इति चेत् सेयमनादिकल्पना किंरूपेति वक्तव्यम् । अत्राह व्याख्याता—'अविद्योपहितचिद्रूपाऽविद्याकल्प-काऽनादि" इति, . ."अविद्यायास्तु कल्पना स्वोपहितचिदेव" इति च । एव अविद्योपहितचितोऽनादित्वोक्त्या अविद्यायाः तत्कृतस्य चिदुपधानस्य चानादित्वमुक्त भवति । तत्र अविद्याया कल्पको वा कल्पना वा नापेक्ष्यते । अतः उपहितचितः कल्पकत्व कल्पनात्वं वाऽभि-धीयमान न युज्यते । अथ सा कल्पनासापेक्षा तर्हि तदुपहितचितः तदभिधीयमानं न युज्यते । कल्पनीयाया अविद्यायाः तत्कल्पनातः पूर्वमसिद्ध्या तया तदानीं चिदुपाधानासम्भवात् । तस्मात् कल्पितत्वे अनादित्व न घटते । अनादित्वे कल्पितत्व न घटत इति दुरुत्तरं व्यसनम् । पूर्वपूर्वाविद्या उपधायिका, उत्तरोत्तरा कल्पितेति अविद्याभेद-मभ्युपगम्य प्रवाहानादित्वं सुवचम् । परं तु अजामेकामिति श्रुति-विरुद्धमिदम् ।

## २४. चिन्मात्राश्रयत्वम् ।

यत्र 'अविद्याया आश्रयस्तु शुद्ध ब्रह्मैव' इति तदपि न । प्रमाणा-

भावात्। तथा हि। अहमज्ञ इति स्वानुभवस्य सर्ववस्त्वज्ञानविषयत्वा सम्भवः पूर्वमेवोक्त। तस्मान्मूलाज्ञानाश्रयावधारणे अनेन प्रत्ययेन न शक्यम्। तद्विषयत्व कृत्वाऽपि तु ब्रूम। अहमर्थस्यात्र अज्ञानाश्रयत्व प्रतीयते। न तु शुद्धचैतन्यस्य। यत्तु अहङ्कारस्याविद्याधीनत्वेन तदनाश्रयतया चित एवाज्ञानाश्रयत्वमिति, तत्रेद वाच्यम्। किमय अहमज्ञ इति प्रत्यय अद्वैतप्रक्रियया विषयनिरूपणाय उपात्त अथवा अज्ञानतदाश्रयसिद्धौ प्रमाणतया। आद्ये तस्य प्रमाणत्वोपन्यासविरोध। अन्त्ये अविद्याकल्पितत्वेनाज्ञानानाश्रयत्वाभिधान न युक्तम्। यथाप्रतीति विषयस्य ग्राह्यत्वात्। अथाश्रिता ह्यहमर्थं प्रतीयते। अहमिद जानामि, इद न जानामीति। तस्यैव ज्ञानाज्ञाने उभे अप्यङ्गीकार्ये। तमतिलङ्घ्य साक्षिग्रहणमपि न युज्यते। किमुत तदत्यतिलङ्घ्य शुद्धचैतन्य ग्रहणम। अतोऽविद्याया शुद्धचिदाश्रयत्वे अहमज्ञ इति प्रत्ययो न प्रमाणम्।

नापि 'मायान्तु प्रकृति विद्यान्मायिन तु महेश्वरम्' इतीय श्रुति। माया प्रकृति त्रिगुणात्मक प्रधान जानीयात्। मायाशब्दवाच्या प्रकृतिरिति यावत्। मायिन च महेश्वर विद्यात्। स्वामितया नियन्तृतया च तदन्त सर्वकारण सर्वेश्वर जानीयात्। यो महानीश्वर ईश्वराणामपीश्वर सर्वज्ञ सर्वशक्त सर्वाधिपति तदीया सा प्रकृति या मायाशब्दवाच्येति ह्यर्थ मन्त्र आह। या महेश्वर त मायिन विद्यादिति महेश्वरस्य सतः मायास्वामित्वमुच्यते। एवं सति शुद्धचैतन्यस्य मिथ्याभूतभावरूपाज्ञानाश्रयत्वे सचेताः कोन्विद प्रमाणयेत्। 'शाश्वो' इति सुस्पष्टार्था श्रुतिमपव्याख्यानेन कदर्थयन् कथ माप्तवाग् भवेत्।

एव प्रमाण तावन्नास्ति। न चोपपत्ति। आश्रयपदार्थानिरूपणात्। किं भूतलमिव घटस्य, घट इव तद्रूपस्य, वृक्ष इव फलस्य, सूर्यादिरिव प्रभाया चैतन्यमज्ञानस्याश्रयः। न कथमपि। निरवयवत्वात् तस्य।

सङ्गित्वे शुद्धत्वहानेः। ननु शुक्तिरिव शुक्तिरूप्यस्य शुद्धमविद्याया आश्रय इति चेन्न। अध्यासासम्भवात्। न हि तदध्यस्यति। शुद्धत्वात्। न चाविद्या स्वात्मानं तस्मिन्नध्यस्यति। जडत्वात्। न चान्यः कश्चिदध्यसिताऽस्ति। ज्ञातृत्वाभावादपि न शुद्धज्ञानाश्रयत्वम्। ज्ञातुरेव ह्यज्ञानम्। न हि घटोऽज्ञ इति व्यवहरन्ति। नन्वविद्यावच्छिन्नचैतन्यस्य ज्ञातृत्वसत्त्वात् नोक्तानुपपत्तिरिति चेन्न। शुद्धस्य तदभावेन दोषतादवस्थ्यात्। यस्याज्ञानं तस्य हि ज्ञान वाच्यम्। वैयधिकरण्यायोगात्। अविद्याश्रयत्व शुद्धस्य, ज्ञानाश्रयत्वमवच्छिन्नस्येति। अवच्छिन्नस्यापि ज्ञातृत्व दुवचमिति पूर्वमेवोक्तम्। तत्र नीरूपस्य ब्रह्मण. प्रतिफलन तावन्नास्ति। यत्तु रूपवत एव प्रतिबिम्ब इति व्याप्तेः रूपादौ व्यभिचाराद्भङ्गः, इति, तन्न। तादात्म्यसमवायान्यतरसम्बन्धेन रूपवत एव प्रतिबिम्ब इत्येवंरूपत्वात् व्याप्तेः। स्वाश्रयस्य चाक्षुषत्व प्रतिफलनयोग्यत्व च आपादयता रूपस्य स्वस्य तथात्वे इतरानपेक्षत्वात। न चाकाशे व्यभिचारः। बिम्बे रूपग्रहणादेव तत्र प्रतिफलनप्रतीतेः। दूरस्थनीलनभस एव हि प्रतिबिम्बदर्शनम्। न तु सन्निहितनीरूपनभसः। एव लोहिततया स्फटिकबिम्बदर्शनादेव तथाविधप्रतिबिम्बदर्शनमिति ज्ञेयम। तस्माद्रूपवत एव, चाक्षुषस्यैव, प्रतिबिम्ब इतीद स्थितम्।

प्रतिध्वनिरस्तीति चेत् काममस्ति। प्रतिब्रह्मापि तथा प्रतीतं चेदभ्युपगम्येतैव। 'रूपाद्यभावाद्धि नायमर्थः प्रत्यक्षगोचरः' इति तर्काप्रतिष्ठानसूत्रस्थं भवद्भाष्यं च भवताऽवधेयम्। न च श्रुतिबलाश्रिता प्रतिबिम्बसिद्धिः। तद्बोधकश्रुत्यभावात्। 'रूप रूपं प्रतिरूपो बभूव' इत्यस्य स्वसृष्ट तत्तद्रूप प्रविश्य तत्तदाकारो वर्तत इत्यर्थः। 'एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इति स्मृतिवाक्ये स्वयमेक एव सन् तत्तद्वस्त्वात्मना बहुधा दृश्यते। तत्र तत्र स्थितोऽपि जलचन्द्रवत् दोषासंसृष्टो दृश्यत इति विकारासम्बन्धे दृष्टान्ततया जलचन्द्रग्रहणात्

प्रतिबिम्बप्रसङ्गो नास्ति । एवं सर्वत्र द्रष्टव्यम् ।

अनुप्रवेशार्थोपत्तिरपि नास्ति । स्वरूपत एव मुख्यतयाऽनुप्रवेशोक्तिसम्भवात् । 'आकाशमेव हि यथा घटादिषु पृथग्भवेत् । तथाऽऽत्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥' इति यदनुसदाकाशदृष्टान्तानन्तरं जलसूर्यदृष्टान्तप्रदर्शनेन हि वस्तुतः तत्र तत्र स्थितस्यापि असत इव दोषसंस्पर्शो नास्तीति ज्ञापने तात्पर्यं गम्यते । आह च सूत्रकारः 'अरूपवदेव हि तत्प्रधानत्वात्' इति वस्तुतो रूपवदेव, अथाप्यरूपतुल्यमिति ।

प्रतिबिम्बाभ्युपगमेऽपि ज्ञातृत्वं न सम्भवतीति च पूर्वमेवोक्तम् । अविद्यावृत्तौ यदि शुद्धं प्रतिफलति तावता ज्ञानस्य वा ज्ञातृत्वस्य कथं निष्पत्तिः ? प्रतिफलितमपि हि चैतन्यं निर्विकारमेव । अविद्यावृत्तिरविद्याया वर्तते । तत्र का प्रतीतिः कस्य वा ? अवच्छिन्नं चैतन्यमेव प्रतीतिरिति चेत् प्रतीत्याश्रयः कः ? सोऽपि तदेव चैतन्यमिति चेत् कथं स्वस्य स्वाश्रयत्वम् ? कल्पितमिति चेत् कः कल्पकः ? चैतन्यमिति चेत् तस्य निर्विकारत्वं स्मर । अविद्येति चेत् तस्या जडत्वं स्मर । मिलितमिति चेत् इदममिलितादतिरिक्तं वा न वा ? आद्ये चैतन्यं परिणामि स्यात् । अन्त्ये अनुपपत्तिरपरिहृता । तस्माद् ज्ञातृत्वं दुर्वचम् । एवं च ज्ञातुरभावादपि प्रतिफलनं नास्तीति सिद्ध्यति । दर्पणसन्निधाने हि

एतेन नित्यमुक्तत्वसंसारित्वसर्वज्ञत्वकिञ्चिज्ज्ञत्वादिव्यवस्था ब्रह्माज्ञानवादे कथमपि न घटत इति च ज्ञापितम्। अध्यासाधीना हि विविधभेदकल्पना। अध्यास एव न सम्भवतीति स्फुटं निरूपितम्। तस्मात् शुद्धचैतन्यं अविद्या च केवला मूलकारणं कृत्वा जगदुत्पत्तिस्थितिलयादिक्रमुपपादयितुं न शक्यमित्यवगन्तव्यम्। अध्याससम्भवं कृत्वा चिन्तायामपि अविद्यापरिणामानां अन्तःकरणादीनां भेदेऽपि अच्छेद्यस्य अभेद्यस्य एकस्य चैतन्यस्य तैश्छेदनभेदनासम्भवात् अध्यासकार्याणि सर्वाणि तस्मिन्नेकस्मिन्नेव भवन्तीति नास्ति व्यवस्थायाः सम्भवः। यथा अस्मच्छरीरे प्रदेशभेदेन नानाप्रकारशीतोष्णादिविशेषेषु सत्स्वपि तत्कार्याणि सर्वाणि तत्तच्छरीरावच्छिन्नस्य एकस्य आत्मनो भवन्ति, न तु तस्मिन्नात्मनि तैः कश्चन भेदो भवति तथेह द्रष्टव्यम्। तेन संसारित्वं यदि भवति तर्हि नित्यमुक्तत्वं नास्ति। यदि तु नित्यमुक्तत्वमस्ति तर्हि संसारित्वं नास्ति, इत्यापतति। न तु नित्यमुक्तः कश्चित्, अपरः संसारीति विशेषः सुवचः। एकत्वाच्चैतन्यस्य। उपाधीनां तत्तत्कार्योत्पत्तिप्रदेशव्यवस्थामात्रहेतुत्वात्। कार्यभाजश्चैतन्यस्य सर्वत्र एकत्वेन तत्र व्यवस्थां प्रति अहेतुत्वात्। उपाधीनां प्रतिबिम्बपक्षपातित्वेऽपि उपहिते वस्तुतो विशेषासम्भवात्। दर्पणस्य मुखस्थौल्यप्रदर्शकत्वेऽपि वस्तुतः प्रतिमुखे स्थौल्याभावात्। अन्यथा परिमाणभेदेन तस्य मुखप्रतिबिम्बत्वायोगात्। न च स्वस्मिन्नविद्यमानमपि स्थौल्यं उपाधिवशात् प्रतिमुखं पश्यति। द्रष्ट्रा पुरुषेणैव तद्दर्शनात्। प्रकृते च मुखपुरुषयोरिव शुद्धचैतन्यप्रतिबिम्बचैतन्ययोर्भेदाभावेन संसारित्वं वा असंसारित्वं वा एकमविशेषेण वाच्यम्। तत्र मरुमरीचिकोदकेन मरुभूमेरार्द्रत्वमिव कर्तृत्वाद्यध्यासेन चैतन्यस्य संसारित्वं न भवतीति वा स्वप्न इवाध्यस्तज्ञातृत्वभोक्तृत्वादिरूपं तद्भवतीति वा ऐकरूप्येण वाच्यम्। न तु स्वेच्छामात्रेण बिम्बप्रतिबिम्बयोर्भेदं कृत्वा संसारित्वासंसारित्वादि-

प्रतिबिम्बप्रसङ्गो नास्ति । एवं सर्वत्र द्रष्टव्यम् ।

अनुप्रवेशार्थापत्तिरपि नास्ति । स्वरूपत एव मुख्यतयाऽनुप्रवेशोक्तिसम्भवात् । 'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथाऽऽत्मैको ह्यनेकस्थो जलाधारेष्विवांशुमान् ॥' इति वस्तुसदाकाशदृष्टान्तानन्तरं जलसूर्यदृष्टान्तप्रदर्शनेन हि वस्तुतः तत्र तत्र स्थितस्यापि भासत इव दोषसंस्पर्शो नास्तीति ज्ञापने तात्पर्यं गम्यते । आह च सूत्रकारः 'अरूपवदेव हि तत्प्रधानत्वात्' इति वस्तुतो रूपवदेव, अथाप्यरूपतुल्यमिति ।

प्रतिबिम्बाभ्युपगमेऽपि ज्ञातृत्वं न सम्भवतीति च पूर्वमेवोक्तम् । अविद्यावृत्तौ यदि शुद्धं प्रतिफलति तावता ज्ञानस्य वा ज्ञातृत्वस्य वा कथं निष्पत्तिः ? प्रतिफलितमपि हि चैतन्यं निर्विकारमेव । अविद्यावृत्तिरविद्यायां वर्तते । तत्र का प्रतीतिः कस्य वा ? अवच्छिन्नं चैतन्यमेव प्रतीतिरिति चेत् प्रतीत्याश्रयः कः ? सोऽपि तदेव चैतन्यमिति चेत् कथं स्वस्य स्वाश्रयत्वम् ? कल्पितमिति चेत् कः कल्पकः ? चैतन्यमिति चेत् तस्य निर्विकारत्वं स्मर । अविद्येति चेत् तस्या जडत्वं स्मर । मिलितमिति चेत् इदमभिलितादतिरिक्तं वा न वा ? आद्ये चैतन्यं परिणामि स्यात् । अन्त्ये अनुपपत्तिरपरिहृता । तस्माद् ज्ञातृत्वं दुर्वचम् । एवं च ज्ञातुरभावादपि प्रतिफलनं नास्तीति सिद्धयति । दृष्टिसृष्टिमात्रं हि प्रतिफलनम् । द्रष्टुरभावे कुतस्तत् ।

तदेवं कथमपि चैतन्यस्य ज्ञातृत्वाभावात् अज्ञानाश्रयत्वं नापपद्यते । अथापि पुनरप्यभ्युपगमवादेन ब्रूमः । ज्ञातृत्वाध्यासः कामं सिद्धयतु । तेन तु प्रकृताक्षेपसमाधानं न भवति । अविद्यापरिणाम एव हि कल्पितमिदं ज्ञातृत्वम् । ईदृशं चेदं अविद्याश्रयत्वान्तर्मूलमेव । ज्ञातुरेव ज्ञानाश्रयत्वसम्भवात् अज्ञातुः शुद्धचैतन्यस्य तदाश्रयत्वमनुपपन्नमिति प्रत्यवतिष्ठमानानां तु अविद्यानधीनमेव ज्ञातृत्वमभिसंहितम् । तादृशस्य च तस्य दुर्वचत्वात् असमाधेयैव साऽनुपपत्तिरिति ।

एतेन नित्यमुक्तत्वसंसारित्वसर्वज्ञत्वकिञ्चिज्ज्ञत्वादिव्यवस्था ब्रह्माज्ञानवादे कथमपि न घटत इति च ज्ञापितम्। अध्यासाधीना हि विविधभेदकल्पना। अध्यास एव न सम्भवतीति स्फुटं निरूपितम्। तस्मात् शुद्धचैतन्यं अविद्या च केवला मूलकारणं कृत्वा जगदुत्पत्तिस्थितिलयादिकमुपपादयितुं न शक्यमित्यवगन्तव्यम्। अध्याससम्भवं कृत्वा चिन्तायामपि अविद्यापरिणामानां अन्तःकरणादीनां भेदेऽपि अच्छेद्यस्य अभेद्यस्य एकस्य चैतन्यस्य तैश्छेदनभेदनासम्भवात् अध्यासकार्याणि सर्वाणि तस्मिन्नेकस्मिन्नेव भवन्तीति नास्ति व्यवस्थायाः सम्भवः। यथा अस्मच्छरीरे प्रदेशभेदेन नानाप्रकारशातोष्णादिविशेषेषु सत्स्वपि तत्कार्याणि सर्वाणि तत्तच्छरीरावच्छिन्नस्य एकस्य आत्मनो भवन्ति, न तु तस्मिन्नात्मनि तैः कश्चन भेदो भवति तथेह द्रष्टव्यम्। तेन संसारित्वं यदि भवति तर्हि नित्यमुक्तत्वं नास्ति। यदि तु नित्यमुक्तत्वमस्ति तर्हि संसारित्वं नास्ति, इत्यापतति। न तु नित्यमुक्तः कश्चित्, अपरः संसारीति विशेषः सुवचः। एकत्वाच्चैतन्यस्य। उपाधीनां तत्तत्कार्योत्पत्तिप्रदेशव्यवस्थामात्रहेतुत्वात्। कार्यभाजश्चैतन्यस्य सर्वत्र एकत्वेन तत्र व्यवस्थां प्रति अहेतुत्वात्। उपाधीनां प्रतिबिम्बपक्षपातित्वेऽपि उपहिते वस्तुतो विशेषासम्भवात्। दर्पणस्य मुखस्थौल्यप्रदर्शकत्वेऽपि वस्तुतः प्रतिमुखे स्थौल्याभावात्। अन्यथा परिमाणभेदेन तस्य मुखप्रतिबिम्बत्वायोगात्। न च स्वस्मिन्नविद्यमानमपि स्थौल्यं उपाधिवशात् प्रतिमुखं पश्यति। द्रष्ट्रा पुरुषेणैव तद्दर्शनात्। प्रकृते च मुखपुरुषयोरिव शुद्धचैतन्यप्रतिबिम्बचैतन्ययोर्भेदाभावेन संसारित्वं वा असंसारित्वं वा एकमविशेषेण वाच्यम्। तत्र मरुमरीचिकोदकेन मरुभूमेरार्द्रत्वमिव कर्तृत्वाद्यध्यासेन चैतन्यस्य संसारित्वं न भवतीति वा स्वप्न इवाध्यस्तज्ञातृत्वभोक्तृत्वादिरूपं तद्भवतीति वा ऐकरूप्येण वाच्यम्। न तु स्वेच्छामात्रेण बिम्बप्रतिबिम्बयोर्भेदं कृत्वा संसारित्वासंसारित्वादि-

व्यवस्था भवतीति, अभेदं कृत्वा शास्त्रयोः तयोः सामानाधिकरण्य मङ्गीकृतमितीति च वक्तुमुचितम्। 'यथा उपाधिसम्बन्धो मुख्यमात्र एव। औपाधिकमालिन्यसम्बन्धस्तु उपाध्यवच्छिन्ने' इति व्यवस्था-प्रदर्शनमयुक्तम्। औपाधिकमालिन्यसम्बन्धस्य वस्तुत उपाध्यवच्छि न्नेऽप्यभावात्, उपाधिमालिन्यमार्जने वा अमलिनोपाध्यन्तरोपयोगे वा तत्र मालिन्यादर्शनात्। अत अवच्छिन्नस्याप्यसंसारित्वं युक्तम्। यदि तु तथापि तस्य संसारित्वमुच्यते तर्हि तेनैक्यात् अनवच्छिन्न-मपि संसार्येव। ऐक्यं तु भवतैव साध्यते।

वस्तुतस्तु असंसारि ब्रह्मैव नास्ति। अविद्याश्रयतया शुद्धत्वहा नात्। आहुश्च "अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः।" इति। अविद्यायाः मिथ्यात्वेन शुद्धत्वानुवृत्तिः प्रतिबिम्बेऽपि तुल्या। यत्तु "अतिशयेन कार्यकरत्वमेव तत्पक्षपातित्वम्। तथा च विच्छे दादिरूपकार्यकरत्वसाम्येऽपि स्थौल्याद्यवभासरूपकार्यकरत्वेन दर्पणादेः प्रतिबिम्बपक्षपातित्ववत् कर्तृत्वभोक्तृत्वादिसंसाररूपकार्यकरत्वेना विद्यायामपि प्रतिबिम्बपक्षपातित्वोपपत्तिः" इति तदयुक्तमित्युक्त-प्रायम्। वैषम्यस्य साम्यवेषेण प्रदर्शनात्। दर्पणस्य स्थौल्याव भासरूपकार्यकरत्वम्। अविद्यायास्तु कर्तृत्वभोक्तृत्वादिसंसाररूप कार्यकरत्वम्। इति हि विषममेतत्। संसारावभासरूपकार्यकरत्वमिति तु दृष्टान्तानुगुण्येन स्वसिद्धान्तानुगुण्येन च प्रतिबिम्बचैतन्य मप्यसंसार्येव। "विच्छेदादिरूपकार्यकरत्वसाम्येऽपि" इति विच्छेदा-भ्युपगमश्चानुपपन्नः। न हि शिलाकाष्ठादेरिव ब्रह्मणो विच्छेदो भवति। अविच्छेद्यत्वात् तस्य। न चोपाधय एवैव विच्छिन्नोपद-र्शिताः। अदर्शनात्। न हि आकाशस्य घटेन मुखस्य वा दर्पणेन विच्छेदं पश्यामः। तदेव शुद्धचित्त अविद्याश्रयत्वं वा प्रतिफलनं वा अध्यासो वा संसारित्वं वा किमपि न भवतु शक्यमित्यास्तां तावत्।

## ३५. असार्वज्ञ्यम् ।

अज्ञत्वाभिधानेन ब्रह्मस्तवानन्तरं असार्वज्ञ्याभिधानेन स्तुवन्नाह— "शुद्धं ब्रह्म न सर्वज्ञम् । किन्तु विशिष्टमेव । तच्चाविद्यां विना न सम्भवतीति अविद्यासिद्धिः । तथा हि । सर्वज्ञो हि प्रमाणात, स्वरूपज्ञप्त्या वा । तत्र प्रमाणस्य भ्रान्तेश्चाविद्यामूलत्वात् । असङ्गस्वरूपज्ञप्तेश्च अविद्यां विना विषयासङ्गतेः । तदुक्तम्—स्वरूपतः प्रमाणैर्वा सर्वज्ञत्वं द्विधा स्थितम् । तच्चोभयं विनाऽविद्यासम्बन्धं नैव सिद्ध्यति ।" इति । अनेन अस्मदवलम्बिताद्वैतसिद्धान्तविरोधित्वात् सर्वेश्वरसार्वज्ञ्यमपि न मृष्यामहे इत्युक्तं भवति । प्रामाणिकास्तु "यः सर्वज्ञः सर्ववित्", "स्वाभाविकी ज्ञानबलक्रिया च", "वेदाहं समतीतानि वर्तमानानि चार्जुन । भविष्याणि च भूतानि", इति श्रुतिस्मृतिशतप्रतिपन्नं तदपह्नुवानाननुकम्पन्ते । श्रुतमिदं सार्वज्ञ्यमाविद्यकमिति कुतः कल्प्यते ? अद्वैतासिद्धेरिति चेत् अद्वैतं परित्यज्य यथाश्रुतं सार्वज्ञ्यं कुतो नेष्यते । तत्त्वमसीत्यैक्यश्रवणविरोधादिति चेन्न, ऐतदात्म्यमिदं सर्वमित्युपक्रमानुरोधेन नीलो घट इतिवत् प्रकारप्रकारिभावमादायैव सामानाधिकरण्योपपत्तौ लक्षणाश्रयणप्रमाणान्तरबाधवाक्यान्तरशतबाधादीनामयुक्तत्वात् ऐक्यश्रवणासिद्धेः । तथा च

स्वरूपतो न सर्वज्ञो न प्रमाणैरपीश्वरः ।<br>
सर्वज्ञानाश्रयत्वेन सर्वज्ञं श्रुतिराह तम् ॥<br>
अतः स्वभावसंसिद्धसार्वज्ञ्योल्लासिनः प्रभोः ।<br>
अज्ञता दुर्घटाऽत्यन्तमर्कस्येवान्धकारिता ॥

## ३६. जीवाविद्या

अनतिकठिनहृदयो वाचस्पतिमिश्रः जगत्कारणे परतत्त्वे अविद्याकल्पनमनिच्छन् जीवाश्रयैवाविद्येत्याह । तथाऽपि निर्गुणस्यैव ब्रह्मणोऽङ्गी-

कारात् तदतिरिक्तजीवानङ्गीकारात् ज्ञाननिवर्त्यभावरूपाज्ञानोपादानक-मिथ्याजगद्वादाश्च पूर्वोक्ता सथा अनुपपत्तय तथैव स्थिता इति तत्र पृथग वक्तव्य किमपि नास्ति । विधेतरत्वेन अविधेत्यभिहित कर्म, अज्ञानविपरीतज्ञानरूपा अविद्या च जीव वर्तत इत्येतत्तु अस्मा भिरिष्यते ।

अस्मिन् वाचस्पतिमिश्रमते अन्योन्याश्रयदोष प्राचीनैरुक्त । त परिहरन् उत्पत्तो ज्ञप्तौ स्थितौ वा नास्त्यन्यान्याश्रयत्वमित्याह । तत्र ज्ञप्तिं प्रति यदुक्तं 'अविद्यायाश्चिद्भास्यत्वेऽपि चिताऽविद्याभास्यत्वाभावान्न दोष' इति तदसङ्गतम् । अविद्याया जीवाश्रयत्वविषयायामस्मदीयायां ज्ञप्तौ अन्यान्याश्रयसत्त्वात् । को जीव इति जिज्ञासायां अविद्याश्रयभूतं चैतन्यमिति वाच्यम् । एव अविद्याश्रय क इत्यत्र जीव इति वाच्यम् । तथा च जीवत्वज्ञानमविद्याश्रयत्वज्ञानाधीनम् । एतज्ज्ञानं च तज्ज्ञाना धीनमिति । यथा शीतस्पर्शस्य उष्णेतरस्पर्शत्वेन उष्णस्पर्शस्य शीतेतर स्पर्शत्वेन च लक्षणे पृथिव्या गन्धवत्त्वेन गन्धस्य पृथिव्यसाधारणगुण त्वेन च लक्षणे परस्पराश्रयत्व तद्वत्प्रकृतेऽपीति ज्ञेयम् । स्वज्ञानाधीनत ज्ज्ञानाधीनस्वज्ञानकत्वमन्योन्याश्रय इति लक्षणात् । एव स्थितावपि यद्यप्यविद्या जीवाश्रिता न तु जीवः अविद्याश्रितः तथाप्यविद्यानुवृत्ति जीवानुवृत्त्यधीना । जीवाश्रितत्वादविद्यायाः । जीवानुवृत्तिश्चाविद्यानु वृत्त्यधीना अविद्यानाशे जीवनाशावश्यम्भावात् । तदत्राप्यन्योन्याश्रय दुष्परिहार्यम् ।

एवमुत्पत्तावपि सुवचम् । यद्यप्यविद्या तदवच्छिन्नचैतन्यरूपो जीव श्चानादी, तथापि जीवत्वस्यौपाधिकत्वात्तदुत्पत्तिरभ्युपगन्तव्यैव । अन्यथा स्वाभाविकं जीवत्वं स्यात् । तच्च कदापि न निवर्तेत । तत्र जीवस्वरूपमविद्याधीनम् । अविद्यास्वरूपमपि आश्रयजीवस्वरूपाधीन-मित्यस्त्येवेतरेतराश्रयत्वम् । अविद्याजीवयोरन्योन्याधीनत्व हि मव

द्धिरिष्यत एव। “न चैवमन्योन्याधीनताकृतिः” इति तत्समर्थनात्। तच्चोत्पत्तिपर्यवसितमेव।

उत्पत्तिव्यवहारस्यात्रानिष्टत्वेऽपि अधीनत्व एवापतन् अन्योन्याश्रयः कथं परिहार्यः। न चायमदोषः। प्रतीत्यनुपपत्तेस्तुल्यत्वात्। यत्तु समानकालिकयोरप्यवच्छेद्यावच्छेदकभावमात्रेण तदुपपत्तिः, घटतदवच्छिन्नाकाशयोरिवेति, तत्र विषमो दृष्टान्तः। अविद्यासिद्धौ तदवच्छिन्नचैतन्यरूपजीवसिद्धिः, एवंरूपजीवसिद्धौ च तदाश्रिताविद्यासिद्धिरित्यन्योन्याश्रयदोष प्रसज्यते। न ह्येवं घटावच्छिन्नाकाशसिद्धौ तदाश्रितघटसिद्धिरित्यापादनं सम्भवि। तदाश्रित एव घटोऽस्तीति केनाप्यनङ्गीकारात्। भवता तु जीवाश्रितैवाविद्येत्यास्थीयते। तत्र जीवासिद्धौ कथं तदाश्रिताऽविद्या सिद्ध्येदित्यापत्तिर्निराबाधा। यदि त्वाकाशघटयोरिव समानकालिकयोः चैतन्याविद्ययोरवच्छेद्यावच्छेदकभावमात्रमङ्गीक्रियते। न त्वाश्रयाश्रयिभावः। तदा घटस्याकाशाश्रयत्वमिव अविद्यायाश्चिदाश्रयत्वमेव नास्ति, कुतो जीवाश्रयत्वम्। किञ्चैवं शुद्धचैतन्यसम्बन्धित्वमेवाविद्याया उक्तं स्यात्। जीवाश्रितत्वपक्षश्च परित्यक्तः। न च व्याख्यानोक्तरीत्याऽविद्योपाहितचैतन्याश्रितत्वोपगमान्नोक्तदोष इति वाच्यम्। शुद्धचैतन्याश्रितत्वपक्षाविशेषतादवस्थ्यात्। उपहितत्वोक्तिमात्रेण वस्तुनि विशेषाभावात्। उपहितत्वार्थमविद्यापेक्षायामन्योन्याश्रयतादवस्थ्याच्च। अविद्यासिद्धौ तदुपहितजीवसिद्धिः। जीवसिद्धौ तदाश्रिताविद्यासिद्धिरिति।

वाचस्पतिना अविद्यायाः प्रवाहानादित्वमभ्युपेत्यान्योन्याश्रयदोषः परिहृतः। तत्रेदं वाच्यम्। उत्तरोत्तराध्यासे सति पूर्वपूर्वमिथ्याज्ञानं निवर्तते न वा। आद्ये केवलचिदाश्रयत्वमेवाविद्यायाः। अन्त्ये एकस्मिन्नेव शरीरे प्रतिजन्म वा जीवभेदप्रसङ्गः, इति।

कश्चिदाह—“अविद्याजीवयोरनादित्वादुत्पत्तावन्योन्याश्रयो न सम्भ-

मतीत्यद्वैतवादिभिर्निरूप्यते, न तु बीजाङ्कुरवदनादित्वमुच्यते" इति। तेन 'पूर्वपूर्वमिथ्याज्ञानोपदर्शितस्य बुद्धीन्द्रियशरीरादेरुत्तरोत्तराध्यासोपयोग इत्यनादित्वाद् बीजाङ्कुरवन्न परस्पराश्रयत्वमित्यर्थः" इत्यध्यास भामतीग्रन्थ प्रस्मृतोऽनवलोकितो वा।

विवरणग्रन्थोऽपि—"आत्मनि कर्तृत्वभोक्तृत्वदोषसंयोग एवाध्यास। तत्र भोक्तृत्वाध्यासः कर्तृत्वाध्यासमपेक्षते। अकर्तुर्भोगाभावात्। कर्तृत्वं च रागद्वेषसंयोगाध्यासमपेक्षते। तद्रहितस्य कर्तृत्वाभावात्। दोषसंयोगश्च भोक्तृत्वमपेक्षते। अनुपभुक्ते अतज्जातीये वा रागाद्यनुपपत्तेः। एवं बीजाङ्कुरवत् हेतुपरम्परयाऽनादित्वादध्यासस्य नैसर्गिकत्व"मिति। नन्वत्र सर्वत्र अविद्याकार्याणामेव प्रवाहानादित्वमुक्तम्। न तु मूलाविद्यायाः। सा त्वेकाऽनादिरिति चेन्न। चिद्वदनादित्वे सत्यत्वापत्तेः। कल्पितत्वायोगादित्युपपादितमेतदधस्तात्।

## २७ अज्ञानविषयत्वम्।

प्रमाणलेशविरहाद् भावरूपमज्ञानं नाम किमपि नास्तीति तत्स्वरूपस्यासिद्धिं सविस्तरमुक्ता। आश्रयितुरभावेन ब्रह्मणस्तदाश्रयत्वं न सम्भवतीति च निरूपितम्। तत एव तस्य तद्विषयत्वमपि नोपपन्नमिति वेदितव्यम्। किञ्च यदि तत् स्वाश्रयाज्ञानगोचरीभवति आत्मानमेव तन्न जानातीति स्यात्। न चेष्टापत्तिः। अनुपपत्तेः। अविद्याभ्युपगमवैयर्थ्यापत्तेश्च। तथा हि। शुद्धचैतन्यस्य अहमिति स्वरूपे प्रकाशो विद्यते,न वा? आद्ये स्वतः सिद्धस्य तस्य स्वानुभवस्य अध्यस्तेनाज्ञानेन कथं निरासः स्यात्, येन आत्मानमहं न जानामीति प्रतीयात्। आत्मप्रकाशाप्रकाशाभ्यां व्याघातश्च। एषा प्रतीतिरपि दुर्वचा। अन्त्ये ब्रह्म जडं स्यात्। स्वं वा इतरद्वा किञ्चिद् विषयीकुर्वत एव हि ज्ञानत्वम्। ब्रह्म च स्वेतरत् किमपि न विषयीकरोति। निस्सङ्गत्वात्। तत्र स्वमपि न विषयीकरोति चेत् तस्य ज्ञानत्वे किं प्रमाणम्। जडाद्व्यावृत्तत्वात् ज्ञानत्वमिति चेत्

कुतो व्यावृत्तिः। यतो हि घटादि न स्वात्मानं जानाति नापि परं किमपि, ततो जडमुच्यते। ब्रह्मापि तथा चेत् न ततो व्यावृत्तं तत्।

स्फुरणात् ज्ञानत्वमिति चेत् दीपोऽपि स्फुरति। न हि ततस्तस्य ज्ञानत्वम्। वस्तुतस्तु स्फुरणं नास्ति। ज्ञानगोचरीभवनं हि स्फुरणम्। न हि दीपस्येव चैतन्यस्य तदस्ति। प्रसरत्प्रभत्वं वा स्फुरणम्। एतदपि नास्त्येव। एवं जडत्वे च ब्रह्मणः पुनस्तस्य अज्ञानविषयत्वकल्पनेन को लाभः? एतेन "प्रकाशस्वरूपं ब्रह्म। तदाश्रिताऽविद्या तेन प्रकाश्यते च तदावृणोति च। यथा इन्दुग्रासी राहुस्तेनैव प्रकाश्यते" इति निरस्तम्। वैषम्यात्। शीतरश्मिमाली हि चन्द्रमाः। तस्य भूयिष्ठाः किरणाः राहुणा छाद्यन्ते। कतिपये च प्रसृतास्तं प्रकाशयन्ति। न च ब्रह्म तथाविधम्। येन प्रकाशश्चावरणं चोभे उपपद्येयाताम्। तस्माद्यथाव-त्प्रकाशो वा सर्वथाऽप्रकाशो वा। न त्वान्तरालिकी दशा सुवचा। तत्र आद्यकल्पे आवरणस्याशक्यत्वात् अन्त्ये आवरणवैफल्याच्च ब्रह्मणो-ऽविद्याविषयत्वमयुक्तमिति।

अत एव "चिन्मात्रमेवाविद्याविषयः। स्वप्रकाशत्वेन प्रसक्त-प्रकाशे तस्मिन् आवरणकृत्यसम्भवात्" इत्येतदपि निरस्तं भवति। स्वप्रकाशत्वेन स्वं प्रति प्रसक्तस्य प्रकाशस्य घटान्तर्वर्तिदीपप्रकाशस्य तं प्रतीव आवरितुमशक्यत्वात्। अन्यस्य च द्रष्टुरभावेन तं प्रत्याव-रणस्य दुर्वचत्वात्। न चास्त्येवान्यो द्रष्टा जीव इति वाच्यम्। वस्तुतोऽस्यान्यत्वाभावात्। अन्यथाऽद्वैतभङ्गापत्तेः। काल्पनिकमेवान्य-त्वमिति चेन्न। कल्पनं न सम्भवतीत्युक्तत्वात्। शुद्धचैतन्यं हि निस्सङ्गं न किञ्चित् कल्पयति। न च अविद्योपहितं सत् तत् कल्पयति। तस्मा-देव हेतोः। न हि अविद्यया शुद्धचैतन्ये कश्चन विकार आधीयते, येन तत्कल्पकं भवेत्। नापि शुद्धचैतन्यं अविद्यायां तादृशं कञ्चन विशेषमा-धातुं शक्नोति, येन स्वयं जडाऽपीयं कल्पिका स्यात्। नापि जीवः कल्पकः।

शुद्धचैतन्योपाधिविशेषव्यतिरिक्तस्य जीवपदार्थस्याभावात् । तत्र च चैतन्यांशस्य निर्विकारत्वेन उपाधेर्जडत्वेन च कल्पकत्वायोगात् ।

किञ्च जीवस्यान्यत्वे तं प्रति परस्य आत्मनः अयोग्यत्वादेव प्रकाशप्रसक्तिर्नास्तीति आवरणकल्पनं व्यर्थमेव । न हि पर आत्मा परं प्रति प्रकाशेत । किञ्च यदि अविद्या स्वाश्रयस्य परं प्रत्यावरिका तर्हि सा अविद्या न स्यात् । न हि अन्यस्य अविद्या अन्यस्य 'नास्ति, न प्रकाशते' इति व्यवहाराय 'अस्ति प्रकाशते' इति व्यवहाराभावाय वा कल्पते । यवनिका तु स्यात् । यत्तु अज्ञानं द्विविधम् । एकं शुक्त्यवच्छिन्नचैतन्याश्रितम् । अपरं च प्रमातृत्वप्रयोजकोपाध्यवच्छिन्नचैतन्याश्रितमिति अज्ञानद्वैविध्यमुच्यते, तत् केवलकुकल्पनामात्रम् । यत्र ज्ञानप्रसङ्गः तत्रैवाज्ञानमिष्यते । तस्य विषयगतत्वे मानाभावात् । तदेवं स्वरूपतः आश्रयतो विषयतश्च दुर्निरूपाऽविद्येति स्थितम् ।

## ३८ अहमर्थः ।

अहमर्थस्य अविद्यापरिणामत्वाभ्युपगमनिबन्धनापातादपि अद्वैतं न पारमार्थिकमिति शक्यं ज्ञातुम् । तथा हि । अहं जानामि, अहमिच्छामि, अहं करोमि, अहं दुःखी, अहं सुखी भविष्यामि, इति तावद्विवेकिनामपि अबाधिता प्रतीतिर्वर्तते । तथा च शरीराद्यतिरिक्तः ज्ञानाद्याश्रयभूतः आत्मा अहमर्थ इति सिद्ध्यति । का नामात्रानुपपत्तिः यतोऽनात्मा कश्चिदहमर्थ इति कल्पयेम । कृशोऽहं स्थूलोऽहमित्यपि प्रतीतिरस्तीति चेत् काममस्तु । ततः किम् । न हि उष्णं जलं, शीतं शिलातलमित्यादिः प्रतीतिरस्तीत्यतो हेतोः अग्निरुष्णः जलं शीतमिति व्यवस्थाभङ्गनोद्यमः शोभते ।

नन्विच्छादिविशिष्ट एवाहमर्थो गृह्यते । सुषुप्तौ च नेच्छादय इति तदा कथमहमर्थानुभवः । न चेच्छादिविशिष्ट एवाहमर्थो गृह्यत इति नास्ति नियम इति वाच्यम् । गुणिग्रहणस्य गुणग्रहणव्याप्तत्वात् ।

अन्यथा रूपादिहीनोऽपि घटः प्रथेत। न च रूपादिराहितानां तेषामसत्त्वं तत्र बीजमिति वाच्यम्। पूर्वरूपनाशाग्रिमरूपानुत्पत्तिक्षणाद्यक्षणादौ तद्विनाऽपि सत्त्वात्। एवं च गुणाग्रहणे कथं गुणिग्रहणम्। तथा च निर्गुण एवात्मा गृह्यत इति स्वीकर्तव्यम्। अनुभवाभावे च न तस्य जागरे परामर्शः। तथा चाज्ञानाश्रयत्वेन सुषुप्तावनुभूयमानादात्मनोऽहङ्कारो भिन्नः। एवमेवात्मान्यत्वे सिद्धे अस्वप्रकाशत्वसाधने नान्योन्याश्रयः। न च तर्हि अहमस्वाप्समित्यहमर्थस्य परामर्शानुप्रवेशानुपपत्तिः। तदंशे परामर्शत्वासिद्धेरिति चेत्। अत्र वदामः। पूर्वरूपनाशाग्रिमरूपानुत्पत्तिक्षणाद्यक्षणादौ गुणिग्रहणमस्ति न वा? आद्ये उक्तव्याप्तिभङ्गः। अन्त्ये ग्रहणकाले सर्वदा गुणानां नियमेन तत्र सत्त्वमेव ग्रहणस्य तद्विषयकत्वे प्रयोजकमिति तदसत्त्वकाले गुणिमात्रग्रहणं नानुपपन्नम्। स्वयम्प्रकाशो ह्यहमर्थ आत्मा। अहं जानामीत्यादिप्रतीतिष्वपि स्वयम्प्रकाशत्वादेव स प्रकाशते, सुषुप्तौ तु गुणानामभावात् तेषां प्रकाशविरहेऽपि स्वयं स्वस्मै प्रकाशमानो वर्तत इति काऽत्रानुपपत्तिः।

यदि च केनापि हेतुनाऽहमर्थः सुषुप्तौ न प्रकाशेत तर्हि तदप्रकाशमात्रमास्थेयम्। कुतस्तु खलु "तथा च निर्गुण एवात्मा गृह्यत इति स्वीकर्तव्यम्" इत्युच्यते? 'अहमस्वाप्समित्यादिज्ञानान्नान्य आत्मपरामर्शः' इति स्वयं भवानाह। अनेन अहमर्थातिरिक्तस्य सुषुप्तावनुभूयमानत्वे एतत्परामर्शातिरिक्तं किमपि प्रमाणं नास्तीत्येतत् सम्प्रतिपन्नम्। अनेन तु परामर्शेन अहमर्थातिरिक्तस्यानुभूयमानत्वं कथं सिद्ध्यति। अहमिति प्रबोधकालीनं स्वात्मानुसन्धानम्। अस्वाप्समिति वृत्तस्वापपरामर्शः। न किञ्चिदवेदिषमिति विषयान्तराज्ञानपरामर्शः। न त्वज्ञानानुभवपरामर्शः। यथा चैतत् तथोपपादितमधस्तात्। तथा चास्मिन् परामर्शे नास्ति यः कोऽप्यंशः, यः सुषुप्तौ अहमर्थातिरिक्तस्यानुभवं गमयति।

ननु अहङ्कारस्य अविद्यापरिणामत्वात् तस्य अज्ञानाश्रयत्वं न घटते। तेनास्मिन् परामर्शे अहमिति उपहितचैतन्यमेव विवक्षणीयम्। तस्य च स्वयम्प्रकाशत्वात् सुषुप्तावप्यनुभवो वाच्य इति चेन्न। प्रकृतिपरिणाम रूपस्य जडस्याहङ्कारस्य, अहमस्मीत्यादिप्रतीतिविषयस्याहमर्थस्य प्रत्यगात्मनश्चात्यन्तं भिन्नत्वात्। अस्य चाहमर्थस्य प्रत्यगात्मनाऽज्ञाना श्रयत्वोपपत्त्या तदतिरिक्तस्यात्मनाऽसिद्धेः। ननु सुषुप्तौ अहमित्यनुभवो नोपलभ्यत इति चेत् चैतन्यानुभवः किमुपलभ्यते? असम्भवी च अह मुल्लेखरहितश्चैतन्यस्य स्वानुभवः। सर्वो हि प्रत्ययः अहमिति वा इद मिति वा भवति। तत्र प्रत्येतुः स्वात्मावगाही प्रत्ययः अहमित्येव भवेत् नान्यथा। तेन सुषुप्तौ यद्यात्मनः स्वानुभवोऽस्ति तर्हि स अहमित्येवरूप एव। अन्यथा अनुभव एव नास्तीति स्यात्। न तु अहमुल्लेखशून्य कश्चिदनुभवोऽस्तीति शक्यं साधयितुम्।

एतेन 'नाह खल्वयमेवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति' इति सुषुप्तविषया श्रुतिरपि तदानीं तनाहमर्थाज्ञाने प्रमाणम्' इत्येतन्निर स्तम्। आत्मानं न जानातीत्यात्मज्ञानस्यापि प्रतिषेधात्। यत्तु 'अहरहर्गच्छन्त्यः', सति सम्पद्य न विदुः' इत्यात्मवेदनबोधकश्रुतिविरोधेन विशेषाज्ञानपरत्वं युक्त मिति तन्न। अनयोः श्रुत्योः जीवानां ब्रह्मसम्प त्तिपरत्वात् स्वात्मवेदनबोधकत्वाभावात्। सम्पत्तिपदवाच्यसम्बन्धविशे षमात्रपरत्वेन ब्रह्मवेदनबाधकत्वाभावाच्च। विशेषाज्ञानपरत्वेऽपि अहमु ल्लेखातिरिक्तविशेषान्तराज्ञानपरत्वस्यैव वाच्यत्वाच्च। तथा हि। आत्मानं सम्प्रति सः यथा वर्तते, साक्षात् तथा, तद्रूपतया न जानाति। कथम्। अहं अयं अस्मिन् कुले जातः अस्मिन् आश्रमे वर्तमानः एत न्नामा अस्मिन् देशे काले अस्मीति एव न जानातीति तस्याः श्रुतेरर्थः। तत्र अहमर्थस्य आत्मनः स्वशरीरादिविशेषाज्ञानमुच्यते, नत्वहमर्था ज्ञानमिति स्पष्टम्।

"अथातोऽहङ्कारादेशः अथात आत्मादेशः' इति श्रुतिरपि पृथगुपदेशेन पार्थक्ये प्रमाणम्" इत्येतदपि नास्ति। निरतिशयसुखरूपतया भूमशब्दाभिधेयस्य ब्रह्मणः बहुधा आसन ह्यत्र विधीयते। तत्र 'स एवाधस्तात्' इति तेनैव रूपेण, 'अहमेवाधस्तात्' इति उपासितुरन्तर्यामित्वेन 'आत्मैवाधस्तात्' इति आत्मत्वेन च गृह्यमाणस्य तस्य सर्ववस्तुतादात्म्यचिन्तनमुपदिश्यते। तत्र उपासिता जीवात्मा उपास्यमानाद् भूमशब्दितात् आत्मशब्दिताच्च ब्रह्मणो भिन्न इति प्रतीयते। एवं सति जीवपर्यायैक्यं कृत्वा तस्मादात्मनः पार्थक्यमहङ्कारस्य जडवस्तुन इहावगम्यत इति कथमेतत्?

सम्बोध्यचेतने त्वंशब्दवत् वक्तृचेतने अहंशब्दः प्रयोगप्राचुर्यान्मुख्यवृत्तः। प्रकृतिपरिणामभूतान्महत्तत्त्वादुत्पन्ने अहङ्कारतत्त्वे अहङ्कारशब्दः देहे अहमभिमानप्रयोजकत्व निमित्तीकृत्य प्रयुज्यते। 'ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी' इति भूयोभूय आत्मोत्कर्षप्रकाशनाय आत्मनिर्देशप्रावण्यजनकतया गर्वेऽप्यहङ्कारशब्दप्रयोगो भवति। एवं जडतत्त्वविशेषवाची गर्ववाची चाहङ्कारशब्दोऽन्यः। वक्तृस्वात्मवाची अहंशब्दोऽन्य इति विविच्य बुद्धौ धार्यम्। यद्यपि क्वचित् गर्वरूपाहङ्कारतात्पर्येण अहंशब्द एव प्रयुज्येत यथा "अहमस्य महान्' 'अनहम इमे' इति तथाऽपि तत्रापि स्वात्मोत्कर्षाभिव्यञ्जकाहंशब्दाम्रेडनहेतुत्वसम्बन्धरूपलक्षणया गर्वस्तदर्थः इति ज्ञेयम्। इत्थं च साक्षाद्बोध्यत्वात् अहंशब्दस्य आत्मा मुख्योऽर्थः। इममर्थं शब्दं वा द्वारीकृत्यैवार्थान्तरबोधने सति तदर्थान्तरं सर्वं लक्ष्यमिति न्यायविद्भिरङ्गीकर्तव्यम्। यत्तु 'अहमर्थः अनात्मा अहम्प्रत्ययविषयत्वात् शरीरवत्' इत्यनुमानं तत्पूर्ववदेवोपहास्यम्। चोरो न चेतनः स्थाणुप्रत्ययविषयत्वात् स्थाणुवत्। गङ्गा न नदी गङ्गाव्यवहारविषयत्वात् तीरवत्, इत्येवमादिभ्यः का विशेषोऽस्य प्रयोगस्येति विभावयतु भवान्।

ईदृशैरनुमानैर्यत् साध्यमद्वैतमिष्यते ।
साधितं ये च मन्यन्ते तस्मै तेभ्यश्च वो नमः ॥

अहमर्थो मात्माऽवयवी तत्साधनकृत्याश्रयत्वात् इत्यस्मिन्ननुमान सामान्यव्याप्ते ऋत्विजि व्यभिचारप्रदर्शनं विप्रलिप्साविजृम्भितम् । 'शास्त्रफलं प्रयोक्तरि' इति सूत्र इव यजमानत्वात्मकाक्रीतकृत्याश्रयत्वस्यैव विवक्षितत्वात् जातेष्ट्यादिकर्तरि न व्यभिचार । स्वगततत्फलसाधनकृत्याश्रयत्वस्यैव हेतुत्वात् । अहमर्थ अनर्थनिवृत्त्याश्रय अनर्थाश्रयत्वादित्येतद्दूषणमप्ययुक्तम् । अनर्थो ह्यपुरुषार्थ । न चाज्ञानं शरीरस्यापुरुषार्थ । पुरुषार्थत्वतदितरत्वयोश्चेतन प्रत्यव व्यवस्थितत्वात् । किञ्च स्थूलोऽहमज्ञ इत्यत्रापि अहमज्ञ इत्यत्रैव अज्ञत्वस्य अहमर्थाश्रयत्वमेव वाच्यम् । न तु शरीराश्रयत्वम् । ज्ञत्वसामानाधिकरण्यनियमाद ज्ञत्वस्य । न च शरीरस्य ज्ञत्वमस्ति । तेनाज्ञत्वमपि नास्ति । तेन स्थूलोऽहमज्ञ इत्यपि स्थौल्यं शरीरे अज्ञत्वं आत्मनि चावगाहमानैव प्रतीति । अतः शरीरस्याप्यज्ञत्वमस्तीति कृत्वा व्यभिचारोद्भावनमयुक्तम् ।

"अनात्मत्वं नाहमर्थवृत्ति, अनात्ममात्रवृत्तित्वात्, घटत्ववत् ।" इत्यत्र कृत्याश्रयावृत्तित्वमुपाधिरित्येतदपि नापद्यते । अनात्मत्वं अहमर्थवृत्ति, कृत्याश्रयवृत्तित्वात्, इत्युपाध्यभावेन साध्याभावसाधने उपाध्यभावात्मकस्य कृत्याश्रयवृत्तित्वरूपस्य हेतो साध्याविशिष्टत्वात् । न हि अनात्मत्वस्य कृत्याश्रयवृत्तित्वं सिद्धम् । अस्म मते आत्मन एव कृत्याश्रयत्वात् । अहङ्कारस्य तदभावात् । अत एव स्वरूपासिद्धिरपि दुर्वचा । न च तर्हि अनात्ममात्रवृत्तित्वादित्ययं हेतुरपि न साध्यसाधनक्षम । अस्मन्मते अहमर्थस्यानात्मत्वात् । अनात्मत्वस्यानात्ममात्रवृत्तित्वेऽपि अहमर्थवृत्तित्वोपपत्तेः इति वाच्यम् । तथापि गन्धो न घटवृत्ति पृथिवीमात्रवृत्तित्वात् गन्धत्ववत्, इत्यत्रेव हेतोरप्रयोजकत्वमन्यद्वा विरुद्धत्वादिकं किमपि दूषणं वाच्यम् न तूपाध्युद्भावन

युक्तमिति। वस्तुतस्तु अनात्ममात्रवृत्तित्वादित्यत्र ज्ञानानाश्रयमात्रवृत्तित्वस्य विवक्षितत्वान्न कोऽपि दोषः। अहं जानामीत्यबाधितप्रतीत्याऽहमर्थस्य ज्ञानाश्रयत्वं हि सम्प्रतिपन्नम्।

तदेवं अहं जानामीति ज्ञानाश्रयतया प्रत्यक्षसिद्धत्वात्, सुषुप्तावपि अहमर्थान्वयविधुरं किञ्चिदनुभवस्य साधयितुमशक्यत्वात्, अनुमानाच्च अहमर्थ एवात्मा, स आत्मैवेति स्थितम्। श्रुतयश्चात्र प्रमाणम्। "कस्मिन्नहमुत्क्रान्ते उत्क्रान्तो भविष्यामि। स प्राणमसृजत।" "हन्ताहमिमास्तिस्रो देवताः" इत्यादौ प्राणमनःसृष्टेः पूर्वमहंत्वोक्तेः। 'तदात्मानमेवावेत् अहं ब्रह्मास्मीति' इत्यवधारणेन शुद्धात्मनोऽहन्त्वोक्तेः। "अहमित्येव यो वेद्यः स जीव इति कीर्तितः। स दुःखी स सुखी चैव स पात्रं बन्धमोक्षयोः" इत्यादौ मोक्षान्वयोक्तेश्च। अत्राह-अत्र सर्वत्र विशिष्टवाचकस्यैवाहम्पदस्य लक्षणया निष्कृष्टाहङ्कारचैतन्ये प्रयोगः। लक्षणाबीजभूतानुपपत्तिरुक्ता। एतेन 'मामेव ये प्रपद्यन्ते' इत्यादिस्मृतयोऽपि व्याख्याताः। अत एव 'तत्त्वोऽहं सोऽसौ' इत्यादावपि लक्षणाऽऽश्रयणीया। विशिष्टवाचकत्वेन क्लृप्तस्य विशेष्ये लक्षणाया आवश्यकत्वात्' इति। "अस्मदभिमताद्वैतप्रक्रियानुरोधेन श्रुतिस्मृतयो व्याख्यातव्याः। न तु तदनुरोधेन तत्त्वनिर्णये वयमुत्सुकाः," इत्युक्तं भवति। न हि लक्षणा स्वारसिकी। जघन्यवृत्तित्वात्। तस्मादभिधेय एवार्थः उत्सर्गतो ग्राह्यः। अहमित्यस्य च उपपादितरीत्या आत्मैवाभिधेयोऽर्थः। जडाहङ्कारतत्त्वविशिष्टेऽर्थे अहमित्यस्य लोकतो वा शास्त्रतो वा न व्युत्पत्तिरस्तीति न तदस्याभिधेयम्। तस्माद् बहुषु श्रुतिस्मृतिवाक्येषु लक्षणाप्रसञ्जकत्वादपि अहमर्थो नानात्मेति निश्चेतव्यम्। एवं सति प्रत्यहं अहङ्कारविनाशोत्पत्तिकल्पनगौरवं च परिहृतं भवति। बन्धमोक्षादिसामानाधिकरण्यं चाञ्जसा भवति। 'स एव तु कर्मानुस्मृतिशब्दविधिभ्यः' इति सूत्रोक्तं जीवैक्यं चाबाधितम्। इत्यादि विवेचनीयम्।

अत्रेदं तत्त्वम्। आत्मानुभव: सर्वं अहमित्याकारक एव। अस्मिंश्च प्रादेशिक संसारेव आत्मा प्रकाशते। यद्यपि देहादिभ्य: पृथक् स्फुटं न प्रकाशते तथाऽपि ज्ञातृत्वादिभिर्धर्मैः देहेन्द्रियादिविलक्षणतया विवेकिभिर्निश्चीयत एव। अस्य सर्वानर्थहेतुभूतसंसारबन्धनिवृत्तये ज्ञेयतया शास्त्रेषूपदिश्यमानः परमात्मा अखिलहेयप्रत्यनीककल्याणैकतानतया स्वेतरसमस्तवस्तुविलक्षणः अत्यन्तं भिन्नः। सोऽपि स्वमात्मानं अहमित्येवानुभवति। "हन्ताहमिमास्तिस्रो देवता" इत्यादिषु यथा। एवं जीवपरमात्मनोरत्यन्तं भिन्नत्वेऽपि परस्य जीवान्तर्यामितयाऽवस्थानात् विवेकिनामहमिति प्रत्ययः परमात्मपर्यन्तो भवितुमर्हति। अत एव मामुपास्वेति प्रतर्दनं प्रतीन्द्रियस्योपदेशः। एवं परमात्मनोऽप्यहम्प्रत्ययः स्वापृथक्सिद्धविशेषणगोचरो भवति। यथा "बहुस्यां प्रजायेये"ति। विशेषणद्वारा बहुभवनं ह्यत्र विवक्षितम्। स्वरूपस्याविकारित्वात्। सत्यं ज्ञानमनन्तम्, निर्विकारम्, इत्यादिश्रुतेः। एवं त्वमसीत्युक्तेऽपि त्वदन्तरात्मेत्यर्थो भवति। न च तत्त्वमसीत्यत्र सामानाधिकरण्यादभेदोऽर्थो वक्तव्य नान्य इति शङ्क्यम्। सर्वज्ञात्मप्रादेशिकत्वासंसारित्वसंसारित्वादिभिरत्यन्तविलक्षणयोरभेदस्य बोद्धुमशक्यत्वात्। न च लक्षणया तद्बोधः। लक्षणायां प्रमाणाभावात्। श्यामो गौः, नीलो घटः, देवोऽहं जात इत्यादिष्विव मुख्यवृत्त्यैव समञ्जसार्थप्रतिपत्तेः॥ सामानाधिकरण्यनिर्देशहेतोः शरीरात्मभावस्य 'ऐतदात्म्यमिदं सर्वं स आत्मा", इति स्पष्टमभिधानादभेदस्य बाधाच्च। न चाप्राप्तत्वात् अभेदे शास्त्रस्य तात्पर्यम्। ब्रह्मात्मकत्वस्याप्यप्राप्तत्वेन तात्पर्यविषयत्वसम्भवात्। प्रमाणान्तराप्राप्ताबाधकत्वेन तस्यैव शास्त्रतात्पर्यविषयत्वस्य न्याय्यत्वाच्च। न ह्यबाधेनोपपत्तौ बाधाङ्गीकारो युज्यते। तदेवं सर्वसामञ्जस्ये सति सर्वासामञ्जस्यप्रसञ्जकाप्रामाणिकाद्वैताभिनिवेशेन अहमर्थानुभवस्य प्रतिकूलमालीकरणोद्यमो न युज्यत इति।

## ३९. कर्तृत्वाध्यासः

एतेन कर्तृत्वाध्यासवादोऽपि निरस्तो भवति। अहं जानामीत्यबाधितप्रत्ययेन ज्ञातृत्वस्येव अहं करोमीत्यनेन कर्तृत्वस्यापि अहमर्थात्मधर्मतया सिद्धेः। अनात्मनः कर्तृत्वानुपपत्तेश्च। यः प्रवृत्तिसमर्थः स हि कर्ता। न च जडस्य प्रवृत्तिसामर्थ्यमस्ति। रथस्य स्वयं गमनाभावात्। अत एव हि रथो गच्छतीत्यत्र गमनाश्रयत्वमात्रं रथस्योच्यते, न तु देवदत्तो गच्छतीत्यत्रेव गमनानुकूलकृत्याश्रयत्वम्। कृतेः चेतनैकसमवायात्। ननु प्रकृतिः कर्त्रीति साङ्ख्या अभ्युपगच्छन्तीति चेत् सत्यम्। किन्तु तन्मतं 'कर्ता शास्त्रार्थवत्त्वा" दित्यादिभिः सूत्रैर्निरस्तमिति वेदान्तिनामानिष्टमेव तत्। एवमन्तःकरणस्य कर्तृत्वाभावात् तस्यान्यत्राध्यासो न सम्भवी। प्रत्ययवैरूप्याच्च। 'अहं करोमि' इति हि प्रत्ययः। अत्र अहमर्थस्य कृत्याश्रयत्वरूपकर्तृत्वं विषयः। तत्र नामार्थमुद्दिश्य आख्यातार्थो विधीयते, आख्यातार्थमुद्दिश्य वा नामार्थो विधीयत इति यथा तथा इदमस्तु। सर्वथा अहमर्थाख्यातार्थयोर्विभागः सम्प्रतिपन्नः। एतदननुरूपो भवदभ्युपगतोऽध्यासः। "कर्तृत्वविशिष्टान्तःकरणस्य चैतन्यात्मनाऽध्यासेन न तथा ('मनः कर्तृ' इति वा 'चैतन्यं कर्तृ' इति वा) प्रतीतिः। कुसुमस्य तु स्फटिकात्मना नाध्यास इति वैषम्यात्।" इति हि भवानाह। एतदनुरूपेण प्रत्ययेन एकतः चैतन्यमात्रं अपरतः कर्तृत्वविशिष्टान्तःकरणधर्मिणं चावगाहमानेन भाव्यम्। 'इदं कर्तृ' इति। न त्वहं कर्तेति। चैतन्यमात्रस्याहमर्थत्वाभावात्। अन्तःकरणस्य कर्तृतया पृथग्भानात्। तदेवं प्रत्ययाननुरूपत्वान्नाध्यासः। अध्यासासम्भवश्च स्थित एव। न तावच्चैतन्यमध्यस्यति। तस्याहमिति स्वानुभवाभावात्। नाप्यन्तःकरणम्। जडत्वात्। प्रमाया इव भ्रमस्यापि तस्मिन्नसम्भवात्। भवदुक्तरीत्या तस्याध्यस्यमानत्वेन अध्यसितृत्वानुपपत्तेश्च। नापि मिलितमुभयम्। भवता चैतन्यस्याधिष्ठानत्वेन अन्तःकरण-

स्याध्यस्यमानत्वेन च पृथक्कारणान्मेलनाभावात्। अभ्यासातिरिक्तस्य मेलनस्यानिष्टत्वाच्चेति।

ननु यथात्मनः कर्तृत्वं नाध्यासिकं तर्हि स्वाभाविकमिति स्यात्। न चेष्टापत्तिः। 'यथा च तक्षोभयथा' इति तस्य औपाधिकत्वसाधनादिति चेन्न। औपाधिकत्वस्याध्यासिकत्वासिद्धेः। न हि वास्यादिकमादाय कर्म कुर्वतः तक्ष्णः वस्तुतः कर्तृत्वं नास्ति। तद्वत् मनआदिद्वारा कर्म कुर्वतो जीवस्य वास्तवं कर्तृत्वं दुरपह्नवम्। यथा पुरुषस्याम्रभोक्तृत्वं स्वाभाविकम्। औषधभोक्तृत्वमौपाधिकम्। न त्वेतेन तदाध्यासिकम्। तद्वदत्रापि। वस्तुतस्तु अस्मिन् सूत्रे यथा वास्यादिसन्निधानेऽपि तक्षा इच्छायां सत्यां कर्म करोति, असत्यां न करोति च, तथा आत्मा कर्ताऽपि इच्छायां सत्यां वागादिभिः कर्म करोति, असत्यां न करोति चेत्युभयथाभाव उच्यत इति ज्ञेयम्।

'विज्ञानं यज्ञं तनुते' इति विज्ञानवाच्यस्यात्मनः कर्तृत्वं श्रूयते। तत्र 'व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः' इति सूत्रेण जीवस्य कर्तृत्वे प्रमाणतया निर्दिष्टम्। न चात्र विज्ञानमित्यत्र मनो बुद्धिर्वा उच्यत इति वाच्यम्। मनोमयस्य पृथगुक्तत्वात्। तत परः आनन्दमयादपूर्वं जीवस्यैव वक्तव्यत्वात्। वाजसनेयके 'य आत्मनि तिष्ठन्' इत्येकस्यां शाखायां पठ्यमाने शाखान्तरे तत्स्थाने 'यो विज्ञाने तिष्ठन्' इति पाठदर्शनात् विज्ञानशब्दस्य जीवात्मनि प्रसिद्ध्यवगमाच्च। 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' इति सूत्रेण जीवात्मनो विज्ञानशब्दवाच्यत्वं उपपत्तेर्दर्शितत्वाच्च। ध्यायतीव लेलायतीवेति इवशब्दः परतन्त्रप्रभो प्रभुरिवेतिवत् परतन्त्रतामात्रपरः। यत्तु तद्वदत्र बाधकं नास्तीति तन्न। अहं करोमीत्यबाधितप्रत्ययस्य, "विज्ञानं यज्ञं तनुते" इत्यादिश्रुतेः शास्त्रार्थवत्त्वादियुक्तेश्च बाधकत्वात्। किञ्च 'स समानः सन्नुभौ लोका-वनुसञ्चरतीत्युपक्रम्य 'स हि स्वप्नो भूत्वेमं लोकमतिक्रामति' इत्यत्र

पूर्वमिदमाम्नात 'ध्यायतीव लेलायतीव' इति । जाग्रल्लोकसञ्चारस्य ज्ञातचरत्वात् स्वप्नलोकसञ्चारतात्पर्येणैव उभौ लोकावनुसञ्चरतीत्युक्तम्। तत् स्फुटं विव्रियते स्वप्नो भूत्वेत्यादिना। अतः मध्ये स्थित ध्यायतीवेत्येतद् स्वप्नविषयमेव । न च तस्यामवस्थाया जाग्रदवस्थायामिव मुख्य ध्यातृत्वादि वर्तते। अत इवशब्द इति ज्ञेयम्। 'प्रकृतेः क्रियमाणानीत्यादिस्मृत्यर्थश्च श्रीमद्भाष्ये कर्त्रधिकरणे उक्तः—"यच्च प्रकृतेः क्रियमाणानीत्यादिन गुणानामेव कर्तृत्व स्मर्यत इति, तत्सांसारिकप्रवृत्तित्वस्य कर्तृता सत्त्वरजस्तमोगुणससर्गकृता, न स्वरूपप्रयुक्तेति प्राप्ताप्राप्तविवेकेन गुणानामेव कर्तृतत्युच्यते। तथा च तत्रैवोच्यते—कारण गुणसङ्गोऽस्य सदसद्योनिजन्मसु, इति । तथा तत्रैवात्मनश्च कर्तृत्वमभ्युपेत्योच्यते—

तत्रैव सति कर्तारमात्मान केवल तु यः।
पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः॥

इति। अधिष्ठान तथा कर्ता करण च पृथग्विधम्।
विविधा च पृथक्चेष्टा दैव चैवात्र पञ्चमम्॥

इत्यधिष्ठानादिदैवपर्यन्तसापेक्षे सत्यात्मनः कर्तृत्वे य आत्मानमेव केवल कर्तार मन्यते न स पश्यतीत्यर्थः"- इति।

एव सर्वप्रमाणसिद्धमात्मनः कर्तृत्वमपह्नुत्य सर्वप्रमाणविरुद्धमन्तःकरणकर्तृत्व यत् कल्पित तदसम्भवीति प्रदर्शितम् । अथ सर्वप्रमाणसिद्धमन्तःकरणस्य नाम्नैव प्रख्याप्यमान करणत्वमपह्नुवानेन यदुच्यते "मनोऽव्यतिरिक्तस्य सङ्कल्पानाश्रयत्वेन 'मनसा वै' इति श्रुतेरुपचरितार्थत्वात्" इति तत् आत्मनः सङ्कल्पाश्रयत्वात्, श्रुतेर्मुख्यार्थत्वे सम्भवति उपचारस्यान्याय्यत्वाच्चानुपपन्नम् ।

यच्च आत्मा मोक्षसाधनकृतिमान् तत्फलान्वयित्वात्, सम्मतवत् इत्यनुमानदूषणम्—"आरोपितानारोपितसाधारणकृतिमत्त्वे साध्ये इष्टा-

पत्ति । अनारोपितकृतिमत्त्वे साध्ये जातेष्टिपितृयज्ञादिजन्यफलान्वयिनि व्यभिचारः"—इति, तदपि आरोपितस्य कार्यकरत्वासम्भवस्योपपादितत्वात्, कृतिसमानाधिकरणतया शास्त्रोपदिष्टतत्फलान्वयित्वस्यैव हेतुतया विवक्षितत्वेन व्यभिचाराप्रसक्त्यानुपपन्नम् । यदि हि जातेष्ट्यादौ व्यभिचारेण कर्तृत्वभोक्तृत्वसामानाधिकरण्यनियमो न स्यात्, तर्हि अन्यस्य स्वर्गमोक्षाद्यर्थं अन्ये। तत्साधनमनुष्ठीयेत । यजेत स्वर्गकाम इति सामानाधिकरण्य श्रुतमिति चेत् ब्रह्मविदाप्नोति परमिति प्रकृतेऽपि श्रुतमेवेति कथं जातेष्ट्यादिकमादाय व्यभिचार प्रदर्श्यते । वञ्चनामात्रं ह्येतत् ।

अज्ञान ज्ञानसमानाधिकरणं, ज्ञाननिवर्त्यत्वात् ज्ञानप्रागभाववत्, इतीदमनुमानान्तरं नास्माकमिष्टम् । ज्ञानप्रागभावाद्यतिरिक्तस्य भावरूपाज्ञानस्यास्माभिरनभ्युपगमात् । अभ्युपगमवादे तु साध्वेवेदम् । न चानादिभावभिन्नत्वमुपाधि । अज्ञान ज्ञानसमानाधिकरणं न, अनादिभावत्वादिति उपाधिव्यतिरेकेण साध्याभावसाधने ब्रह्मादेः दृष्टान्तस्येष्टत्वे निराश्रयत्वस्योपाधित्वात् । अनिष्टत्वे दृष्टान्तस्याप्रसिद्ध्या हेतोरसाधारण्यात् । उत्तरज्ञाननिवर्त्यपूर्वज्ञानस्य दृष्टान्तत्वे उपाधिप्रसङ्गविरहाच्च ।

दुःखादिभोगः मोक्षसमानाधिकरणः, बन्धत्वात्, सम्मतवत् इतीदं तृतीयमप्यनुमानमदुष्टम् । तथा हि । स्वनिरूपिताधिकरणतावच्छेदकावच्छिन्ना । या मोक्षनिरूपिताधिकरणता तद्वृत्तित्व 'साध्य विवक्षितम् । अन्तःकरणातिरिक्तजीवात्माङ्गीकारे भोगाधिकरणताया मोक्षाधिकरणतायाश्च आत्मत्वरूपैकधर्मावच्छिन्नत्वात् सामानाधिकरण्यमुपपद्यते । अन्यथा तु अन्तःकरणावच्छिन्नचैतन्यत्वं भोगाधिकरणतावच्छेदकम् । शुद्धचैतन्यत्वं मोक्षाधिकरणतावच्छेदकमिति विवक्षित सामानाधिकरण्यं न घटते । अत इदमनेनानुमानेन निरसितुमिष्यते । न चात्र

दोषः कश्चित्सुवचः। तस्मान्नाध्यासिकमात्मनः कर्तृत्वम्। अपि तु वास्तवमेवेति सिद्धम्।

यदत्र अन्ते उक्तम्—'तस्मात् सिद्धं मनसः कर्तृत्वमात्मन्यध्यस्यत इति' इति, तत् "आत्मनि कर्तृत्वान्तरस्यैवाध्यासात्। न च तर्हि कर्तृत्वद्वयस्य विविच्य प्रतीतिः स्यात्। आत्मान्तःकरणयोरैक्याध्यासात्।" इत्यनेन प्राक्तनकर्तृत्वान्तराध्यासवचनेन विरुद्धम्। किञ्च एनेन अन्तःकरणे कर्तृत्वप्रतीतिर्नास्तीत्येवाभ्युपगत भवति। कर्तृत्वद्वयस्य विविच्य प्रतीतिर्नास्तीति, आत्मनि कर्तृत्वान्तरमध्यस्यत इति चाभिधानात्। अह करोमीति हि आत्मकर्तृत्वावगाही प्रत्ययः। कर्ताऽह करोमीति अन्तःकरणगतस्य कर्तृत्वस्य पृथक् प्रत्ययविषयत्व नेष्यते। 'अन्तःकरण कर्तृ' इत्यपि प्रतीतिर्नास्तीति च स्वय भवता उक्तम्। तथा च अन्तःकरणकर्तृत्वमप्रतीतमसदित्येवायातम्। प्रतीतत्वात्तु आत्मन एव तत्। न च आध्यासिकम्। प्रतीतेर्भ्रान्तित्वे मानाभावात्। अद्वैतसिद्धये कल्पनीयमिति चेत् एतद्विरोधादद्वैतं नेष्टव्यमिति पश्यतु भवान्।

## ४०. देहात्मभ्रमः।

अहं जानामीत्यबाधितात् प्रत्ययात् जडभूतदेहातिरिक्तः अहमर्थः ज्ञाता आत्मेत्यवगम्यते। अनुमानागमाभ्या दृढीक्रियते चैतत्। पर तु अयं निरूपकाणा विवेकः। अन्ये देहमेवात्मान मन्यन्ते। न तदतिरिक्तं सन्तं प्रतिपद्यन्ते। यद्यपि स्वयम्प्रकाशत्वात् अविवेकिनामप्यात्मा प्रकाशत एव। तथाऽपि शरीराद्भेदकस्य नित्यत्वज्ञानत्वसूक्ष्मत्वादिरूपस्य तदीयस्याकारस्याप्रकाशात् उष्णोदकसंसृष्टस्याग्नेरिव क्षीरमिश्रस्य नीरस्येव चात्मनः पृथग्ग्रहणं न भवति। तेन एषा ऐक्यभ्रमः। स्थूलोऽहं कृशोऽहमिति। विवेकिना तु अपृथक्सिद्धिसम्बन्धादेवं प्रतीतिरिति प्रमैव सा। शुक्लो घट इति यथा शुक्लरूपस्य तद्विशिष्टे द्रव्ये पर्यवसान, गौस्तत्पु-

तीति गोत्वज्ञाने तद्विशिष्टे पर्यवसानं, तथा स्थूलोऽहं कृशोऽहमिति स्थूलकृशशरीरविशिष्टे पर्यवसानमिति अबाधितविषयत्वात् अस्याः प्रमात्वं नानुपपन्नम्।

यत्तु देहात्मभेदस्य लोकसिद्धत्वे तद्बोधिकाया श्रुतेरनुवादतापत्ति रिति, तत् अज्ञाभेदा व्यवहारकालीनेन परीक्षितप्रमाणभावेनानुमाना- दिना बाध्यत' इति वदतो भवतोऽपि समानम्। न ह्यनुमानेनावगते श्रुते प्रामाण्यं भवेत्। अवगतार्थविशदीकरणपूर्वक अनवगतानेकार्थ बोधनात् प्रामाण्यमित्यपि समानमेव। यत्तु मम देह इत्यत्रानौपचारिकः अहं गौर इत्यौपचारिक इत्यत्र विनिगमकाभाव इति तदपि न। मम क्षेत्रं मम चक्षु इत्यादिवत् उपचारनिमित्तस्य बाधस्य विरहादनौपचारि कत्वं मम देह इत्यस्य। अहं गौर इत्यत्र तु अहमर्थस्य ज्ञातृत्वेन, गौर त्वस्य प्रत्यक्ष देहधर्मत्वेनावगतस्य अहमर्थधर्मत्वायोगेन च प्रकारान्तरे णान्वया बाध्य इति विनिगमकस्य सत्त्वात्। यदपि "नीला बलाका" इत्यत्र नीलाद् भेदकस्य बलाकात्वस्य सहेऽपि नीलभेदसाक्षात्काराभावस्य तदभेदसाक्षात्कारस्य च दर्शनात्।" इति, तन्न नीलपदस्य नीलरूप परत्वे तेन सह धर्मिणा भेदसाक्षात्कार एव वर्तते, न तु तदभाव। तथा तदभेदसाक्षात्कारो न वर्तते, किन्तु तदभाव एव। नीलरूपवत्परत्वे तद् भेदस्यैव बलाकाया वर्तमानत्वात् "भेदकस्य बलाकात्वादे' रिति न युज्यते वक्तुम्। एवमविवेकिनां देहात्मैक्यभ्रमे सत्यपि इतरेषां कृशोऽहमित्या दिप्रतीतिः भ्रमैव। न त्वेषामपि भ्रम इत्युपपादितम्।

अथ यदुच्यते 'एष ब्राह्मणो यजेते'त्यादिश्रुतिरपि ब्राह्मणत्वाश्रयशरी रस्य जडत्वेनानियोज्यत्वेनान्यथा तदैक्याध्यासापन्नमात्मानं नियुञ्जाना तत्र प्रमाणम्। इति, तदपि स्वदर्शनानुरागमात्रविजृम्भितम्। ब्राह्मणत्वा श्रयशरीरमात्रस्य नियोगानर्हत्वात् तदहं शरीरातिरिक्तः कश्चित् श्रुते रभिमत इति प्रतीयते। तस्य च बाद्धत्वावश्यम्भावात् स

निश्चीयते। तथा च ब्राह्मणशरीरविशिष्टो ब्राह्मण इति श्रुत्युक्त इति गम्यते। एवं सति देहैक्याध्यासापन्न आत्माऽत्राभिप्रेत इति कथमुच्यते? अध्यासस्य कः प्रसङ्गः? देहविशिष्ट इति कथमुच्यत इति चेत् शरीरवाचिनां शब्दानां शरीरिपर्यन्ताभिधायित्वव्युत्पत्तेरिति गृहाण। देवदत्तो जानाति, इति हि बहुलं व्यवहरन्ति। न चायमप्रामाणिको व्यवहारः। न चौपचारिकः। स्खलद्गतित्वाभावात्। न च देहात्मनोरध्यासातिरिक्तः कः सम्बन्ध इति वाच्यम्। देहात्मभावस्यैव सम्बन्धत्वात्। यद् द्रव्यं यस्य चेतनस्य अपृथक्सिद्धविशेषणं तत् तस्य शरीरमिति लक्षणात्। अध्यासातिरिक्तो हि कश्चित् सम्बन्धो देहात्मनोरवश्यमङ्गीकार्यः। अन्यथा परदेहेन स्वात्मैक्याध्यासाभावे किं नियामकं भवेत्।

एतेन विधिवाक्ये ब्राह्मणशब्दो लक्षणया देहविशेषैक्याध्यासवत्परः देहविशेषसम्बन्धपरो वा। सम्बन्धस्तु अन्यस्याभावादैक्याध्यास एवेति निरस्तम्। मुख्यवृत्तौ सम्भवन्त्यां लक्षणाया अन्याय्यत्वात्। लक्षणापक्षेऽपि स्वावच्छिन्नभोगवत्त्वादिरूपे लोकप्रसिद्धे सम्बन्धे सति अध्याससम्बन्धग्रहणे विशेषहेत्वभावाच्च। गेहीतिवत् देहीति प्रयोगोऽप्यस्तीति भवानेवाह। न च तत्रैक्याध्यासः सम्बन्धः। गेहीत्यत्र तदभावात्। देहीत्यस्य च तत्तुल्यत्ववचनात्। तथा च तत्र यः सम्बन्धः स एव ब्राह्मणपदे लक्षणानिबन्धनं भवितुमर्हति, न त्वध्यासः। गङ्गायां घोष इत्यत्र हि तीरे गङ्गाऽभेदाध्यवसायो बहूनामस्त्येव। यथा सारोपलक्षणावादिनामालङ्कारिकाणाम्। न च तावता गङ्गापदेन तीरलक्षणायां संयोगसम्बन्धं विहाय अभेदाध्यासो निमित्तमाश्रीयते। कालान्तरदेशान्तरदेहान्तरानुभाव्यफलसाधनविधिनियोज्यस्य देहात्मभेदोपस्थितेरवश्यम्भावित्वात् भेदघटितानाध्यासिकसम्बन्ध एव लक्षणाबीजतया पुरस्फूर्तिको भवति, न त्वैक्याध्यास इति च विभाव्यम्।

यत्त्वत्र ब्रह्मानन्देनोक्तम्—"वस्तुतो ब्राह्मणत्वादिविशिष्टे ब्राह्मणा-

दिपदस्य शक्तिः। ब्राह्मणत्वादिवैशिष्ट्यं च देह इव आत्मन्यपि व्यावहारिकत्वात् शक्यशरीरे प्रविष्टम्। आजानिकव्यवहारस्य शक्तिग्राहकस्योभयत्र तुल्यत्वात्। उभयोरेकत्रैव व्यवहारकाले निश्चयाच्च। तथा च क्व लक्षणादोष ?"—इति तदिदमत्यन्तमसमञ्जसम्। ब्राह्मण्यं यथा समवायेन देहे वर्तते तथैव आत्मन्यपि वर्तत इति किमभिप्राय', अथवा सम्बन्धसामान्येन ब्राह्मण्यवैशिष्ट्यं उभयत्र वर्तत इति। नाद्य'। आत्मनि जात्यभावात्। अन्यथा अस्मिन् जन्मनि ब्राह्मण्यादिमतो जन्मान्तरे क्षत्रियादिभावानुपपत्तेः। श्रुत हि जन्मान्तरेषु विविधजात्यन्तरजन्म। न द्वितीय। देहवत् शक्यत्वानुपपत्तेः। यत्र ब्राह्मणत्वं समवायेन वर्तते स एव हि ब्राह्मणपदशक्यार्थ। न त्वध्यासेन ब्राह्मणत्ववानपि। न हि सिंहो माणवक इत्यत्र सिंहपदं माणवके मुख्यवृत्तम्। आरोपसम्बन्धेन सिंहत्वं हि माणवके वर्तते। न च तावता सिंहपदं मृगेन्द्र इव तत्रापि शक्तमिति। मूलविरुद्धं चेदं आत्मनि ब्राह्मण्यादिवैशिष्ट्याभिधानम्। तत्र मनुष्यत्वादेरात्मावृत्तित्वस्योक्तेः। यदपि मूले विधिपदलक्षणायामुदाहरणतया मन्त्रवाक्यपठने अनुपपत्तिमुद्घाटितवता "पयसा श्रीणात" इत्यस्मिन् विधिवाक्ये पयःपदे गोपयोलक्षणाया प्रमाणं 'गोभिः श्रीणीत मत्सरम्' इति मन्त्र इत्युक्तम्, तदपि चिन्त्यम्। पयसेति सामान्यतः पयःश्रवणात् किं गव्यमेव ग्राह्य, उत अन्यदपीति संशये छागपशुन्यायेन मन्त्रपर्यालोचनया गव्यमेव ग्राह्यमिति निर्णीयत इत्येतावन्मात्रमेव। न तु श्रुतेन पयसेति पदेन गोपयसो लक्षणया प्रतिपादनमप्यापादयितुम्। न चाविहितं कथमङ्गं भवितुमर्हति शङ्क्यम्। कल्पितेन विधिना विधानात्। तत्र च गोपयसेत्येव कल्पनादिति।

'प्रमाणत्वाद्यन्यथानुपपत्तिरपि अध्यासे मानम्' इत्यपि पूर्ववदेवायुक्तम्। निष्प्रत्यूहवैतथ्यात्मवादिनस्तस्य निष्कम्पप्रतिष्ठाया सिद्धाया तदनन्तरमेवमर्थापत्तिः शक्या वक्तुम्। तत्सिद्ध्यर्थं हि अद्य यत्न' क्रियमाणो

वर्तते। अस्यामवस्थाया इयमर्थापत्तिरुच्यमाना हासायैव केवल कल्पते। न हि स्वपक्षान्यथानुपपत्तिरूपाऽर्थापत्तिः वादिना सचेतसा परं प्रत्युपन्यस्येत। अस्माभिर्हि ज्ञातृत्व प्रमातृत्वं कर्तृत्वमिति सर्वमात्मनोऽङ्गीक्रियते। अहं जानामि, घट पश्यामि, इद करोमीति निराबाधानुभवसिद्धं चेद सर्वम्। एतद्व्यतिरिक्तश्च परब्रह्मभूत सर्वेश्वरः 'पृथगात्मानं प्रेरितार च मत्वा', 'क्षरात्मनावीशते देव एकः', 'अनश्नन्नन्यो अभिचाकशीति', इति श्रुतिशतप्रतिपन्नः। अखिलहेयप्रत्यनीककल्याणैकतानत्वं चास्य तथा। एव च शुद्धचैतन्यात्मक आत्मा अप्रामाणिकः। तत्र का कथा तस्य प्रमातृत्वसिद्धये अध्यासकल्पनाया। एव अत्यन्तासमञ्जसबहुकल्पनाप्रसञ्जकत्वादद्वैत विदुषामङ्गीकारानर्हमिति तु प्रतिपत्तव्यम्।

## ४१. अनिर्वचनीयत्वम्।

अद्वैतिनामभिमता अविद्या वा तन्निबन्धनाध्यासो वा न शक्यते साधयितुमिति न्यरूपयाम। अथ तस्या अनिर्वचनीयत्व यदुच्यते तद्विमृशामः। पूर्वं विश्वस्य मिथ्यात्वमाह। अद्य तु तदुपादानभूताया अविद्यायास्तदेव मिथ्यात्वं अनिर्वचनीयत्ववाचोयुक्त्या प्रतिपादयति। तत्र यत् सद्विलक्षणत्वे सति असद्विलक्षणत्वे सति सदसद्विलक्षणत्व अनिर्वचनीयत्वमिति लक्षण तत्र सच्छब्देन ब्रह्मण, असच्छब्देन तुच्छस्य च ग्रहणे सदसच्छब्दवाच्यस्य कस्यचिदप्रसिद्धत्वात् असम्भवो लक्षणदोषः। अथ एवमर्थो मा ग्राहीत्यभिप्रायेणैव विवक्षितार्थान्तरघटितं लक्षणान्तरमुक्तम्। तच्च 'सत्त्वासत्त्वाभ्या विचारासहत्वे सति सदसत्त्वेन विचारासहत्वं तदित्येवंरूपम्। सत्त्वासत्त्वाभ्या विचारासहत्व च तदुभयानधिकरणत्वमि'ति। अत्रोच्यते। कथमेकत्र परस्परविरुद्धोभयानधिकरणत्वसम्भवः? न हि घटत्वघटेतरत्वोभयानधिकरणं किञ्चिद् भवति। अतात्त्विकस्यैव निषेधसमुच्चयस्याङ्गीकारान्न विरोध इति चेत् तर्हि ब्रह्मण्यतिव्याप्तिः। वस्तुतो निर्धर्मकत्वेऽपि अतात्त्विकस्य तस्य तस्मिन्नपि

सम्भवात् । अव्याप्तिश्च । अविद्यायाः सत्त्वाधिकरणत्वेन तदनधिकरणत्वाभावात् । घटादीनां सतामुपादानभूता ह्यविद्या सत्येव । अन्यथा सतो घटादीनामुत्पत्त्यसम्भवात् । कथमसतः सज्जायेतेति श्रुतेः । घटादीनां सत्त्वं नास्तीति चेत् ब्रह्मणोऽपि नास्त्येव । निर्विशेषत्वाङ्गीकारात् । तथाऽपि सद्रूपत्वमङ्गीक्रियत एव । अन्यथा शून्यतापत्तेरिति चेन्न । व्याघातात् । न ह्येव कश्चन भाषेत 'वह्नावुष्णत्वं नास्ति । अथापि स उष्णः । अन्यथा अवह्नित्वापत्तेः" इति । ब्रह्मणि सत्त्वं नेष्टं चेत् असदित्येवाङ्गीकार्यम् । इदं नेष्टं चेत् निर्विशेषत्वं दूरतः परित्यज्य सत्त्वमेष्टव्यम् । निर्विशेषत्वाय सत्त्वं नेष्यते, शून्यत्वप्रहाणाय सद्रूपत्वमिष्यत इत्यनुन्मत्तः को ब्रूयात् । तथा न यदि ब्रह्म सत् तर्हि अन्यदपि सदिति सत्त्वानधिकरणत्वाभावादव्याप्तिः । यदि तु सत्त्वाभावात् प्रपञ्चादिकमसत् तद्वदेव ब्रह्माप्यसदिति सत्त्वानधिकरणत्वादतिव्याप्तिरिति दुरुत्तरव्यसनम् ।

कालसम्बन्धित्वरूपं सत्त्वं यदि ब्रह्मण्यस्ति तर्हि अद्वैतभङ्गः । यदि नास्ति तुच्छत्वप्रसङ्गः । परमार्थतो नास्ति, कल्पितं तु अस्तीति चेत् किं तेन ? न हि शशशृङ्गस्य पारमार्थिकसत्त्वहीनस्य कल्पितेन सत्त्वेन सत्त्वं भवेत् । अबाध्यत्वरूपं सत्त्वमस्तीति चेत् कथम् । "ब्रह्मणि सत्त्ववत् तदत्यन्ताभावस्याप्यभावात् । अन्यथा निर्विशेषत्वादिश्रुतिविरोधापत्तेः ।" इति हि अतिव्याप्तिपरिहाराय भवानाह । तथैव बाध्यत्ववत् तदत्यन्ताभावोऽपि ब्रह्मणि न भवितुमर्हति । स्वरूपात्मकमबाध्यत्वमिति चेत् सत्त्वाभावोऽपि तथैव स्यात् । तथा चातिव्याप्तिस्तदवस्था । उभयरूपस्यापि सत्त्वस्य प्रपञ्चे तदुपादाने च सत्त्वादव्याप्तिश्च तदवस्था । कालसम्बन्धित्वं प्रपञ्चादौ कल्पितं, न तु वास्तवम् । अबाध्यत्वं तु स्वरूपेण एव नास्ति । ब्रह्मज्ञानबाध्यत्वादिति चेन्न । मानाभावात् । अद्वैतश्रुतिर्मानमिति चेन्न प्रमाणान्तरविरोधात् द्वैतपर-

श्रुत्यन्तरविरोधाच्च भवदभिमतनिर्विशेषाद्वैतपरश्रुतिरेव नास्तीति विभाव्यताम्। एवं च अविद्यादेरनिर्वचनीयत्वाङ्गीकारे वा एतल्लक्षणसाधुत्वाभ्युपगमे वा अद्वैताभिनिवेशातिरिक्तं किमपि नियामकं नास्तीति प्रस्फुटमेतत्। एतेन प्रतिपन्नोपाधौ बाध्यत्वमनिर्वचनीयत्वमिति लक्षणान्तरासाधुत्वमपि व्याख्यातम्।

## ४२ अनिर्वचनीयत्वे प्रमाणम्

अथानिर्वचनीयत्वे प्रमाणप्रदर्शनप्रवृत्तेन यदुक्तम्—'प्रत्यक्षं तावत् मिथ्यैव रजतमभादित्यादि।' इति तदयुक्तम्। अत्र मिथ्याशब्दस्य अविद्यमानत्वमात्रपरत्वात्। भवल्लक्षितानिर्वचनीयत्वपरत्वाभावात्। दूरात् रजतं विद्यमानं मन्यमानः जिघृक्षया समीपं गतः अविद्यमानं जानाति। तस्यायमभिलापः मिथ्यैवाभादिति। अत एव असदेवाभात्, अविद्यमानमेवाभात्, इत्यप्यभिलापो भवति। तथा च विद्यमानत्वरूपसत्त्वाभावमात्रविषयेयं प्रतीतिः। न तु भवल्लक्षितानिर्वचनीयत्वविषया। एतेन 'एतावन्तं कालं असदेव रजतमभा'दित्ययमनुभवः अनिर्वचनीयत्वैकदेशसत्त्वव्यतिरेकविषयः' इत्येतन्निरस्तम्। न हि असत्त्वात्यन्ताभावसदसत्त्वात्यन्ताभावयोः तत्प्रतीतिविषयत्वे किञ्चन प्रमाणमस्ति। विषयभूतः सत्त्वाभावोऽपि न सामान्यतः सत्त्वप्रतियोगिकः। अपि तु तत्र विद्यमानत्वरूपविशेषप्रतियोगिकः। तस्मादस्मिन् प्रत्यये ऽनिर्वचनीयत्वस्याविषयत्वात् तत्र प्रमाणतया एतत्प्रदर्शनमयुक्तम्।

'विमतं सत्त्वरहितत्वे सति असत्त्वरहितत्वे सति सत्त्वासत्त्वरहितम्, बाध्यत्वात् दोषप्रयुक्तभानत्वाद्वा, यन्नैवं तन्नैवम्, यथा ब्रह्म,' इत्यनुमानमप्यसमीचीनम्। हेत्वोरसिद्धेः। न ह्यस्माभिः प्रपञ्चतदुपादानयोर्बाध्यत्वं वा दोषप्रयुक्तभानत्वं वाऽभ्युपगम्यते। शुक्तिरूप्यमात्रस्य पक्षत्वे चाप्रसिद्धविशेषणः सः। रूप्यस्यान्यत्र सत्त्वात्। सत्त्वसामान्यशून्यत्वाभावात्। दृष्टान्तासिद्धेश्च। तथा हि। ब्रह्मणः अभावाधिकरणत्व-

भङ्गीक्रियते न वा ? आद्ये सत्त्वादिरहितत्वाद् व्यतिरेकदृष्टान्तत्वानुपपत्तिः । न च सद्रूपस्य तस्य सत्त्वराहित्यं नास्तीति वाच्यम् । सत्त्ववत्त्वे सविशेषत्वापत्ते तदभावस्यावश्य वाच्यत्वात् । एतद्विरोधेनैव सद्रूपताया भवता उपपादनीयत्वात् । अशक्यत्वे अद्वैतस्य परित्याज्यत्वात् । 'निर्धर्मके सत्त्वरूपधर्माभावविषयकप्रतीतेरिष्टत्वात्' इति भवतैवोक्तत्वात् । अन्त्ये साध्याभावानधिकरणत्वेन दृष्टान्तत्वानुपपत्तिः ।

'विमतं रूप्यादि सच्चेन्न बाध्येत, असच्चेन्न प्रतीयेत । बाध्यते प्रतीयतेऽपि । तस्मात् सदसद्विलक्षणत्वादनिर्वचनीयम् ।' इत्यर्थापत्तिरपि न प्रमाणम् । रूप्यं शुक्तिदेशे सच्चेत् न बाध्येत । बाध्यते च । तस्मात् तत्र न सत् विद्यमानम्, इत्यसत्त्वमस्माकमिष्टमेव । असच्चेत् न प्रतीयेत, इति तु बाधितम् । तत्र असत एव रजतस्य प्रतीतेः । असत् कथं प्रतीयेतेति चेत् काऽत्रानुपपत्तिः । अन्यत्र विद्यमानं वस्तु अन्यत्राविद्यमानमपि विद्यमानमिव भाति । तथा दर्शनात् । न हि दृष्टेऽनुपपन्नं नाम । तथा च भ्रमेण तद्विषयस्य तत्र विद्यमानत्वरूपं सत्त्वं प्राप्तं बाधकज्ञानेन अपाद्यते । तेन अत्राविद्यमानत्वरूपमसत्त्वं विषयस्य निश्चीयते । एवं सति ख्यातिबाधान्यथानुपपत्त्याऽनिर्वचनीयत्वं सिद्ध्यतीति कथमेतत् । उक्तरीत्या तयोरन्यथैवोपपन्नत्वात् । विषयस्य सदसद्विलक्षणत्वरूपानिर्वाच्यत्वाभ्युपगमेन परिहार्याया अनुपपत्तेः सर्वथा विरहात् । तदेवमद्वैतानुरागमात्रकल्पितेयमर्थापत्तिः न प्रमाणभूतेति विभाव्यम् ।

एतेन बाध्यत्वं सति असति चानुपपन्नमिति अनिर्वाच्यमित्येतदपि प्रत्युक्तम् । नास्तीति निषेधप्रतियोगित्वरूपं बाध्यत्वं सति न सम्भवति । तुच्छापरपर्याये असति च अस्तित्वप्रसक्त्यभावात् नास्तीति निषेधप्रतियोगित्वं नाम न सम्भवति । तावता निषेधप्रतियोगिनः शुक्तिरूप्यस्यानिर्वचनीयत्वं नाम अपूर्वः कश्चन आकारः कथमास्थीयते ? ननु शुक्तिरूप्यस्य बाध्यत्वं तावदस्ति । तत् तस्य सद्विलक्षणत्वमसद्विलक्ष

णत्वं च विना नोपपद्यते इति तदुभयं कल्पयति । तदेवानिर्वचनीयत्वमिति चेत्, इदमिष्टमेवास्माकम् । ब्रह्मासत्यरूप्याभ्यां भिन्नत्वात्, तुच्छभिन्नत्वाच्च शुक्तिरूप्यस्य । ईदृशमप्यनिर्वचनीयं सत्यरूप्यादेर्नास्ति । कालसम्बन्धित्वाबाध्यत्वादिरूपस्य सत्त्वस्य तत्र सत्त्वेन सद्विलक्षणत्वाभावात् । शुक्तिरूप्यवद् बाधाभावात् । ब्रह्मज्ञानबाध्यत्वस्याप्यसिद्धेः । विशिष्य ब्रह्मात्मकसद्भिन्नत्वनिवेशने इष्टापत्तेः । अस्ति हि सत्येऽपि प्रापञ्चिके वस्तुनि ब्रह्मविलक्षणत्वं च तुच्छविलक्षणत्वं च । वस्तुतस्तु शुक्तिरूप्यस्य धर्मिण एवाभावात् तस्यानिर्वचनीयत्वधर्मः कथं सम्भवेत्, यस्य लक्षणमुच्येत । तस्मान्निषेधप्रतियोगित्वान्यथानुपपत्तिरूपाऽर्थापत्तिरनिर्वाच्यत्वे प्रमाणमित्येतन्नास्ति ।

आगमोऽपि नास्ति । 'नासदासीन्नो सदासीत् तदानीम्' इत्येतद्धि तत्र प्रमाणमिष्यते । अत्र तदानीं प्रलयकाले असत् नासीत्, सदपि नासीत्, इत्युच्यते । एतेन अस्मिन् सृष्टिकाले असच्छब्दवाच्यं यत् किञ्चिदस्ति तत् इतः प्राक्तने प्रलयकाले नासीत् । सच्छब्दवाच्यं च यत् किञ्चिदिदानीमस्ति, तत् तदानीं नासीदित्युक्तं भवति । तत्र अपरिणामितया, सर्वदा एकरूपतया, सत्त्वात् चेतनवस्तु सदित्युच्यते । एतद्विपरीतत्वात् अचेतनवस्तु असदित्युच्यते । 'तदनुप्रविश्य, सच्च त्यच्चाभवत्' इति सृष्ट्यनन्तरं ब्रह्मात्मकं चेतनाचेतनवस्तुजातं तावल्लोके वर्तते । ईदृशं किमपि प्रलयकाले नासीदित्यर्थः । पृथिव्यन्तरिक्षादिरूपा लोका अपि नासन्नित्युपर्युच्यते । एवं समञ्जसोऽस्य मन्त्रस्यार्थः अस्मद्भाष्यकारैरुक्तोऽपि । भवदभिमतस्यार्थस्य तु गन्धोऽप्यत्र नास्ति । न हि सदसद्विलक्षणं अनिर्वचनीयं वस्तु आसीदित्यर्थोऽत्र सुवचः । असत् नासीत्, सत् नासीत् इति पृथगाख्यातश्रवणात् । सद्भिन्नमसद्भिन्नमित्यर्थाङ्गीकारे लक्षणादोषाच्च । नासीद्रज इत्यादिना वैरूप्याच्च ।

अथ असत् निरुपाख्यं नासीत् । सत् सत्त्वेन निर्वाच्यमपि नासीत्,

इत्यक्षरार्थे । पर्यवसानगत्या तु सदसद्भिन्नमासीदिति लभ्यत इति चेत् सत्त्वेन निर्वाच्यस्य प्रकरण ब्रह्मत्वात् सन्नासीदित्यतद् बाधितम् । निषेधप्रकरणे कस्यचित् सत्त्वप्रतिपादने तात्पर्याङ्गीकारश्चान्याय्यः । तदानीमित्यस्यानन्वयश्च । न हि तदानीमेवानिर्वाच्यसत्ता भवतामिष्टा । सृष्टानामपि पदार्थानामनिर्वाच्यत्वाङ्गीकारात् । न चेष्ट एवानन्वय इति वाच्यम् । प्रकृतापादकत्वेनाभ्युपगतस्य स्वरमासिद्धस्य बाधावह्नत्वेन भवदाभिमतार्थस्याप्यन्यथासिद्धत्वात् । यत्तु सदसच्छब्दौ पारमार्थिकापारमार्थिकवाचिनाविति तन्न । व्याघातापत्तेः । न हि पारमार्थिकभिन्नस्य अत एव स्वयमपारमार्थिकस्य अज्ञानस्य अपारमार्थिकभिन्नत्वं भवेत् । अपारमार्थिकभिन्नस्य वा पारमार्थिकस्य पारमार्थिकभिन्नत्वम् । ननु पारमार्थिकं ब्रह्म । अपारमार्थिकं तुच्छम् । तदुभयभिन्नत्वमविद्याया इति चेत् इष्टान्तरमेतत् । जगदुपादानभूतायाः सत्याया एव प्रकृतेः तदुभयभिन्नत्वमिष्टम् । न च तेन भवदभिमतमनिर्वचनीयत्वं सिद्ध्यतीति । एतेन अबाध्यत्वमेव पारमार्थिकत्वं सत्त्वं वा । क्वचिदपि सत्त्वेन प्रतीत्यनर्हत्वं तु अपारमार्थिकत्वं असत्त्वं वा । एतदुभयानधिकरणत्वमविद्याया अनिर्वचनीयत्वमिति प्रत्युक्तम् । प्रपञ्चोपादानभूताया अविद्याया बाध्यत्वे प्रमाणाभावेन अबाध्यत्वानधिकरणत्वासिद्धेः । अद्वैतश्रुत्या सिद्ध्यतीति चेत् प्रकृता श्रुतिरनिर्वचनीयत्वसाधनाय नालमिति तावदङ्गीकृतं भवति । तथा च अद्वैताभिमानातिरिक्तं किमपि अनिर्वचनीयत्वकल्पनामूलं नास्तीति वक्तव्यमापतितम् ।

## ४२ ख्यातिभेदः

अथ भ्रमस्थले अनिर्वचनीयख्यातिं भजता यदसत्ख्यातिनिराकरणं चिकीर्ष्यते तदस्माकमनुकूलमेव । यत्तु अन्यथाख्यातिदूषणं तदसमीचीनम् । भवताऽप्यवर्जनीयत्वात्, आश्रितत्वाच्च । "पूर्वोत्पन्नाविनष्टशुक्त्यभिन्नतया महत्त्यैव तत्र प्रतिबन्धकत्वात्" इति ह्यनुपदं भाषितम् ।

रूप्यस्य शुक्तिभिन्नस्य तदभिन्नतया ग्रहणमुच्यते। एवं अकर्तुः कर्तृत्वेन अनात्मन आत्मत्वेनेत्यादि भूयिष्ठमुच्यते। तस्मादन्यथाख्यातिर्दुस्त्यजा। तत्र किं अन्यत्र सदेव भासते उत भवदभिमतमनिर्वचनीयमिति तु विमर्शनीयमवशिष्यते। तत्र आद्य एव पक्षो युक्त आश्रयितु, न द्वितीय इत्यातिष्ठामहे। तथा हि। 'अत्यन्तासत इवान्यत्र सतोऽप्यपरोक्षप्रतीतिप्रयोजकसन्निकर्षानुपपत्तेस्तुल्यत्वात् अन्यथाख्यातिरयुक्ते'ति भवानाह। शुक्तिरूप्यप्रतीतेरपरोक्षप्रतीतित्वमभ्युपेत्य वा इदमुच्यते अनभ्युपेत्य वा। आद्ये तदन्यथाऽनुपपत्त्या संस्कारादेर्भ्रमस्थले सन्निकर्षत्वमङ्गीकरणीयम्। अन्त्ये रजतप्रतीत्यंशे अपरोक्षानुभवत्वं निराकृत्य परोक्षानुभवत्व, तस्याप्ययोगे स्मृतित्व वा साधनीयम्। अनिर्वचनीयविषयत्वस्य तु कः प्रसङ्ग। रजतं पश्यामीति प्रतीतिव्यवहारयोर्भ्रमे वानपि औपचारिकत्वमेवेच्छति। स्मृतिरूपत्वं च तस्मिन्नंशे। तावत्तोपपत्तौ अपूर्वस्य रूप्यस्योत्पत्ति, विनाशं, उत्पत्तिविनाशप्रतीतिप्रतिबन्धं च न्यायवित् कः कल्पयेत्। कल्प्यमानं वा को न्यायवित् सहेत। न हि अनिर्वचनीयं पश्यामीति कस्यचिदनुभवोऽस्ति। न चान्यत् किमपि प्रमाणमस्ति, येन भ्रमे अनिर्वचनीयं विषय इति ज्ञायते।

एवमपूर्वरजतोत्पत्तिविनाशतत्प्रतीतिप्रतिबन्धकल्पनागौरवात् प्रमाणाभावाच्च नानिर्वचनीयख्यातिरित्युक्तम्। नेदं रजतमित्युत्तरकालीनबाधानुपपत्तेश्च न सा युक्तेति ज्ञेयम्। अयं हि बाधो नानिर्वचनीयविषयः। तस्य स्थितत्वेन बाधायोगात्। नापि सत्यरजतविषय इति भवता शक्यं वक्तुम्। तस्य पूर्वप्रतीतिविषयत्वेनानिष्टत्वात्।

किञ्च इदं रजतमिति प्रतीतिरेव अनिर्वचनीयस्य विषयत्वे असम्भविनी। सत्यरजतत्वावगाहिनी ह्येषा। अन्यथा तदुपादानार्थप्रवृत्त्यनुपपत्तेः। अनिर्वचनीयमेव सत्यरजतत्वेन भातीति चेत् तत् कुतो रजतत्वेन भाति न घटत्वेन लोहत्वेन वा। रजतत्व तत्र वर्तत इति चेत् किं तत

पारमार्थिकम् उत प्रातिभासिकम्। नाद्यः। अपकृष्टसत्ताकस्य उत्कृष्टसत्ताकधर्माधिकरणत्वायोगात्। अन्यथा मिथ्याभूतस्यापि विश्वस्य पारमार्थिकसत्त्वप्रसङ्गात्। न च तत्र अद्वैतश्रुतिर्बाधिकेति वाच्यम्। अत्रापि नात्र रजतमासीदिति बाधकप्रतीतेः सत्त्वात्। धर्मिण इव धर्मस्यापि ह्यसद्भाव एषा प्रतीतिर्गोचरयति। शुक्तित्वाश्रयोऽयम्। न रजतत्वाश्रय इति हि बाधकप्रत्ययविषयविवरणं क्रियते। न द्वितीय। तादृशरजतत्वोत्पत्तौ नियामकाभावात्। लोहत्वं वा सुवर्णत्वं वा कुतो न भवति।

ननु शुक्तेरौज्ज्वल्यरूपं यद्रजतसादृश्यं तदेव नियामकमिति चेन्न। सम्बन्धाभावात्। शुक्तौ विद्यमानं रजतसादृश्यं तत्रोत्पद्यमानस्यानिर्वचनीयस्य रजतत्वं कथमापादयेत्। न हि गोसदृशगवयशरीरोत्पन्नस्य क्रिमेर्गोत्वं भवेत्। ननु रजतसादृश्यात् रजतस्मरणे जाते तदभेदग्रहात् तत्तादात्म्यग्रहाद्वा इदं रजतं इति प्रतीतिर्जायत इति यूयं प्रतिपन्नाः। इयं प्रतीतिरेवास्माकं उत्पन्नस्यानिर्वचनीयस्य रजतत्वं सत्त्वेन ख्याने च नियामिकेति चेन्न। न हि पूर्वोत्पन्ने विषये तत्तन्नियामकत्वं पश्चादुत्पद्यमानायाः प्रतीतेर्युज्यते। विषय ग्राहकत्वमात्रं हि प्रतीतेः। न तु विषये विशेषापादकत्वम्। एतेन सत्यमिथ्यारजतयोः साधारणं रजतत्वमिति प्रत्युक्तम्। मिथ्यावस्तुनो रजतत्वे हेत्वभावात्।

उत्पादकाभावादपि अनिर्वचनीयं नोत्पद्यते न च ख्यायत इति द्रष्टव्यम्। शुक्त्यज्ञानं तदुत्पादकमिति चेन्न। शुक्त्यज्ञाने प्रमाणाभावात्। ज्ञातुरेव हि अज्ञानम्। न तु ज्ञेयस्य जडस्य। ज्ञात्रज्ञानादतिरिक्तमिदं विषयगतमज्ञानमिति चेन्न। दत्तोत्तरत्वात्। विषयाज्ञाने प्रमाणाभावस्योक्तत्वात्। विषयावच्छिन्नचैतन्यस्येदमज्ञानमिति चेन्न। तस्य ज्ञातृत्वाभावेन अज्ञानाश्रयत्वायोगात्।

## ४४ सत्ताद्वैविध्यम्।

अनिर्वचनीयस्यासिद्ध्या तस्य सत्ता दूरोत्सारिता। प्रतीतिमात्रं हि

विषयस्य भ्रमे, न तु वस्तु तदस्ति । तेन प्रातिभासिकसत्तेति शशशृङ्गादिपर्याय एव । व्यावहारिकसत्ता पारमार्थिकसत्तेति विभागोऽप्यनुपपन्नः । प्रपञ्चस्यापि परमार्थतः सत्त्वात् । नित्यसत्ता अनित्यसत्तेति तु कामं विभागो भवेत् । ब्रह्मसत्तायाः सार्वकालिकत्वात् । प्रपञ्चसत्तायाश्च सृष्टिकालमात्रभावित्वात् । स्वरूपतस्तु चेतनाचेतनयोरपि नित्यैव सत्ता । प्रलयेऽपि सूक्ष्मरूपेण सत्त्वात् । तदेवं पराभिमताज्ञानोपादानत्वाभावात् परमार्थसत्प्रकृत्युपादानकत्वाच्च सत्यमेव जगत्, न तु मिथ्येति सिद्धम् ।

दोषैरशेषैः प्रतिपन्नभङ्गं
दृश्यत्वलिङ्गं न कथञ्चिदीष्टे ।
प्रत्यक्षसिद्धस्थिरसत्त्वभावे
मिथ्यात्वमापादयितुं प्रपञ्चे ॥

श्रीमते श्रितभयद्रुशुष्मणे
कालमेघकमनीयवर्ष्मणे ।
विश्वसंहृतिविधानवर्तन-
क्रीडया नतिरियं रतिं यते ॥

इति

विशिष्टाद्वैतसिद्धौ
विभूतिपारमार्थ्यं नाम
प्रथमः परिच्छेदः

—:०:—

# द्वितीयः परिच्छेदः

## १ अखण्डार्थवाद

अथ हेयबन्धनिरूपणानन्तरं उपादेयं ज्ञानं निरूपयाम इति प्रतिज्ञाय अखण्डार्थसाधनायोपक्रमते । तत्र अद्वैतानुसारेण प्रपञ्चसृष्टिरेव नोपपद्यत इत्यवोचाम । शुद्धचैतन्यस्य हि निर्विकारत्वात् लोकसृष्टौ प्रवृत्तिर्न भवति । नाप्यविद्यायाः । जडत्वात् । नाप्यविद्योपहितस्य ब्रह्मणः । उपधानस्यासम्भवात् । ब्रह्मणि अध्यस्ता हि अविद्या तदुपदधीत । कथमध्यासः ? शुद्धचैतन्यस्य निर्विकारस्य स्वतः अध्यासायोग्यत्वात् । अध्यासविरहे अविद्यास्वरूपस्यैवासिद्धेः । न च अनादित्वमत्र परिहारः । कदाऽध्यासारम्भ इति चोद्यं अनादित्वेन परिह्रियेत । न च तच्चोद्यमत्र क्रियते । किन्तु साङ्ख्याभिमतप्रधानपुरुषयोरिव भवदभिमताज्ञानब्रह्मणोरपि प्रपञ्चप्रादुर्भावहेतुत्वं नोपपद्यत इति । यथा 'शशे कथं शृङ्गसम्भवः ?' इति प्रश्नस्य 'अनादित्वेन' इति समाधानं न भवति । तथा प्रकृते द्रष्टव्यम् । ततश्च—"नैसर्गिकोऽयं लोकव्यवहारः" इत्यनेन भाष्येण अपरिहृत एवाक्षेपः । एवं च बन्धहेतोरन्यादृशस्यैव वक्तव्यत्वात् तत्परिहारोपायोऽपि अन्यादृश एव । न त्वखण्डार्थज्ञानरूप इत्येतत्सिद्धम् ।

अनुपपन्ना चेयमखण्डार्थता । तथा हि "अपर्यायशब्दानां संसर्गागोचरप्रमितिजनकत्वं" वा "तेषामेकप्रातिपदिकार्थमात्रपर्यवसायित्वं" वा अखण्डार्थत्वमुच्यते । न च लौकिके वैदिके वा यस्मिन् कस्मिन्नपि वाक्ये इदं सम्भवति । ससंसर्गस्यैव वाक्यार्थत्वात् । तद्बोधकत्वे वाक्यत्व

यत्तु "प्रकृष्टप्रकाशश्चन्द्र इत्यस्य चन्द्रस्वरूपमात्रपरत्वादखण्डार्थत्वम्। चन्द्रस्वरूपमात्रपरत्वं चास्य तन्मात्रबुभुत्साप्रयुक्त "कश्चन्द्रः" इति प्रश्नानुसारात्। अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यापत्ते"रिति, तत्र ब्रूमः। चन्द्रस्वरूपमात्रबुभुत्सया कश्चन्द्र इति पृच्छन् जिज्ञासुः वृद्धेन किं वक्तव्यमपेक्षते। अङ्गुलिनिर्देशेन बोधने तावत् वाग्व्यवहारो वर्जयितुं शक्यः। यदा तु वाचैवोत्तरं देयं भवति, तदा प्रष्टा वृद्धेन किं वक्तव्यमित्यपेक्षत इति विवेचनीयम्। चन्द्र इति वा चन्द्रश्चन्द्र इति वा केवलमुच्यमानं नोत्तरं भवति। बुभुत्सानिवर्तनाक्षमत्वात्। तेन चन्द्रगते यस्मिन् धर्मे उक्ते तद्दर्शनेन अयं चन्द्र इति स्वस्य बोधो जायेत स धर्मो वृद्धेन वक्तव्य इत्येव प्रष्टाऽपेक्षते। तत्र कश्चन्द्र इति प्रश्नवाक्यस्य चन्द्रस्वरूपं किमित्यर्थकत्वे तस्य प्रकारान्तरेण बोधयितुमशक्यत्वात् तद्बोधजनकतद्वृत्तिधर्मरूपं लक्षणं किमित्यर्थात् पृष्टं भवति। चन्द्रः कः। कीदृशं किंलक्षण इत्यर्थकत्वे तु लक्षणबुभुत्सा कण्ठोक्ता, स्वरूपबुभुत्साऽर्थसिद्धा। उभयथाऽपि असाधारणधर्मविषय एव प्रश्नः। तस्मादुत्तरमपि तद्विषयकम्। अन्यथा वैयधिकरण्यात्। अत एव लक्षणवाक्यमिदमुच्यते। अन्यथा लक्ष्यभूतचन्द्रवाक्यं स्यात्। उद्देशवाक्यमिति यावत्।

लक्षणस्य च वाक्ये उद्देश्यतावच्छेदकत्वम्। 'यः प्रकृष्टप्रकाशः स चन्द्रः' इति। तस्य लक्ष्यावधारणात् पूर्वं ज्ञातत्वावश्यम्भावादनुवाद्यकोटिप्रवेशः। यदा असकृच्चन्द्रस्वरूपज्ञानरहितः कश्चित् व्योम्नि विभ्राजमानं चन्द्रमन्यानि च ज्योतींषि सम्यग् विलोक्य ततः परं गृहान्तर्गत्वा तत्रत्यं वृद्धं कश्चन्द्र इति पृष्ट्वा प्रकृष्टप्रकाशश्चन्द्र इति तदीयमुत्तरवाक्यं शृणोति तदा स्वयं एव पूर्वदृष्टप्रकृष्टप्रकाशज्योतिर्व्यक्तिरेव चन्द्र इत्यवधारयति। इदमवधारणं लक्षणवाक्यार्थज्ञानोत्तरकालभावि तत्फलभूतम्। यदा तु चन्द्रस्वरूपविवेकशून्यः अदृष्टज्योति-

मण्डलस्थ कश्चित् गृहाभ्यन्तर एव स्थित पूर्ववत् प्रश्न कृत्वा तद्देवो-त्तर लभते, तदा तस्य वाक्यार्थज्ञाने जातेऽपि इय ज्योतिर्व्यक्तिः प्रकृष्ट-प्रकाशेति पूर्वमज्ञानात् सद्यश्चन्द्रस्वरूपनिर्धारण न भवति। बहिर्गत्वा उदीक्ष्य तत परमवधारयति। एव पूर्व ज्ञातो वा अज्ञातो वा असा-धारणधर्मः लक्षणवाक्ये उद्देश्यतावच्छेदकतया प्रतीत वाक्यतात्पर्य विषयो भवति। तस्मात् कश्चन्द्र इति प्रकृष्टप्रकाशश्चन्द्र इति च प्रश्नोत्तरे केवलस्वरूपविषये इति, लक्षणवाक्येन लक्ष्यस्वरूपावधारण भवतीति च केवल भ्रमपरम्परेयम्। गन्धवती पृथिवीत्यतो हि पृथिव्या गन्धवत्त्व लक्षणमित्येतावदवगम्यते। तेन पश्चात् गन्धवद्द्रव्यदर्शने इयं पृथिवीति तत्स्वरूपावधारण भवति। तस्मात् लक्षणवाक्यजन्यशाब्दज्ञा-नातिरिक्त तत्कालभूत लक्ष्यस्वरूपावधारणमिति ज्ञेयम्।

लक्षणवाक्यस्यैव उद्देश्यविधेयविपर्यासे लक्ष्यस्वरूपपरवाक्यत्व भवति। 'ज्योतिर्मण्डले प्रकृष्टप्रकाश क' इति प्रश्ने 'चन्द्रः' इति यदुत्तरं भवति, तेन 'योऽय चन्द्रः स प्रकृष्टप्रकाश' इति बोधस्य जननात्। 'प्रकृष्टप्रकाशत्वाश्रय कः मम जिज्ञासाविषय' इति हि प्रश्नस्यार्थः। 'यश्चन्द्र स तदाश्रय' इति तदनुगुणमुत्तरम्। ईदृशे एव प्रश्नोत्तरे "कोन्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान्" इति, "रामो नाम जनैः श्रुतः" इति च। अतः लक्षणपर वाक्यमन्यत्, धर्मिस्वरूपपरं वाक्यमन्यदिति विवेक्तव्यम्। तत्र लक्षणवाक्यस्य धर्मपरत्वमेव नस्वि-तरवद् धर्मिपरत्वमिति च।

एवत्सर्व बुद्धौ धारयता, यदाह—"यद्यपि यश्चन्द्रः तत्र चन्द्रत्व तमोनक्षत्रादिव्यावृत्तिश्चास्तीति मया ज्ञायत एव। तथापि चन्द्रस्वरूप परं न ज्ञायत इत्यनुभवेन व्यावर्तकव्यावृत्तिविशिष्टस्याजिज्ञासितत्वेन जिज्ञासितं चन्द्रस्वरूपमेव विपर्ययविरोधिज्ञानविशेष जनयता "प्रकृष्ट प्रकाशश्चन्द्र" इति वाक्येन बोध्यत इति किमनुपपन्न"—इति, तत्सर्व

मत्यन्तमनुपपन्नमिति सुगमम । प्रथमं तावत् चन्द्रस्वरूपमात्र जिज्ञासमानेन अत एव कश्चन्द्र इति पृच्छता कीदृशमुत्तरं परमुखात् प्रतीक्ष्यत इति पूर्वोक्तरीत्या विमर्शनीयम । न हि व्यावर्तकधर्मोपादानं विना चन्द्रस्वरूपज्ञापन परेण शक्य कर्तुमिति अथ प्रष्टा मन्यते। न हि येन केनापि लोके कस्यचिद् वस्तुनः स्वरूप तदसाधारणधर्मनिर्देशमन्तरेण परस्मै बोधयितु शक्यम्। इद जानता प्रष्ट्रा चन्द्रस्वरूपमात्रमे जिज्ञासितं, न तु तत्र व्यावर्तकवैशिष्ट्यमिति नैव अभिसन्धिमता भवितु शक्यम्। अजानता तु मौढ्य काष्ठा गतेन भवितव्यम्। तथा च तस्मै नैवोत्तर ददीत वृद्धः। ददानो वा "चन्द्र एव चन्द्रः" इति ददीत। 'प्रकृष्टप्रकाशश्चन्द्रः' इत्येतदुत्तरं ददानस्तु व्यावर्तकधर्मबुभुत्सयैव प्रष्टा प्रश्न करोतीति मन्यते। न चाय भ्रान्त। प्रश्नस्यार्थान्तरासम्भवस्योक्तत्वात्। न च तर्हि किंलक्षणकश्चन्द्र इत्येव प्रश्नेन भाव्यम्। स्वाधीने शब्दप्रयोगे निष्प्रयोजनलाक्षणिकप्रयोगस्यान्याय्यत्वादिति वाच्यम्। उच्चारणलाघवस्य वाक्यसौन्दर्यादेश्च प्रयोजनस्य सत्वात्। स्वरूपपरत्वेऽपि लक्षणाया अपरिहार्यत्वात्। अग्रे तिष्ठन्तं प्रत्यपि हि बहुल प्रश्न कुर्वन्ति कस्त्वमिति। न हि तत्र स्वरूपजिज्ञासा। न च स्वरूपं किंशब्दवाच्यान्तर्भूत, येन तत्र लक्षणा न स्यात्। बुभुत्सितमात्राभिधायित्वात्। किंस्वरूप इत्यपि प्रयोगाच्च।

अथ योऽय प्रष्टुरनुभव उक्तः सोऽत्यन्तमसम्भावितः दृष्टान्तसिद्धये स्वयं कल्पितः। न हि चन्द्रत्व तमोनक्षत्रादिव्यावृत्तिं च चन्द्रे जानतः कस्यचित् तत्स्वरूपज्ञानमात्र नास्तीति अस्ति सम्भवः। इदं तावद्भवाना-पृष्टाम्—प्रकृष्टप्रकाशकृता व्यावृत्तिः प्रष्टुर्विदिता न वा। आद्ये तस्या अजिज्ञासितत्वात् उत्तरवाक्ये तत्पदमनुपादेयमेव। अन्त्ये व्यावर्तकव्यावृत्तिविशेषवैशिष्ट्यं तस्य जिज्ञासितमेवेति स्वरूपमात्रे तात्पर्यासिद्ध्या नाखण्डार्थत्वम्।

किञ्च चन्द्रस्वरूपमजानतः चन्द्रपदस्य वाच्योऽर्थः कश्चिदस्तीति सामान्यतो ज्ञानवत्त्वेऽपि अयं चन्द्रपदवाच्य इति ज्ञानं नास्तीत्येव वक्तव्यम्। तेन तदीयस्य प्रश्नस्य च चन्द्रपदवाच्यः कः इत्येवार्थः। तदनुसारेणोत्तरस्यापि यः प्रकृष्टप्रकाशः स चन्द्रपदवाच्य इत्येवार्थ इति स्वरूपलक्षणाया न प्रसङ्गः। किञ्च प्रकाशवत्त्वेन तमआदिव्यावृत्तिः। तत्र प्रकर्षेण नक्षत्रादिव्यावृत्तिः। एतदुभयं च प्रागेव ज्ञातवतः प्रकृष्टप्रकाशत्वविशेषणाधीना व्यावृत्तिरजिज्ञासितेति उत्तरे एतद्विशेषणग्रहणमनुपपन्नमेव।

यत्तु रजतभिन्ना शुक्तिरिति निश्चये सत्यपि यथा इदं रजतमिति विपर्ययो भवति तथा च चन्द्रस्वरूपे ज्ञातेऽपि विपर्ययो भवितुमर्हत्येव। तद्विरोधिज्ञानानुदयदशायां कश्चन्द्र इति प्रश्नो युज्यते। तस्य स्वरूपमात्रविषयत्वात् उत्तरमपि तन्मात्रविषयम्। अत एवाखण्डार्थमिति, तदसमञ्जसम्। परोक्षनिश्चये सत्यपि दोषवशात् पीतशङ्खशुक्तिरजताद्यपरोक्षभ्रमो भवति। तथा किं प्रकृते अयं न तमोविलक्षणः, न प्रकृष्टप्रकाशः इति वा, इदं तम इति वा प्रत्यक्षभ्रमो भवतीत्यभिप्राय? ओमिति चेत् शोच्यो भवान्। न खलु चन्द्रं साक्षात्पश्यतः कस्यचिदेव विपर्ययो भवितुमर्हति। अथ परोक्षभ्रमोऽभिप्रेतः सोऽप्यसम्भवी। तम आदिविलक्षणत्वस्य निश्चितत्वात्। न हि शङ्खयाथात्म्यज्ञानवतः कदाचिदपि तत्पीतिमविषयः परोक्षभ्रमो भवति।

एतेन प्रश्नोऽप्यनुपपन्न इति ज्ञापितम्। चन्द्रस्वरूपस्वभावादेः सुज्ञातत्वात्। विपर्ययस्य चासम्भावितत्वात्। विपर्ययसम्भवं कृत्वा चिन्तायामपि प्रश्नो न सम्भवति। न हि शङ्खपीतिमदर्शी वा शुक्तिरजतदर्शी वा कः शङ्ख इति वा का शुक्तिरिति वा पृच्छति। एवं च प्रकृष्टप्रकाशश्चन्द्र इत्युत्तरमप्यनवकाशम्। एवं तु भवेत्। बालपरीक्षाप्रवृत्तो वृद्धः कश्चित् तं पृच्छति—सौम्य, अस्मिन् ज्योतिर्मण्डले कश्चन्द्र

इति। वृद्धिसम्पन्नो बालः प्रतिवदति 'प्रकृष्टप्रकाशश्चन्द्रः' इति। तत्र चोक्तरीत्या व्यावर्तकधर्मवैशिष्ट्यविषये एव प्रश्नोत्तरे उभे अपीत्यास्तां तावत्।

अथ यदिमे वाक्ये अखण्डार्थत्वसाधनसम्भिणा कदर्थीक्रियेते दुर्वृत्तेनेव अन्यपरिणीता अप्रौढा, तत्रानुपपत्तिं दर्शयामः। 'चन्द्रत्वविशिष्टधर्मी, कः इतरव्यावृत्ततया, व्यावर्तकधर्मवत्तया, मम जिज्ञासितः" इति तावत् प्रश्नार्थः। चन्द्रपदस्य गोपदादेरिव शक्यतावच्छेदकविशिष्टधर्मिवाचित्वात्। जिज्ञासायाः व्यावर्तकधर्मरहितकेवलस्वरूपमात्रपरत्वे अङ्गुलिनिर्देशेनैव ज्ञापनीयत्वापातेन उत्तरवाक्यप्रयोगानवकाशाच्च। यत्तु चन्द्रपदं स्वरूपमात्रवाचीति, तत् व्युत्पत्तिविरुद्धम्। जातिमात्रं वा व्यक्तिमात्रं वा न पदवाच्यम्। अपि तु जात्यवच्छिन्ना व्यक्तिः, इति ह्यवधारितम्। लक्षणयेति चेन्न। लक्षणाश्रयणे मानाभावात्। एवं च फलतः व्यावर्तकधर्मस्यैव पृष्टत्वात् तदनुरूपमुत्तरम्—'प्रकृष्टप्रकाशश्चन्द्रः,' इति। ज्योतिर्मण्डले यः प्रकृष्टप्रकाशः स चन्द्र इत्युक्तं भवति। अत्र प्रकृष्टप्रकाशत्वावच्छिन्नं धर्मिणमुद्दिश्य चन्द्रत्वावच्छिन्नधर्म्यभेदो विधीयते। फलतः प्रकृष्टप्रकाशत्वं चन्द्रस्येतरेभ्यो व्यावर्तको धर्म इति सिध्यति।

ननु प्रश्ने चन्द्रपदस्य चन्द्रत्वावच्छिन्नपरत्वे कश्चन्द्र इत्यत्र किंशब्दार्थस्य बुभुत्सितत्वस्य तत्राप्यन्वयः सङ्गः। विशिष्टान्वये विशेषणान्वयस्यापरिहार्यत्वात्। घटो दृष्ट इत्यत्र घटत्वस्यापि दृष्टत्वप्रतीतेः। न च चन्द्रत्वमपि बुभुत्सितम्। व्यावर्तकधर्मस्य अनवगतत्वेन उत्तरस्यासङ्गतत्वापत्तेः। तथा च तत्र चन्द्रपदं तत्स्वरूपमात्रपरं वाच्यम्' तदनुरोधाच्चोत्तरेऽपीति चेन्मैवम्। विशिष्टान्वयेऽपि विशेषणान्वयस्याभावात्। तथा व्युत्पत्त्यभावात्। न हि दण्डो घटकारणमित्युक्ते दण्डत्वस्यापि कारणत्वमुक्तं भवति। घटो दृष्ट इत्यत्रापि घटत्वस्य दृष्टत्वप्रत्ययो

न शाब्द । अपि तु प्रतीतिविषयतावच्छेदकत्वमप्रतीतस्य न भवतीत्यर्थात् सिद्धः । सर्वत्र तु विधेयस्य उद्देश्यवाचकपदोपस्थापिते विशेष्य एवान्वय । तद्विशेषणस्य केवलमन्वयितावच्छेदकत्वमेवेत्यौत्सर्गिकम् । तदेव वाक्याभावात् प्रश्ने चन्द्रपद व्युत्पत्तिसिद्धविशिष्टवाच्येव । तदनुरोधश्चोत्तरेऽपि ।

एवं व्युत्पत्तिप्रायसिद्धस्वार्थसमर्पकतया सर्वसामञ्जस्ये सति हठादेव यदखण्डार्थत्वमुच्यते तत् सर्वथाऽनुपपन्नम् । तथा हि । चन्द्रपदं तावत् विशिष्टवाचितया व्युत्पन्नत्वात् चन्द्रस्वरूपमात्रपरत्वे लाक्षणिकं स्यात् । न च स्वरूपमात्रस्य जिज्ञासितत्वात् एतदनुरोधेन्युत्तरे लक्षणाऽपि ग्राह्येति वाच्यम् । स्वरूपमात्रजिज्ञासाया असम्भवस्यापपादितत्वात् । स्वरूपमात्रस्य प्रतिपत्तुमशक्यत्वाच्च । स पेतपदार्थो ह्यय स्वरूपमिति । अस्य स्वरूप तस्य स्वरूपमिति प्रतिसम्बन्धिना सहैव भानात् । तन्निरपेक्षतया स्वातन्त्र्येण भानस्य कदाप्यभावात । तस्माच्चन्द्रत्वावच्छिन्न एव चन्द्रपदवाच्य इति नास्याखण्डार्थम् । नापि प्रकृष्टप्रकाशपदार्थस्य । प्रकृष्टप्रकाशत्वाश्रयस्यैव तत्त्वात् । केवलस्याश्रयस्य स्वरूपाभिधानस्य प्रत्येतुमशक्यत्वात् । स्वरूपस्य द्विरभिधानवैयर्थ्याच्च । स्वरूपं स्वरूप इति द्विरभिधानेन किं नाम प्रयोजन भवति । प्रश्नोत्तरयोरुभयोरनुपपत्तेश्च । स्वरूप किमिति प्रश्न । स्वरूप स्वरूपमिति परस्परानभिवतया द्विरभिधानमुत्तरम् । न खल्वाभ्या प्रश्नप्रतिवचनाभ्या श्रोत्रोः कश्चन बोधो भवितुमर्हति । ननु स्वरूपमिति वस्तुत चन्द्रत्वाश्रयः प्रकृष्टप्रकाशत्वाश्रयश्चोच्यत इति चेन् किमत । न हि प्रतीत्यविषयेण विशेषणेन वस्तुनि विशेषोऽवगन्तु शक्यते । एतेन चन्द्रसम्बन्धित्व विना केवलव्यक्तिमात्र यदि चन्द्रपदेन श्रोता बुध्येत 'स्वरूप किमिति अय पृच्छति" इति, तर्हि प्रश्नमनुपपन्नमेव स मन्येत । निराकाङ्क्षबोधाजनकत्वात् ।

यत्तु गङ्गासम्बन्धित्वविशिष्टे तात्पर्याभावेऽपि वस्तुगत्या गङ्गा-सम्बन्धमेव तीरं लक्ष्यत इति, तन्न। गङ्गासम्बन्धित्वविशिष्ट एव तात्पर्यात्। अन्यथा शैत्यपावनत्वाद्यभानप्रसङ्गात्। अतो गङ्गातीरं एव लक्षणा। तीरत्वेन लक्षणायामपि तीरसामान्यस्यानन्वयात् विशेष-जिज्ञासाया शक्यार्थपर्यालोचनयाऽनुपदं गङ्गातीरत्वावधारणाच्च। सर्वथा तत्र शाब्दबोधपर्यवसानात्पूर्वं गङ्गातीरप्रतिपत्तिरस्तीति विभा-व्यम्। गङ्गासम्बन्धित्वपरित्यागेऽपि तीरत्वेन तावत् तीरस्वरूपं लक्ष्यते। न तु केवलं स्वरूपमिति च।

यच्च व्रीहीन् प्रोक्षतीत्यत्र व्रीहिपदेनापूर्वसम्बन्धित्वलक्षणाया वस्तु-गत्या व्रीहित्वाश्रयीभूता एव व्यक्तयो व्रीहिपदेन लक्ष्यन्त इति, तदपि भ्रान्तवचनम्। नहि तत्र व्रीहित्वाश्रयीभूता एव व्यक्तयो लक्ष्यन्ते। विकृतौ नीवारेषु प्रोक्षणानापत्तेः। प्रकृतावेव वैकल्पिकेषु यवेष्वनापत्तेश्च। तस्माद्भवदभिमतार्थेऽयमदृष्टान्तः। विपरीतदृष्टान्तस्तु भवेत्। यथा व्रीहिपदेन लक्षणया अपूर्वसाधनालक्षणात् व्रीहिव्यतिरिक्तद्रव्येष्वपि प्रोक्षणं भवति तथा प्रकृते चन्द्रादिपदेन केवलं स्वरूपं लक्षितं चेत् चन्द्रातिरिक्तकिंचिद्वस्तुस्वरूपमपि बुभुत्सितं ज्ञापितं च स्यादिति।

यत्तु प्रकृष्टप्रकाशाश्रयत्वस्योद्देश्यतावच्छेदकत्वे चन्द्रप्रातिपदिका-र्थत्वं दुर्वारमिति, तत् कथमिति वक्तव्यम्। न हि घटो नील इत्युक्ते उद्देश्यतावच्छेदकस्य घटत्वस्य नीलप्रातिपदिकार्थत्वं भवति। लक्षण-वाक्ये तदुक्तमिति चेत् को विशेषः। उच्यते। अयं विशेषः। यः प्रकृष्ट-प्रकाशः सः चन्द्रः चन्द्रपदवाच्यः इत्यर्थः। तत्र चन्द्रपदवाच्यता प्रकृष्टप्रकाशत्वविशिष्टे धर्मिणि प्रतीयते। तत्र विशेषणस्य विशेष्यनिष्ठ-वाच्यतायामवच्छेदकत्वं भवति। तेन तद्विशेषणस्यापि तत्पदवाच्यत्व-मापतति। पदवाच्यस्यैव धर्मस्य पदवाच्यावच्छेदकत्वादिति चेन्न। धर्मिविशेषस्य पदविशेषवाच्यत्वमुच्यते। कः स धर्मीति विशिष्य

ज्ञापनाय विशेषणं प्रयुज्यते। तत्र विधेये पदविशेषवाच्यत्वे उद्देश्यविशेषणस्य अवच्छेदकत्वं कथं भवत्। न हि कम्बुग्रीवादिमान् घट इत्युक्ते कम्बुग्रीवादेर्घटपदवाच्यतावच्छेदकत्वं भवति।

यत्तु व्याख्याने घटो ज्ञात इत्यत्र घटत्वस्य ज्ञाततावच्छेदकत्वं यथा तथाऽत्रापीत्युक्तं तदयुक्तम्। शब्दतस्तदलाभात्। घटत्वविशिष्टस्य ज्ञातत्वबोधानन्तरं केन रूपेणेति जिज्ञासायां पदोपात्ततया घटत्वेनेति पश्चात् अर्थत एव तदवच्छेदकत्वावगमात्। अत एव घटो द्रव्यत्वेन ज्ञात इत्युक्ते न तथाऽवगमः। तस्मादुद्देश्यविधेयभावस्थले उद्देश्यविशेषणस्य विधेयार्थावच्छेदकत्वापादनं अनिरूपकृत्यम्। या गन्धवती सा पृथिवी, पृथिवीशब्दवाच्या, इत्युक्ते, गन्धवतो द्रव्यस्य पृथिवीशब्दवाच्यत्वमित्येतावद् बोधयित्वा वाक्यं पर्यवस्यति। एतच्छब्दवाच्यतावच्छेदकं किमिति तु मानान्तरेणावधारणीयम्।

यथापरमुक्तं व्याख्याने—"एवं सति लक्षणवाक्यस्यानुवादकत्वापत्तिः। तेजस्त्वाद्युपहिते चन्द्रपदवाच्यत्वस्य पूर्वं ज्ञातत्वात्। प्रकृष्टप्रकाशानुपलक्षितेऽपि चन्द्रपदवाच्यत्वस्य निवारणासम्भवाच्च" इति, तदप्यसत्। यदि चन्द्रपदवाच्यो ज्ञातः किमिति तर्हि अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति पृच्छति। तेजोविशेषश्चन्द्र इति जानन् क स तेजोविशेष इति विशिष्य जिज्ञासमानो हि एवं पृच्छति। तं तेजोविशेषं प्रतिपादयतो वाक्यस्य कथमनुवादकता। अत एव यो न प्रकृष्टप्रकाशः स न चन्द्र इत्यर्थात् सिद्ध्यति। न तु शब्दस्य तत्र व्यापारः। अप्रकृष्टप्रकाशस्य च द्रव्यस्यापि चन्द्रपदवाच्यत्वाविदः वाचित इति तु प्रमाणशून्यम्। वाच्यत्वमिति हि पदजन्योपस्थितिविशेष्यत्वमभिप्रेतम्।

एतेन पृथिवीत्ववती पृथिवी, पृथिवीपदवाच्येत्यपि यथाश्रुतमेवोपपन्नमिति ज्ञापितम्। यदाहुः—पृथिवीशब्दार्थत्वेन पृथिवीत्वजातिविशिष्टमजानतः पृथिवीत्वपदेन जातेरुपस्थित्यभावात् अनन्वय एवेति,

तदयुक्तम् । पृथिवीत्वजातिमजानन्तमेव का पृथिवीति पृच्छन्तं प्रति पृथिवीत्ववती पृथिवीति तल्लक्षणमुच्यते । एतच्छ्रवणानन्तरं "पृथिवीत्वं नाम किञ्चिदस्ति । तद्यत्र वर्तते तत् पृथिवीशब्दवाच्यमित्ययं वदति" इति बुध्यमानः, पुनः किं पृथिवीत्वमिति पृष्ट्वा द्रव्यत्वव्याप्यो जातिविशेषः सः, इति जानातीति किमनुपपन्नम् । "अनुमितिकरणमनुमानम् । परामर्शजन्यं ज्ञानमनुमितिः । व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । साहचर्यनियमो व्याप्तिः ।" इति हि पूर्वपूर्वलक्षणवाक्यस्थपदार्थावगमाय उत्तरोत्तरलक्षणवाक्यानि प्रणीयन्ते । तादृशमिदं लक्षणवाक्यम् । अत्रापि पूर्ववत् पृथिवीत्वविशिष्टे पृथिवीपदवाच्यत्वेन शब्दात् ज्ञाते पृथिवीत्वस्य वाच्यतावच्छेदकत्वं पश्चात् ज्ञायते ।

तत्त्वमन्विच्छतामेतद् धीमता न न सुग्रहम् ।
एते तु वादिनयने धूलिक्षेपाज्जयार्थिनः ॥

तदेव लक्षणवाक्ये क्वापि कस्यापि पदस्याखण्डार्थता नास्ति । असाधारणधर्मवाचिनः पदस्य तद्विशिष्टधर्मिवाचित्वात् । विधेयसमर्पकपदस्यापि तत्तत्पदवाच्यत्वविशिष्टस्य वा धर्मान्तरविशिष्टस्य वा धर्मिणो वाचकत्वात् । प्रश्नस्थपदस्यापि विशिष्टवाचित्वं प्रश्नोत्तरयोः समानविषयकत्वं च पूर्वमेवोपपादितम् । एतेन अन्वयानुपपत्तेर्वा तात्पर्यानुपपत्तेर्वा लक्षणाबीजस्य विरहात् प्रकृष्टप्रकाशादिपदस्य लक्षणया स्वरूपमात्रे तात्पर्यं इत्येतदप्रामाणिकमिति सुगमम् । तथा हि । नक्षत्रादिभ्यो व्यावृत्तं वा चन्द्रस्वरूपं प्रष्टुर्बुभुत्सितम्, अव्यावृत्तं वा । आद्ये धर्मविशेषेणैव व्यावृत्तिर्भवतीति व्यावर्तकधर्मविशिष्टमेव स्वरूपं बुभुत्सितमित्युक्तं भवति । तत्र च प्रकृष्टेन प्रकाशेन विशिष्टं यत् तत् चन्द्रस्य चन्द्रपदवाच्यस्य वा स्वरूपमिति यथाश्रुतमुत्तरमुपपद्यते । न ह्यत्र अन्वयानुपपत्तेर्वा तात्पर्यानुपपत्तेर्वा अवकाशोऽस्ति, येन लक्षणया केवलस्वरूपमर्थं ब्रूयाम । अन्त्ये प्रकृष्टप्रकाश इत्युत्तरमसङ्गतं

'वस्तु' इति वा 'चन्द्र' इति वा केवल वक्तव्य स्यात्।

ननु स्वरूपमात्रजिज्ञासया प्रश्नः क्रियते। तद्बोधनप्रवृत्तेन तदुपाय तया व्यावर्तकधर्मोऽभिधीयते। अथाप्यस्याजिज्ञासितत्वात् प्रतिपाद्यत्वानु पपत्त्या जिज्ञासितस्वरूपलक्षणाऽऽश्रीयत इति चेन्न। स्वरूपबोधोपायतया बुद्धेन व्यावर्तकधर्मोऽभिधेय इति प्रष्टुरभिप्रायोऽस्ति न वा? आद्ये साक्षात् स्वरूप इव तत्प्रतिपत्त्युपायतया व्यावर्तकधर्मेऽपि बुभुत्सा तात्पर्यं च स्त एव। अन्त्ये प्रतिपत्त्युपायतयाऽपि न वक्तव्य प्रष्टुरनभिप्रेत त्वात्। अन्यथा प्रश्नानुत्तरत्वापत्तेरधिकत्वात्। अत एव लक्षणया स्वरूप मात्रपरत्वमिति चेन्न। प्रक्षालनाद्धि पङ्कस्येति न्यायेन स्वाधीन शब्दप्रयोगे विना प्रयोजनं लाक्षणिकप्रयोगायोगात्। गङ्गायां घोष इति लाक्षणिकवत् गङ्गातीरे घोष इति मुख्यप्रयोगोऽपि हि शक्य कर्तुम्। तथा स्वरूप विशेषश्चन्द्र इत्यपि मुख्यवृत्त्युत्तर स्यात्। न चैव कदाचिदपि भवति। नियमेन तु विशिष्टवाचकमेव पदमुत्तरवाक्ये प्रयुज्यते। तस्मात् विशिष्टमेव बुभुत्सित बुबोधयिषित चेति तत्त्वे स्थिते अखण्डार्थदुरनु मानदृष्टान्तसम्पादनार्थमेव एवमेतद्वाक्यकदर्थनमिति हस्तामलक मेतत्।

इद चात्र वक्तव्यम्। प्रकृष्टप्रकाशपदार्थस्य चन्द्रपदार्थस्य च पर स्परम न्वयोऽस्ति न वा। आद्येऽखण्डार्थत्वभङ्गः। अन्त्ये वाक्यत्वहानि। परस्परान्वितार्थकपदसमुदायस्यैव वाक्यत्वात्। गौरश्वो घटः पट इत्या देरवाक्यत्वात्। नन्वस्त्येव प्रथम विशिष्टार्थान्वयबोध। तेन बुभुत्सि तस्य चन्द्रप्रातिपदिकार्थस्य विपर्ययविरोधि ज्ञानमपि भवति। तेन वाक्यलक्षणं सुस्थम्। किन्तु तावति विश्रान्तिश्चेत् स्वरूपमात्रविषय प्रश्नस्यैवाभिकरणत्वापत्त्या तत्परिहाराय स्वरूपमात्रलक्षणाऽऽश्रीयत इति चेत् श्रूयताम्। स्वरूपविषया यादृशो बोध प्रष्टुरिष्टः स वाक्येन विशिष्टान्वयबोधे जाते सम्पन्नो न वा। आद्ये तदतिरिक्तस्वरूपबोध

स्यानपेक्षितत्वान्न लक्षणाया आवश्यकता। अन्त्ये प्रकृष्टप्रकाशपदोपादानस्य प्रकृतोपयोगाभावात् निष्फलत्वम्। न च उपयोगे सत्यपि विशिष्टे तात्पर्याभावात् एतदनुपपत्त्या स्वरूपमात्रे लक्षणाश्रयणमिति वाच्यम्। उपयुक्ततयोपात्ते तात्पर्याभावानुपपत्तेः। न हि घटेन जलमाहरेत्युक्ते घटस्वरूपस्यैव क्रियाकरणत्वयान्यत्वेन तात्पर्यविषयत्वं, न तु घटत्वस्य। अतः घटस्वरूपे लक्षणेति युक्तम्।

न च प्रष्टुस्तत्र तात्पर्याभावात् प्रतिवक्तुरपि तदयोगः। अनुपायस्य बोधनस्याशक्यत्वेन तत्र तत्तात्पर्यावश्यम्भावस्योक्तत्वात्। तत्तात्पर्याभावेपि प्रतिवक्तृतात्पर्यस्याविरोधाच्च। न च प्रश्नोत्तरयोर्वैयधिकरण्यम्। ईदृशस्य वैयधिकरण्यस्य इष्टत्वात्। न हि आम्रान् पृष्टः कोविदारानाचष्टेऽयम्। पृष्टं स्वरूपमेवाचष्टे। तेनैकविषयत्वं सिद्धम्। विशेषणतयाऽधिकं व्यावर्तकधर्ममप्याचष्टे। बुभुत्सितस्वरूपाख्यानोपयुक्तत्वात्। यथा "को न्वस्मिन् साम्प्रतं लोके" इति पुरुषमात्रप्रश्ने सति इक्ष्वाकुवंशप्रभवो रामो नाम ईति तमुक्त्वा 'रूपेच गुणसपन्नं रामं सत्यपराक्रमं' इत्यारभ्य तच्चरितवर्णनेन उत्तरस्य न प्रश्नवैयधिकरण्यम्। न वा तस्य तात्पर्याविषयत्वम्। बुभुत्सितपुरुषमाहमपर्यवसायित्वात्। यथा च अवरं भवता जन्म इति जन्ममात्राविषये प्रश्ने सति तत्प्रयोजनादिकथनस्य न वैयधिकरण्यापादकत्वं तात्पर्याविषयत्वं च। यथा च 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति।' इति ब्रह्ममात्रविषये प्रश्ने 'द्वे विद्ये वेदितव्ये।' इति विद्याद्वयपरस्योत्तरस्य न काचिदनुपपत्तिः।

यथैव 'प्रकृष्टप्रकाशश्चन्द्र.' इत्यस्य लौकिकलक्षणवाक्यस्य अखण्डार्थत्वं वा चन्द्रप्रातिपदिकार्थमात्रनिष्ठत्वं वा न भवति तथैव 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति वैदिकलक्षणवाक्यस्यापि अखण्डार्थत्वं वा ब्रह्मप्रातिपदिकार्थमात्रनिष्ठत्वं वा न भवतीति ज्ञेयम्। तथा हि। ब्रह्मविदाप्नोति परमिति परमपुरुषार्थसाधनतया ब्रह्मवेदनं विहितम्। तत्र यागरूढिभ्या

निरतिशयबृहत् ब्रह्मशब्दार्थं। तदिदं ब्रह्म लक्षणत कीदृशमिति जिज्ञासाया सत्यं ज्ञानमनन्त ब्रह्मेति तल्लक्षणमुच्यते। यद्यपि यो वेदेत्युक्तवदनकर्मकारकत्वात् द्वितीयान्तानि इमानि पदानि, तथाऽप्यर्थसिद्ध प्रथमा तपदघाटत वाक्य मेतदिति ज्ञेयम्। अत्र यत् सत्य ज्ञानमनन्त च तत् ब्रह्म निरतिशयबृहदिति वाक्यार्थः। सत्यत्व एकरूपतया सर्वदा विद्यमानत्वम्। अनेन प्रकृतेरिव तस्य विक्रिया नास्तीति लभ्यते। ज्ञानत्व नित्यासंकुचितज्ञानवत्त्वम। अनेन बद्धमुक्तजीववैलक्षण्य व्याप्यते। अनन्तत्व त्रिविधपरिच्छेद रहितत्वम्। अनेन नित्या व्यावृत्ता। एव च अनेन वाक्येन धर्मत्रयमिदं ब्रह्मलक्षणमिति ज्ञायते। एतल्लक्षणज्ञाने सम्पन्ने च प्रमाणवाक्येषु तत्र तत्र प्रतिपाद्य वस्तु ब्रह्मेति वा नेति वा निश्चयो भवतीति लक्षणज्ञानफलमेतत्। एव पदैवाक्येन च विशिष्टस्यैवार्थस्य प्रतिपादनात् नाखण्डार्थत्वगन्धोपि। एतेन सत्यादिवाक्यमखण्डार्थनिष्ठ, ब्रह्मप्रातिपदिकार्थनिष्ठ वा। लक्षणवाक्यत्वात्। तन्मात्रप्रश्नोत्तरत्वाद्वा। प्रकृष्टप्रकाशश्च द्र इत्यादिवाक्यवदिति पदार्थविषयाखण्डार्थत्वानुमानमसमीचीनमिति ज्ञातु शक्यम। प्रथमहेतोरप्रयोजकत्वात्। द्वितीयस्यासिद्धेः। दृष्टान्तस्य साध्यविकलत्वात्, द्वितीयहेतुविकलत्वाच्च। साध्याप्रसिद्धिश्च सुवचा। ससर्गागोचरप्रमितिजनकत्वरूपस्याखण्डार्थत्वस्य क्वाप्यदर्शनात्। निर्विकल्पकस्याप्यस्मन्मते ससर्गावगाहित्वात्।

यत्तु प्रमात्व ससर्गागोचरवृत्ति सकलप्रमावृत्तित्वात् अभिधेयत्ववदित्यनुमान तत् आभासतुल्य पाक्षनानेकानुमानवदुपहास्यम्। शक्य हि मनुष्यत्व चतुष्पाद्वृत्ति, सकलमनुष्यवृत्तित्वात् अभिधेयत्ववदित्यनुमानं प्रयोक्तुम्। न चानुकूलतर्काभावः। अन्यथा चतुष्पदामत्यन्तमपकर्षापत्तेस्तर्कस्य सत्वात्। भवदीयानुमानस्य तु स नास्ति। प्रश्नोत्तरयोर्वैयधिकरण्यस्य परिहृतत्वात्। सत्यादिवाक्यं ससर्गावगाहिबोधजनक

वाक्यत्वात्, नीलो घट इत्यादिवत्। यन्नैवम् तन्नैवम्। यथा पदमिति प्रबल प्रत्यनुमानं च। न च लक्षणवाक्यभिन्नत्वमुपाधिः। लक्षणवाक्यानामपि संसृष्टार्थकत्वस्योपपादितत्वेन साध्यव्यापकत्वाभावात्।

एवं तत्त्वमस्यादिवाक्यस्यापि नाखण्डार्थत्वम्। तच्छब्देन इह सार्वज्ञ्यादिविशिष्टं सच्छब्दवाच्यं प्रकृतं ब्रह्माभिधीयते। त्वंशब्देन च सम्बोध्यः श्वेतकेतुर्जीवः। परन्तु प्राज्ञो देवदत्त इत्यत्र यथा देवदत्तशब्दः तच्छरीरकमाचष्टे तथाऽत्र त्वंशब्दोऽपि श्वेतकेतुशरीरकमाचष्टे। तच्छब्दसामानाधिकरण्यात्। यद्वा त्वंशब्दो जीवपर एव। तच्छब्दस्तु उक्तविधब्रह्मात्मकपरः। तथा च उक्तविधं ब्रह्म त्वच्छरीरकमिति वा, त्वं तदात्मक इति वा वाक्यार्थः। एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञाय तदुपपादनार्थं कार्यकारणयोः सज्जगतोरनन्यत्वमुपदिश्य जगत्सृष्टिमुक्त्वा सृष्टे जगति ब्रह्म अन्तरात्मतयाऽवतिष्ठत इति 'ऐतदात्म्यमिदं सर्वं, तत्सत्यं, स आत्मा' इत्यनेनावेद्य, एवं सामान्यत उक्तं श्रोतरि विशेषे निदर्शयन्नाह—'तत्त्वमसि' इति। सर्वं जगत् तदात्मकम्। अतस्त्वमपि तदात्मक एव इत्युक्तं भवति। भिन्नयोः शरीरात्मभावमुपदिश्यानुपदं सामानाधिकरण्यावलम्बनमेतत्, जगद्ब्रह्मणोः सामानाधिकरण्यं यत्र यत्र दृश्यते तत्र सर्वत्र शरीरात्मभावनिबन्धनं तदिति ज्ञापयति। भगवद्गीतासु च आदित्यानामहं विष्णुरित्युपक्रम्य सामानाधिकरण्येन स्वविभूतीर्वदन् ततः पूर्वं 'अहमात्मा गुडाकेश सर्वभूताशयस्थितः' इति तन्निबन्धनं शरीरात्मभावं दर्शितवान् भगवान्। 'न तदस्ति विना यत् स्यात् मया भूतं चराचरम्' इत्यन्ते च पुनः स्मारितवान्। अनेन श्रौतं सामानाधिकरण्यमुपबृंहितं भवति।

एवं अतिसमञ्जसे अक्लिष्टे चार्थे स्थिते अद्वैताभिनिवेशमात्रेण अखण्डार्थत्वमत्र आस्थीयमानं सहृदयहृदयङ्गमं न भवति। तथा हि। दण्डी कुण्डलीत्यत्र तावत् विशिष्टयोरैक्यमुपपन्नमेव। विशेषणयोरप्यै-

क्यापत्तिस्तु न। आपादकाभावात्। दण्डविशिष्टे धर्मिणि हि कुण्डल विशिष्टधर्म्यभेदोऽत्र वाक्यार्थे। तत्र धर्मिणोरेव ऐक्यं प्रतीयते। न धर्मयोः। तथैव व्युत्पत्तेः। प्रत्यक्षं हि दण्डकुण्डले एकस्मिन् पुरुषे विद्यमाने दृष्ट्वा तमर्थं परस्मै बोधयन्नेवमाह—दण्डी कुण्डलीति। न हीताऽन्येन प्रकारेण सोऽर्थं प्रकाशयितुं शक्यः। न च पदयोः स्खलद्वृत्तित्वमस्ति। तस्माद् विशिष्टयोरेव पदाभ्यामुपस्थितावपि विशेष्ययोरेव परस्परमन्वयः। न तु विशेषणयोरपि।

ननु दण्डित्वं विशेषणं वा उपलक्षणं वा? आद्ये तस्यापि कुण्डलित्वमुक्तं स्यात्। विधेयान्वयिन एव विशेषणत्वात्। अन्त्ये विशिष्टस्योद्देश्यत्वं परित्यक्तं स्यात्। न। उभयथापि सम्भवात्। विधेयानन्वयित्वादुपलक्षणं च। तत्प्रतीतिकाले प्रतीयमानत्वाद्विशेषणं च। एतेन सोऽयं देवदत्त इति प्रत्यभिज्ञाभिलापकवाक्यमपि व्याख्यातम्। पूर्वं देशान्तरे स्थितस्य दृष्टस्य च अद्य एतद्देशस्थितदृष्टाभेदे विरोधाभावात्। पूर्वं तत्र स्थितो दृष्टो वा अयं वा अन्यो वा, इति संशये निवर्तनीये उद्देश्यविधेयभाव ईदृशः। पूर्वं तत्र स्थितो दृष्टो वा यः सः अयमिति अयमेव नान्य इति भावः। अयं अत्र स्थितः पूर्वं तत्र यः स्थितो दृष्टो वा स एव किम्, उतान्य इति तु संशये अथात्र सतो दृश्यमानस्य वा पूर्वं तत्र स्थितदृष्टाभेदो बोध्यत इत्येवमुद्देश्यविधेयभावो द्रष्टव्यः—योऽयमत्र स्थितः सः, स पूर्वं तत्र स्थित एवेति। न हि कालभेदेन एकस्य देशद्वयसम्बन्धे कश्चन विरोधोऽस्ति। अतो दण्डी कुण्डलीति यादृशं तादृशमेवेदमपि वाक्यम्। उभयत्राविरुद्धधर्मद्वयसम्बन्धिनो धर्मिण एकत्वबोधनात्। अयं तु विशेषः। पूर्वस्मिन् समानकालिकधर्मद्वयसम्बन्धः। उत्तरस्मिन् भिन्नकालिकदेशद्वयसम्बन्ध इति। तेन

अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः।
घटते न यदैकता तदा नतरां तद्विपरीतरूपयोः॥

इति विशेषाभिधानमनिरूपकत्वविजृम्भितमिति ज्ञेयम् । एवं चोभयत्रापि अन्वयानुपपत्तेर्वा तात्पर्यानुपपत्तेर्वा सर्वथा विरहात् न स्वरूपलक्षणाप्रसङ्गोऽस्ति । एतेन "लक्षणया ऐक्यबोधनं तूभयत्र समानम् । लाक्षणिकत्वेऽपि दण्डी कुण्डलीत्यादौ विशिष्टतात्पर्यान्नाखण्डार्थत्वव्यवहारः । सोऽयमित्यत्र तु "अयं सः न वा ? अयं नैव सः" इत्यादिसंशयविपर्ययज्ञानविषयीभूताभेदमात्रस्य बुभुत्सितत्वेन तत्रैव तात्पर्यादखण्डार्थत्वम् । न ह्यन्यस्मिन् बुभुत्सिते अन्यत्प्रतिपादयितुमुचितमित्युक्तम् । तत्तेदन्तोपस्थितिद्वारकाभेदबाधस्यैव भेदभ्रमविरोधितया नान्यतरपदवैयर्थ्यम् ।" इति यदुक्तं तन्निरस्तम् । लक्षणया स्वरूपमात्रपरत्वे कुतो विशिष्टे तात्पर्यम् । विशिष्टे तात्पर्यं चेत् कुतो लक्षणाश्रयणम् ? व्याहतं ह्येतत् लक्षणया विशेषणपरित्यागो न विशेष्यमात्रमुच्यते विशिष्टे च तात्पर्यमिति । विशिष्टे तात्पर्यं चेत् स एव पदार्थः । तत्र च न लक्षणापेक्षा । विशिष्टयोरेव पदवाच्यत्वात् । अनन्वयाल्लक्षणेति चेत् तर्हि अनन्विते अत एव वाक्येन बोधयितुमशक्ये कथं तात्पर्यं स्यात् । अनन्वयश्च नास्तीत्युपपादितम् । यो दण्डवान् सः कुण्डलवान् इति विशिष्टवाचकाभ्यां पदाभ्यां विशेष्यमात्राभेदबोधनस्य पदार्थः पदार्थेनेति न्यायसिद्धत्वात् । 'विशिष्टैक्ये विशेषणैक्यमपि भवेत्' इति भवदाक्रोशस्य मृदुप्रज्ञवित्रासनकर्मबिभीषिकामात्रत्वात् । न खल्वेवं क्वचिद् दृष्टम् । दृष्टन्तु घटो नीलः, गौर्गच्छति, अयं घटः, एष देवदत्त इत्यादि भूयिष्ठं यत्र जातिगुणक्रियासंज्ञा विधेया उद्देश्यविशेष्यमात्रान्वयिनो भवन्ति । घटो ज्ञातः, पटो दृष्टः, इत्यादिषु विशेषणेषु विधेयान्वय आर्थिकः न तु शाब्दः । व्युत्पत्तिविरोधादित्युक्तम् । तस्माद्दण्डी कुण्डलीत्यत्र लक्षणाया नैव प्रसङ्गः ।

एवमेव सोऽयमित्यत्रापि । न हि केवलोऽभेदो वा यत्किञ्चित्स्वरूपाभेदो वा संशयविपर्ययज्ञानविषयीभूतः । किन्तु अयं अद्यात्र वर्तमानो दृश्य-

मानो वा किं सः यः पूर्वं तत्र स्थितो दृष्टो वा, उतान्यः इति विशिष्टा भेद एव। तेन तत्रैव वाक्यतात्पर्यम्। स च लक्षणा विनैव बाध्यत इति कोऽत्र भवता कुसृतिकल्पनावकाशः। तत्तेदन्तोपस्थितिद्वारका भेदबोधस्यैव भेदभ्रमापराधित्वं वदता च विशेषणापेक्षा प्रकटिता। तथा चापेक्षितस्य पदशक्त्योपस्थितस्य विशेषणस्य परित्यागाय प्रवृत्तिस्तव अतात्पर्यविषयत्वं लक्षणा च को नु स्वस्थहृदया वर्णयेदाकर्णयेद्वा। लक्ष्यं च स्वरूपं किं स्वरूपत्वेनैव भाति अथवा इदत्वरूपत्वेन तत्स्वरूपत्वेन वा। आद्ये संशयविपर्ययानिवर्तकत्वापत्तिः। न हि अयं स न वा इति संशयस्य नैव सः इति विपर्ययस्य च स्वरूप इति ज्ञानेन निवृत्तिर्भवेत्। द्वितीये अखण्डार्थत्वं दूरनिरस्तम्। अत एव निर्विकल्पकाभिलापोऽयं न भवति। नैयायिकाभिमतस्य निर्विकल्पकस्याव्यपदेश्यत्वात्। अस्मदभिमतस्य सप्रकारकत्वात्। प्रत्यभिज्ञाया निर्विकल्पकत्वाभावेन तदभिलापकस्य अयं देवदत्तः सः इत्यस्य वा, स देवदत्त अयमित्यस्य वा वाक्यस्य निर्विकल्पकव्यञ्जकत्वायोगाच्च।

ननु तत्तेदन्तोपलक्षितं स्वरूपं भातीति चेन्न। उपलक्षितत्वस्य विशेषणत्वे अखण्डत्वभङ्गात्। उपलक्षणत्वे उपर्युपरि तथेति अनवस्थाप्रसङ्गात्। किञ्च तत्तेदन्तयोरुपलक्षणत्वमसम्भवि। तत्ता नाम देशान्तरावच्छेदेन अतीतकालदर्शनविषयत्वम्, 'तत्र पूर्वं दृष्टः' इत्यभिलापार्हम्। इदन्ता नाम पुरोदेशावच्छेदेन वर्तमानकालदर्शनविषयत्वं, 'अत्राद्य दृश्यते' इत्यभिलापार्हम्। न चेदमुभयं चैत्रस्वरूपे नास्ति येनोपलक्षणं स्यात्। अथ तत्तेदन्तयोर्न बोधविषयत्वमङ्गीक्रियते, येन विशेषणत्वोपलक्षणत्वविकल्पस्यावकाशः स्यात्। स्वरूपमात्रं तु बोधविषयत्वमभ्युपगम्यैव तयोरुपलक्षणत्ववाचोयुक्तिरिति चेत् तर्हि स्वरूपं स्वरूपमिति पदद्वयेन प्रतिपादने अनन्वयात् वाक्यस्यार्थशून्यत्वमेव स्यात्।

एवं दृष्टान्तभूतस्य सोऽयमिति वाक्यस्य साभ्यविकल्पत्वात् तत्त्वमसि

वाक्यस्य अखण्डार्थत्वमनुमानेन न साधयितु शक्यम्। साध्याप्रसिद्धिश्च पूर्ववत्। अकार्यकारणद्रव्यमात्रनिष्ठत्वे सति समानाधिकरणत्वात्, इति हेतोरसिद्धिश्च। सार्वज्ञ्यादिविशिष्टनिष्ठत्वेन द्रव्यमात्रनिष्ठत्वाभावात्। उपादानभूतस्य कार्यकारणरूपस्य ब्रह्मणः कार्यकारणभिन्नत्वाभावाच्च। तन्मात्रप्रश्नात्तरत्वादिति द्वितीयहेतुरप्यसिद्धः। कोऽहमिति कल्पितस्य प्रश्नस्य कथन्द्र इतिवदेव विशिष्टपरत्वेन तन्मात्रपरत्वाभावात्। अहं कः? किमात्मक इति प्रश्नार्थः। ऐतदात्म्यमिदं सर्वमिति सर्वस्व तदात्मकत्वे उक्ते विशिष्य स्वस्य क आत्मा, इति जिज्ञासा श्रोतुः स्वरसतो भवति। अतः सखण्डार्थ एवायं प्रश्नः।

वस्तुतस्तु तत्र यस्य कस्यापि प्रश्नस्य नावकाशः। "उद्दालको ह्यारुणिः श्वेतकेतु पुत्रमुवाच स्तब्धोऽस्यु त्वप्रान्तं मे सोम्य विजानीहीति" इत्युपक्रम्य श्वेतकेतुप्रश्न विना स्वयमेव पित्रा कृत उपदेशः "स एषोऽणिमा। ऐतदात्म्यमिदं सर्वम्। तत्सत्यम्। स आत्मा। तत्त्वमसि श्वेतकेतो।" इत्येतदन्तो निबद्धः। तत्र

कोऽहमिति प्रश्न इति विद्वद्भिरवंतु विभाव्य । तदेव द्वितीयस्यापि हेत्वार-सिद्धेः अनुमानमेतदप्रमाणम् ।

तत्त्वमसिवाक्यमखण्डार्थम्, उपाधिभेदभिन्नेऽर्थे ऐक्यप्रतिपाद-कत्वात्, घटस्थ महाखमिति वाक्यवदिति कल्पतरूक्तानुमानान्तरसाध्ये त्वखण्डार्थत्वे पूर्ववत् पदवाक्यन्यायविरोधो नास्ति । घटावच्छिन्नमा-काशं महाकाशमेवतिवत् त्वदन्तःकरणावच्छिन्नचैतन्यं परब्रह्मरूपचैतन्य-मेवेति बाधाभ्युपगमात् । किन्तु अस्मान् प्रति हेतुरसिद्धः । जीवपरयोर्व-स्तुत एव भिन्नत्वेन उपाधिभेदाभिन्नत्वाभावात् ।

वस्तुतस्तु उपाधिभेदाभिन्नाऽर्थो येनैक्य प्रतिपाद्यते । तदपि स्याद-खण्डार्थं महत् खं कुम्भखं यथा ॥" इति कल्पतरुजन्माद्यधिकरणस्थे श्लोके, परिमले अस्मिन् सिद्धिग्रन्थे चाकरीत्या अखण्डार्थत्वसाधकम-नुमानं नाभिप्रेतम् । अखण्डार्थत्वस्य साध्यस्य हेत्वनतिरिक्तत्वात् । न हि संसर्गागोचरप्रमितिजनकत्वरूपमखण्डार्थत्वमत्रेष्टम् । दृष्टान्ते तद्वै-कल्यात् । घटाकाशं महाकाशमिति संसर्गाचगाहित्वस्याभिमतत्वप्रतीतेः । तदपि स्यादखण्डार्थमित्यपिशब्देन समुच्चयपरेण 'अविशिष्टमपर्यायाने-कशब्दप्रकाशितम् । एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिरे ॥" इति पूर्ववदत्रापि लक्षणमेवोच्यते, अन्यथेदं लक्षणमित्यवगमाच्च । तदिह उपाधिभेदभिन्नार्थैक्यबोधकत्वमखण्डार्थत्वमिति एतल्लक्षणमेवोच्यते, न त्वनुमानमिति ज्ञेयम् ।

"सत्यज्ञानादिवाक्येतरसंसर्गाचरीर्गोचराणि ।
अर्थे प्रमाणं मानत्वाज्जयनादिप्रमाणवत् ॥"

इति काष्ठागतवाचस्पत्येस्य दुरनुमानपर्तोऽपिसुखाचार्यस्यानुमानं प्रति ब्रूम । पदार्थसंसर्गो प्रमातृत्वेन किमपि वाक्यमङ्गीक्रियते, न वा ? आद्ये तत्र हेतोर्व्यभिचारः । असृष्टसंसर्गातिरिक्ते प्रामाण्यविरहेऽपि प्रमाण-त्वात् । अन्त्ये 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादेः स्वर्गहोमादि-

साध्यसाधनभावे प्रामाण्याभावप्रसङ्गः । पृथिवी निर्गन्धा, द्रव्यत्वात्, जलादिवत् इत्याभासतुल्यत्वं विवेकिनां सुस्पष्टम् । अत एव बाधोऽप्यत्र दोषः । वाक्येतरप्रमाणत्वमुपाधिश्च । अत्र साध्यमन्यथा परिष्कुर्वन् निर्विकल्पकमादाय दृष्टान्ते साध्यवत्ता वदश्च तत्र भवान् ब्रह्मानन्द-स्वामी चित्सुखीयमनुमानं यथावन्न जग्राहेति सुज्ञानं विदुषाम् ।

वादमार्गप्रचण्डोऽस्तु पण्डिताखण्डलोऽस्त्वपि ।
अखण्डमर्थं वाक्यस्य न मण्डयितुमीश्वरः ॥

## २. निर्गुणत्वम् ।

का गुणस्तस्य वाचि स्याद् यो ब्रूते ब्रह्म निर्गुणम् ।
कथन्न ब्रह्मवेदित्वमवेद्यब्रह्मवादिनः ॥

इदमपरं ब्रह्मविदां कर्णारुन्तुदं भाषन्ते यद् ब्रह्म निर्गुणमिति । तत्र यदुच्यते "कैवल्यश्रुत्या तावदात्मा निर्गुणः" इति, तन्न । तस्या निर्विशेषत्वबोधकत्वाभावात् ।

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च ॥

इत्ययं हि स मन्त्रः । इतः पूर्वे परे च मन्त्राः ब्रह्मणो विविधान् अद्भुतान् गुणान् वर्णयन्ति । तेषु उदाहृतात् कैवल्यमन्त्रात् प्रपूर्वमन्त्रः कारणरहितं कारणं अधिपरहितं सर्वाधिपं च ब्रह्म प्रतिपादयति । स ईश्वरः प्रधानोपादानकैः स्वसृष्टैर्वस्तुभिः स्वमावृणोति स्वकीयं जीववर्गं लुप्तप्रज्ञं करोति, यद्वा तैः स्वरूपमावृत्य तिष्ठतीत्यनन्तरमन्त्रे उच्यते । इममर्थं विवरीतुं प्रवृत्तः प्रकृतः कैवल्यमन्त्रः ।

एकः, समेन वाऽधिकेन वा द्वितीयेन रहितः । देवः, जगत्सृष्ट्या-

द्विभि क्रीडन् परमपुरुषः । सर्वभूतेषु, देवमनुष्यतिर्यक्स्थावरात्मकविविधशरीरवत्सु सर्वेषु प्राणिषु । गूढ अन्त प्रविश्य तेषां दुर्ज्ञेयतया स्थितः । स कुत्र वर्तत इत्यत्रोक्त सर्वभूतेष्विति । कस्मान्न दृश्यत इत्यत्रोक्त 'गूढः' इति । कथमेकस्य सर्वभूतान्तर्वर्तित्वमित्यत्राह—सर्वव्यापीति । विभुत्वात् तस्य तदुपपन्नमिति भावः । किमर्थं तस्य सर्वभूतान्तःप्रवेश इति शङ्कापरिहारायाह—सर्वभूतान्तरात्मेति । आत्मा नियन्ता । नियमन कर्तुमन्तःप्रवेश इत्युक्त भवति । किं तन्नियमनमिति चेन् तद् विवृ।ति—कर्माध्यक्ष इति । प्रवृत्तिनिवृत्तिरूपाणि सर्वाणि कर्माणि दैव चैवात्र पञ्चमं' इत्युक्तरीत्या तदधीनानीति भावः । एव नियमनार्थमन्तर्वर्तित्वया भूतानि परमात्मनो धारकाणि, स तु धार्य इति बुद्धिर्भवेत् । ता व्यावर्तयति—सर्वभूताधिवास इति । सर्वाणि भूतानि तत्राधिवसन्ति । तेन ध्रियन्ते । न तु स परैः । गीत च 'न त्वहं तेषु ते मयि' इति ।

यदि शरीरान्तर्वर्ति।त तर्हि जीववत् भोक्ता स्यात । न । स हि केवल साक्षी, साक्षाद् द्रष्टा । तत्रत्या जीव एव भोक्ता । अय तु तत्र स्थित तत्र यद्यद् भवति तत् केवल पश्यति, न तु किमपि भुङ्क्ते । 'अनश्नन्' इति ह्यन्यत्रोक्तम् । शरीरान्तर्वर्तित्वे उभयोरविशिष्टे कथमेकस्य भोग, नेतरस्य । उच्यते । चेता । चित् चयन । निर्माता, सर्वकारणभूत सर्वज्ञः । चेतयिता वा, नित्यासङ्कुचितज्ञानः । अज्ञत्वाज्जीवस्य भोगः सर्वज्ञत्वादितरस्य नेति । अयमपि विशेषः कुत ? यदय केवलः न तु जीववद् विहितनिषिद्धकर्मकर्तृत्वतत्फलभूतपुण्यपापविशिष्टः ततः ।

जीवस्य एवम्भाव हेतुश्च अनादिकालप्रवृत्तगुणसम्बन्धः । यद् गीयते—

'कारण गुणसङ्गोऽस्य सदसद्योनिजन्मसु'

इति। एतदत्यन्ताभाववान् पुनरीश्वरः। इदमुच्यते मन्त्रान्ते— **निर्गुणश्चेति**। यतो जीवस्य तत्तत्कर्मकर्तृत्वं, तत्फलभूतपुण्यपापे, एतत्कृतदेहसम्बन्धः, अज्ञत्वं, सुखदुःखोपभोगश्च तादृशसत्त्वरजस्तमोरूपप्रकृतिगुणसम्बन्धरहित ईश्वरः। अतः तेन सह वर्तमानस्यापि सर्वज्ञत्वाद्यात्मकस्वस्वभावविशिष्टतयैव वर्तमानत्वान्नास्य जीववद्भोगप्रसङ्गः।

अथ प्राकृतगुणसम्बन्धः कुतो जीवस्येवास्य न भवति। अत्रोत्तरमनन्तरमन्त्रेणोच्यते—

एको वशी निष्क्रियाणां बहूना-
मेकं बीजं बहुधा यः करोति।

इति। एकः स्वेतरसमस्तवस्तुविलक्षणः सः वशी स्वाधीनस्वेतरसमस्तवस्तुकः। प्रकृतिश्च तस्य वशे वर्तते। तत्सङ्कल्पायत्तसर्वपरिणामा। सर्वस्वतन्त्रः सर्वशक्तः सर्वज्ञः सः संहारलीलया चेतनाचेतनात्मकं सर्वं जगत् नामरूपानर्हसुसूक्ष्मावस्थं करोति। तदानीं अनन्ता जीवात्मानः करणकलेबररहिततया अचेतनवदेव निष्क्रिया भवन्ति। अथ सः अनुकम्पार्द्रहृदयः सङ्कल्पते प्रलयकाले वृत्ते पुनर्जीवेभ्यः क्रियाकरणोचितकरणकलेबरादिदित्सया तद्बीजभूतं प्रकृतिसञ्ज्ञं जडवस्तु महदहङ्कारादिक्रमेण बहुधा करोति। एवं सकलभुवनसृष्टिस्थितिसंहारनियमनादिरूपलीलारसिकेन सर्वेश्वरेण उपकरणीकृता त्रिगुणात्मिका प्रकृतिः स्वस्वरूपस्थितिप्रवृत्तिषु तस्यात्यन्तपरतन्त्रा सती तस्य बन्धाय भवेदिति मनसा चिन्तयितुमपि न शक्यमित्युक्तं भवति।

तदेवमस्मिन् प्रकरणे परस्य ब्रह्मणः कारणान्तररहितकारणत्वं, अधिपत्यन्तररहितसर्वाधिपतित्वं, स्वेतरसमस्तवस्तुविलक्षणत्वपर्यवसायि एकत्वं, जगत्सृष्ट्यादिलीलारसिकत्वपर्यवसितं देवत्वं, सर्वभूतगूढवर्तित्वं, सर्वव्यापित्वं, सर्वान्तरात्मत्वं, प्रेरकत्वं, सर्वाधारत्वं, साक्षाद्द्रष्टृत्वं, नित्यसर्वज्ञत्वं, अपहतपाप्मत्वं, सत्त्वादिप्राकृतगुणसम्बन्ध-

गन्धशून्यत्व, स्वाधीनसकलचेतनाचेतनत्व, परमकारुणिकत्व, जगत्स्रष्ट्यादिकत्व इत्यादिर्महतीय गुणपरम्परा उपादिश्यत इति सर्वेषाम् तिरोहितमेतत्।

एवं सत्यत्र निर्विशेषत्वपरत्वयात्र निर्गुणत्वमुच्यत इति कथमास्थीयते ? न ह्यत्र निर्गुणपदं धर्मसामान्यशून्यत्वपरतया याजयितुं शक्यम्। तस्य प्राकृतगुणत्रयराहित्यपरतयैव प्रयोगप्राचुर्यात्। यथा "गुणभृन्निर्गुणो महान्" इति सहस्रनामसु। 'निर्गुणं गुणभोक्तृ च" इति गीतासु च। अत्र भाष्यं च शाङ्करम्— सत्त्वरजस्तमांसि गुणाः। तैर्वर्जितमपि सत्" इति। 'अनादित्वान्निर्गुणत्वात्" इत्यत्र यद्यपि शाङ्करे 'सगुणो हि गुणव्ययाद् व्येति। अयं तु निर्गुणत्वान्न व्येति' इत्यव्ययत्वहेतुत्वेनान्वयमभिप्रेत्य प्रसिद्धार्थपरित्यागेन व्याख्यातमिव भाति, तथापि श्रीभाष्ये निर्गुणत्वात् सत्त्वादिगुणरहितत्वात् न करोति, न लिप्यते देहस्वभावैर्न लिप्यते" इति यथावदेव व्याख्यायि।

गुणान्वयो यः फलकर्मकर्ता

कृतस्य तस्यैव स चोपभोक्ता।

इति पञ्चमाध्याये जीवस्य सत्त्वादिगुणान्वयोक्त्या तत परमात्मनो वैलक्षण्योपदेशप्रकरणेऽस्मिन् तद्राहित्याभिधानस्यैव युक्तत्वाच्च। पूर्वत्रोत्तरत्र च विस्तरेण बहुगुणोपदेशे क्रियमाणे मध्ये गुणसामान्यशून्यत्वस्य बाधितत्वेनानन्वयाच्च। निर्गुणस्येति चकारावगतसमुच्चयानुपपत्तेश्च। न हि कारणत्वगूढात्मत्वाशित्वादिगुणगणस्य तदभावस्य च समुच्चयः सम्भवति। तस्मात् कारणत्वादिवत् निर्गुणत्वमपि कोऽपि धर्मो ब्रह्मणि प्रतिपाद्यते। कोऽसाविति निरूपणे प्रयोगप्राचुर्येण पुरस्स्फूर्तिकत्वात् जीवविलक्षण्यप्रतिपादनप्रकरणपर्यालोचनया च उक्तरीत्या प्राकृतगुणराहित्यरूप इत्यवधार्यते। उपनिषदो हि तदितरसमस्तवस्तुविलक्षणत्वं ब्रह्म उपदिशन्ति। सा च विलक्षणता द्वेधा—इतरावृत्ति

धर्मवत्तया इतरवृत्तिधर्मराहित्ततया च। तत्र आद्यराशिप्रविष्टं कारणत्वादिकम्। द्वितीयराशिप्रविष्टं केवलत्व निर्गुणत्वं ईदृशमन्यच्च। अतः परस्य ब्रह्मणो धर्मसामान्यशून्यत्वबोधकं एकमपि प्रमाणवाक्यं नास्तीति निश्चलमिदं तत्त्वम्।

किञ्च निर्गुण इत्यस्य निषेधस्य शास्त्रोपदिष्टगुणविषयत्व दुर्वचम्। शास्त्रप्राप्तान् गुणान् अनूद्य हि इमे ब्रह्मणि न सन्तीति निषेधः कार्यः। इदं निर्गुणपदेन एकेन दुष्करम्। एकप्रसरताभङ्गप्रसङ्गात्। अतो "वषट्कर्तुः प्रथमभक्षः" इत्यत्र यथा वषट्कर्तुर्यो भक्षः स प्रथम इति विधानासम्भवात् प्राथम्यविशिष्टभक्षान्तरस्यैव विधानमिष्यते तथैवात्र ये गुणाः पूर्वमुपदिष्टास्ते इह न सन्तीति निर्गुण इत्येकेन पदेन बोधनासम्भवात् गुणान्तरप्रतियोगिकत्वविशिष्ट एव प्रतिषेधः क्रियत इति वाच्यम्। कानि तानि गुणान्तराणीत्यन्वेषणे प्रकरणादिपर्यालोचनया तदवधारणं भवतीति ज्ञेयम्।

ननु सामान्यवाचिगुणपदे श्रूयमाणे कथं गुणान्तरग्रहणं युज्यत इति चेन्न। स्ववाक्ये स्वेनैव साकं विधीयमानानां गुणानामप्राप्यप्राप्तत्वेन निर्गुणत्वघटकगुणत्वेन तेषां ग्रहणासम्भवात् तद्भिन्नगुणग्रहणावश्यम्भावात्। प्रकरणान्तरवाक्यान्तरविहितानामपि ब्रह्मगुणानां एतद्वाक्यस्थगुणवदेव ब्रह्मवैलक्षण्यप्रतिपत्त्यर्थतया निषेधायोगात्। अनाकाङ्क्षितत्वाच्च। साक्षी चेता केवलो निर्गुणश्चेतीमानि हि पदानि सर्वभूतान्तरवतिष्ठमानस्यापि परस्य ब्रह्मणो जीववत् सुखदुःखभोक्तृत्व नास्तीत्येतदर्थप्रतिपादकानीत्यदर्शयाम। तेन प्राकृतगुणनिषेध एवात्रापेक्षितः। न तु शास्त्रोपदिष्टापूर्वपरब्रह्मवैलक्षण्यापादकसर्वज्ञत्वसत्यकामत्वसत्यसङ्कल्पत्वादिकल्याणगुणगणप्रतिषेधः। तस्मादयं निर्गुणपदघटको गुणशब्दः 'गुणान्वय' इति पूर्वाध्यायस्थगुणशब्द इव सत्त्वादिप्राकृतगुणवाचक एव। विशिष्य "त्रैगुण्यवर्जितम" इति श्रवणात् "विना हेयैर्गुणादिभिः"

इत्युपबृंहणाच्च तत्परतैव युक्ता।

यत्तु 'नेति नेति' इति वीप्साबलेन प्रसक्तसर्वप्रतिषेधे प्रतीते कतिपयविशेषपरिशेषस्य कर्तुमशक्यत्वादिति तन्न। श्रुत्यर्थापरिज्ञानात्। इति न, एव न पूर्वं यावद्विशेषविशिष्टमुक्तं, तावन्मात्रं ब्रह्म न भवति। अपि तु ततोऽप्यधिकापरिमितविशेषविशिष्टमित्यर्थः। वीप्साऽऽदरातिशये। तथा च सूत्रं "प्रकृतैतावत्त्वं हि प्रतिषेधति" इति। प्रकृते पूर्वोक्तैः विशेषैः एतावत्त्वं एतावन्मात्रविभूतिमत्त्वं यद् ब्रह्मणः प्रसक्तं, तत् प्रतिषेधतीयं श्रुतिरित्यर्थः। यत्त्वत्र परकीयभाष्ये प्रकृतं मूर्तामूर्तरूपं प्रपञ्चं प्रतिषेधतीति तत् एतावत्त्वं प्रतिषेधतीति सूत्राक्षराननुगुणम्। तथा च सर्वप्रकारप्रतिषेधपरश्रुत्यभावेन तद्विरोधाप्रसक्तेः निर्गुणत्वमिति सामान्यं त्रैगुण्यवर्जितमिति विशेषे उपसंहृतं भवति।

यत्तु एवं सति न हिंस्यादित्यस्य ब्राह्मणो न हन्तव्य इत्यत्र उपसंहारः स्यादिति, तत्र वदामः। स्यादेव न्यायतः। पिपीलिकादेरारभ्य तत्तज्जन्तुघातवधे पृथक् पृथक् प्रायश्चित्तविधानात्तु निषेधः सर्वप्राणि विषय इत्यवधार्यते। विशिष्य ब्राह्मणहिंसानिषेधस्तु आत्रेयवधप्रतिषेधवत् पापातिशयस्य तदनुरूपप्रायश्चित्तविशेषस्य च ज्ञापनार्थं। अतो नात्रोपसंहारः। प्रकृते तु निराबाध उपसंहारः। निर्गुणपरता च शब्दस्य न सम्भवतीति पूर्वमेवोक्तम्। न हि निर्विशेषं किमपि बुद्धावारोपयितुं शक्यते। आकाशशब्दात् तदर्थनिर्विकल्पकं वदन्तोऽपि हि शब्दगुणकत्वेन तत्प्रतीतिं वदन्ति। गङ्गापदे तीरत्वमात्रेण तीरे लक्षणां वदतामपि तीरत्वेन तीरावगाहित्वात् सप्रकारक एव तीरबोधः। वस्तुतस्तु तीरे घोष इत्येतावन्मात्रप्रतीत्या आकाङ्क्षानुपरमात् गङ्गातीरत्वेन बोध आवश्यक इत्यवोचाम। तथैव चन्द्रादिस्वरूपस्य केवलस्य निराकाङ्क्षप्रतीत्ययोगादखण्डार्थता न सम्भवतीति च। अतो निर्विशेषस्य प्रतिपत्तुमशक्यत्वादपि न गुणसामान्यशून्यपरोऽयं निर्गुणशब्दः।

किञ्च सामान्यनिषेधेन विशेषविधेर्बाधो न सम्भवति। अन्यथा न हिंस्यादिति निषेधः अग्नीषोमीयपशुमपि गोचरयेत्। यत्तु निर्गुणवाक्यस्य तत्परत्वेन प्रबलत्वात् तेन सगुणवाक्यबाध इति, तन्न। निर्गुणवाक्ये सिद्धे हि तत्परत्वं प्राबल्यं वा अस्ति नास्तीति विमर्शावकाशः स्यात्। तत्तु अद्यापि न सिद्धम्। निर्गुणस्येति पदावगतनिषेधस्य को विषय इति हि सम्प्रति विचारः क्रियते। तथा सति निर्गुणवाक्यस्य तत्परतया प्राबल्य कथमुच्यते। कारणत्वसर्वज्ञत्वादिवादिनो विशेषविधयः। निर्गुण इति सामान्यनिषेधः। अत्र विरोधे किमनुरोधेन कि नेयमिति संशयः। तत्र तत्परतया एकस्य प्राबल्यवचनं न युज्यते। तत्परत्वस्यैव विचार्यमाणत्वात्। किमिदं यथाश्रुतं गुणसामान्यनिषेधपरं, अथवा गुणविशेषविधानानुरोधात् सत्त्वादिगुणविशेषनिषेधपर, इति हि विचारयन्तो वर्तामहे। तत्र कथं स्वार्थपरत्वं निश्चितं कृत्वा प्राबल्यमुच्यमान युज्येत।

अथोच्यते—उपासनविधिशेषत्वात् सगुणवाक्याना न स्वार्थे तात्पर्यम्। अनन्यशेषत्वात्तु निर्गुणवाक्यस्य तत्परत्वम्। अत इदं प्रबलमिति। तदयुक्तम्। व्रीहिभिर्यजेत, सोमेन यजेतेत्यादिषु व्रीह्यादिषु तात्पर्याभावप्रसङ्गात्। यागार्थत्वेनान्यपरत्वात्। न चेष्टापत्तिः। द्रव्यान्तरग्रहणापत्तेः। न च जर्तिलयवागून्याय इह सङ्गतः। 'अनाहुतिर्वै जर्तिलाश्च' इति निन्दा हि तत्र तद्विधानाभावहेतुः। विकल्पस्य प्रकारान्तरेणैव सिद्धिश्च। यदि चान्यशेषत्वमेव तत्परत्वाभावहेतुः, तर्हि 'अजक्षीरेण जुहोति' इति श्रुते अजक्षीरेऽपि तात्पर्यं न स्यात्। होमार्थत्वात्। दूषितश्चाय अन्यार्थत्वप्रयुक्ततात्पर्याभाववादो भवद्भाष्य एव विस्तरेण 'भावं तु बादरायणोऽस्ति हि' इति सूत्रे।

"यदप्युक्तं मन्त्रार्थवादयोरन्यार्थत्वान्न देवताविग्रहादि प्रकाशनसामर्थ्यमिति। अत्र ब्रूमः। प्रत्ययाप्रत्ययौ हि सद्भावासद्भावयोः

कारणम् । नान्यार्थत्वमनन्यार्थत्वं वा ।"

इत्युपक्रम्य

"प्रतीतिशरणैर्विधमानवाद आश्रयणीयो न गुणवाद । एतेन मन्त्रो व्याख्यातः ।"

इत्यन्तेन ग्रन्थेन । किञ्च निर्गुणश्रुतिरपि परार्थैव । मोक्षार्थसाक्षात्कार विषयप्रतिपत्त्यर्थत्वात् । न हि शाब्दमेव ब्रह्मज्ञानं पुरुषार्थः, तत्साधनं वा । तस्मिन् सत्यपि बन्धानुवृत्तेः । अतः

'ब्रह्मप्रतिपत्तिप्रतिबद्धं तु फलं श्रूयते ।"

इति 'कारणत्वेन चाकाशादिषु' इति सूत्रे भवद्भाष्योक्तरीत्या 'ब्रह्मविदा प्नोति परम्' इति श्रुतब्रह्मविद्याया म्यशेषत्वान्निर्गुणवाक्यस्य स्वार्थे तत्परत्वं दुर्घटमेव । तस्माद् दुर्नीतिरेषा यदुपासनार्थत्वात् सगुणवाक्यानामतत्परत्वं, ततो दुर्बलत्वं चेति । यथा तु उत्पत्तिविधेः कर्मविधेः तात्पर्यं, विनियोगविधेः फलसाधनत्वे, गुणविधीनां तत्तद्गुणविशेषे, विशिष्टविधीनां शब्दतो विशेष्ये अर्थतो विशेषणे, एवमत्र 'सदेव सोम्य' इत्यादीनां ब्रह्मणि, 'सत्यं ज्ञानमनन्तं' 'अपहतपाप्मा सत्यकामः सत्यसङ्कल्पः' साक्षी चेता केवलो निर्गुणश्च' इत्यादीनां तत्कल्याणगुणेषु, 'ब्रह्मविदाप्नोति' इत्यादीनां उपायफलयोश्च तात्पर्यमिति अनाकुलतया निष्कर्षोऽवगन्तव्यः । तत्र भावाभावरूपगुणविधिवाक्यानां वा पदानां वा विरोधभासमाने सर्वेषां श्रुतित्वाविशेषात् उपक्रमप्राबल्यादिन्यायै रेवार्थनिष्कर्षः कार्यः । तथा क्रियमाणे च निर्गुणपदं सत्त्वादिगुणपरं भवति । एवं स्वस्थैर्न्यायैः समञ्जसेऽर्थे निर्धीयमाने निर्गुण इत्येकस्य पदस्य आपातप्रतीतार्थेऽभिनिविश्य श्रुतिस्मृतिशतसिद्धसकलभगवत्कल्याणगुणगणभञ्जने महता प्रयासेन प्रदुद्यमः क्रियते, तत एव भवदभिमतमद्वैतमपवदमिति व्याप्यते ।

यथा रागप्राप्तहिंसा विषयं प्राप्य न हिंस्यादिति सामान्यनिषेधः सोमाङ्गतया विहित पश्वालम्भं न विषयीकरोति तथा निर्गुण इत्ययं सामान्यनिषेधोऽपि उपासनार्थतयाऽपि अपूर्वतया ब्रह्मणि विहितान् मङ्गलगुणान्न विषयीकरोति । किन्तु हेयगुणविषयतया पर्यवस्यतीति विभाव्यम् । "अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सो विपिपासः सत्यकामः सत्यसङ्कल्प" इत्यविशेषेण श्रूयमाणे पूपानुमन्त्रण-मन्त्रन्यायेन सत्यसङ्कल्पत्वादेः प्रकरणादुत्कर्षः कर्तव्यो येन आप-तति. स व्याख्यानमार्गं सचेतनः कोन्वाद्रियेत । यच्च "साक्ष्यादिपदै-र्द्रष्टृत्वादिगुणविधानात् निर्गुणशब्देन गुणसामान्यनिषेधो न युक्तः" इत्येतत् प्रतिब्रुवता उक्तम्—

'द्रष्टृत्वादावत्रापि न तात्पर्यम् । गुणान् तटस्थीकृत्य तेषां ब्रह्म-परत्वेन गुणे तात्पर्याभावात् ।'

इति, तत्र विपरीतो हेतुः । तेषां ब्रह्मपरत्वेन तेषु तात्पर्यं हि वक्तव्यम् । न ह्यसद्भिर्गुणैः कथितैर्ब्रह्मणो यथावत् प्रतिपत्तिर्भवेत् । व्यामोहस्तु प्रबलो भवेत् । अन्यथा व्रीहिभिर्यजेतेत्यत्र व्रीहिषु तात्पर्यं न स्यात् । यागपरत्वादित्युन्नम् ।

ब्रह्मस्वरूपयाथात्म्यावबोधनेन तस्मिन् जनानामनुरागविशेषं जनयितुं वर्धयितुं च अज्ञातपूर्वेषु अद्भुतेषु अनन्तेषु तदीयेषु गुणेषु शास्त्रैस्तत्परै-रुपदिश्यमानेषु कथं हि लोकोत्तरप्रज्ञेन भवता तेषामतात्पर्यविषयत्वं अतात्त्विकत्वं च अध्यवसीयते । 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यादि पठतां हि व्युत्पन्नानां एवङ्गुणो भगवान् सर्वे-श्वरेश्वर इति स्वरसवाहिनी आनन्ददायिनी धीरुदेति । तद्भञ्जने को हेतुः ? निर्गुण इति श्रवणमिति चेत् तर्हि 'असद्वा इदमग्र आसीत्' इति श्रवणाद् ब्रह्मणोऽप्यभावः स्यात् । असदिति नामपदसमभिव्याहृ-तत्वेन नञो निषेधकत्वं न सम्भवतीति चेन्न । निर्गुण इत्यत्र गुणनिषेधं

वदताऽत्र सन्निषेधासम्भवस्य वक्तुमयुक्तत्वात् । सद्भिन्नमासीदित्यतः शून्यमासीदित्यर्थलाभेन ब्रह्माभावप्रत्ययसम्भवाच्च । "नैवेह किञ्चनाग्र आसीत्" इति साक्षान्निषेधस्यापि श्रवणाच्च । भवदुक्तनीत्या अस्यैव स्वार्थतत्परत्वेन 'सदेव सोम्य', 'ब्रह्म वा इदम्', इत्येवमादेः सर्वस्य निषेधप्रतियोगिसमर्पकतया तत्परत्वाभावात् । अथात्र पूर्वोत्तरपरामर्शेनान्योऽर्थो वाच्य इत्युच्यते, तत् समानं निर्गुणपदेऽपि । तस्मात् अद्वैताभिनिवेशपिशाचावेशप्रमत्ततयैवात्र सकलप्रमाणवाक्यविध्वंसनं क्रियते, न तु न्याय्यं किञ्चिदुच्यत इत्यलम् ।

एतेन सगुणश्रुतिः अपरब्रह्मविषया । निर्धर्मकश्रुतिविरोधेन विषयभेदस्यावश्यकत्वादित्येतदपि निरस्तम् । ब्रह्मभेदासिद्धेः । एकत्वाद् ब्रह्मणः । निर्धर्मकश्रुतेरभावाच्च । "इदानीं सगुणं दशान्तरे निर्गुणमिति वाक्याविरोध" इति कल्पनाऽप्यत एव निरस्ता । निर्गुणवाक्याभावात् । "सगुणवाक्यानामौपाधिकगुणविषयत्वेन स्वाभाविकनिर्धर्मकत्वश्रुतेर्न विरोधः ।" इतीदमपि पूर्ववदेवासमञ्जसम् । गुणानामौपाधिकत्वासिद्धेः । प्रत्युत स्वाभाविकत्वश्रवणात् । न चास्मदादाविव भौतिकोपाधिकत्वाभावेन योगादिवत् योगाजित्त्वाभावेन च स्वाभाविकत्वोक्तिरिति वाच्यम् । एवं औपचारिकत्वे प्रमाणाभावात् । न च निर्गुणवाक्यस्यैव प्रमाणत्वम् । तदभावस्योक्तप्रायत्वात् । एवमुपसंहारस्थतया तदप्रसिद्धं च निर्गुणपदं न खलु वाक्यन्यायविरुद्धं, स्ववाक्यस्थपदैः स्वप्रकरणस्थवाक्यान्तरैः प्रकरणान्तरस्थवाक्यशतैश्च उपदिश्यमानानां गुणानामौपाधिकत्वातात्त्विकत्वाद्यापादकं च गुणसामान्यशून्यत्वरूपमर्थं बोधयितुं क्षममिति विमृश्य निरूपितम् । अतो निर्गुणवाक्यस्य स्वरसग्राह्यमाणत्वाभावात् तद्दर्शनं सगुणानामौपाधिकत्वे भवितुमर्हति ।

यच्च 'निखिलनिषेध्यसमर्पकतया एकवाक्यतयैव प्रामाण्यसम्भवे न वाक्यभेदेन दुष्टमापन्ना युक्ता' इति महासाहसिकैर्नाभ्युपगतं तदपि दूषो-

-त्तरम्। साक्षी चेता केवलो निर्गुणश्चेति पूर्वोक्तैः सर्वैर्गुणैर्निर्गुणत्वस्य समुच्चयो ऽह प्रतीयते। गुणसामान्यशून्यत्वे एकस्मिन् वाक्ये समुच्चयः कथं घटेत। न च धर्मिणि प्रकारत्वेनोपस्थितनाना धर्माणां अन्यत्रान्वयः सम्भवी। न हि कुण्डली वासस्वी देवदत्तो निर्द्रव्य आगच्छतीत्युक्ते निर्द्रव्य इत्यनेन धनाभाववत् कुण्डलवाससोरप्यभावः प्रतीयते। सपुत्रः सभार्यश्चैत्रो निस्सहायो गच्छतीत्यत्र वा निस्सहायपदेन मनुष्यान्तराभाववत् पुत्रभार्ययोरप्यभाव। अन्याश्चानुपपत्तयः पूर्वोक्ता अनुसन्धेयाः। किञ्च गुणा ब्रह्मसम्बन्धितया प्रमिता न वा। अन्त्ये असिद्धानां तेषां निषेधप्रतियोगितयाऽन्वयो न घटते। आद्ये प्रमितानां तेषामसञ्जातविरोधित्वेन प्राबल्यात् तदविरोधेन प्रतिषेधो नेयः। अत एवापच्छेदन्यायस्यात्रानवकाशः। परस्परानिरपेक्षशास्त्रद्वयविषयत्वात्। उक्तं च

> "पूर्वापरबलीयस्त्वं तत्र नाम प्रतीयताम्।
> अन्योऽन्यनिरपेक्षाणां यत्र जन्म धिया भवेत्॥"

इति।

यदुक्तं तात्त्विकत्वपर्यन्तस्य सगुणश्रुत्या अविषयीकरणात्, इति तद् वैदिकेन सता वक्तुं न शक्यते। वेदवाक्यजनिताया धियः स्वतः प्रामाण्याभ्युपगमात्। अद्वैताभिनिवेशसन्निपातज्वरानुपहतानां तत्रातात्त्विकत्वकोटेः सर्वथानुन्मेषात्। यच्च 'शून्यताया अपुरुषार्थत्वात्। आनन्दावाप्तिरूपमुक्तिप्रतिपादकविरोधाच्चे'ति। तच्चायुक्तम्। वेदप्रमितस्य तत्त्वस्याभ्युपगन्तव्यत्वात्। सगुणान्निर्गुण तत्त्वमभ्यर्हितमिति कुतो भवन्त आतिष्ठन्ते। वेदबोधितत्वादिति चेत स एव चेत् न्यायसहायः शून्यं तत्त्वमवगमयात तदभ्यर्हिततरमिति हि प्रामाणिकैः परिग्राह्यम्। न तु अपुरुषार्थं इति परित्याज्यम्। आनन्दावाप्तिरूपा मुक्तिश्च कथमद्वैतिनाम्। जीवस्तावत् स्वनाशादेव नानन्दमवाप्नोति। ब्रह्मणश्च निर्विकारत्वादपूर्वं किमपि न भवति। न चान्यः कश्चिदस्ति यो मुक्त आनन्दी

भवति। तस्मादपुरुषार्थरूपमेवाद्वैतम्। तथा शून्यमपि भवितुमर्हसि।

अथ यत् "ज्ञानादीनां स्वरूपतया गुणत्वासिद्धेरिति", तत्र पृच्छामः सत्यज्ञानानन्दपदानां वाच्यतावच्छेदकं किञ्चिदस्ति न वा। नान्त्यः। वाचकत्वेन घटादिपदानामिव तस्यावश्यकत्वात्। स्वरूपमात्रवाचकत्वे पर्यायत्वस्य सर्वेषामनुस्वरूपवाचकत्वस्य चापत्तेः। आद्ये कल्पे तत् किं भावरूपं उताभावरूपम्? नान्त्यः। प्रतीतिविरोधात्। यथा घटः गौ इत्यादिपदश्रवणे तत्तत्स्थानावशिष्टव्यक्तिविशेषोपस्थितिः तथैव हि एषामपि श्रवणे सत्यत्वज्ञानत्वानन्दत्वात्मकस्वभावविशिष्टवस्तुविशेषप्रतीतिर्भवति। प्रपञ्चापह्नवप्रवृत्तास्तु मायाः अपोहमर्थमातिष्ठन्त। तदनुसारिभिर्भवद्भिः असत्यादिव्यावृत्तिरथ उच्यते। स तु प्रतीतिविरुद्धतया नाङ्गीकर्तुं शक्यः।

तस्मादाद्यः पक्षः परिशिष्यते। तानि च वाच्यतावच्छेदकानि सत्यत्वज्ञानत्वानन्दत्वानि ब्रह्मवृत्तितया तद्गुणा भवन्ति। एवमेवेशित्वकारणत्वसत्यकामत्वसत्यसङ्कल्पत्वादयोऽपि। एवं गापथोऽयं परित्यक्तव्यो भवति अद्वैतकान्तारवासिभिर्भगवद्गुणापटचरैः। प्रतीतिबलेन हि धर्मधर्मिव्यतिरेकः सिद्ध्यति। घटत्वमन्यत् तद्वान् घटोऽन्य इति। अग्निस्वरूपमन्यत् तद्गतं दाहकत्वमन्यदिति। तद्वत् ब्रह्मणि सत्यत्वमस्ति। तेन सत्यमुच्यते। एवं ज्ञानत्वाद् ज्ञानम्। आनन्दत्वादानन्दः। एतद्धर्मब्रह्मस्वरूपमेवेति चेदुच्यते घटत्वादिकमपि घटादिस्वरूपमेवेति कुतो न भवति। इदमिष्टमेवेति चेत् तर्हि भाष्याधिकारो हीयते। लोकव्यवस्थातिलङ्घनात्। अनतिलङ्घने वा ब्रह्मविषयेऽपि धर्मधर्मिभाव अत एव तद्व्यतिरेकश्चाभ्युपगन्तव्यः। स्वरूपवादच्छलेन तु न किञ्चित् सेत्स्यति।

यदि हि ब्रह्मणि सत्यत्वधर्मो नास्ति तर्हि तत् तुच्छं स्यात्। अविशेषात्। अस्ति। तत्तु स्वरूपमेवेति चेन्न। धर्मधर्मिभावानुपपत्तेः। न

हि स्वरूपे स्वरूप स्यात् । धर्मधर्मिसंभावः कल्पित इति चेन्न । पुनस्तुच्छाविशेषप्रसङ्गात् । तत्रापि कल्पितसत्त्वसम्भवात् । तत्र स्वरूपमेव नास्ति । अत्र त्वस्तीति विशेष इति चेत् अनेन किमुक्तं भवतीति विमर्शनीयम् । ब्रह्मस्वरूपमस्तीति कि सत्तायोगीत्यर्थ इष्यते उतनेष्यते । आद्ये धर्मवत्त्वमङ्गीकृतमिति सिद्धं नः समीहितम । तथा चाद्वैतं विप्रवास्यम् । अन्त्ये तुच्छाविशेषस्तदवस्थः । तस्मात्स्वरूपातिरिक्तगुणवत्त्व ब्रह्मणोऽवर्जनीयम । "अस्माकमपि ब्रह्मातिरिक्तगुणसद्भावप्रद्वेषात । अभेदे गुणगुणिभावस्य पारिभाषिकत्वात्" इति वदता भवता वस्तुतः सत्यज्ञानादिरूपत्व ब्रह्मणः पारिभाषिकमेवेत्यङ्गीकृतं भवति । तथा च तुच्छतैव ब्रह्मण इत्यास्ता तावत् ।

अथ यदुक्त—"य आत्माऽपहतपाप्मा . सत्यकामः सत्यसङ्कल्प इत्यत्र अपहतपाप्मत्वादीना स्वरूपतया जिज्ञास्यकोटिप्रवेशेऽपि सत्यकामत्वादीना स्वरूपबहिर्भावेन जिज्ञास्यत्वायोगात् तच्छब्देन तेषामपरामर्शात् । यश्चित्रगुर्लम्बकर्णश्च तमानयेत्यादौ योग्यविशेषणस्यैव तच्छब्देन परामर्शदर्शनात् । अस्वरूपत्वे तेषामप्यपरामर्शे विशेष्यांशमात्रपरामर्शः । यश्चित्रगुर्बहुधनस्तमानयेत्यादिवत् ।" इति, तदसत् । यदि चित्रगुत्वस्य तच्छब्देन न परामर्शः तर्हि अचित्रगुरप्यानीयेत । न चैव सत्यादेशोऽनुष्ठितो भवति । तत्कस्मात् ।

इद त्वत्र तत्त्वम् । तच्छब्दपरामर्शे उभयोरविशिष्टः । उभयोरपि व्यावर्तकत्वात् । पृथक्स्थितियोग्यत्वायोग्यत्वाभ्या तु एकस्य आनयनावस्थायामनन्वयः । अन्यस्यान्वयश्च । चित्रगोस्वामित्वस्यैव पदगम्यत्वात् तस्यापि तदानीमन्वयोऽस्त्येव । परं तु अयमन्वयो वाऽनन्वयो वा न तात्पर्यविषयः । आनेयोपलक्षणत्वेन तात्पर्यविषयत्वं तूभयोरविशिष्टम् । अवर्जनीयत्वात कर्णस्यान्वयः । वर्जनीयत्वात्तु गवामनन्वयः । यत्र तु एवं निश्चायकं किमपि नास्ति तत्र सशयो भवति । यथा यः पुत्रवान्

रमानयेत्युक्ते पुत्रोऽप्यानेयो न भवति। वाक्यान्तरेण च तस्य परिहारः। एवमानयनक्रियां प्रति एषां विशेषणानां विशेषे सत्यपि आनयनाक्षिप्त यत् तत्त्वभाव आनेयज्ञान तदुपयोगित्वे विशेषाभावात् सर्वेषामेषां तच्छब्दपरामृश्यत्वमस्त्येवेति।

प्रकृते तु अपहतपाप्मत्वादिवाक्ये अन्वेष्टव्य, विजिज्ञासितव्य, इति ज्ञेयत्वमेवोच्यते, न तु क्रियान्तरकर्मत्वम्। तत्र च भावाभावरू पस्य सर्वस्य गुणस्य ज्ञेयत्वापत्तौ वैषम्ये न कश्चन हेतुरस्ति। ननु उद्देश्यतावच्छेदक विधेयान्वयो भवता नष्यते। घटो नील इत्यत्र घटत्व विशिष्टबाधेऽपि नीलत्व विशेष्यभागान्वयीति वाक्यस्य यथाश्रुतार्थस्या पपन्नत्वोपपादनात्। अपहतपाप्मत्वादेः सत्यकामत्वादेश्च तच्छब्देन परा मर्शेऽपि उभयोः केवलमुद्देश्यतावच्छेदकत्वात् कथमन्वेष्टव्यत्वादीति चेन्न। शब्दमर्यादया तदलाभेऽपि स आत्मा कथं जिज्ञासितव्य इत्या काङ्क्षायां एभिरेव गुणैर्विशिष्टतया जिज्ञासितव्य इत्युपस्थितिबलेनाव धारणात् "एतांश्च सत्यान् कामान्" इति विधिश्रवणाच्च।

यस्त्वत्र अपहतपाप्मत्वादेः स्वरूपता, सत्यकामत्वादेस्तु स्वरूपबहि र्भाव इति कश्चन विशेषः कल्पितः सः निर्निबन्धनः। उभयोरविशेषेण आत्मधर्मत्वश्रवणात्। अभावस्याधिकरणात्मकत्वादिति चेत् भावरूप स्यापि धर्मस्य तत् कुतो नाङ्गीक्रियते। अधिकरणातिरिक्त अभावो नाम कश्चन पदार्थो न प्रतीयते। भावरूपस्तु प्रतीयते। अतो विशेष इति चेत् तेन कथमधिकरणात्मकत्वम्। 'भावान्तरमभावोऽन्यो न कश्चिदनिरूप णात्' इत्युक्तरीत्या तदधिकरणवृत्तिभावधर्मान्तरात्मकत्वस्यापि सुव चत्वेन अधिकरणात्मकत्वनियमासिद्धेः। तथा चाभावस्वरूपं किमात्मक मिति विमर्शस्तावत् काम भवितुमर्हति। तस्य धर्मिविशेषणत्वं तु सर्व सम्प्रतिपन्नम्। तेन स्वसमानाधिकरणधर्मान्तरस्यैव वा पूर्वं पश्चाद्वृत्तित्वा दिविशिष्टान् घटाद् घटस्यैव वाऽनधिकरणात् तस्य भेदोऽपि सिद्धः।

अन्यथा अपहतपाप्मत्वमिति वाच्यम् . न त्वपहतपाप्मेति । तेनान्यथापि गुणस्य स्वरूपबहिर्भावोऽपरिहार्यः । स्वरूपातिरेकेऽपि ज्ञेयत्व न विरुन्ध्यते । शास्त्रोपदिष्टत्वात् ।

ननु सत्यकामत्वादिकमाविद्यकम् । अविद्यानिवर्तकज्ञानविषयत्वं तस्य कथ घटत इति चेत् अद्वैतप्रक्रियारक्षणार्थं सत्यकामत्वादेर्गुणजातस्याज्ञेयत्वं अतात्त्विकत्व अविद्यासिद्धत्वमित्यादिकमभ्युपगन्तव्यमित्युक्त भवति । तथा च प्रमाणतोऽद्वैतसिद्धिर्दुर्लभा । तदभिनिविष्टैः सर्वप्रमाणप्रामाण्यासिद्धिः पर सम्पाद्यत इति सुधियामतिरोहितमेतत् । अपहतपाप्मत्वादिवत् सत्यकामत्वादयोऽपि ब्रह्मस्वरूपगता एव गुणाः । तद्विशिष्टमात्मशब्दित ब्रह्म 'य आत्माऽपहतपाप्मे'त्यादिनाऽनुवादस्वरूपेण वाक्येनोपदिश्य 'सोऽन्वेष्टव्यः स विजिज्ञासितव्य' इति तस्यैव यथावद् ज्ञानपूर्वकमुपास्यत्वं विधीयते । तस्य चाद्वैत सदेव सोम्येदमित्यादिषु श्रूयते । अतः सर्वप्रमाणाविरोधित्वात् सर्वप्रमाणस्वरससिद्धत्वाच्च विशिष्टस्याद्वैतं शास्त्रप्रमेयम् । न तु शुद्धचैतन्यस्य । तद्वैपरीत्यादिति अनभिनिविष्टाना तत्त्वोपलम्भप्रवणाना सता सुगमम् ।

एतेन सगुणोपासनस्य साक्षान्मुक्तिसाधनत्वाभाव निर्गुणज्ञानस्य तत्त्वं चेच्छता यदुक्तम्—"यद्यपि नास्याब्रह्मवित् कुले भवतीत्यादिफलान्तरश्रवणं निर्गुणज्ञानेऽपि । स्तुत्यर्थतयोपपादनमपि समानम् । संयोगपृथक्त्वेन उभयफलत्वोक्तिरपि समाना । तथापि अधिष्ठानतत्त्वावगाहित्वाभ्या निर्गुणसगुणज्ञानयोर्विशेषात्, सगुणज्ञानजन्यमुक्तेरवान्तरमुक्तित्वाच्च ।" इति तदपि निरस्तम् । निर्विशेषासिद्ध्या विशिष्टज्ञानस्य तत्त्वावगाहित्वात् । निर्गुणज्ञानस्यातत्त्वावगाहित्वेन निष्फलत्वात् प्रत्युत योऽन्यथा सन्तमात्मानमिति न्यायेन विपरीतफलत्वाच्च ततो मुक्तिलाभकथाया दूरनिरस्तत्वात् ।

यदपि 'तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति गुणविशिष्टस्य

उपास्यस्य ब्रह्मत्व निषिद्धमिति तदुपनिषदर्थस्य यथावद्ग्रहणाशक्ति विजृम्भितम्। कार्त्स्न्येन ब्रह्मज्ञानमिच्छत शिष्यस्य तमभिनिवेशं उपशमय्य "वागादीनि अस्मदीयानि ज्ञानेन्द्रियाणि कृत्स्नब्रह्मावबोधनाक्षमाणि। कार्त्स्न्येन ज्ञातुमशक्यमित्येव ब्रह्म अस्माभिर्ज्ञेयम्।" इत्याचार्य उपदिदेशेति उपनिषदियमाह।

"यस्यामतं तस्य मतं मतं यस्य न वेद सः।

अविज्ञातं विजानतां विज्ञातमविजानताम्॥"

इत्युपरितनेन मन्त्रेणेदं स्पष्टम्। अन्यदेव तद् विदितादित्यस्यायमर्थः। घटपटादिकं प्रत्यक्षदृष्टं यथाऽस्माकं सुविदितं तथा ब्रह्म न विदितम्। अतो विदितादन्यत्। यथा अत्यन्तासद्वस्तु सर्वात्मना अविदित तथा तदविदित न भवति। वेदेन आचार्योपदेशेन च ज्ञायमानत्वात्। अत अविदितादन्यत्। अयमर्थः 'नाहं मन्ये सुवेदेति नो न वेदेति वेद च' इति मन्त्रान्तरेण स्पष्टमुक्त। सुवेदेति अहं न मन्ये। न वेदेति च न मन्ये। अनेन प्रकारेणाहं तद्वेद च' इत्यस्यार्थः। एतेन स्वप्रकाशत्वप्रतिपादनपरोऽयं अन्यदेव तद्विदितादिति मन्त्रभाग इति निरस्तं वेदितव्यम्। इदमेव विव्रियते यद्वाचाऽनभ्युदितमित्यादिभिर्मन्त्रैः। यद् वागादिभिरिन्द्रियैः कृत्स्नतया प्रकाशयितुं न शक्यं, किन्तु यद् वागादीनामधिष्ठातृ तदेव ब्रह्मेति त्वं जानीहि। यत् इदमिति परिच्छिन्नतया उपासते, परिपूर्णं ब्रह्म विदितमिति मन्यमाना मूढा उपासते, इदं ब्रह्मेति त्वं न विद्धि, इत्येषां मन्त्राणामर्थः। इन्द्रियाणि परिच्छिन्नवस्तुमात्रग्रहणक्षमाणि। वागादिस्वरूपस्थितिप्रवृत्तिकारणभूत ब्रह्म तु सपरिच्छेदशून्यम्। अतस्तानि एतद्ग्रहणे न प्रभवन्ति। तस्मात् कारणभूतं अपरिच्छिन्नं ब्रह्म अस्माभिः कार्त्स्न्येन ज्ञातुमशक्यमिति विद्धीत्युक्तं भवति। एवं सति गुणविशिष्टस्योपास्यस्य ब्रह्मत्वमत्र निषिद्धमिति वदन् कथमुपादेयवाक् भवेत्। न खल्वेषां मन्त्राणामयमर्थो भवति। नापि सङ्गति

रस्यार्थस्यात्र विद्यते । तस्माद्विशिष्टस्यैवात्र ब्रह्मत्वमुपदिश्यत इति ज्ञेयम् ।

एवं प्रमाणवाक्यानि सर्वाणि सगुणब्रह्मबोधकान्येव । निर्गुणबोधकन्तु एकमपि नास्ति । न च सम्भवतीत्युक्तम् । अथ सगुणत्वेऽनुमानान्यपि द्वैतिभिरुक्तानि । तानि दूषयन्नाह—"एष्वनुमानेषु धर्मिपदस्वपदयोर्यत्किञ्चिद्धर्मियत्किञ्चित्सम्बन्धिपरत्वे घटादिसमसत्ताककल्पितधर्मवत्त्वेन सिद्धसाधनम् । ब्रह्मपरत्वे साध्याप्रसिद्धिः । घटादिधर्मे ब्रह्मसमानसत्ताकत्वादेरप्रसिद्धेः । न च दृष्टान्ते साध्यनिरूपणे तदेव धर्मी । पक्षे तन्निरूपणे ब्रह्मैव धर्मी । धर्मिपदस्वपदादीनां समभिव्याहृतपरत्वादिति वाच्यम् । शब्दस्वभावोपन्यासस्यानुमानं प्रत्यप्रयोजकत्वात् । स्वस्वरूपपदस्याप्येवमेव ब्रह्मपरत्वे साध्याप्रसिद्धिः । घटादिपरत्वे सिद्धसाधनम् । समभिव्याहृतपरत्वस्य शब्दस्वभावस्यानुमानं प्रत्यप्रयोजकत्वमिति दूषणं पूर्ववत् ।" इति । तदेतत् किं स्वप्रयुक्तमनुमानं विस्मृतवता उक्तं अथवा अनृजुशीलतयेति न विद्मः । विवरणोक्तं हि भावरूपाज्ञानानुमानं स्वप्रागभावव्यतिरिक्तेत्यादिस्वपदघटितसाध्यकमेव । अत्रोक्तं दूषणं तत्र कुतो न भवति । स्वकीयेषु चानुमानेषु परमार्थसत्त्वं स्वसमानाधिकरणान्योन्याभावप्रतियोग्यवृत्तीत्यादिषु स्वपदघटनं क्रियते । तस्मादेवमनुमानदूषणं दूषकस्य दूषणं भवति । किमधिकेन ।

यत्तु निर्गुणत्वसाधकमनुमानं—अनुभूतिर्निर्विशेषा अनुभूतित्वात्, यन्नैवं तन्नैवमिति । तत्र अनुभूतिस्वरूपाविशेषवत्त्वं अनुभूतेरङ्गीक्रियते न वा । आद्ये बाधो दोषः । अन्त्ये हेतोरसिद्धिः । वह्निर्निर्विशेषः वह्नित्वादिति व्यतिरेक्याभाससाम्यं च । निर्विशेषत्वबोधकमेकमपि श्रुतिवाक्यं नास्तीति निरूपितत्वात् । किञ्च निर्विशेषत्वं नाम अनुभूतिस्वरूपातिरिक्तो विशेषो न वा । आद्ये तेनैव सविशेषत्वान्न निर्विशेषत्वम् । अन्त्ये अनुभूतिस्वरूपे विवादाभावात् न किञ्चित्साध्यमस्ति । अनु-

भूतिस्वरूपस्य निर्विशेषत्वरूपेण ज्ञानमुद्देश्यमिति चेन्न । स्वरूपातिरिक्तस्य निर्विशेषत्वरूपस्याभावेन अनेन रूपेण स्वरूपज्ञानमिति वचसोऽर्थशून्यत्वात् । यत्र हि स्वरूपातिरिक्तं रूपमस्ति तत्रैव व्यवहारो भवति । घटो घटत्वेन ज्ञायते द्रव्यत्वेन ज्ञायत इत्यादि । यस्य तु य कोऽपि विशेषो नास्ति तस्य कथं पूर्वमज्ञातेन केनापिरूपेण ज्ञानं भवितुमर्हति ? स्ववाग्विरोधमप्यजानन्तो भवन्तो वृथा वादाडम्बरं कुर्वन्ति ।

किञ्च अप्रयोजकमिदमनुमानम् । न च भिन्नत्वे अभिन्नत्वे सम्बद्धत्वे असम्बद्धत्वे च तिप्रसङ्गानवस्थाभ्यां धर्मधर्मिभावानुपपत्तिरेव विपक्षबाधकमिति वाच्यम् । बौद्धापक्षस्यास्य कुतर्कस्य वेदान्तिभिर्निरसनीयत्वात् । अभिन्नत्वं तावन्नाभ्युपगम्यते । भिन्नत्वं तु इष्यत एव । धर्मधर्मिभावस्य तद्व्याप्यत्वात् । न च भिन्नयोर्धर्मधर्मिभावे घटपटयोर्मेरुहिमाचलयोर्वा तदापत्तिः । न हि भेदे सति धर्मधर्मिभावनियमोऽभ्युपगम्यते । अपि तु धर्मधर्मिभावे सति भेदनियमः । सम्बन्धोऽपि अतिरिक्तो नेष्यते । गुणगुणिनौ जातिव्यक्ती इत्यादिकं स्वभावत एव परस्परसम्बद्धमुपलभ्यते । तावता धर्मधर्मिभाव । अतिरिक्तसम्बन्धानभ्युपगमाजानवस्था । असम्बन्धेऽपि धर्मधर्मिभावेऽतिप्रसङ्गस्तु तत्तद्धर्मधर्मिस्वभावविशेषात् परिहृतः । कोऽसौ सम्बन्ध इति चेत् अपृथक्स्थितिरिति गृह्यताम् । अतश्च धर्मधर्मिभावानुपपत्तेः विपक्षबाधकतर्कस्य विरहादप्रयोजकमनुमानम् ।

यच्च साध्यप्रसिद्धयेऽनुमानान्तरमुक्तं—विशेषत्वमभावप्रतियोगितावच्छेदकं, अभावप्रतियोगिसामान्यवृत्तित्वात्, घटत्ववत्, इति, तत् पदार्थत्वमभावप्रतियोगितावच्छेदकं अभावप्रतियोगिसामान्यवृत्तित्वात् घटत्ववत् इत्येततुल्यम् । विशेषत्वं उक्तसाध्यवत्, सकलपदार्थवृत्तिवृत्तित्वात् मेयत्ववत् इति प्रतिसाधनं च । न चासिद्धिः । पदार्थत्वेन सर्वस्य विशेषत्वसाधनात् । किञ्च अभावपदेन किं विशेषाभावो विव

न्वितः अथवा घटाभावः अथवा सामान्यतोऽभावः । आद्ये साध्याप्रसिद्धिः । दृष्टान्ते तदसिद्धेः । द्वितीये बाधः । पक्षस्य घटाभावप्रतियोगितावच्छेदकत्वाभावनिश्चयात् । तृतीयेऽपीद समानम् । विशेषत्वस्य अभावसामान्यप्रतियोगितावच्छेदकत्वाभावनिश्चयात् । घटत्वस्यापि तथात्वनिश्चयात् दृष्टान्तस्य साध्यवैकल्यञ्च । न च कथञ्चिदनुगमः । शब्दस्वभावस्यानुमानं प्रत्यप्रयोजकत्वस्य त्वयैवोक्तत्वात् ।

अथ निर्विशेषे किं प्रमाणमिति चोद्यं समादधता यदुक्तम् स्फूर्त्यर्थं वा अज्ञाननिवृत्त्यर्थं वा प्रमाणप्रश्नः ? आद्ये स्वप्रकाशतया प्रमाणं व्यर्थम् । द्वितीये उपनिषद एव प्रमाणत्वमिति, तत्र ब्रूमः । स्वप्रकाशस्यात्मनः अहमिति यत्स्फुरणं ततोऽतिरिक्तं स्फुरणं तावन्नास्ति । तत्तु ज्ञातृभोक्तृविषयमेव । न तु निर्विशेषविषयम् । न च तत्र विषयान्तरभानेऽपि निर्विशेषस्वरूपमपि भातीति वाच्यम् । विशेषैः सह भासमानस्य निर्विशेषत्वायोगात् । अतो निर्विशेषस्फुरणे किञ्चित्प्रमाणं वाच्यमेव । तत्तु नैवास्ति । अज्ञाननिवर्तकं प्रमाणमुपनिषदित्यपि न । येन केनाप्युपनिषद्वाक्येन निर्विशेषस्यानुक्तेः । विस्तरेणोपपादितञ्चैतत् । अतोऽत्यन्तमप्रामाणिकमेव निर्विशेष वस्तु ।

यदुक्तं—"वृत्तिमन्तरेणापि सुप्तोत्थापकवाक्यस्येव वेदान्तवाक्यस्य निर्विशेषे प्रामाण्यस्य वार्तिककृद्भिरुपपादितत्वाच्चे"ति तदशक्यरक्षणाद्वैतरक्षणसंरम्भाधीनाविवेकविलसितम् । हस्तताडनघण्टानादवाद्यघोषादिवत् ध्वनिमात्रेण हि वाक्य सुप्तोत्थापने उपयुज्यते । न तत्र शाब्दबोधोऽस्ति यावत्प्रबोधम् । प्रबुद्धस्तु यदि वाक्यं शृणोति, सम्बन्धज्ञानपुरस्सरमेव वाक्यार्थं जानाति । तस्मात् "सगुणत्वे साधकाभावात् बाधकसत्त्वाच्च निर्गुणत्वे तदभावात् निर्गुणमेव ब्रह्मेति सिद्धम्" इति निगमन तत्र भवतः 'सर्वार्थान् विपरीतांश्च' इति भगवल्लक्षितबुद्धिविशेषवैभवाधीनमित्यत्र कस्य ऋजुबुद्धेः सन्देहो भवितुमर्हति ।

भूतिस्वरूपस्य निर्विशेषत्वरूपेण ज्ञानमुद्देश्यमिति चेन्न। स्वरूपातिरिक्तस्य निर्विशेषत्वरूपस्याभावेन अनेन रूपेण स्वरूपज्ञानमिति वचसोऽर्थशून्यत्वात्। यत्र हि स्वरूपातिरिक्त रूपमस्ति तत्रैव व्यवहारो भवति। घटो घटत्वेन ज्ञायते द्रव्यत्वेन ज्ञायत इत्यादि। यस्य तु य कोऽपि विशेषो नास्ति तस्य कथं पूर्वमज्ञातेन केनचिद्रूपेण ज्ञानं भवितुमर्हति? स्ववाग्व्याघातमप्यजानन्तो भवन्तो वृथा वादाडम्बरं कुर्वन्ति।

किञ्च अप्रयोजकमिदमनुमानम्। न च भिन्नत्वे अभिन्नत्वे सम्बद्धत्वे असम्बद्धत्वे च तिप्रसङ्गानवस्थाभ्यां धर्मधर्मिभावानुपपत्तिरेव विपक्षबाधकमिति वाच्यम्। बौद्धापशस्यास्य कुतर्कस्य वेदान्तिभिनिरसनीयत्वात्। अभिन्नत्वं तावन्नाभ्युपगम्यते। भिन्नत्वं तु इष्यत एव। धर्मधर्मिभावस्य तद्व्याप्यत्वात्। न च भिन्नयोर्धर्मधर्मिभावे घटपटयोः मेरुहिमाचलयोर्वा तदापत्तिः। न हि भेदे सति धर्मधर्मिभावनियमोऽभ्युपगम्यते। अपि तु धर्मधर्मिभावे सति भेदनियमः। सम्बन्धोऽपि अतिरिक्तो नेष्यते। गुणगुणिनौ जातिव्यक्ती इत्यादिकं स्वभावत एव परस्परसम्बद्धमुपलभ्यते। तावता धर्मधर्मिभावः। अतिरिक्तसम्बन्धानभ्युपगमान्नानवस्था। असम्बन्धेऽपि धर्मधर्मिभावेऽतिप्रसङ्गस्तु तत्तद्धर्मधर्मिस्वभावविशेषात् परिहृतः। कोऽसौ सम्बन्ध इति चेत् अपृथक्स्थितिरिति गृह्यताम्। अतश्च धर्मधर्मिभावानुपपत्तेः विपक्षबाधकतर्कस्य विरहादप्रयोजकमनुमानम्।

यच्च साध्यप्रसिद्धयेऽनुमानान्तरमुक्तं—विशेषत्वमभावप्रतियोगितावच्छेदकं, अभावप्रतियोगिसामान्यवृत्तित्वात्, घटत्ववत्, इति, तन्न पदार्थत्वमभावप्रतियोगितावच्छेदकं अभावप्रतियोगिसामान्यवृत्तित्वात् घटत्ववत् इत्येतत्तुल्यम्। विशेषत्वं उक्तसाध्यवत्, सकलपदार्थवृत्तिवृत्तित्वात् मेयत्वत्ववत् इति प्रतिसाधनं च। न चासिद्धिः। पदार्थत्वेन सर्वस्य विशेषत्वसाधनात्। किञ्च अभावपदेन किं विशेषाभावो विव

न्नितः अथवा घटाभावः अथवा सामान्यतोऽभावः । आद्ये साध्याप्रसिद्धिः । दृष्टान्ते तदसिद्धेः । द्वितीये बाधः । पक्षस्य घटाभावप्रतियोगितावच्छेदकत्वाभावनिश्चयात् । तृतीयेऽपि समानम् । विशेषत्वस्य अभावसामान्यप्रतियोगितावच्छेदकत्वाभावनिश्चयात् । घटत्वस्यापि तथात्वनिश्चयात् दृष्टान्तस्य साध्यवैकल्यञ्च । न च कथञ्चिदनुगमः । शब्दस्वभावस्यानुमानप्रत्यप्रयोजकत्वस्य त्वयैवोक्तत्वात् ।

अथ निर्विशेषे किं प्रमाणमिति चोद्यं समादधता यदुक्तम् स्फूर्त्यर्थं वा अज्ञाननिवृत्त्यर्थं वा प्रमाणप्रश्नः ? आद्ये स्वप्रकाशतया प्रमाणं न्यर्थम् । द्वितीये उपनिषद एव प्रमाणत्वमिति, तत्र ब्रूमः । स्वप्रकाशस्यात्मनः अहमिति यत्स्फुरणं ततोऽतिरिक्तं स्फुरणं तावन्नास्ति । तत्तु ज्ञातृभोक्तृविषयमेव । न तु निर्विशेषविषयम् । न च तत्र विषयान्तरभानेऽपि निर्विशेषस्वरूपमपि भातीति वाच्यम् । विशेषैः सह भासमानस्य निर्विशेषत्वायोगात् । अतो निर्विशेषस्फुरणे किञ्चित्प्रमाणं वाच्यमेव । तत्तु नैवास्ति । अज्ञाननिवर्तकं प्रमाणमुपनिषदित्यपि न । येन केनाप्युपनिषद्वाक्येन निर्विशेषस्यानुक्तेः । विस्तरेणोपपादितञ्चैतत् । अतोऽत्यन्तमप्रामाणिकमेव निर्विशेषं वस्तु ।

यदुक्तं—"वृत्तिमन्तरेणापि सुप्तोत्थापकवाक्यस्येव वेदान्तवाक्यस्य निर्विशेषे प्रामाण्यस्य वार्तिककृद्भिरुपपादितत्वाच्चे"ति तदशक्यरक्षणाद्वैतरक्षणसंरम्भाधीनाविवेकविलसितम् । हस्तताडनघण्टानादवाद्यघोषादिवत् ध्वनिमात्रेण हि वाक्यं सुप्तोत्थापने उपयुज्यते । न तत्र शाब्दबोधोऽस्ति यावत्प्रबोधम् । प्रबुद्धस्तु यदि वाक्यं शृणोति, सम्बन्धज्ञानपुरस्सरमेव वाक्यार्थं जानाति । तस्मात् "सगुणत्वे साधकाभावात् बाधकसत्त्वाच्च निर्गुणत्वे तदभावात् निर्गुणमेव ब्रह्मेति सिद्धम्" इति निगमनं तत्र भवतः 'सर्वार्थान् विपरीतांश्च' इति भगवल्लक्षितबुद्धिविशेषवैभवाधीनमित्यत्र कस्य ऋजुबुद्धेः सन्देहो भवितुमर्हति ।

समस्तहेयप्रतिपक्षता च समस्तकल्याणगुणाढ्यता च ।
समस्तवेदावगता यदीया समस्तभव्यप्रद एष मेऽस्तु ॥

## २ निराकारत्वम् ।

परस्य ब्रह्मणः पुरुषाकारस्य गुणापह्नवानन्तरं विग्रहापह्नवे वृत्त कथाशील प्रमाणवाक्यानि अपार्थे योजयति । 'वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् ।' इति निर्विशेषवादिव्यख्यापेन ददत्राह श्रुति तमसः परस्तात् देदीप्यमानं आदित्यवर्णं महान्तं पुरुषं अहं वेदेत्याह । प्रकृतिमण्डलमतीत्य वर्तमाने दिव्यलोके आदित्यवर्णेन वपुषा विभ्राजते सर्वेश्वरेश्वर इति घोषणमिह क्रियते । स्वरसवाहिनमिमं मुख्यार्थं अद्वैतविरुद्धतया उपेक्षमाण आह—'आदित्यवर्णमित्यस्य आवद्याविलक्षणस्वप्रकाशस्वरूपप्रतिपादनपरतया उपास्यपरतया वा उपपत्तेः । न च तमसः परत्वोक्त्या उपासनापरत्वानुपपत्तिः । उपास्यविग्रहोपलक्षितस्य तमसः परत्वोक्तेः, न तु रूपविशिष्टस्य ।' इति । अत्र प्रथमपक्षे तमसः परस्तादित्यस्य तमोऽवधिकपरत्वशालिप्रदेशवाचिनः आवद्याविलक्षणत्वे, आदित्यवर्णमित्यस्य स्वप्रकाशत्वे, पुरुषपदस्य स्वरूपे च लक्षणादोषः स्पष्टः । द्वितीयेऽपि 'तमेव विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय' इति साक्षान्मुक्तिफलध्यानविषयत्वे श्रूयमाणे तदितरफलोपासनाविषयत्वकल्पनं तमसः परस्तादित्यस्य रूपविशिष्टान्वये स्वरसतः प्रतीयमाने तदुपलक्षितान्वयकल्पनं च दोषः । परस्तादित्यस्य देशवाचित्वात् तस्य स्वरूपेऽन्वयासम्भवात् योग्यार्थान्तरे लक्षणा चाश्रयणीया । एवञ्चात्रापि अद्वैतानुरोधेन श्रुतेरर्थनं क्रियते न तु श्रुत्यनुरोधेन तत्त्वनिर्णयः क्रियत इति स्पष्टम् ।

य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत इति श्रुत्या सूर्यमण्डलस्यान्तः विलक्षणरूपविशिष्टः परमात्मा वर्तत इति स्पष्टम् । आह च भाष्यकार एवान्तरधिकरणे—'यस्तु हिरण्यश्मश्रुत्वादिरूपश्रवणं पर

मेश्वरे नोपपद्यत इति । अत्र ब्रूमः । स्यात्परमेश्वरस्यापि इच्छावशान्मायामयं रूप साधकानुग्रहार्थम् ।” इति । एव तदेवानुप्राविशत् इत्यनुप्रवेशश्रवणात् विभुना स्वरूपेण तदयोगात् विग्रहविशेपद्वारैव तद्वाच्यम् । एतद्विशिष्टोऽस्मद्धृदये स्थित एव हार्द इत्युच्यते । 'सदा जनाना हृदये सन्निविष्टः' 'स यश्चाय पुरुषे' इत्यादिभिः श्रुतिभिः स एवाभिप्रेतः । हार्दानुगृहीत इति सूत्रकारश्च वदति । 'हृदयालयेन ब्रह्मणा' इति भवद्भाष्य च तत्र । एवमनुप्रवेशार्थापत्त्या रूपविशेषे सिद्ध्यति “स्वसृष्टकार्याभिव्यक्तत्वस्यैवानुप्रवेशशब्दार्थतया व्यापकस्य मुख्यप्रवेशासम्भवात्” इति तन्निरसनव्यसनितयाऽसङ्गतं किमप्याह । व्यापकस्य मुख्यप्रवेशासम्भवादेव हि मुख्यप्रवेशोपपादकं रूपं सिद्ध्यतीत्युच्यते । एवं वदन्त प्रति व्यापकस्य मुख्यप्रवेशासम्भवादित्यभिधानं कथं सङ्गतं भवेत् । अपूर्वकल्पनन्यायेन च रूपकल्पन ह्यत्र प्राप्तम् । एव मुख्यार्थसम्भवे लक्षणा न न्याय्येति चाभ्युपगन्तव्यम् । तदस्य तात्त्विकस्यार्थस्य प्रतिक्षेपाय कमपि युक्त्याभासमप्यप्रतिपद्यमानः व्यामुग्ध किमपि लिलेख । अत एव 'व्यापकस्य मुख्यप्रवेशासम्भवेन स्वसृष्टकार्याभिव्यक्तत्वस्यानुप्रवेशशब्दार्थत्वात्' इति लेखनीये विपरीतलेखनमापतितमिति ज्ञेयम् ।

एव ब्रह्मविदाप्नोति परमिति श्रुतप्राप्त्यर्थापत्त्याऽपि देशविशेषे स्वासाधारणविग्रहविशिष्टतया ब्रह्मणोऽवस्थान सिद्धम् । उपचारेणार्थान्तरकथने प्रमाणाभावात् । अन्यथाऽद्वैत न सिद्ध्यतीति तु भवता वाच्यम् । कथ नाम इतरथा “स्वतः प्राप्तस्याऽपि अविद्यातिरोधाननिवृत्त्यपेक्षया प्राप्यत्वोपचारेण विग्रहानाक्षेपकत्वात” इति निश्शङ्कमुच्यते । मुख्यार्थपरित्यागेन उपचाराश्रयणे न खलु किमपि बीज भवता वक्तु शक्यम् । तमेव विद्वानमृत इति सविग्रहोपासनफलमुक्तेः क्रममुक्तित्वोक्तिः साक्षान्मुक्तित्वपक्षे तदुपलक्षितात्मज्ञानस्यैव मोचकत्वोक्तिश्च पूर्ववदेव अप्रामाणिकी । आभिमानिकाद्वैतसङ्गेन प्रमाणवचनानि निर्दय विनाश्यन्त इति

मध्ये स्वहृदयमेव भवन्ति भवादृशाश्च व्यथयति। अत एव हि यशोविभूषितकरादिष्वनुपदं भवत्तु रूपविशेषविशिष्टभगवत्स्मरणप्रवृत्तिः। भवत्सिद्धान्तमनुसृत्य तु तत्र चतुर्थः पादः 'कृष्णात्परं किमपि नाहमवस्तु जाने' इति पठनीयः। एवं तमसः परस्तादादित्यवर्णरूपं, आदित्यमण्डलान्तर्वर्ति रूपं, हार्दरूपं, अजायमानो बहुधा विजायत इति श्रुतं अवताररूपं इति सुबहूनि भगवतो रूपाणि। इमानि परिच्छिन्नानि। स्वरूपवदेव अपरिच्छिन्नमपरं रूपमस्ति, यदर्जुनेन दृष्टं, 'देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः' इति भगवतैव वर्णितञ्च।

यत्तु भगवद्विग्रहं प्रति विकल्पः भौतिको वा अभौतिको वेत्यादि, तत्र ब्रूमः। अभौतिकः अप्राकृतः शुद्धसत्त्वमयश्चेति। न चात्र नेति नेतीतिश्रुतिविरोधः। तस्याः प्रकृतैतावत्त्वप्रतिषेधपरत्वस्य पूर्वमुक्तत्वात्। न चापाणिपादमिति श्रुतिविरोधः। तस्याः 'अनेजदेकं मनसो जवीयः' 'तद्धावतोऽन्यानत्येति तिष्ठत्' इतिवत् स्वरूपवैभवपरत्वात्। तस्य स्वरूपं हि पाणिपादरहितम्। अथाऽपि स जवनो ग्रहीता। अतिवेगेनापि यो धावति तस्यापि स्वयं वेगवत्तरः सन् ग्रहीता भवति। यत्र यत्र स धावति तत्र तत्र वर्तमानत्वात्। तदनेन स्वरूपस्य सर्वव्यापित्वमुच्यते। अतो विग्रहवत्त्वस्य नानेन विरोधः। न च परविद्याविषयस्य विग्रहवत्त्वप्रतिपादनविरोधः। 'उदेति ह वै सर्वेभ्यः पाप्मभ्यः, य एवं वेद' इति सर्वपापक्षयरूपमुक्तिफलतया परविद्यारूपान्तरादित्यविद्याविषयस्य रूपवत्त्वश्रवणात्।

भगवद्रूपेषु च कानिचित्प्रादुर्भावतिरोभाववन्ति। 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इति परमे व्योम्नि नित्यसूरिभिः सदाऽनुभूयमानं तु सर्वरूपान्तरप्रकृतिभूतं रूपं नित्यम्। सदा पश्यन्तीति श्रवणात्। सर्वाण्यपि वा नित्यानि काम भवितुमर्हन्ति। यत्तु भगवद्विग्रहो न नित्यः, महत्त्वे सति रूपवत्त्वात्, विग्रहत्वाद्वा इत्यनित्यत्वानुमानं

तदागमबाधितम्। सदा पश्यन्तीति श्रवणात्। न चास्यान्यथासिद्धिः सुवचा। प्राकृतत्वमुपाधिश्च। न च साधनव्यापकत्वम्। 'तमसः परस्तात्, तमसः पराके, त्रिपादस्यामृतं दिवि' इति प्रकृतिमण्डलातिक्रमश्रवणेन तस्य सर्वस्याप्राकृतत्वस्यावधारितत्वात्। एतेन सावयवत्वमहेतुरपि निरस्तः। आगमेन बाधात्। सोपाधिकत्वाच्च। अन्यथा जगत्स्रष्टा जीवः, कर्तृत्वात्, कुलालवदित्यपि साधु स्यात्। न चानादेर्भावस्यानित्यता भवितुमर्हति। क्वचिदप्यदर्शनात्। अत एव भवता अनादिभावरूपाज्ञाननिवृत्त्यभिधानमयुक्तमेव।

भगवद्विग्रहवत् तल्लोका अपि नित्याः। 'अतो हि वैष्णवा लोका नित्यास्ते चेतनात्मकाः' 'मत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्' इत्यादिभ्यः। यत्त्वत्र 'एषामवान्तरप्रलयस्थत्वपरत्वान्न विरोध' इत्युच्यते तत्तदा शोभेत यदि प्रमाणवचनानि सर्वाणि भवदाज्ञापरतन्त्राणि स्युः। तानि हि विना कारणं उपचारवादप्रवृत्तं कुटिलहृदयं मन्यमानानि तमवज्ञाय स्वमुख्यार्थपराण्येव भवन्ति सुजनमनांसीव। तस्मात्

वैकुण्ठे तु परे लोके श्रिया सार्धं जगत्पतिः।
आस्ते विष्णुरचिन्त्यात्मा भक्तैर्भागवतैः सह॥

इत्युक्तरीत्या दिव्याद्भुतविग्रहविशिष्ट एव भगवानिति सिद्धम्।

## ४. ज्ञानत्वादि।

निर्विशेषस्य कथं ज्ञानत्वमिति चेत् तदुपपादयन्नाह–अर्थप्रकाशत्वमेव ज्ञानत्वम्। मुक्तावर्थाभावेऽपि तत्संसृष्टप्रकाशत्वस्य कदाचिदर्थसम्बन्धेनाप्यनपायात्, इति। इदमयुक्तम्। निर्विशेषस्य निर्विषयकत्वेनार्थप्रकाशत्वाभावात्। वृत्त्यवच्छिन्नस्य सविषयत्वं भवतीति चेत् कथम्। निर्विकारं हि तत्। वृत्तिः कथं तत्र कञ्चन विकारमुत्पादयेत्। अतो वृत्तिदशायामपि निर्विशेषस्य ज्ञानत्वं नास्ति। मुक्तौ वृत्तिसामान्य-

विरहात् नतराम्। तत्र अतीतेनापि विषयसम्बन्धेन यदि ज्ञानत्वं भवति तर्हि घटप्रकाशस्यापि पूर्वज्ञातघटप्रकाशत्वेन घटज्ञानत्वमपि स्यात्। न च शक्तिभेदेन नियमः। मुक्तौ शक्तिसामान्यविरहेऽपि ज्ञानत्वस्येष्यमाणत्वेन अमुक्तिदशायामपि शक्तेर्ज्ञानत्वाप्रयोजकत्वात्। प्रयोजकत्वे वा मुक्तौ ज्ञानत्वं न स्यात्। शक्तेरभावात्।

किञ्च अविद्याकल्पितार्थसम्बन्धाधीनं यदि ब्रह्मणो ज्ञानत्वं तर्हि औपाधिकं स्यात्। न च सत्यं ज्ञानमित्युपदिश्यमानस्य ज्ञानत्वस्यौपाधिकत्वे किञ्चन प्रमाणमस्ति। अतः स्वतःप्राप्तस्य स्वाभाविकत्वस्य विघातो यथा न भवति तथा एतद्वाक्यबोध्यतत्स्वरूपमवधारणीयम्। स्वाभाविकसत्यत्वसमभिव्याहाराच्च तथात्वं ज्ञानत्वस्य प्रतीयते। अतः स्वतःएवार्थप्रकाशरूपत्वं ब्रह्मणो वाच्यम्। कस्यार्थस्य स प्रकाश इति चेत् स्वस्यैव। ब्रह्म हि स्वात्मानं स्वयं गृह्णाति अहमिति। अतस्तद् ज्ञानम्। अत एव स्वस्य वा परस्य वा यः प्रकाशः तद् ज्ञानमिति ज्ञानलक्षणम्। अत एव च अर्थो नास्ति, ज्ञानन्तु अस्तीति व्याहतं वचः। अर्थाभावात् तदनवगाहित्वेन मुक्तौ ज्ञानत्वं नास्तीत्येव तु पर्यवस्यति। तदेवमद्वैतमते मुक्तौ ज्ञानत्वं दुर्घटमेव।

एवमानन्दत्वमपि। तद्धि निरुपाधिकेष्टत्वरूपमिष्यते। मुक्त्यवस्थायां कस्य निरुपाधिकेष्टं ब्रह्म। न तावत् स्वस्य। स्वस्यैवत्वानभ्युपगमात्। नापि परस्य। तदानीं तदभावात्। यत्तु 'मुक्ताविच्छापायेऽपि नानन्दापायापत्तिः। इष्टत्वोपलक्षितस्य स्वरूपस्यानपायात्। उपलक्ष्ये च तदवच्छेदकसत्त्वस्यातन्त्रत्वात्' इति तन्न। निरुपाधिकेष्टत्वं हि आनन्दत्वमुक्तम्। तत्र तादृशेष्टत्वोपलक्षितं स्वरूपमित्युक्ते आनन्दत्वोपलक्षितस्वरूपमित्येवोक्तं भवति। तथा च ज्ञानत्वमिव आनन्दत्वमपि मुक्तौ नास्तीति पर्यवस्यति। तेन जडमनानन्दात्मकं च तदा ब्रह्म भवेत्। उपलक्षकधर्माणामपि तत्तद्व्यवहारप्रयोजकत्वे वा बन्धोपलक्षितत्वमादाय

बद्धव्यवहारोऽपि स्यात् । न चात्र सर्वत्रेष्टापत्तिः । सर्वशून्यत्वेऽपि तत्प्रसङ्गात् । न च तस्याप्रामाणिकत्वाद्विशेषः । प्रकृतेऽपि अप्रामाणिकत्वस्य तुल्यत्वात् । ज्ञानत्वानन्दत्वादिकं हि ब्रह्मणः स्वाभाविकं नित्यं च न्यायानुगृहीतश्रुतिवचनशतेनावगम्यते । तथा सति यथा संसारबन्धान्मुक्तिः तथा ज्ञानत्वानन्दत्वाभ्यामपि मुक्तिः । अथापि स्वरूपस्यैकत्वात् ज्ञानानन्दात्मकं बद्धञ्च मुक्त्यवस्थायां ब्रह्मेति इष्टमेवेति कथनं कथन्नाम विद्वांसः सहेरन् ।

अत्रेदं बोध्यम् । अद्वैतमेव पारमार्थिकं तत्त्वमिति स्वबुद्ध्याऽवधार्य तस्मिन्नर्थे उपनिषद्वाक्यानि हठादपि योजनीयानीति दृढाध्यवसायाः ब्रह्मसम्बन्धितया श्रुतानां गुणानामपह्नवस्यायं मार्ग इति निश्चित्य' किं ब्रह्मेति स्वरूपमात्रप्रश्नः, तत्प्रतिवचनत्वात् सत्यं ज्ञानमनन्तं ब्रह्म, आनन्दो ब्रह्मेत्यादिकमपि स्वरूपमात्रबोधनपरम्, अतः सत्यत्वज्ञानत्वादिकं स्वरूपोपलक्षकमेव न तु तद्विशिष्टं ब्रह्म । तदपि कल्पितं ज्ञानत्वादिकं निर्गुणश्रुत्या प्रतिषिद्धमिति वदन्ति । उष्णीषानुरोधेन शिरश्छेदनमेतदिति तत्त्व विद्भिः प्रामाणिकैस्तु तद्वैपरीत्येन न्यायानुगृहीतानि वेदान्तवाक्यानि कमर्थं बोधयन्तीत्यन्विष्य सोऽवधार्यते ।

तत्र 'किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च सम्प्रतिष्ठा । अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम्' इत्युपनिषत् स्वयमेव प्रश्नं निबध्नाति । अत्र सर्वभूतोत्पत्तिस्थितिकारणभूतं सर्वनियन्तृ च ब्रह्मपदवाच्यं किञ्चिदस्तीति जानतां, इयं सा व्यक्तिरिति विशिष्याजानतां चायं प्रश्न इति स्पष्टम् । अत्र कार्यवर्गस्य सत्यत्वे वा, तन्निरूपितं यत् कारणत्वं नियन्तृत्वं च, ब्रह्मपदप्रवृत्तिनिमित्तं निरतिशयबृहत्त्वं च, तद्विशिष्टत्वे वा ब्रह्मणः न कश्चित् संशयोऽस्ति । अत्र सर्वत्र निश्चयवन्त ऋषयः एतैर्विशेषणैर्विशिष्टा व्यक्तिः केति विचारमत्रारयामासुः । सा व्यक्तिः काल इति केचिदूचिरे । एवमन्येऽन्ये अन्य-

दन्यत्। इतरेभ्यो व्यावर्तकधर्मो वक्तव्य इति प्रश्नार्थः। कालश्च स इति प्रतिवचनार्थः। यः काल स तद्ब्रह्मेत्युक्त भवति। एवमाद्युत्तर निराकृतव तस्ते चिरकृतध्यानयोगबलेन तत्त्वमुपलभिर। कि तत्। चेतनवर्गस्य भोग्यभोगोपकरणभोगस्थानरूपेण।वाथपरिणामशालिनीं प्रकृतिमपश्यन्।भोक्तार जीववर्गमपश्यन्। तत पर स्वात्विष्ट ब्रह्मशब्दवाच्य परमात्मानमपश्यन्। क स ? असौ

'य कारणानि निखिलानि तानि

कालात्मयुक्तान्यधितिष्ठत्येक'।

प्रवृत्तिनिवृत्तिकारणभूतानि प्रकृतिपरिणामात्मकानि सर्वाणि द्रव्याणि तथा ज्ञातार स्वोचितकर्मकर्तारं जीवात्मानं सर्वकार्य सामान्यकारण काल च य एक अधितिष्ठति स तद्ब्रह्म स्वजिज्ञासित कारणवस्तु इति ते निरधारयन्। सकलचेतनाचेतनविलक्षणो यः सर्वज्ञः सर्वशक्तः स स्वजिज्ञासितो व्यक्तिविशेष इत्युक्त भवति। चेतनाचेतनात्मकस्वेतरसमस्तवस्तुविलक्षणचेतनत्वं प्रश्नविषयो व्यावर्तकधर्मः अनेन ज्ञापितो भवति। अयमेव धर्मः अस्या उपनिषदः प्रधानप्रतिपाद्यः। अत एव 'पृथगात्मान प्रेरितार च मत्वा' 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्त भरते विश्वमीशः' 'क्षर प्रधानममृताक्षर हर क्षरात्मानावीशते देव एकः' 'भोक्ता भोग्य प्रेरितारं च मत्वा' इति तदभ्यासः क्रियते। एव च प्रश्ने यथा अनेकगुणविशिष्टत्वं ब्रह्मण उक्तं तथैव प्रतिवचनेऽपि सकलचेतनाचेतनप्रेरकत्वतदात्मत्वानेकगुणान्तरवैशिष्ट्य सम्भाव्यत इति स्वरसवाही अक्लिष्टोऽयमर्थः। अनयैव रीत्या सत्य ज्ञानमनन्तं ब्रह्म, आन दो ब्रह्मेत्यादिपूक्त ज्ञानत्वानन्दत्वादिकमपि ब्रह्म विशेषणं यथाश्रुतं प्रतिपत्तव्यम्। ततश्च तद्विशिष्टमेव परतत्त्वमिति। तत्र आनन्दत्वं स्वस्य परेषा चानुकूलतया वेदनीयत्वम्। तच्च स्वाभाविकं नित्यं च।

एतेन अद्वितीयपद इतरमिथ्यात्वपरतया न व्याख्येयमित्यपि ज्ञापितम्। सदेव सोम्येदमित्युपादानत्वप्रतिपादनेन तदतिरिक्तनिमित्तकारणसत्त्वप्रसक्तौ तत्प्रतिषेधपरं हि तत्। एव प्रमाणान्तरप्राप्तार्थाबाधेनोपपत्तौ सम्भवन्त्यां तद्बाधावहार्थान्तराभिधानं अन्याय्यम्। एव ब्रह्मणां नित्यत्वमपि नेतरव्यावृत्त्या वाच्यम। नित्यो नित्यानां, सदा पश्यन्ति, इत्यन्येषामपि तच्छ्रवणात्। अत एव सर्वकालसम्बन्धित्वादिलक्षणेषु अतिव्याप्त्यादिवारणप्रयासो नोरीकर्तव्यः। इतरेषामपि प्रामाणिकस्य नित्यत्वस्य एष्टव्यत्वात्। न खलु तेषां नित्यत्वेन ब्रह्मणा नित्यत्वं मात्रयाऽपि हीयते।

साक्षित्व च ब्रह्मणः साक्षात्कारवत्त्वम्। इद च चैतन्यमात्ररूपस्य ब्रह्मणो न घटते। यदत्रोक्त—अविद्यातत्कार्यान्तरप्रतिफलितचैतन्यस्यैव साक्षित्वम्। तथा च दृग्रूपस्यापि उपाधिना द्रष्टृत्वम्, इति। तन्न। स्वाभाविकस्य यथाश्रुतस्य द्रष्टृत्वस्य परित्यागे औपाधिकस्य कल्पने च मानाभावात्। एतदनुरोधेन स्वतो द्रष्टुरेव ब्रह्मणोऽङ्गीकर्तव्यत्वात्। केवलदृग्रूपस्यानङ्गीकर्तव्यत्वात्। तदेव श्रुतज्ञानत्वाद्यनुपपत्तेरपि अद्वैतमनादरणीयमिति सिद्धम्।

## ५. निमित्तोपादानत्वम्।

जगत्प्रति ब्रह्मोपादान, तदेव निमित्तं चेत्यस्माकमपीष्टम्। सदेव सोम्येदम, तदैक्षत बहु स्यां प्रजायेयेति, कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञात भवतीत्यादिभ्यः। परं तु अद्वैतब्रह्मणः उपादानत्व वा निमित्तत्वं वा कथ घटत इति वक्तव्यम्। न हि विवर्ताधिष्ठानस्य उपादानत्वं क्वचिद् दृष्टम्। न च आत्मनि कार्यजनिहेतुत्वमेवोपादानत्वम्। तच्च ब्रह्मणि अविहतमिति वाच्यम्। गर्भं प्रति मातुरुपादानत्वापत्तेः। तदेह धातुविशेष एव हि तदुपादानम्। न तु माता। चक्रस्य घटोपादानत्वापत्तेश्च। अतो नेदमुपादानलक्षणम्। अपि तु यदवस्थं कार्यद्रव्य, ततः

पूर्वावस्थाविशिष्टं तदेव द्रव्यं तत्कार्यं प्रत्युपादानमिति। न चेदं अवस्थासामान्यशून्यस्य ब्रह्मण सम्भवति।

अस्म मते तु तेजोऽवस्थ ब्रह्म अबवस्थ स्व प्रति कारणमिति मथत्युपादानम्। न च तेजोवस्था अबवस्था च अचेतनप्रकृतिगता, न तु ब्रह्मगता अतो ब्रह्मण उपादानत्वासम्भवो भवतोऽपि समान इति वाच्यम्। तेजोनियन्तृत्वावस्थाविशिष्टं ब्रह्म कारण, अबूनियन्तृत्वावस्थाविशिष्टं कार्यमित्युपपत्ते। न चैव ब्रह्मणो विक्रियापात। कर्माधीनस्व रूपस्वभावान्यथाभावस्यैव विक्रियापदार्थत्वात्। स्वतन्त्रस्य परमात्मनः स्वेच्छाधीनस्य सङ्कल्पाद्यन्यथाभावस्य विक्रियात्वाभावात्। प्रत्युत ऐश्वर्यविकासहेतुतया गुणत्वात्। तदैक्षत सृष्ट्यारम्भकाले ईक्षण हि श्रुतम्। अन्तः प्रविष्टः शास्तेति शासन च। तस्मात्तदतिरिक्तविषयत्वमेव निर्विकारत्वश्रुते।

नन्वेवमपि ब्रह्मण उपादानत्व दुघटमेव। चेतनाचेतनात्मकस्य कार्यस्य तदारब्धत्वाभावात्। न हि ब्रह्मस्वरूप तद्रूपेण परिणमते। स्वरूपस्यापरिणामित्वाभ्युपगमात्। सर्वदा एकरूपतया सत्त्वरूपसत्यत्वश्रुतेरिति चेन्न। अपृथक्सिद्धकारणत्वमुपादानत्वमिति लक्षणान्तराश्रयणात्। सर्वास्वप्यवस्थासु ब्रह्माश्रितमेव हि सर्वं वस्तु। तेन सर्वं कार्यं प्रति अपृथक्सिद्धं कारण ब्रह्म भवति। न च विभौ सर्वकार्यकारणे च कालेऽतिव्याप्तिः। एकद्रव्यत्वाधाराधेयभावान्यतरसम्बन्धेनापृथक्सिद्धेर्विवक्षितत्वात्।

यद्वा विशिष्टं प्रति विशिष्टं कारणम्। न तु विशेषणमात्रं प्रति विशेष्यमात्रम्। तथा हि। कार्यकारणयोरनन्यतया जगत्सामानाधिकरण्येन सदेव सोम्येदमिति निर्दिष्टं यत् सर्वकारण सत् तत् ईक्षतिकर्मणादिभिर्हेतुभिश्चेतनमिति साधितम्। न च चेतनस्य तेजोअन्नादिरूपेण परिणामः सम्भवति। अतः अव्यक्तशरीरकमेव ब्रह्म सच्छब्द-

वाच्यमिति गम्यते। तदैक्षत। तत् अव्यक्तशरीरकं ब्रह्म ऐक्षत सङ्कल्पमकरोत्। किमिति। अहमिदानीं अविभक्तनामरूपतया एकमेवास्मि। तादृशमहं बहु स्याम। विभिन्ननामकनानारूपविशिष्टं भवेयम्। तदर्थं नानारूपतया जन्म प्राप्नुयामिति। एवं सङ्कल्प्य तत् स्वशरीरतया स्वापृथक्सिद्धविशेषणभूतं अव्यक्तं तेजोरूपतया परिणमयामास। तेजश्शरीरकमात्मानमसृजतेत्यर्थः। तत्तेज ऐक्षत। सृष्टतेजःशरीरकं ब्रह्म सङ्कल्पयामास। किमिति। बहु स्यां प्रजायेयेति। ततः तदपोऽसृजत। स्वशरीरभूतं तेजः अबात्मना परिणमय्य तच्छरीरकमभवदित्यर्थः। ता आप ऐक्षन्त। किमिति। बह्व्यः स्याम प्रजायेमहीति। ता अन्नमसृजन्त। स्वशरीरभूता आपः पृथिवीरूपेण परिणमय्य तच्छरीरकमभवदित्यर्थः। सेयं दैवतैक्षत। इयं तेजोजलपृथिवीरूपाणि त्रीणि भूतानि सृष्टवती देवता सदिति प्रक्रान्तं ब्रह्म पुनः सङ्कल्पयामास। किमिति। हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति। अत्र अहमिति अस्मदा स्वात्मानं निर्दिश्य ततः परं अनेनेति इदम जीवनिर्देशात् इमास्तिस्र इति निर्दिष्टतेजःप्रभृत्यचेतनवस्तुवत् जीवोऽपि स्वभावत एव ब्रह्मणो भिन्न इति स्पष्टमवगम्यते। सृष्ट्यनुक्तेः तस्य नित्यत्वं च गम्यते। प्राक्तनात् एकमेवेत्यवधारणात् अव्यक्तवत् सच्छब्दोक्तस्य ब्रह्मणोऽपृथक्सिद्धविशेषणतया तच्छरीरमित्यपि ज्ञायते। एवं सङ्कल्पितवत् ब्रह्म ततः परं यथासङ्कल्पमकरोत्। चेतनाचेतनात्मकशरीरविशिष्टं ब्रह्म देवतिर्यङ्मनुष्यस्थावरात्मकविविधवस्तुरूपमात्मानमकरोदित्युक्तं भवति।

एवमस्य प्रकरणस्य सृष्टिप्रतिपादकत्वात् तदनुगुणतया सतः स्वभिन्नचेतनाचेतनवस्तुविशिष्टत्वस्यावश्यं वाच्यत्वात्। अद्वैतिभिरपि अविद्याजीवयोरनादित्वेन तदानीं सत्त्वाभ्युपगमाच्च एकमेवाद्वितीयमित्येतैस्त्रिभिः पदैः सजातीयविजातीयस्वगतभेदनिषेधेनाद्वैतमत्र प्रति-

पाद्यत इतीदमपव्याख्यानमिति सुगमम्। न हि शुद्धचैत यस्य ईक्षणकर्तृत्व तेजआदिस्रष्टृत्व वा उपर्युच्यमानमुपपद्यते। अत दहर उत्तरेभ्य इति न्यायेन उपरि प्रतिपादितेक्षणसृष्टिकर्तृत्वाद्यनुरोधेन विभागानर्हाति सूक्ष्मचिदचिद्विशिष्ट सदेव आसीत्। तच्च अविभक्तनामरूपतया अव हुत्यादेरेकमेवासीत्। उपादानभूतस्यातिरिक्तनिमित्तकारणविरहात् अद्वि तीयमासीदिति व्याख्येयम्। अत एव हि भवद्भिरपि षण्णामनादित्व मिष्यते—जीवेशौ शुद्धचैतन्य तथा जीवशयोर्भिदा। अविद्या तद्वता योग षडस्माकमनादय ॥ इति। एषु शुद्धचैतन्ये न किञ्चन प्रमाण मस्ति। मिथो भिन्नो जीवेशौ प्रमाणसिद्धौ। अनयोर्भेदस्य च मिथ्यात्व मप्रामाणिकम्। अविद्या त्रिगुणप्रधानात्मका प्रमाणसिद्धा। न तु भाव रूपाज्ञानात्मिका। अत एव तद्वतोर्योगो नास्ति। जडस्तूपादानत्वेन प्रधानस्यैव ब्रह्मविशेषणतयाऽऽक्षिप्तत्वात्।

तदेव श्रूयमाणसृष्ट्याद्यनुपपत्त्या सच्छब्दवाच्यब्रह्मविशेषणतया चेतनाचेतनवस्तुनोराक्षेपात् तद्विरुद्धमद्वैत न तत्र प्रतिपत्त्यर्हम्। नतरा जीवेशभेदादेर्मिथ्यात्वम्। एकमेवाद्वितीयमित्यस्य, सर्वभेदनिषेधकत्वे सिद्धे हि तदनुरोधेन उपरि श्रूयमाणं ईक्षणकर्तृत्वादिक अविद्याधानं कल्पितमिति कल्प्येत। तत्तु नास्ति। 'पूर्वापरपरामृष्ट शब्दोऽन्या कुरुते मतिम्' इति न्यायेन तावन्मात्रेण प्रतीयमानस्यार्थस्य अन्यथा स्यावश्यम्भावात्। तदैक्षतेत्याद्युपरिश्रूयमाणानुरोधिन एवार्थस्य प्रामा ण्यै स्वीकर्तव्यत्वात्। श्रूयमाणस्य चेक्षणकर्तृत्वादेः कल्पितत्वे प्रमाणले शस्यापि विरहात् पारमार्थिकमेवेदम्। अत एव तदाक्षिप्त सार्वत्र्यं सूक्ष्मचेतनाचेतनवस्तुविशिष्टत्वमित्यादिकमपि पारमार्थिकमेव। एवं च विशिष्टमेव कारणं कार्यं च। तत्र कार्ये अविदंश प्रति चेतनांश एव, ईश्वरांश प्रति ईश्वरांश एव च कारणम्। न तु कार्ये विशेषणांश प्रति कारणे विशेष्यांश ईश्वरः कारणम्। अतो न कोऽपि दोषः।

अथैवं सजातीययोरेव कार्यकारणभावे सति नविलक्षणत्वाधिकरणस्य कथमुत्थितिः । जडत्वचेतनत्वकिञ्चिज्ज्ञत्वसर्वज्ञत्वादिभिरत्यन्तविलक्षणयोर्जगद्ब्रह्मणोः कथं कार्यकारणभाव इतीममाक्षेपमुत्थाप्य अस्ति तादृशयोरपि स इति स्थापनं हि तत्र क्रियते । उक्तरीत्या सलक्षणयोरेव कार्यकारणभावे सति अनयोः पूर्वपक्षसिद्धान्तयोरवकाश एव नास्तीति चेत्, श्रूयताम् । तदैक्षत बहु स्यां प्रजायेयेति, तत् तेजोऽसृजत, तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः इत्यादिभिः परस्मात् ब्रह्मणः तद्विलक्षणाकाशाद्युत्पत्तिः श्राव्यते । यदि विलक्षणयोः कार्यकारणभावः कथमपि न सम्भवतीति स्यात् तर्हि इमानि वेदान्तवाक्यानि अग्निरनुष्ण इत्यादिवत् बाधितार्थानि सन्ति ब्रह्मकारणत्वं नैव गमयेयुः । ईक्षणादेर्गौणत्वमाश्रित्य प्रधानपरतयैव नेयानि स्युः । तथा च श्रीमद्भाष्यम्—'विलक्षणयोर्हि कार्यकारणभावः प्रतिपादयितुमेव न शक्यते' इति । अतः शाब्दबुद्धिप्रतिबन्धकायोग्यतानिश्चयविघटनाय लोके कार्यकारणयोः सालक्षण्यनियमो नास्तीति व्युत्पादनमनेनाधिकरणेन क्रियते । तेन शाब्दबोधे निराबाधं निष्पन्ने वाक्यान्तरप्रमाणान्तरावगतकार्यकारणभूततत्तद्वस्तुस्वरूपस्वभावपर्यालोचनया विशिष्टं प्रति विशिष्टस्योपादानत्वमित्यवधार्यत इति ।

तदेवमस्मन्मते अवस्थाविशेषवत्त्वेन अपृथक्सिद्धकारणत्वेन वा ब्रह्मण उपादानत्वं सुघटम् । भवन्मते तु शुद्धचैतन्यस्य तदभावात् भवदुक्तोपादानलक्षणस्य दुष्टत्वाच्च दुर्घटम् । न च सर्वकार्याधिष्ठानत्वाद् ब्रह्मणः तदपृथक्सिद्धिरस्त्येवेति वाच्यम् । तत्सत्त्वेऽपि कारणत्वायोगेन उपादानत्वासम्भवात् । न हि शुद्धचैतन्यस्य यत् किमपि कार्यं प्रति कारणत्वमस्ति । उपहितं कारणमिति चेत्, ततः किम् । उपाधिरेव कारणमिति पर्यवसानात् । न हि उपाधिना चैतन्यस्वरूपे कश्चनातिशयो जन्यते । निर्विकारत्वात् । तेन उपहितं कारणमित्यनेन उपाधिः कारण-

मित्यतोऽतिरिक्तं न किञ्चिदुक्तं भवति ।

एतेन निमित्तत्वमपि शुद्धचैतन्यस्य नास्तीत्युक्तं भवति । ईक्षण-कर्तृत्वाभावात् । यत्तु अविद्यापरिणामेच्छाकृत्याद्याश्रयत्वमस्तीति, तन्नेत्यु क्तमेव । न हि अविद्यापरिणामो य कोऽपि शुद्धचैतन्य स्पृशति । नित्य-शुद्धमुक्तस्वभावत्वात् । न च तदैक्षत तदसृजतेत्यादिषु अविद्यापरि-णामग्रहणे किञ्चन प्रमाणमस्ति । कल्पित कार्यं प्रति कर्तृत्वायोगाच्च न निमित्तत्वम् । यत्तु 'कुलालादिकार्यघटादावपि अकल्पितत्वस्य न सम्प्र-तिपत्तिरिति तत् बहुरूपत्व नास्ति सम्प्रतिपत्तिरित्येतत्तुल्यम् । तस्मा-दद्वैतमते ब्रह्मणः श्रुते उपादानत्वनिमित्तत्वे न घटेते इति सिद्धम् ।

## ६. स्वप्रकाशत्वम्

ब्रह्मणस्तावत् ज्ञानत्व श्रुत—सत्य ज्ञानमनन्तमिति । ज्ञानत्व नाम स्वस्य वा परस्य वा कस्यचित् प्रकाशकत्वमित्युक्तम् । तत्रात्मस्वरूपेण इतरस्य भानाभावात् स्वभासकत्वेनैव तस्य श्रुतं ज्ञानत्वमुपपादनीयम् । तथा च ब्रह्म स्वप्रकाशमिति सिद्ध्यति । स्वत एव न तु संविदन्तरात् प्रकाश व्यवहारानुगुण्यं यस्य तत् स्वप्रकाशम् । घटपटादिकं स्वतो न प्रकाशते । अपि तु आत्मधर्मभूतज्ञानद्वारा । अतस्तत्सर्वं परप्रकाशम् । आत्मस्वरूप तद्धर्मभूतज्ञान च पुन ज्ञानान्तरवेद्यत्वेऽपि ज्ञानान्तरं विनाऽपि स्वत एव भूयिष्ठं प्रकाशते । अत उभयोरनयोः स्वप्रकाशत्वम् । आत्मस्वरूप स्वस्मा एव स्वयं प्रकाशते । न परस्मै । धर्मभूतज्ञानं स्वाश्रयायैव स्वतः प्रकाशते । नान्यस्मै । स्वस्मै प्रकाशमानमात्मस्वरूप अहमित्युल्लिख्यते ।

इदं स्वप्रकाशत्व अद्वैतब्रह्मणो न सम्भवति । तस्य स्वविषयत्वान-भ्युपगमात् । यत्तु अवेद्यत्वे सति अपरोक्षव्यवहारविषयत्वयोग्यत्व एत-दत्यन्ताभावानधिकरणत्व वा स्वप्रकाशत्वम् । तच्च तत्रास्तीति तन्न । न हि स्वप्रकाशपदस्यायमर्थः । न च तदर्थपरित्यागे अर्थान्तरकल्पने

च किञ्चित्प्रमाणमस्ति। किञ्च योग्यत्वनिवेशात् मुक्तिदशायां स्वप्रकाशत्वं नास्तीत्येवाङ्गीकृतं भवति। न च ब्रह्मस्वभावस्य कालिकाव्याप्यवृत्तित्वं युक्तम्। सर्वदा एकरूपत्वात्। किञ्च आविद्यकापरोक्षव्यवहारविषयत्वाधीनत्वात् ब्रह्मणः स्वप्रकाशत्वमौपाधिकमेव स्यात्, न स्वाभाविकम्। तथा च तात्त्विकं स्वप्रकाशत्वं तस्य नास्ति। तेन च चिद्रूपत्वमेव तस्य हीयते। यद्धि स्वयं न प्रकाशते, परं च न प्रकाशयति, तद् घटादिवदचिदेव।

अपि च घटादिकं ज्ञानेनैव प्रकाशते, न स्वतः। अतः तत् अस्वप्रकाशम्। ज्ञानं तु ज्ञानान्तरं विना स्वयमेव प्रकाशते। अतः तत् स्वप्रकाशमित्युच्यते। ब्रह्म च ज्ञानरूपत्वात् अहमुल्लेखितयाच स्वयं स्वस्मै प्रकाशते। अतः स्वप्रकाशमिति प्रतीयते। तदिदं कुतो भवद्भिर्नाभ्युपगम्यते। ब्रह्मणो वेद्यत्वे घटादिवत् मिथ्यात्वं भवेत्। अतो नाभ्युपगम्यत इति चेत् ब्रह्मणो वेद्यत्वमभ्युपगम्य वेद्यत्वं मिथ्यात्वे न हेतुरित्येव कुतो नेष्यते। तथा चेदस्माकं सिद्धान्तहानिरिति चेत् तर्हि आभिमानिकसिद्धान्तरक्षणार्थं प्रामाणिकमपि स्ववेद्यत्वं ब्रह्मणः प्रतिषिध्यत इति स्फुटमेतत्। एवं सति आर्जवेन स्वप्रकाशत्वं नेष्यत इत्येव वाच्यम्। न तु पारिभाषिकार्थान्तरकल्पने यतितव्यम्। अपरोक्षव्यवहारविषयत्वादिकं हि परप्रकाश्यघटादिसाधारणम्। तत् कुत इह स्वप्रकाशलक्षणे अन्तर्भाव्यते। घटादिवारणाय च पुनः अवेद्यत्वे सतीति विशेषणमुपादीयते। न चेदं युक्तम्। स्वप्रकाशपरप्रकाशयोः वेद्यावान्तरभेदवात्। यत् प्रकाशते तस्यैव स्वतः परतो वेति विशेषाभिधानात्।

किञ्च अवेद्यत्वे सति अपरोक्षव्यवहारविषयत्वं तद्योग्यत्वं च व्याहतमेव। तदपरोक्षव्यवहारे तद्विषयकस्फुरणस्यावश्यकत्वात्। यत्तु अन्यत्र तद्विषयस्य स्फुरणस्य तद्व्यवहारजनकत्वेऽपि स्फुरणस्य स्वाविषयस्य स्वस्मिन् व्यवहारजनकत्वम्। स्वभावभेदात्, इति तन्न। स्वभाव-भेदा

सिद्धे । तत्र प्रमाणाभावात् । स्वविषयत्वैव स्वस्य स्वस्मिन् तद्व्यवहारजनकत्वस्य दुष्टव्यत्वात् । न ह्यज्ञातस्य व्यवहार सम्भवो । भेदनियतस्य विषयविषयिभावस्य कथमेकस्मिन् सम्भव इति चेत् यथा घटादिचाक्षुषत्वप्रयोजकस्य रूपस्य स्वचाक्षुषत्वप्रयोजकत्वं, यथा घटादिप्रकाशकस्य दीपस्य स्वप्रकाशकत्वं तथा घटादिभासकस्य ज्ञानस्य स्वप्रकाशकत्वं न विरुध्यते । तथा ज्ञानरूपस्य आत्मनश्च । आत्मज्योतिष्ट्ववचनात् । अहमर्थत्वं च । स्वात्मानं प्रतीत्य हि अहमिति व्यवहरन्ति । एवं च विषयविषयिभावस्य भेदव्याप्तिर्न सिद्ध्यतीति बोध्यम् ।

भवन्तस्तु आत्मनः स्वप्रकाशत्वे अत एवाहमर्थत्वे च शरीरभेदेनात्मभेदात् अद्वैतभङ्गः स्यादिति बिभ्यतः अहमर्थस्यानात्मत्वं आत्मनोऽवेद्यत्वं च साधयितुमभिनिविशन्ते । तत्र स्वप्रकाशत्वं नास्तीत्येव पर्यवस्यति । सत्तामात्रेण चेत् स्फुरणं व्यवहारहेतुः तर्हि तस्य प्रकाश एव नास्तीत्युक्तं भवति । तत्र स्वप्रकाशता क्व भवेत् । अवेद्यत्वापरपर्याय अप्रकाशत्वमेव तु भवेत् । 'यद्वा चिदविषयस्वरूपत्वमेव स्वप्रकाशत्व'मिति कल्पना तदाश्रयता तदभ्युपगतमेव भवति । परन्तु तत्र अप्रकाशत्वमिति वक्तव्ये स्वप्रकाशत्वमिति वचनं न युज्यते ।

एतेन यद्वा स्वव्यवहारे स्वातिरिक्तसंविदनपेक्षत्वं स्वावच्छिन्नसंविदनपेक्षत्वं वा स्वप्रकाशत्वमित्येतदपि व्याख्यातम् । स्वव्यवहार्यत्वस्य हि एव लक्षणं भवितुमर्हति । न तु स्वप्रकाशत्वस्य । अस्य तु 'स्वप्रकाशो ऽविदन्तरानपेक्षत्वमि'त्यादि लक्षणं वाच्यम् । 'स्वव्यवहारे' इत्यादि लक्षणेनापि यद्यपि स्ववेद्यत्वरूपं स्वप्रकाशत्वमर्थतः सिद्ध्यति, तथापि तस्य कण्ठतो निषेधात् न तत् स्वप्रकाशत्वलक्षणं भवितुमर्हति । तत् सिद्धमद्वैतवादे ब्रह्मणः स्वप्रकाशत्वं दुर्घटमिति ।

अथ यत् स्वाभिमतस्वप्रकाशत्वे अनुभूतित्वहेतुरेव व्यतिरेकी प्रमा

णमित्युच्यते, तदयुक्तम् । अनुभूतिर्वेद्यत्ववती वस्तुत्वात् घटवदिति प्रतिसाधनवत्त्वात् । न चास्याप्रयोजकत्वम् । अवेद्यत्वेऽवस्तुत्वापत्तेः तर्कस्य सत्त्वात्। न चावेद्यत्वेऽपि स्वतः सिद्धत्वाद्वस्तुत्वम् । अवेद्यस्य स्वतःसिद्धत्वोक्तेरर्थशून्यत्वात् । सिद्धिर्हि निश्चयः । स कथमवेद्यस्य भवेत्। अनुभूतित्वहेतोरसिद्धिश्च । अविषयाया अनुभूतित्वायोगात्। न चात्र आसीदित्यादिवाक्यजन्यज्ञानतुल्यत्वम् । विषयस्य स्वरूपतस्तदानीमसत्त्वेऽपि ज्ञानस्य सविषयत्वात् । प्रकृते तु निर्विषयत्वात्। न हि विषयशून्याऽनुभूतिः काचिद् दृष्टा । अप्रयोजकत्वं तु भवदनुमानेषु सर्वत्रैव स्थितम् । श्रुत्यनुग्रहस्य शशशृङ्गायमाणत्वात् । बाधश्च दुरुद्धरः । अपरोक्षानुभवमप्यपरोक्षतो जानामीति दृढप्रत्ययात् ।

यत्तु अहमर्थस्य ज्ञप्त्याश्रयत्वायोगेन ज्ञानपदस्य वृत्तौ गौणत्वात् साक्ष्यनुभवस्य वृत्तिरूपगौणानुभवविषयत्वमेवात्रास्ति, न तु अनुभवविषयत्वमिति तत् तान् प्रति वक्तुं युक्तं ये भवन्मतप्रक्रियामभ्युपगच्छन्ति । न त्वन्यान् प्रति । न हि साक्ष्यनुभवं वृत्तिरूपगौणानुभवान्तरं च वयमभ्युपगच्छाम । प्रमाणाभावात् । अत एव उक्ताभिलापे जानातेर्गौणत्वमन्याय्यमेव । निराबाधयथास्थितप्रतीतिवशेन तु अनुभवस्य वेद्यत्वमङ्गीकर्तव्यम् । ततश्च स्थितो बाधः ।

अद्वैतसाधनोद्युक्तैरुत्तरं प्रतिवादिनाम् ।
अद्वैतं सिद्धवत्कृत्य न युक्तं यदुदीर्यते ॥

आत्मानमेवावेदिति श्रुतिबाधश्च अप्रकम्प्यः । यत्तु अत्रापि स्वसिद्धान्तानुसारेण किञ्चिदुच्यते तद् विद्वांसो न कर्णे करिष्यन्ति । यथाश्रुति प्रतिपत्तौ अनुपपत्तिलेशविरहात् । अहमर्थस्यैवात्मत्वात् । स्वयम्प्रकाशस्य तस्य स्वविषयवेदनस्यैव आत्मानमेवावेदिति वचनात् । 'ब्रह्म वा इदमग्र आसीत् । तदात्मानमेवावेदहं ब्रह्मास्मीति' इति श्रुतिवाक्ये हि ब्रह्मणः स्ववेदित्वं सुस्पष्टमुच्यते । एवं च एतच्छ्रुतिविरोधात्

ब्रह्मणोऽवेद्यत्वानुमानं बाधितमेव। अत एव एतच्छ्रुत्युपष्टम्भानि ब्रह्म स्फुरणविषयं अपरोक्षव्यवहारविषयत्वात् घटवदित्यादीनि वेद्यत्वानुमानानि समञ्जसानि सन्ति भवदनुमानं सत्प्रतिपक्षयन्ति। न चात्र स्फुरणप्रयुक्तव्यवहारशालित्वरूपविषयत्वमादाय सिद्धसाधनम्। साक्षाद्विषयत्वस्य साध्यत्वात्। न चास्य स्वस्मिन् वृत्तिविरोधेन बाधः। प्रकाशकस्य स्वस्मिन् वृत्तिविरोधाभावात्। दीपप्रभा हि स्वप्रकाश्या। अत एव विषयविषयिभावस्य सम्बन्धत्वेन भेदनियततया स्वस्मिन् स्ववेद्यत्वविरुद्धमिति निरस्तम्। प्रकाश्यप्रकाशकभावसम्बन्धस्य दीपे एकस्मिन् दर्शनात्। अभेदतादात्म्यादीनामपि सम्बन्धत्वाभ्युपगमाच्च। समवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नकारणत्वं समवायिकारणत्वमिति ह्याहुः। संयोगसमवायादीनां केषाञ्चिदेव सम्बन्धानां भेदनियमात्।

यच्च स्वविषयत्वे किञ्चिदुदाहरणं नास्तीति तन्न। तत्तुल्ये स्वप्रकाश्यत्वे उदाहरणस्य प्रदर्शितत्वात्। दीपप्रभा यथा घटादिकं तथाऽऽत्मानमपि हि प्रकाशयति। तथा च तस्याः प्रकाशकत्वं प्रकाश्यत्वमित्युभयमप्यस्ति। तद्वदेव ज्ञानस्यापीदमुभयमस्तीति किमनुपपन्नम्? सर्वथा स्वव्यवहारप्रयोजकत्वे उदाहरणाभावस्य समानत्वाच्च। यदुक्तम्—व्यवहारोपपादनाय स्वविषयत्वस्वभावकल्पनापेक्षया स्वाविषयत्वेऽपि स्वव्यवहारजननस्वभावत्वमेव कल्प्यताम्, लाघवात्, इति तत् कथमिति न विवृतम्। लाघवं तु स्वविषयत्वपक्ष एव। सर्वं वस्तु ज्ञानप्रकाश्यमित्यत्र तद्व्यवहारं प्रति तदनुभवः कारणमित्यत्र च ज्ञानेतरत्वविशेषणे भवन्मते यथा देयं तथा तत्र तस्यादेयत्वात्। न च विषयविषयिभावो भिन्ननिष्ठ इति नियमे ज्ञानव्यतिरिक्तस्थल इति सङ्कोचकरणे भवतोऽप्यावश्यकमिति वाच्यम्। अस्य नियमस्यानपेक्षितत्वात्। न हि घटः स्वविषयः स्यादित्यापत्तिः सम्भविनी, येन स नियम आद्रियेत।

घटस्य विषयित्वाभावात् । न हि सामान्यस्याभावे विशेषस्यास्ति प्रसङ्गः । अनुभवस्तु विषयी । स्वभावसिद्धा सा विषयिता प्रमाणोपपत्त्यनुरोधात् स्वनिरूपिताऽपि भवतीत्यभ्युपेयते । तदत्र गुरुलाघवस्थितिर्विपरीतेति मन्तव्यम् ।

यदपि 'न दृष्टेर्द्रष्टारं पश्येः' 'येनेदं सर्वं विजानाति तं केन विजानीयात्' इत्यादिभिरवेद्यत्वं श्राव्यत इति, तदपि नास्ति । आद्यस्थले तावत् 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः' इति याज्ञवल्क्योक्तं श्रुतवता उषस्तेन 'यथा विब्रूयादसौ गौरसावश्व इति, एवमेवैतद्व्यपदिष्टं भवति' इति जीवपरयोरविवेकेनोत्तरमिदमुक्तमित्याक्षिप्ते पुनर्याज्ञवल्क्यः दृष्टेर्द्रष्टारं दर्शनस्य कर्तारं जीवं मया उक्तं न मन्यस्व । तदितरः पर आत्मा मयोक्त इत्याह । द्वितीयस्थले च "येन परमात्मना प्रसन्नेनानुगृहीतः इदं सर्वं विजानाति, सर्वज्ञो भवति तं परमात्मानं केन हेतुना विजानीयात् । 'क इत्था वेद यत्र सः' इतिवत् परमात्मप्रसादमन्तरेण स दुरवबोधः" इत्याह । तत्र आत्मनोऽनुभूतेर्वाऽवेद्यत्वस्य कः प्रसङ्गः ।

क्रियाकर्मत्वविरोधात् न स्वस्मिन् स्ववेद्यत्वमित्यप्यसाधु । ज्ञानस्य छिदादिवत् स्पन्दात्मकक्रियात्वाभावात् । न हि ज्ञानकर्मत्वं छिदां प्रति वृक्षस्येव मुख्यं कर्मत्वम् । किन्तु विषयत्वरूपं गौणम् । अत एव लक्षणया द्वितीयया बोध्यते । तदुक्तं भाट्टरहस्ये—

> एवं च यत्र एतादृशकर्मत्वबाधः तत्र घटं जानाति मैत्रः, इच्छति कुरुते, घटस्य ज्ञातेत्यादौ सविषयपदार्थाभिधायिधातुयोगे द्वितीयाषष्ठ्योर्विषयत्वे लक्षणा.. न त्वत्र परसमवेतत्वप्रवेशः । वैयर्थ्यात् । स्वात्मानं जानामि, आत्मानमात्मना वेत्सि. इत्यादिप्रयोगाच्च । इति ।

स्वं जानामि, चैत्राऽहं स्वात्मानं जानामि, आत्मानमा-

त्मना वेत्सि, इत्यादौ एकसंज्ञावरोधेऽपि संज्ञान्तरप्रयुक्तरार्थे दर्शनात्। न च शरीरमनोरूपावच्छेदकमादाय तत्रासाङ्कर्योपपादनम्। तथात्वे स्वपदप्रयोगानुपपत्तेः। चैत्रश्चैत्र गच्छतीति प्रयोगेऽपि शरीरप्रदेशान्तरावच्छिन्नात्मादिभेदकल्पनोपपत्तेश्च, इत्यादि च।

अतो ज्ञानस्थले क्रियाकर्मत्वविरोधो वा कर्तृकर्मत्वविरोधो वा नास्तीति ज्ञेयम्। तदेव वेद्यत्वानुमानाना बाधा नास्तीति निरूपितम्। जडत्वमुपाधिरपि नास्ति। जडत्व हि नाम ज्ञानभिन्नत्व वा आत्मभिन्नत्व वा। तत्र अनुभूते ज्ञानत्वात्मत्वे अभिमते न वा ? आद्ये पक्षेतरत्वमेवेदं जडत्वमिति नोपाधिः। अन्त्ये साधनव्यापकत्वान्नोपाधि। यत्तु बाधोन्नीतत्वेन पक्षेतरत्वरूपत्वेऽपि न क्षतिरिति, तदत्रानवकाशम्। बाधस्य निरस्तत्वात्। अवेद्यत्वस्यैव बाधितत्वात्। न हि निर्विषयस्य ज्ञानत्वमनुभूतित्व वा सम्भवति। केवला चितिश्च सकलविषयविरक्ताऽभ्युपगता। सा चेत् स्वात्मानमपि न गोचरयेत् तर्हि चित्त्वमेव हीयते। स्फुरणरूपत्वात् चित्त्वमिति चेत् कस्य स्फुरणं, कं प्रति च ? न कस्यचित् न कञ्चित् प्रतीति चेत् तर्हि तत् स्फुरणमिति कथमुच्यते। इदं मे स्फुरति, तत् ते स्फुरति, इति ससम्बन्धिक हि वस्तु स्फुरणं नाम लोके प्रसिद्धम्। प्रसिद्धस्वभावरहित किञ्चित् तद्वस्तु कथं भवेत्। स्वतः सिद्धमिति चेत् उक्तोत्तरमेतत्। अवेद्यत्ववादिन सिद्धिपदार्थो दुर्निरूप इति। तस्मात् स्वग्राहकत्वविरहे स्फुरणमेव तत्र स्यादिति दृढमेतत्प्रतिपत्तव्यम्।

यदपि यथाशील कुटिलानुमानं प्रयुक्तं त्वदीयापरोक्षव्यवहारयोग्यं मज्ज्ञानं त्वदीयापरोक्षव्यवहारयोग्यत्वे सति वेद्यत्वनधिकरण ज्ञानत्वात्, मदीयज्ञानवत्, इत्यादि तत्र वेद्यत्वस्थाने अवेद्यत्वं घटयित्वा प्रयुक्तमानेन तेनैवानुमानेन सत्प्रतिपक्षितं भवति। यत्तु अत्र बाधकसत्त्वेन

स्थापनाऽवकिवलेति, तदाशामोदकतृप्तमात्रमिति इयता निरूपणेन सुगमम्। वस्तुतस्तु इदमनुमानं अग्निः जलान्यत्वे सति स्पर्शवत्त्वानधिकरणम्, द्रव्यत्वव्याप्यजातिमत्त्वात्, जलवत्, इत्याभासतुल्यमिति ज्ञातव्यम्।

घटादिविषयज्ञानं च तदाश्रयभूतोऽहमर्थ आत्मा चेत्युभयमपि स्वप्रकाशमित्युक्तम्। तेन चिदभिन्नस्यात्मनोऽपि स्वप्रकाशत्वं चिद्रूपत्वात् साधनीयमिति दुरवस्था नानुभवनीया। यच्च वेद्यत्वे आत्मनो वेदनाभावादज्ञानदशायां आत्मनि संशयविपर्ययव्यतिरेकनिर्णयप्रसङ्ग इति। तन्न स्वातिरिक्तवेदनाभावदशायामपि स्वात्मकस्ववेदनसत्त्वेन अत एव स्वप्रकाशत्वेन उक्तप्रसङ्गानवकाशात्। अवेद्यत्ववादिनो भवतस्तु स प्रसङ्गो दुर्निवारः। तद्विषयकनिर्णयो हि तद्विषयकसंशयाद्यनुदयकारणम्। तदभावे कथं तद्विषयकसंशयाद्यनुदयः। चिद्भिन्नस्थल एव तथा नियम इति चेत् पुनः गौरवान्तरमापाद्यमानमङ्गीकुरुष्व। न चेदं सोढव्यम्। अप्रामाणिकत्वात्। अतः संशयाद्यनुदयोपपत्त्यै वेद्यत्वमवश्याश्रयणीयम्। तत्तु ज्ञानान्तरेणेव स्वतोऽपि भवतीति स्वप्रकाशत्वमिष्यते। आत्मैवास्य ज्योतिः स्वयंज्योतिरित्यादिना चात्मनः स्ववेद्यत्वं सिद्धम्। अस्य जीवात्मनः आत्मैव स्वस्वरूपमेव ज्योतिः प्रकाशकम्, इत्यर्थात्। एतेन 'स्वातिरिक्तानपेक्षतया स्वप्रकाशत्वमुक्तं' इति यदत्रोक्तं तन्न युक्तमिति ज्ञेयम्। आत्मनैव प्रकाश्यमानतया स्वप्रकाशत्वमुक्तमिति हि वक्तव्यम्। 'अस्य ज्योतिः एतद्विषयकव्यवहारानुगुण्यजनकः' इति हि श्रुत्यर्थः। षष्ठ्या विषयत्वार्थकत्वात्। अत्राह—"न चास्येति षष्ठ्या विषयत्वाभिधानम्। स्वयं दासा इत्यादाविवानन्यवेद्यत्वपरत्वात्। न चामुख्यार्थत्वापत्तिः। मुख्यविषयासम्भवेनेष्टत्वात्।" इति। किमुक्तं भवति। अद्वैतसिद्धान्तविरोधात् श्रुतिरन्यथा नेयेति। तथा च श्रुतिविरुद्धमद्वैतमिति स्वयमभ्युपगतं भवति।

इदमत्र बोध्यम्। आत्मैवास्य ज्योतिर्भवति, अत्रायं पुरुषः स्वयं ज्योतिर्भवति, इतीदं स्वप्नावस्थाविषयम्। इतः पूर्वं आदित्यचन्द्राग्नि वाचां ज्योतिष्ट्वमुक्तम्। तत्र आदित्येनैव ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति श्रवणात् आसनादिक्रियानिर्वर्तनोपयिकप्रकाशहेतुत्वमेव ज्योतिःपदाभिप्रेतमिति ज्ञायते। आत्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येतीति श्रवणात् आत्मनोऽपि तादृशमेव ज्योतिष्ट्वं वाच्यम्। अतोऽन्यान्याधीनप्रकाशराहित्यमात्रे न तात्पर्यम्। किन्तु आत्माधीनप्रकाशवत्त्वेऽपि। तत्र आत्मनः अहमिति प्रकाशः स्वेनैव। अन्यः सर्वः प्रकाशो धर्मभूतज्ञानेनेति।

यदपि 'न च प्रदीपादौ स्वविषयत्वेन स्वप्रकाशत्वव्यवहारः सजातीयप्रकाशाप्रकाश्यप्रकाशत्वस्यैव तत्रापि व्यवहारनिदानत्वात्। अत एव न घटादावप्रकाशेऽतिप्रसङ्गः" इति तदप्यनार्जवेनैवोक्तम्। यद्यपि प्रदीपादेः स्वविषयत्वं नास्ति। अतो न तस्य तत्प्रयोज्यः स्वप्रकाशत्वव्यवहारः। तथापि स्वतः प्रकाशमानत्वात् स्वप्रकाशत्वमिति वक्तव्ये सजातीयप्रकाशाप्रकाश्यत्वमिति वक्रमुक्त्वा तस्य घटादावतिप्रसक्तिवारणाय प्रकाशत्वमन्यत् कुतो निवेश्यते। न हि घटादिप्रकाशकादीपः स्वयं न प्रकाशते। स्वातिरिक्तप्रकाश्यत्वं घटस्य अस्वप्रकाशत्वम्। तदभावो दीपस्य स्वप्रकाशत्वम्। उभयोः प्रकाशमानत्वं तु समानम्। तथैव धर्मभूतं धर्मिभूतं वा ज्ञानं स्वयं प्रकाशत इति स्वप्रकाशत्वं वाच्यम्। हठादेव तु अन्यदन्यत् स्वप्रकाशत्वमुच्यते। तत्सर्वमप्रामाणिकं प्रमाणविरुद्धं चेत्यलम्।

## ७ वाच्यत्वम्

सर्वेश्वरस्य परब्रह्माभिधानस्य सकलवेदवेद्यस्य सर्वं विशेषमपह्नुत्य तुच्छभिन्नत्वमात्राभ्युपगमेन सर्वश्रेयोभाजनमात्मानं मन्यमानः विभूतिमिथ्यात्वनिर्गुणत्वावेद्यत्वकथनानन्तरं वाच्यत्वनिह्नवे प्रवर्तते। सर्वे वेदा

यत्पदमामनन्ति, वेदैश्च सर्वैरहमेव वेद्य' इत्यादिभिः परस्सहस्रैः श्रुतिस्मृतिवचनैः सर्ववेदवेद्यत्व अत एव तत्तत्पदवाच्यत्व च बोध्यते। तथा सति किन्नाम कारण येन तस्य अवाच्यत्वसाधने सरभन्ते। निर्विशेषत्वदार्ढ्यार्थमिति भाति। आहुश्च—

दृष्टा गुणक्रियाजातिसम्बन्धाः शब्दहेतवः।
नात्मन्यन्यतमो ह्येषा तेनात्मा नाभिधोयते ॥

इति। शब्दवाच्यत्वेऽभ्युपगते वाच्यतावच्छेदकधर्मयोग विना वाच्यत्वायोगात् वाच्यताबलेनैव सगुणत्वमापद्येत। अतस्तन्निराकरणप्रयत्न इति। तदिद निर्गुणत्वासिद्धिनिरूपणसकलकल्याणगुणाकरत्वसाधनाभ्यामेव व्युदस्त भवतीति न पृथक् प्रयत्नापेक्षा। तथापि वैशद्याय किञ्चिद् ब्रूमः।

वाच्यत्व नाम शक्यत्वम्। तद् ब्रह्मणि नास्ति। लक्ष्यत्व तु अस्त्येवेत्याह। तत्रेद प्रष्टव्यम्। ब्रह्म न वाच्यमित्यत्र ब्रह्मपद स्वार्थं कया वृत्त्या बोधयति। न कयापि वृत्त्या बोधयतीति चेत् तर्हि धर्मिभान कथम्? स्वप्रकाशतया स्वत एवेति चेत् अवेद्यत्व हि स्वप्रकाशत्व भवदभिमतम्। तत्र तस्य स्वतः कथमुपस्थितिः? स्वरूपमेवोपस्थितिः। तदवाच्यत्वेनान्वेतीति चेत्। न। न ह्यशाब्द शाब्देनान्वेतीति न्यायात्। अन्यथा गौर्गच्छतीत्युक्ते प्रत्यक्षार्थान्तरान्वय प्रतीत्य गौस्तिष्ठति, अश्वो गच्छतीति ग्रहणप्रसङ्गात्। ब्रह्मपदेन आवरणाभिभावकवृत्तौ उत्पन्नाया धर्मी स्वतो भातीति चेत् वृत्तिपरिभाषया पदजन्योपस्थितिरियमङ्गीकृता भवति। सेयमावरणाभिभावकवृत्तिः किं ब्रह्मपदेन श्रुतिमात्रेण जन्यते पक्षिरुतेन प्रभातधीरिव, अथवा स्वगतवृत्तिस्मरणद्वारा, गोपदेनेव तदर्थोपस्थितिः। नाद्यः। वर्णात्मकवाचकशब्दत्वात्। सङ्केतविशेषानुपलब्धेश्च। अन्त्ये सा वृत्तिरभिधा लक्षणा वा? आद्ये क सः अभिधेयोऽर्थः? अभिधा नास्ति। अत एवाभिधेयोऽर्थोऽपि नास्ति। लक्षणया

तु ब्रह्मस्वरूपं बोधयतीति चेत्। अनादिः शब्दशास्त्रसंस्कारवान् वेदादिषु सर्वत्र प्रयुक्तः प्रसिद्धश्च ब्रह्मशब्दः। स कथमभिधाशून्यः अभिधेयशून्यश्च स्यात्।

प्रयोगश्च—ब्रह्मेतीयमक्षरानुपूर्वी अभिधावती अभिधेयवती वा अनादिवर्णानुपूर्वीत्वात् गवाद्यानुपूर्वीवत्, इति। न चात्र य कोऽपि दोषः सुवचः। आह च सूत्रकारः ब्रह्मशब्दस्य परमात्मनि मुख्यत्वमन्यत्र गौणत्वं च 'परं जैमिनिर्मुख्यत्वात्,' 'तत्सामीप्यात्तु तद्व्यपदेशः,' इति। 'स्याच्चैकस्य ब्रह्मशब्दवत्' इति च। द्युभ्वाद्यायतनं स्वशब्दादित्यस्मिन् सूत्रे च स्वशब्दविवरणावसरे आत्मब्रह्मादयः शब्दा ब्रह्मणस्स्वरूपत्वेन भवद्भाष्यकारैरेवोक्ताः। तस्माद् ब्रह्मादिशब्दवाच्यमेव ब्रह्म। अन्यथा अनादिवाचकतया साधुत्वेन प्रसिद्धानां शब्दानां अवाचकत्वेनासाधुत्वापादकतया अद्वैतमप्रामाणिकमनादरणीयमित्येव सिद्ध्येत्। वाच्यत्वेऽपि ब्रह्मणः तत्तद्गुणयोगस्य वक्तव्यतया अद्वैतमपैत्येवेति चेत् प्रामाणिकगुणादियोगाविरुद्धमेव अद्वैतमास्थेयम्। न तु सर्वक्षोभकारि भवदभिमतं रूपाऽद्वैतम्।

ननु ब्रह्मशब्दो लक्षणया परतत्त्वं बोधयतीति चेत् अभिधाविरहे कथमभिधेयसम्बन्धरूपा लक्षणा भवेत्? बोध्यसम्बन्धो लक्षणेति चेत् काममेवम्। तथापि वाक्येऽर्थो बोध्योऽनभिधेयो भवेत्। पदे तु अभिधेय एव बोध्यः, तदतिरिक्तः कश्चित्। तस्मात् ब्रह्मादिपदस्यापि अभिधया वाच्यं वचनार्थमुक्त्वैव तत्सम्बन्धरूपया लक्षणया अर्थान्तरं बोधयति पदमिति वाच्यम्। तच्च न भवन्मते सम्भवति। लक्षणया सकलस्वरूपप्रतिपत्तिश्च नालं भवितुम्। सर्वस्यापि वस्तुनः केनचिद्रूपेणैव भानं यमात्। तदिदं अखण्डार्थखण्डने प्रोक्तम्।

यत्तु यतो वाचो निवर्तन्ते, अशब्दमस्पर्शमित्यादिश्रुतयश्चात्रानुसन्धेया, इति तद्विदुषा विनोदाय केवलं कल्प्यते। अत्र हि आद्यस्थले

ब्रह्मानन्द ईदृश इति तद्ग्रहणदिशं काञ्चित् प्रदर्श्य अन्ते स इयानिति ईदृश इति च वाचा वक्तु मनसा चिन्तयितुं चाशक्य इत्युच्यते। वाङ्मनसापरिच्छेद्यो ब्रह्मानन्द इत्युक्तं भवति। तत्र का प्रसक्तिः पदपदार्थयोर्वाच्यवाचकभावस्य यो निषेद्धुमिष्येत। आनन्दं ब्रह्मणो विद्वानिति ब्रह्म तत्रापि अभिदधात्येव श्रुतिः। एवं द्वितीयस्थलेऽपि आकाशादिपञ्चभूतगुणान्वयप्रतिपादनपरत्वात् वाच्यत्वसम्बन्धेन शब्दराहित्यस्य नैवावस्थितिरस्ति। पुरुषविष्ण्वादिपदैः परब्रह्माभिधानप्रकरणे तत्राऽर्थाभिधानं बाधितमित्यध्यवसेयम्। ततश्च समवायसम्बन्धेनेव वाच्यतासम्बन्धेनापि शब्दराहित्यमर्थ इति परास्तम्। अन्यथा लक्ष्यतासम्बन्धेनापि तद्राहित्यमर्थः स्यात्। यद्वा लक्षकशब्दराहित्यमेवोक्तं स्यात्। सर्वेषां शब्दानां मुख्यवृत्त्या ब्रह्मवाचित्वात्। यथोक्तमस्मद्भाष्ये चराचरव्यपाश्रयसूत्रे—"तद्व्यपदेशः चराचरवाचिशब्दः ब्रह्मण्यभाक्तः मुख्य एव। कुतः। ब्रह्मभावभावित्वात् सर्वशब्दानां वाचकभावस्य।" इति

सर्वशब्दैकवाच्यस्य ब्रह्मणो ये न वाच्यताम्।
मृष्यन्ति तेऽभिगच्छन्ति सर्वलोकस्य वाच्यताम्॥

## ८. भेदः।

अथ भेदनिराकरणे संरम्भं दर्शयति। कस्मै प्रयोजनायेदं कल्पत इति तु न विद्म। यदि हि प्रमाणबलात् विश्वमिथ्यात्वं जीवब्रह्मैक्यं च सिद्ध्येत् तावता अद्वैतं सिद्ध्यत्येव। किं विशिष्य भेदनिराकरणेन। व्यावहारिकं भेदं न निराकुर्म इति स्वयमेव वदति। तात्त्विकस्तु भेदो व्यावहारिकाणां वस्तूनां परस्परं न सम्भवति। मिथ्याभूतेऽर्थे तात्त्विकार्थासमवायात्। तेभ्यो ब्रह्मणि तु सम्भवति। परन्तु किमर्थं स निषिध्यते। अद्वैतसिद्ध्यर्थमिति चेन्न। भावाद्वैतपक्षे भेदस्य स्वरूपातिरेकेऽपि दोषविरहात्। पक्षान्तरेऽपि स्वरूपानतिरेकाभ्युपगमेनोपपत्तेः। नित्यत्व-

सत्त्वानन्दत्वादिकमपि हि तथैव समर्थ्यते। तत्र भेदस्य स्वरूपानतिरेकाङ्गीकारेणाद्वैतरक्षणे कः क्लेशः। ब्रह्मणि घटादिभेदो हि प्रतीयते इष्यते च। न च स व्यावहारिकः तात्त्विकस्तु निषिध्यत इति वाच्यम्। व्यावहारिकत्वे मानाभावात्। न च दृश्यत्वेन मिथ्यात्वात् व्यावहारिकत्वम्। तात्त्विक इति विशेषणेऽपि दृश्यत्वानपायेन मिथ्यात्वापत्त्या तात्त्विकभेदान्तरासिद्धेस्तन्निषेधस्याशक्यत्वात्। किञ्च तात्त्विकस्य प्रपञ्चभेदस्य ब्रह्मणि निषेधे तदभेदापत्तिः। परस्परविरोधे प्रकारान्तराभावात्। घटे कल्पितघटान्तरभेदभ्रमस्थले भेदनिषेधेऽपि अभेदापत्तिर्नास्तीति चेन्न। वैषम्यात्। भ्रमस्थल हि तत्। भ्रमसिद्धस्य भेदस्यैव घटान्तरस्यापि विरहात् न तदभेदापत्तिः। भ्रमसिद्धमपि घटान्तरं विद्यमानं कृत्वा घटे तद्भेदभाननिषेधे तत्रापि अभेदापत्तिरपरिहार्यैव।

किञ्च यदि भेदः स्वरूपं धर्मो वेति विकल्प्य निराक्रियते तर्हि तथैव रीत्या अभेदस्यापि निराकर्तुं शक्यत्वात् अभेदभेदयोरपि वाधितविषयत्वात्। न चाभेदस्य श्रुत्यनुग्रहो विशेषः। अभेदबोधकश्रुत्यभावस्य प्रागेवोपपादितत्वात्। तस्मात् ब्रह्मणः स्वस्मादभेदो यथा उपपाद्यते तथैव प्रपञ्चाद् भेदस्यापि उपपादयितुं शक्यत्वात् उपपादनीयत्वात् निराकर्तुमशक्यत्वाच्च भेदनिराकरणं सर्वथा निष्फलमिति स्थितम्। तथापि घटपटभेदादिसाधारण्येन सर्वभेदखण्डनाभिनिवेशः केवलं कलहोद्धरतां प्रकाशयति। न च भेदापह्नवः शक्यः। तथा हि। वादिप्रतिवादिस्थापनाप्रतिस्थापनाभूषणदूषणयुक्तिप्रभृतीनां भेदं गृहीत्वा वा वादः प्रवर्त्यते, अगृहीत्वा वा? आद्ये अभ्युपगतो भेदः। अन्त्ये न परपक्षभङ्गः। नापि स्वपक्षविजयः। पक्षभेदाभावात्। वाद एव च निरवकाशः। यत्तु व्यावहारिकभेदाभ्युपगमेन सर्वा व्यवस्था स्थिता। पारमार्थिकं तु भेदं निराकुर्म इति। तत् स्वमताभिनिवेशाधानचित्तविभ्रमविजृम्भितम्। न ह्यस्माभिरेव द्वौ भेदावभ्युपगतौ, यत एव

विभागवचन उपपद्येत। घटपटभेद उभयोरावयोः सिद्धः। स भवतो व्यावहारिकः। मम तु तात्त्विक एव। अयमेकः प्रतीयमानो भेदो वाधित इति भवता साधनीयम्। नेत्यस्माभिः। तत्र तात्त्विकव्यावहारिकभेद-कल्पनाऽनवकाशा। कल्पनायां च सिद्ध एव भेदः। तथा च वादे प्रव-र्तमानेन भवता स्वपरभेदमङ्गीकृत्यैव प्रवृत्तेः भवदीयं भेदखण्डनपरं सर्वं वाक्य माता मे वन्ध्येतिवत् वाधितार्थमेव। इदमलं सद्यो भवतो निग्रहाय। तथापि तत्त्वनिरूपणकुतूहलाद् ब्रूमः।

योऽयं घटे पटभेदोऽनुभूयते स कथमपह्नूयेत। न ह्ययमनुभवः शुक्तिरजतानुभववद् भ्रमः। परीक्षितप्रामाण्यत्वात्। स्वरूपं वा धर्मो वा अन्यो वेति निरूपणानर्हतया नास्तीति निश्चीयत इति चेन्न। कारण-दोषवाधकप्रत्ययविरहात् ज्ञानाना स्वतः प्रामाण्याच्च विषयसत्ताया अव-श्यम्भावात्। अन्यथा घटपटादिकमपि नास्तीति स्यात। न चेष्टापत्तिः। विशिष्य भेदनिराकरणसम्भ्रमस्यायुक्तत्वात्। घटादेः शुक्तिरजतवैलक्ष-ण्याभ्युपगमविरोधाच्च। तस्मात् घटादिप्रत्ययस्य घटादिवत् तद्भेदप्रत्य-यस्य भेदोऽपि विषयो भवताऽप्यङ्गीकर्तव्य एव। एवं सिद्धे भेदे स क इति निरूपणं भवतोऽपि भारः, न त्वस्मदादीनामेव। यत्तु

> अस्माकमविद्यासामर्थ्यात् सर्वानुपपत्तिविधूननोपपत्तिः। न हि मायायामसम्भावनीयं नाम। तथा च परस्पराश्रितमपि इन्द्र-जालवद् दर्शयिष्यति।

इति, तत् किं स्वस्थबुद्धिनैवोच्यत इति संशेमहे। अश्वार्थी भवान् महिष-दर्शने कुतो निवर्तते। सर्वव्यवस्थोल्लङ्घिनी हि माया अश्वभेदं निवर्त्य महिषमप्यश्व कर्तुमीष्टे। न हि मायायामसम्भावनीय किञ्चिदस्ति। तत्र माया भेदनिवर्तनाभेददर्शने न करोति। तेन निवृत्तिरिति चेत् तर्हि तत्र मायासम्बन्धो नास्तीति निश्चीयते। यथा च मायाव्यपदेशेन भेद-दूषणनिस्तारो दुर्लभः। अभ्रान्ताः सर्वे अश्वार्थिनः महिषदर्शने निय-

भेन निवर्तन्त इति सम्प्रतिपन्नमाचार्याः । तेन तत्र अबाधिता भेदप्रति
पत्तिरस्तीति च । एवं सति व्यवहारदशायामेव भेदं बाधितुमाद्रियमाणेन
भवता व्यवहारव्यवस्था कथमुपपाद्यते । यदि मायया शुक्तिरजतव
द्भेदमानमिष्यते तर्हि तद्वदेव बाधोऽपि भवेत् । न च कश्चिदपि कदाचि
दपि भवति । अथ माया अश्वादिवदेव तद्भेदमपि भासयतीत्युच्यते तर्हि
अश्वादौ सत्येव अश्वप्रतीतिरिति वत् भेदे सत्येव भेदप्रतीतिरिति इय
प्रमैव भवति । न तु बाधितविषया सती अप्रमा । न च तृतीयः प्रकारः
कश्चिदस्ति । अत एव

भेदस्तत्प्रतीतिश्च यदि मायिकी न स्याताम् सर्वव्यवस्थोल्लङ्घिनी
न स्यात् । सर्वव्यवस्थोल्लङ्घिनी चेयम् । तस्मान्मायिकी ।

इत्यापादनमयुक्तम् । भेदतत्प्रतीत्योर्व्यवस्थोल्लङ्घित्वासिद्धेः । यथाप्रतीति
व्यवस्थाप्यत्वात् । प्रतीतिर्हि भगवती वस्तुगमे नः शरणमिति स्थिते ।
व्यवहारदशायामापतन्तीनामप्यनुपपत्तीनां मायिकत्वेन अभ्युपगम्य परि
हारे भवता वादिनिरसने तदर्थं विपुलग्रन्थकरणे च न प्रवर्तितव्यम् ।
परैरुद्भाव्यमानानां दूषणानां सर्वेषामभ्युपगमेऽपि मायामहिम्नैव सिद्धा
न्तसिद्धेरप्युक्तं शक्यत्वात् । इन्द्रजालेऽपि व्यवस्थोल्लङ्घनं नैवास्ति ।
धीमत् सद्यः वृक्षोत्पत्तेः तैलविशेषसेचनरूपकारणाधीनत्वात् । इत्थं सर्व
जनविदितकारणादर्शनेऽपि सर्वत्रैव कारणविशेषस्य सत्त्वात् । अतः

उक्तश्रुत्या अनन्यथासिद्धयुक्त्या च भेदस्य बाधात् अभेद
स्याबाधाच्च स्वाभेदस्वभेदयोर्व्यावहारिकत्वे समानेऽपि स्वाभेदं
परित्यज्य भेद एव सर्वथा प्रद्वेषो नाकारणकः ।

इति निगमनं स्वाभ्युपगतकेवलद्वेषमात्रमूलकमिति स्पष्टम् । घट
पटाश्वमहिषादिभेदबाधिका या काचिदपि श्रुतिर्नोदाहृता । न चास्ति,
सम्भाव्यते वा । अनन्यथासिद्धयुक्तिश्च अस्मन्मत एव सुलभा, न तु
भवन्मते । भवान् हि भेदसामान्यं नेच्छति । तेन सर्वभेदः फलति ।

तत्र भेदखण्डनयुक्तीनामपि भूषणयुक्त्यभेदेन स्वव्याघातकता दुष्परिहारा। न चास्मन्मते एवम्। यत्र भेदः प्रतीयते तत्रैव तत्स्थापनात्। अभेदो यत्र प्रतीयते तत्र तदभ्युपगमात्। तेन स्वस्य स्वाभेदोऽपि न सिद्ध्येदिति स्वव्याघातकताया आपादयितुमशक्यत्वात्। तदेव प्रमाणयुक्तिभ्या भेदबाधस्यासिद्धेः अकारणक एव भवता भेदविद्वेषः। अथवा सकारणक एव। अद्वैतरागमूलत्वात्। 'कामात् क्रोधोऽभिजायते' इति प्रसिद्धेः।

भेदखण्डनयुक्तीना तत्त्वतो भेदनिवारकत्वेऽपि व्यावहारिकभेदस्यानिराकरणेन स्वाव्याघातकतोपपत्तेः।

इति प्रथममुक्त्वा पश्चाद्व्यावहारिकभेदनिराकरण एव सरम्भ वहता सुष्ठु तावत् वादकुशलता विस्रम्भणीयता च आविष्कृता। दृढप्रत्यक्षसिद्धश्च भेदश्चतुर्मुखेनापि न निराकर्तुं शक्य इति जानातु भवान्। तदिद प्रत्यक्षप्राबल्योपपादनेन अभेदार्थकश्रुतिविरहप्रदर्शनेन च पूर्वमेवावेदितम्। तदेव

दृढप्रत्यक्षसिद्धत्वाद् बाधकस्यानिरूपणात्।
भवताऽप्यभ्युपेतत्वाद् व्यवहारदृशाञ्जुषा॥
तन्निरासस्य चाद्वैतसिद्धावनुपयोगतः।
एष्टव्यः कुर्वता दूरे द्वेप भेदोऽप्यभेदवत्॥

भेदस्वरूप तद्दूषणपरिहारादिक च सर्वं पूर्वाचार्यग्रन्थेष्वेव विशदमिति नेदानीं तन्निरूपणे वयं प्रवर्तामहे।

## ६. भेदप्रत्यक्षम्।

नाह सर्वज्ञः, नाह निर्दुःख, इत्यनुभवात् जीवस्य ब्रह्मभेदः सिद्ध्यति। अत्र यदुक्तम्—अस्यानुभवस्य अन्तःकरणाद्यवच्छिन्नचैतन्ये तदनवच्छिन्नचैतन्यप्रतियोगिकभेदावगाहितया शुद्धचैतन्यधर्मिकनिर्दुःखादिप्रतियोगिकभेदावगाहित्व नास्तीति। तेन जीवेश्वरभेदोऽङ्गी-

कृत एव भवति। भेदाधिकरणे जीव अन्तःकरणावच्छिन्नचैतन्यमित्ये-तत्तु अद्वैते सिद्धे वक्तुं युज्येत। इमं प्रतीयमानं भेदमनुसृत्य जीवस्वरूपमन्यत्, ईश्वरस्वरूपमन्यदिति प्रतिजानीमहे। तत्राभेदरक्षणपरैः भेदस्यान्यथासिद्धये जीवस्वरूपं वाऽन्यथा कल्पनीयं, तत्त्वमसीति श्रुतेर्वाऽन्योऽर्थो वाच्य इति विमर्शे पूर्वपक्षो भवद्भिराश्रितः। उत्तरोऽस्माभिः। अयमेव युक्त इति चोपपादितम्। एवं सति नाहं सर्वज्ञ इत्यादिजीवेश्वरभेदानुभवस्य शुद्धचैतन्ये निर्दुःखत्वादिप्रातियोगिकभेदावगाहित्वं नास्तीत्युक्तिरसङ्गता। न हि शुद्धचैतन्ये भेदावगाहित्वं केनचिदुक्तम्। प्रबलप्रत्यक्षसिद्धत्वाज्जीवेश्वरभेदस्य तदभेदो न श्रुत्यर्थ इत्येव वाच्यम्। अतोऽद्वैतार्थापत्तिविरहादन्तःकरणावच्छिन्न एव भेदभ्रम इत्येतन्नास्ति। अन्तःकरणस्य चक्षुरादिकरणवत् करणत्वेन जीवस्वरूपानन्तर्गतत्वात्।

यद्यपि साङ्ख्यमत इव अन्तःकरणावच्छिन्नचैतन्यमेव जीवः तथापि इदं जीवचैतन्यं निर्दुःखब्रह्मचैतन्यादन्यदेव। अबाधितभेदप्रत्ययात्। एतदाभासीकरणक्षमस्य प्रमाणान्तरस्य यस्य कस्याप्यभावात्। असम्भवाच्च। चैतन्यनिष्ठो हि प्रतीतिगम्यो भेदः। अन्तःकरणस्यावच्छेदकमात्रत्वात्। यथा घटत्वावच्छिन्ननिष्ठः पटभेदो घट एव न घटत्वे। अस्मिंस्तु तद्भेद प्रत्ययान्तरगम्य। तथेति। यदपि साक्षिप्रत्यक्षस्याध्यस्तसाधारणतया तत्सिद्धत्वमात्रेण भेदे अबाधितत्वमसम्भावितमेवेति, तदपि भवदभिमतसाक्षिणोऽप्रामाणिकत्वादेव निरस्तम्।

इत्थं जीवेश्वरभेदवत् जीवानां परस्परं भेदोऽपि प्रत्यक्षसिद्धः। नाहं चैत्र इति। अहमर्थश्चेतनः चैत्रशरीरात्मभूतचेतनादन्य इति हि तदर्थः। घटो न मठः, घटः पटो न, नाहं घट, इत्यबाधितप्रतीतिबलात् एतेऽपि भेदाः सिद्धाः। यत्तु कल्पितभेदविषया इमाः प्रतीतय इति। तन्न। कल्पितत्वे प्रमाणाभावात्। एतद्विरोधेनाद्वैतस्यैव कल्पितत्वावगमात्। तस्माद्भेदपञ्चकं प्रत्यक्षसिद्धमित्यतन्निष्कम्पम्।

अवज्ञैः प्रमितो भेदो भवद्भिर्भङ्क्तुमिष्यते ।
विना मानं विना युक्तिं स्वसिद्धान्तातिक्रमात्रतः ॥

## १०. भेदानुमानम् ।

यद्यपि प्रत्यक्षसिद्धेऽर्थे अनुमानमनपेक्षितम्, तथाऽपि तर्करसिकतया भेदेऽनुमानमप्याद्रियमाणाः प्रयुञ्जते—"जीवेशौ भिन्नौ, विरुद्धधर्माधिकरणत्वात्, दहनतुहिनवत्" इति । अत्राह—दुःखादेरन्तःकरणादिधर्मत्वेन स्वरूपासिद्धिरिति । इदमयुक्तम् । यदि ह्यन्तःकरणस्यैव दुःखादि न चैतन्यस्य, तर्हि तस्यैव संसारित्वं स्यात् । तन्निवृत्तिरूपो मोक्षश्च तस्यैव । न चैवमिष्यते । अस्मिन्नेव प्रकरणे अन्ते 'ब्रह्मणो जीवत्ववत्संसारित्वापत्तौ इष्टापत्तिः' इति जीवस्य भवता तदभिधानात् । न च जडस्यान्तःकरणस्य दुःखित्वं सम्भवति । प्रयोगश्च, अन्तःकरणं न दुःखि, जडत्वात् घटवत्, इति । तस्मान्न तावत् स्वरूपासिद्धिरनुमानदोषः ।

नापि एकत्रैव निर्दुःखत्वदुःखवत्त्वयोरवच्छेदकभेदेन दृष्टतया धर्मिभेदासाधकत्वम् । एकत्रैव दृष्टयोः अविरुद्धत्वेन हेत्वनन्तर्भावात् । के तर्हि विरुद्धा धर्मा इति चेत्, एवं पृच्छतः कोऽभिप्रायः ? किं ते नैव सन्तीति अथवा सन्तीति । आद्ये 'तथा जीवेशयोर्भिदा' इति जीवेशभेदस्यानादित्वेन गणनं नोपपद्यते । न हि विरुद्धधर्मानधिकरणत्वे भेदो भवेत् । अन्त्ये कुतोऽस्मान् प्रति प्रश्नः । भवताऽपि हि ते वक्तव्याः । सौहार्देन प्रश्न इति चेन्न । सौहार्दस्याप्रकाशनात् । विजिगीषायाः प्रकाशनात् । देहोपद्रवजन्यं हि दुःखं अवच्छेदकदेशभेदेन स्वाभावसमानाधिकरणं कथञ्चिद् भवेत् । न तु पुत्रमरणराज्यापहारादिजन्यम् । इदं च दुःखं जीवस्य प्रत्यक्षसिद्धम् । ईशस्य एवमादिदुःखं सर्वथा नास्तीति श्रुतय आहुः । ईदृशयोश्च दुःखित्वप्रतियोगिव्यधिकरणतदभावयोर्विरुद्धधर्मत्वेन विवक्षाया सत्या अविरुद्धौ तावादाय प्रयोग-

दूषण नैरर्थक्यलक्षणम्। एवं सार्वज्ञ्यतदभावो जगत्कर्तृत्वतदभावौ अल्पान्दत्वनिरतिशयानन्दत्वे च तादृशा धर्मा। दुःखित्वदुःखवद्भेदौ च तथा।

अथ यत् भेदमात्रे सिद्धसाधनम्। तात्त्विकभेदे साध्यवैकल्यमिति, तदपि फल्गु। कीदृशं भेदमादायेदं सिद्धसाधनमुच्यते, प्रातिभासिकं वा घटपटयोर्यादृशस्तादृशं वा घटाकाशमहाकाशयोर्यादृशस्तादृशं वा। नाद्यः। बाधाभावेन प्रातिभासिकत्वायोगात्। भवतैवानभ्युपगमाच्च। अत एव न द्वितीयः। न हि ते घटपटयोरिव दहनतुहिनयोरिव च जीवेशयोर्भेद इष्टः। ईदृशश्च भेदः साध्यत्वेन निर्दिष्टः। अत एव न तृतीयः। स्थापनायां तादृशस्य अनिर्देशात्। तथा च दहनतुहिनयोरिव जीवेशयोर्भेदस्य सिषाधयिषितत्वात् तत्र च भवता सिद्धसाधनस्योद्भावयितुमशक्यत्वाच्च भेदप्रमितौ सत्यां बाधकप्रमाणाभावेन स्वयमेव तात्त्विकत्वसिद्धेः प्रयोगे तद्घटनमनपेक्षितमिति साध्यवैकल्यादिप्रयुक्तदूषणस्य नास्त्यवकाशः। एतेन। साध्याप्रसिद्धिनिबन्धनं दूषणं सर्वं निरस्तं वेदितव्यम्।

यच्च प्रसिद्धेतरभेदं पृथिव्यामिव प्रसिद्धजीवभेदो ब्रह्मणि सिद्ध्यतु। न तावता तद्गततात्त्विकत्वमपि सिद्ध्यति। व्यापकव्यतिरेकस्य व्याप्यव्यतिरेकमात्रसाधनसमर्थत्वादिति तदपि दत्तोत्तरम्। न हि सुप्रतिष्ठितेन प्रमाणेन प्रमेये प्रमिते पुनस्तत्र तात्त्विकत्वसिद्ध्यर्थं पृथग्यतनीयम्। प्रमितस्यातात्त्विकत्वायोगात्। अतात्त्विकस्य प्रमितत्वायोगात्। जीवेशभेदस्य तात्त्विकत्वे अद्वैतं न सिद्ध्यतीति चेत् सत्यं न सिद्ध्यति। तत्र अनुकम्पैवास्माकं भवन्तं प्रति। तथापि किं क्रियताम्। प्रमाणशरणा हि वयम्। अतः सुहृद्भावेन ब्रूमः—

त्यज्यतां केवलाद्वैतं दुस्साधं निपुणैरपि।
आपादचूडसुभगं विशिष्टाद्वैतमिष्यताम्॥

यच्च भेदानुमानविरोधिना स्वशब्दधर्मशब्दादिप्रयोगनिबन्धनानुगमदोषाद्भावनं तत्र स्थापन्यस्तस्वभागभावव्यतिरिक्तेत्यादिकमपि

गोचरयतीति पूर्वमेवोक्तम्। अत्राह—"न चैव स्वप्रागभावव्यतिरेक्तेत्यादौ का गतिरिति वाच्यम। तत्राप्येतद्दूषणसञ्चारेण व्यतिरेकिणि वाऽनुमानान्तरे वा तात्पर्यात्" इति। एव

सरम्भेणातिमहता साधित यत् तदेव चेत्।
अबद्धमुच्यते पश्चात् कथ विश्वसनीयता ॥

न चाननुगम एव। अनुगमस्य सुकरत्वात्। यथा 'ब्रह्म स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवत्, पदार्थत्वात् घटवत्,' इत्यत्र जीवप्रतियोगिकभेदवैशिष्ट्य साध्यम। वैशिष्ट्य च स्वाश्रयत्वस्वाबाधकस्वज्ञानकत्वोभयसम्बन्धेन। अत्र आद्यौ स्वशब्दौ भेदपरौ। अन्त्यः ब्रह्मपरः। सम्बन्धघटकश्च स्वशब्दः नानुगमविरोधीति विदन्ति तर्कनिपुणाः। अनुमानान्तरेष्वप्येव द्रष्टव्यम्।

यदुक्त—"अप्रमेयेऽनुमानस्य प्रवृत्तिर्न कथञ्चन। प्रमेयस्य त्वनात्मत्वात् तत्र भेदानुमेष्यते ॥ शुद्धचैतन्ये धर्मानधिकरणतयाऽनुमानाप्रसरः। यत्र प्रसरः तत्रेष्टापत्तिरित्यर्थः"। इति, मिथ्यागाम्भीर्यविजृम्भितमेतत्। यदि परमार्थोऽयं आदावेव हि एवमुक्त्वा दूषणादुपरतैर्भाव्यम्। किञ्च—

अप्रमेयमसद्वस्तु प्रमेयमनुमापदम्।
तदसद्वेप्यता ब्रह्म भिन्न वा चेतनान्तरात् ॥

तदेवम्—

सुप्रसिद्धविशेषत्वादन्यथानुपपत्तितः।
सर्वशक्त्यल्पशक्त्यादेर्न भेदे तन्त्रता कुतः ॥

## ११. जीवभेदः

जीवाश्च परस्पर भिन्नाः। अत्र स्थापना च—चैत्रो मैत्राद् भिन्नः मैत्राननुसहितदुःखाद्यननुसन्धातृत्वात्। घटवत्, इति। इद दूषयन्नाह 'उपहितस्य पक्षत्वेऽर्थान्तरात्। चैतन्यस्य पक्षत्वे हेत्वसिद्धेः।' इति। इदमसत्।

गोचरयतीति पूर्वमेवोक्तम्। अत्राह—"न चैवं स्वप्रागभावव्यतिरेक्तेत्यादौ का गतिरिति वाच्यम। तत्राप्येतद्दूषणसञ्चारेण व्यतिरेकिणि वाऽनुमानान्तरे वा तात्पर्यात्" इति। एवं

सरम्भेणातिमहता साधितं यत् तदेव चेत्।
अबद्धमुच्यते पश्चात् कथं विश्वसनीयता॥

न चाननुगम एव। अनुगमस्य सुकरत्वात्। यथा 'ब्रह्म स्वज्ञानाबाध्यजीवप्रतियोगिकभेदवत्, पदार्थत्वात् घटवत्," इत्यत्र जीवप्रतियोगिकभेदवैशिष्ट्यं साध्यम। वैशिष्ट्यं च स्वाश्रयत्वस्वाबाधकस्वज्ञानकत्वोभयसम्बन्धेन। अत्र आद्यौ स्वशब्दौ भेदपरौ। अन्त्यः ब्रह्मपरः। सम्बन्धघटकश्च स्वशब्दः नानुगमविरोधीति विदन्ति तर्कनिपुणाः। अनुमानान्तरेष्वप्येवं द्रष्टव्यम्।

यदुक्तं—"अप्रमेयेऽनुमानस्य प्रवृत्तिर्न कथञ्चन। प्रमेयस्य त्वनात्मत्वात् तत्र भेदानुमेष्यते॥ शुद्धचैतन्ये धर्मानधिकरणतयाऽनुमानाप्रसरः। यत्र प्रसरः तत्रेष्टापत्तिरित्यर्थः"। इति, मिथ्यागाम्भीर्यविजृम्भितमेतत्। यदि परमार्थोऽयं आदावेव हि एवमुक्त्वा दूषणादुपरतैर्भाव्यम्। किञ्च—

अप्रमेयमसद्वस्तु प्रमेयमनुमापदम्।
तदसद्धेप्यता ब्रह्म भिन्नं वा चेतनान्तरात्॥

तदेवम्—

सुप्रसिद्धविशेषत्वादन्यथानुपपत्तितः।
सर्वशक्त्यल्पशक्त्यादेर्न भेदे तन्त्रता कुतः॥

## ११. जीवभेदः

जीवाश्च परस्परं भिन्नाः। अत्र स्थापना च—चैत्रो मैत्राद् भिन्नः मैत्रानुसहितदुःखाद्यननुसन्धातृत्वात्। घटवत्, इति। इदं दूषयन्नाह 'उपहितस्य पक्षत्वेऽर्थान्तरात्। चैतन्यस्य पक्षत्वे हेत्वसिद्धेः।' इति। इदमसत्।

परं प्रति एव विकल्पानुपपत्ता । न हि उपाहृत चैतन्य जीव इति परस्य मतम् । स्वमतानुसारेणाय विकल्प इति चेन्न । पराभिमतत्वेन स्वमत सिद्धस्यार्थस्य विकल्पनायोगात् । परोऽपि स्वमतसिद्धमर्थं अस्मान् प्रति प्रयुज्यमाने प्रयोगे पक्षीकर्तुं नार्हतीति चेत् सत्यम् । अत एव उभय साधारणाकार पक्षो ग्राह्य । चैत्रशरीरावच्छिन्ना आत्मा हि पक्षिद्वभय पक्षसिद्ध । तस्य मैत्रशरीरावच्छिन्नभाक्त्वभेदे सिद्ध अनुपहितमेव जीवस्वरूपमात्त सिद्ध्यति । असिद्धे तु उपहितं चैतन्यामति भवन्मतं स्यात्स्यति । तदेतदनुमानपर्यवसानफलम् । ततः पूर्वं तु साधारणमात्रा कारः पक्ष प्रतिपत्तव्य इति तस्यैव स्वमतानुसारेण विकल्प्य दूषण पर दूषणशीलतामात्रं प्रकाशयति । न वादकुशलताम् । अथ यत् साधनैक देशस्यानुस धानादेरुपाधित्वमिति, तत्रोच्यते । चैत्रः मैत्राभिन्नः अनु सधारत्वात् इति उपाध्यभावेन साध्याभावसाधने अन्वयदृष्टान्तस्या वभावस्ति । अतो व्यतिरेकदृष्टान्तो वाच्य यत्र यत्र मैत्रभेद तत्र तत्र अननुसन्धानम्, यथा घट इति । तत्र जडत्वमुपाधिरिति उपाधे सोपाधि कत्वादनुमानदूषकत्वम् ।

किञ्चात्र उपाधे साध्यव्यापकत्वमेव नास्ति । यत्रोपाध्यभाव तत्र साध्याभाव इति व्यतिरेकव्याप्तेरसिद्धे । अस्ति ह्यनुसन्धान यज्ञदत्ता दिषु । न च तत्र मैत्राभेद सिद्ध । भान्तोऽसि । मन्मते स सिद्ध एवेति सविशेषा ब्रह्मानन्दोक्तिर्विस्मयावहा । परकीयानुमानदूषणाय हि उपाधिरयमुद्भावित । तत्र अभेदनिरसनार्थेव परेण प्रयुक्ते अनुमाने स्वसम्मताभेदमुपजीव्यैव दूषणाभिधानं कथं युज्यते । विप्रतिपत्त्या सन्दिग्धो ह्यभेद इति । यदप्यत्र तेनैव हेतुदूषण कृत 'शरीरजन्येत्यत्र शरीरस्येव मैत्रानुसहितेत्यस्य वैयर्थ्यं' इति तदप्ययुक्तम् । अधिक विशेषणे सत्यपि व्याप्तेरनपायात् । न हि पर्वतो वह्निमान् वह्निजन्य धूमवत्त्वात् इत्युक्ते अनुमितिर्न भवत् । तदिदं पूर्वमप्युक्तम् । तदेव

द्वैतिनामिदमनुमानं अदुष्टमिति स्थितम्। वयं तु सामान्यमुखीं व्याप्तिमत्र आद्रियामहे। यो नियमेन यद्वृत्तिधर्मानधिकरणं स ततो भिन्नः, यथा अश्वो महिषात्। नियमेन मैत्रवृत्तिदुःखानुसन्धानरहितश्च चैत्रः। तस्मात् ततो भिन्न इति।

उक्तेऽनुमानेऽनुकूलतर्कः व्यवस्थातो नानेति महर्षिसूत्रप्रसिद्ध एव। यदि भेदो न स्यात् तर्हि मैत्रसुखदुःखादेः चैत्रेण अनुसन्धानापत्तिरिति। अत्रान्यथासिद्धिं वदन् अन्तःकरणभेदाद् व्यवस्थेत्याह। न तु तदुपपन्नम्। उपाधिभेदेऽपि आत्मन एकत्वात्। आत्मभेदे सत्यपि वैशेषिकादिमते मनआदिभेदेन व्यवस्था न शक्या वक्तुमिति सूत्रभाष्ये उक्तम्। तथा सति आत्मैक्ये किं वक्तव्यम्। एकस्य ह्यात्मनः बहुष्वन्तःकरणेषु सत्सु तदधीनान् सर्वान् भोगान् स एव भुङ्क्त इति प्राप्नोति। तत्र व्यवस्थाया हेतुर्नास्ति। यथा शरीरभेदो वा इन्द्रियभेदो वा न व्यवस्थाहेतुः तथैवान्तःकरणभेदोऽपि। विशेषाभावात्। अत्राह। "अन्यकरणभेदे तथा दर्शनेऽपि अन्तःकरणभेदस्य तदैक्याध्यासापन्ने अननुसन्धानप्रयोजकत्वं कल्प्यते। अन्यथा ब्रह्मैक्यस्य जीवे श्रुतिसिद्धतया सर्वानुसन्धानापत्तेः।" इति।

अत्यन्तशोचनीयत्वमात्मनः प्रथयत्ययम्।
भेदाय दर्शितं तर्कमभेदाय प्रदर्शयन्॥

भोगसङ्करो नास्ति। आत्मैक्ये स आपद्येत। अत आत्मानो नानेति हि भेदवादिनस्तर्कं प्रदर्शयन्ति। अन्तःकरणस्य करणान्तरेष्वदृष्टं अननुसन्धानप्रयोजकत्वं कल्प्यम्। अन्यथा सर्वानुसन्धानापत्तेः, इति तमेव तर्कमवलम्ब्योक्त्वा आत्मैक्यं रक्षितुमिच्छति। तथा च प्रबलतर्कोपष्टब्धेन प्रबलेनानुमानेन आत्मभेदं साधयन्तं प्रबलं वादिनं प्रति किमप्यन्यद्वक्तुमशक्नुवन् आत्मैक्यं श्रुत्यवगततया व्यपदिश्य यदन्तःकरणभेदस्य अश्रद्धेयमसम्भावनीयं च भोगव्यवस्थापकत्वं कल्पयति तद्युक्ति-

दारिद्र्योपनता महतीं दुरवस्था आवहयतीति नधिया सुगमम्। अश्वम-हिषयोरैक्यं कृत्वा यदि कश्चन ब्रूयात् चक्षुषस्तादृशी काचन शक्तिरस्ति यया ते कदाचिदश्वत्वेन प्रकाशयत कदाचिन्महिषत्वेन, सहावस्थाने च पृथक् पृथक् अश्वत्वेन महिषत्वेन चेति, तादृगिदं भवति। यथाऽत्र पृथग्व्यक्तिदर्शनात् विरुद्धधर्मदर्शनाच्च मिथो भेदः कल्प्यते, न तु चक्षुषो शक्तिविशेष तथा चैत्रमैत्रयो पृथग्दर्शनात् परस्परदु खानना धारत्वाच्च भेद कल्पनीय, न त्वन्त करणभेदस्य कश्चन सामर्थ्यविशेष। असम्भवी च अन्त करणस्य व्यवस्थापकत्वम्। न ह्यात्मानमेतच्छिन-त्ति, येन व्यवस्था भवेत्। अविद्याभेदेऽपि सर्वमेतत समानम्।

बन्धमोक्षसामानाधिकरण्याय च आत्मभेदाऽभ्युपेयः। उपाधिशून्य एव मुक्त। तस्यैव पूर्वं बद्धत्व वाच्यम्। अन्यथा अन्या बद्ध अन्यो मुक्त इति वैयधिकरण्यापत्तेः। स चोपाधि विना स्वत एव जीवः सन्नात्मा तादृशबद्धान्तरभोग न लभत इति आत्मन एव आत्मान्तराद् भेदो वाच्य। अत्र 'मोक्षस्य शुद्धगतत्वेऽपि दुःखाद्यनुसन्धातृत्वस्य उपहितवृत्तितया शुद्धभेदापादनायोगात्' इत्यनेन न किमपि समाधान मुक्तं भवति। दुःखाद्यनुसंधान निरुपाधिकस्यैवेति कृत्वा हि तस्य भेदं परे आहु। तत्र 'दुःखाद्यनुसन्धातृत्वस्य उपहितवृत्तितया' इति स्वमतस्य सिद्धवत्कारेण किं कृत भवति। तस्मादात्मभेदाभावे उपहित बद्धं, शुद्ध मुक्तमिति वैयधिकरण्य दुष्परिहरमेव। भेदे सति य एव पूर्वं बद्धः स एव मुक्त इति सामानाधिकरण्य भवति।

यच्च 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इति श्रुतेर्विशिष्टस्यैव भोक्तृत्वात् तस्य भिन्नत्वाद् व्यवस्थेति मतमुक्त तच्च न साधु। अचेत नाना भोक्तृत्वायोगात्। उपकरणतयैव आत्मेतरेषां साहित्यवचनात्। यथा दण्डचक्रादिमानेव कुलालो घटस्य कर्तेत्युक्ते न विशिष्टस्य कर्तृत्व तद्वदत्रापि। विशिष्टे विशेष्यस्यापि घटकत्वात् तस्य चैकत्वात् अप-

रिहार्यं भोगसाङ्कर्यम्।

अथ यत् "किञ्च उपाधिकल्पितांशजीवानां वाऽनुसन्धानमापद्यते, अंशिनो ब्रह्मणो वा" इति विकल्प्य किञ्चिदुच्यते तत् जीवब्रह्मणोः स्वरूपस्य ईदृशस्य परैरनभ्युपगमात् तान् प्रति एवं विकल्पायोगान्निरस्तम्। यच्च 'पादावच्छिन्नदुःखस्य हस्तावच्छिन्नेऽनुत्पादवत् चैत्रीयदुःखाद्यनुसन्धानस्य मैत्रेऽनुत्पादः। हस्ते दुःखप्रयोजकसामग्रीविरहवत् मैत्रे अनुसन्धानप्रयोजकोपाध्यैक्याभावात्।" इति, तत् शब्दान्तरप्रयोगमात्रम्, न त्वपूर्वयुक्तिविशेषप्रदर्शनम्। आत्मैक्ये सति हस्तपादभेदवत् अन्तःकरणभेदोऽपि नानुसन्धानहेतुरिति परे आवर्णन्ति। तत्र 'अनुसन्धानप्रयोजकोपाध्यैक्याभावात्' इत्युक्तिमात्रं न शोभते। पादे यद्यपि वेदना, नावयवान्तरे, तथाऽपि 'मे' इति स्वकीयत्वानुसन्धानं तत्र न विहन्यते। तथा शरीरान्तरे 'मे' वेदना इत्यनुसन्धानं स्यादेव यद्यात्मैक्यं स्यात्। एतेन 'तवात्मभेदेनेव अवच्छेदकाज्ञानादिभेदेन मम व्यवस्थोपपत्तिः' इत्येतन्निरस्तमिति सुग्रहम्। आत्मभेदे हि अन्यदुःखस्यान्यस्मिन् अवर्तमानत्वात् अननुसन्धानं युक्तम्। अवच्छेदकभेदे तु तस्मिन् सत्यपि आत्मन एकत्वात् सर्वं दुःखं तदीयमेवेति अननुसन्धानं नोपपद्यते।

अथ यत् उपाधेर्भेदकत्वं नोपपद्यत इति परैर्विकल्प्योक्तं दूषणं परिहरता उक्तं—'सर्वविकल्पासहत्वेन मिथ्याभूतस्यैवोपाधेर्मिथ्याभेदप्रयोजकत्वस्य प्रागेवोपपादितत्वात्।' इति।

तेन भूयः स्वपक्षस्य सर्वथाऽनुपपन्नता।
स्वहस्तनाक्षरदानेन विहिता सुप्रतिष्ठिता॥
युक्त्याभासा अपि यदा न स्फुरन्ति तदा भरम्।
आचार्याशिरसि न्यस्य स्वात्मरक्षा गवेष्यते॥

एवं जीवेशयोः जीवानां परस्परं च भेदो दुरपह्नव इति दर्शितम्।

बोध्यम्। अतो लोकावगतस्य भेदस्य वेदेऽनुवाद इति विपरीतकल्पनेयं तत्रभवताम्।

अथ यदुच्यते अनुवादकत्वाभावेऽपि व्यावहारिकभेदपरत्वेनैव श्रुत्युपपत्तिरिति तदपि दत्तोत्तरम्। व्यावहारिकेतरतात्त्विकार्थप्रमितेरसम्भवस्योक्तत्वात्। न ह्येव काचन श्रुतिर्बोधयति। अद्वैतश्रुत्यर्थापत्त्याऽवगम्यत इति चेत् न। अद्वैतश्रुतेरेवाभावात्। प्रत्यक्षविरोधेन, आत्मनि तिष्ठन् अवस्थितेरिति काशकृत्स्नः, इति श्रुत्यन्तरन्यायानुसारेण च सामानाधिकरण्यस्यान्यथैवोपपत्तेर्वक्तव्यत्वात्। उक्तत्वाच्च पूर्वाचार्यैः। फलाध्यायोपवर्णितमुक्तावप्यनुवर्तमानत्वाच्च भेदस्तात्त्विक एव। यत्तु साऽवान्तरमुक्तिः परममुक्तिस्त्वन्यैवेति। तदपि वः केवलकल्पनामात्रम्। मुक्त्यन्तरे प्रमाणलेशस्यापि विरहात्।

प्रमाणन्यायाभ्यां यदनवगतं तत् प्रतियता
स्थिराभ्यामेताभ्यां यदवगतमेतद् विजहताम्।
उदीर्णानाक्षेपान् व्युदसितुमनीशानमनसा-
मविद्याधन्यानां बत भुवि विचित्रं विलसितम्॥

## १३. तात्पर्यलिङ्गम्।

आथर्वणे प्रथममुण्डके 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति शौनकप्रश्नानन्तरं तत्राभिप्रेतं कार्यकारणयोरनन्यत्वमुपपादयितुं प्रवृत्तोऽङ्गिराः प्रथममक्षरशब्दितं कारणमुपदिश्य ततः परं विश्वोत्पत्तिं वदति। तत्र विश्वस्य मिथ्यात्वं वा ब्रह्मणो निर्गुणत्वं वा अविद्यासम्बन्धो वा अद्वैतसम्मतं किमपि न प्रस्तुतम्। अतः कारणं कार्यं च विशिष्टमेवाभिमतम्। तयोरेवानन्यत्वमुपक्रमोपपत्तिभ्यामिति ज्ञायते। अतोऽत्र उपक्रमः नाद्वैतस्य। अपि तु विशिष्टस्यैव। विशिष्टं च भेदगर्भमेवेति भेदविषयत्वमुपक्रमस्याविहतम्। परमं साम्यमुपैतीत्युपसंहा-

एवमेव जडात् जीवस्य ब्रह्मणश्च, जडवस्तुना परस्पर च भेदो दुरपह्नव इति तैरेव न्यायै ज्ञातु शक्यमिति पुनस्तत्र विस्तर न कुर्मः।

## १२ भेदानुवाद ।

एव यथा प्रत्यक्षानुमानाभ्या तथा श्रुत्याऽपि भेदः सिद्ध्यति। द्वा सुपर्णा, य आत्मानि तिष्ठन् इत्यादिभि जीवेश्वरभेद, नित्यो नित्याना चेतनश्चेतनानामिति जीवाना मिथ तभ्य परस्य च भेद अजामेक इति जीवाना, मिथ, एषा प्रधानाच्च भेदो हि गम्यते। अत्राह। द्वा सुपर्णेति मन्त्रावगता भेद काल्पनिकः। द्वौ चन्द्रमसाविति वत्, इति। तत्र पृच्छामः। किं स्वरससिद्धान्तमिदं काल्पनिकभेदपरत्व अथवा अन्याय्यमेव आश्रीयते। न तावदाद्यः कल्पो युज्यते। तत्त्वमसीत्यत्राभेदस्यापि काल्पनिकत्वापातात। नान्त्य। अन्याय्याश्रयणे प्रमाणाभावात्। अभेदश्रुतिर्बाधकप्रमाणमिति चेत् भेदश्रुतिरेव तद्बाधिका कुतो न भवेत्। प्रत्यक्षसिद्धभेदानुवादकत्वेन इय श्रुतिर्हीनबलेति चेन्न। प्रत्यक्षसिद्धभेदविरुद्धार्थकत्वेन अभेदश्रुतेरेव हीनबलत्वात्। न च बहुविधतात्पर्यलिङ्गोपष्टब्धत्वात् तस्या प्राबल्यम्। नाहमीश्वर इति दृढप्रत्यक्षबलेन अभेदश्रुतिश्रवणानन्तरक्षण एव अर्थान्तर एवास्यास्तात्पर्यमिति निश्चयोदयेन अभेदतात्पर्यलिङ्गानामपेक्षाया एव विरहात्। सतामपि अपेक्षाविरहेण अनुपयोगात्। वस्तुतोऽसत्त्वाच्च।

वस्तुतस्तु शास्त्रेण सिद्ध्यन्नीश्वरः चेतनाचेतनाभ्यामन्यत्वेनैव सिद्ध्यतीति भेदोऽपि शास्त्रगम्य एव। अतस्य तस्य प्रत्यक्षानुभवोऽपि लोके भवति। न हि ईश्वरमजानता नाहं स इति प्रत्यय सम्भाव्यते। तज्ज्ञान च श्रुत्या। सा च, द्वा सुपर्णा', न स्वक एव। तयोरेकोऽयं जीव' कर्मफलभुक्। ततोऽन्यस्तु न कर्मफलभुक्। अभिचाकशीति। सततोज्ज्वलः सर्वेश्वरः' इति जीवान्यत्वेनैव तमुपदिश'' ।

बोध्यम्। अतो लोकावगतस्य भेदस्य वेदेऽनुवाद इति विपरीतकल्पनेय तत्रभवताम्।

अथ यदुच्यते अनुवादत्वाभावेऽपि व्यावहारिकभेदपरत्वेनैव श्रुत्युपपत्तिरिति तदपि दत्तोत्तरम्। व्यावहारिकेनरतात्त्विकार्थप्रमितेरसम्भवस्योक्तत्वात्। न ह्येव काचन श्रुतिर्बोधयति। अद्वैतश्रुत्यर्थापत्त्याऽवगम्यत इति चेत् न। अद्वैतश्रुतेरेवाभावात्। प्रत्यक्षविरोधेन, आत्मनि तिष्ठन्. अवस्थितेरिति काशकृत्स्नः, इति श्रुत्यन्तरन्यायानुसारेण च सामानाधिकरण्यस्य न्यथैवोपपत्तावुक्तत्वात्। उक्तत्वाच्च पूर्वाचार्यैः। फलाध्यायोपवर्णितमुक्तावप्यनुवर्तमानत्वाच्च भेदस्तात्त्विक एव। यत्तु साऽवान्तरमुक्तिः परममुक्तिस्त्वन्यैवेति। तदपि वः केवलकल्पनामात्रम्। मुक्त्यन्तरे प्रमाणलेशस्यापि विरहात्।

प्रमाणन्यायाभ्यां यदनवगतं तत् प्रतियता
स्थिराभ्यामेताभ्यां यदवगतमेतद् विजहताम्।
उदीर्णाक्षेपान् व्युदसितुमनीशानमनसा-
मविद्याधन्यानां बत भुवि विचित्रं विलसितम्॥

## १३. तात्पर्यलिङ्गम्।

आथर्वणे प्रथममुण्डके 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' इति शौनकप्रश्नानन्तरं तत्राभिप्रेतं कार्यकारणयोरनन्यत्वमुपपादयितुं प्रवृत्तोऽङ्गिराः प्रथममक्षरशब्दितं कारणमुपदिश्य ततः परं विश्वोत्पत्तिं वदति। तत्र विश्वस्य मिथ्यात्वं वा ब्रह्मणो निर्गुणत्वं वा अविद्यासम्बन्धो वा अद्वैतसम्मतं किमपि न प्रस्तुतम्। अतः कारणं कार्यं च विशिष्टमेवाभिमतम्। तयोरेवानन्यत्वमुपक्रमोपात्तप्रमिति ज्ञायते। अतोऽत्र उपक्रमः नाद्वैतस्य। अपि तु विशिष्टस्यैव। विशिष्टं च भेदगर्भमेवेति भेदविषयत्वमुपक्रमस्याविहतम्। परमं साम्यमुपैतीत्युपसंहा-

रश्च अद्वैतविरोध्येव। यत्तु परमसाम्यमैक्यरूपमिति तत् धाष्ट्यातिशयविजाम्भतम्। न हि परमनीलमित्युक्ते श्वेतमुक्त स्यात्। साम्ये तारतम्यसत्त्वात् परमामिति विशेषितमिति न तस्य वैयर्थ्यम्। प्रसिद्धं च साम्ये तारतम्य लोके। पूर्वतने च पण्डिताय प्रतिनिधिप्रकरणे सुसदृशा ईषत्सदृशमिति ग्रन्थकारा व्यवहरन्ति।

'पुरुष एवेदं विश्वम्' इत्यादि सामानाधिकरण्यं च शरीरात्मभावनिबन्धनमिति स्थितम्। 'परेऽव्यये सर्वं एकीभवन्ती'त्यपि लयाभिप्रायं, न त्वभेदाभिप्रायम्। प्रलयावपयत्वात्। 'ब्रह्मैव भवती'ति च साम्यपरम्। 'विष्णुरेव भूत्वा' इतिवत्। ब्रह्म वेदात वेद्यवादृत्भावेन 'कर्मकर्तृव्यपदेशाच्च' इति न्यायात् भेदस्यासत्त्वेन, तस्य नित्यत्वेन च ऐक्यार्थस्यासम्भवात्।

तदेवं आदिमध्यावसानेषु ऐक्यप्रतिपादनं नास्ति। अतोऽभिक्रमणन्यायस्यात्र न प्रसरः। अपि तु राजसूयन्यायस्य। निश्चितार्थयजिपदानुरोधेन यथा अनिश्चितार्थराजसूयपदार्थावधारणं, तथाऽत्र द्वासुपर्णेति मन्त्रानुरोधेन पुरुष एवेदमित्यादेरर्थोऽवधार्यः। सामानाधिकरण्यस्य बहुप्रकारत्वेन सन्दिग्धार्थत्वात्। तेन तयोरन्य पिप्पलं स्वाद्वत्ति,' 'अनश्नन्नन्यः', 'अन्यमीशम्' इत्यभ्यासो निराबाधः। नायं भेदस्तात्त्विक इति तु पूर्वमेव निरस्तम्। तात्त्विकभेदान्तरं नास्तीति। अपूर्वोऽयं भेद इति चोक्तम्। ईश्वरस्वरूपप्रतिपत्त्यन्तरत्वात्। पुण्यपापे विधूयेति फले तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः इत्येवमादिरूपेऽर्थवादे, अपि च अनश्नन्नित्युपपत्तौ च नातीव विवादः। अत तात्पर्यलिङ्गानि अद्वैतप्रतिकूलान्येव। एवं अन्यत्रापि द्रष्टव्यम्।

आत्मेत्येवोपासीतेति बृहदारण्यके कार्त्स्न्यं सूत्रिता ब्रह्मविद्या। सा तु अद्वैतपरत्वासत्। 'स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येष, अत एकैकेन भवति।' इति पूर्वेण, 'अत्र ह्येते सर्वे एकं भवन्ति' इत्युत्तरेण

च एकैकोपासनानन्दाकरणेन सर्वव्याकरणोपासनविधौ तात्पर्यावग-मात्, द्वितीयनिषेधाप्रतीतेः। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञया च सर्व-मस्तीत्येवावगमात्, नास्तीत्यनवगमात्। ब्रह्म वा इदमग्र आसीदित्यस्य सामान्याधिकरण्यस्य कार्यकारणानन्यतापरत्वात्। 'आत्मानमेवावेत्' इत्यनेन सर्वोपास्यस्य ब्रह्मणः उपास्यम् अन्यत्र आस्तानि प्रतिपादनात्। मैत्रे-य्योब्राह्मणे च 'यत्रत्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्' इत्यत्र सर्वं ब्रह्मात्मकमिति ज्ञाने सम्पन्ने अब्रह्मात्मकेन करणेन अब्रह्मात्मकं वस्तु किमपि न पश्यतीत्युच्यते। ब्रह्मात्मकः कर्ता तादृशेनैव करणेन तादृशमेव वस्तु पश्यति, न त्वब्रह्मात्मकतया स्वतन्त्रं किमपीति यावत्। अतोऽत्र क्वचिदपि अद्वैतगन्धोऽपि नास्ति।

'शारीरश्चोभयेऽपि हि भेदेनैनमधीयते' इति सूत्रविरोधश्च भेदापला-पिना दुर्वारः। सूत्रखण्डनमेव हि अनयैव भवदीयभाष्येण क्रियते। कल्पितभेदवादश्च निरस्तः। एतेन द्वा सुपर्णेति बुद्धिजीवावुक्तौ न तु जीवेश्वरावित्येतदपि प्रत्युक्तम्। 'गुहां प्रविष्टावात्मानौ हि' इति सूत्रकारेण सुस्पष्टमभिधानात्। 'समाने वृक्षे पुरुषो निमग्नः' इति अनन्तरमन्त्रे पुरुषस्याक्त्या बुद्धिग्रहणानुपपत्तेः। पैङ्गिरहस्यब्राह्मणेऽपि सत्त्वक्षेत्रज्ञ-शब्दाभ्यां जीवपरमात्मानावेवोच्येते इति पूर्वाचार्यैः सुनिरूपितम्।

## १४. ऐक्यम्।

इत्थं खण्डनपरतया भेदचिन्तां कृत्वा इदानीं स्वसम्मतं अभेद-रूपमैक्यं साधयितुं प्रवर्तते। तत्र यत् तद्वृत्तिधर्मानाधारत्वोपलक्षित-स्वरूपमेवाभेद इत्युक्तं तन्नोपपद्यते। परिपूर्णानन्दत्वासंसारित्वादेर्जीवा-वृत्तिधर्मस्याधारत्वात्। किञ्च सर्वभेदराहित्यरूपमैक्यं भवत इष्टम्। न चेदं तद्भवति। जीवस्य तद्वृत्तिधर्माणां तदधिकरणस्य तद्भेदस्य च अस्मिन् ऐक्यशरीरे घटकत्वात्। तेषां प्रतिषेधाप्रतीतेः। एतेन परिपूर्णा-नन्दत्वादीनां कल्पितत्वेन तात्त्विकधर्मानाधारत्वाविघातादिदमपि इति

निरस्तम्। तात्त्विकत्वस्य धर्मविशेषणत्वेन निश्शेषप्रतियोग्यप्रसिद्धेः। अनिवेशे कल्पितधर्माधारत्वमादाय असम्भवतादवस्थ्यात्। अपि च जीववृत्तिधर्मानाधारत्वात्तौ जीववृत्तिधर्माधारत्वप्रतीतिरपरिहार्या। अन्यथा जीववृत्तित्वोपादानस्य वैयर्थ्यापत्तेः। वायौ नीलरूपं नास्तीत्यत्राप्येवं द्रष्टव्यम्। रूपसामान्याभावतात्पर्येण एवमुक्तिरचमत्कारायैव। रूपं नास्तीत्यस्यैव पर्याप्तत्वात्। नीलरूपमपि नास्तीति वा वक्तव्यमिति। तदेवं स्वाभिमतमैक्यं अद्वैतिना निरुक्तुमशक्यमेवेति ज्ञेयम्।

## १५ अभेदप्रमाणम्।

अथ यदुच्यते आत्मैक्यं तत्त्वमसीत्यादि श्रुतिमानमिति, तन्न प्रागेव निरस्तम्। ऐतदात्म्यमिदं सर्वमित्युपक्रमानुरोधेन तत्त्वमसीति सामानाधिकरण्यस्य शरीरात्मभावनिबन्धनत्वेन अभेदपरत्वाभावात्। सार्वज्ञ्यासार्वज्ञ्यादिविरुद्धधर्मविशिष्टयोरैक्यस्य अयोग्यत्वाच्च। यत्तु 'सोऽयमित्यादाविव विरुद्धाकारत्यागेन शुद्धयोरैक्यबोधनम्' इति, तन्न तथा। दृष्टान्ते वस्तुतो व्यक्त्यैक्यात्। विशेषणान्तरविशिष्टे अविरुद्धविशेषणान्तरविशिष्टाभेदस्य बाध्यत्वेन आकारविरोधो वा तत्त्यागो वा तत्र नास्तीत्युपपादितत्वात्। प्रकृते तु अल्पशक्तित्वादिना लोकवेदावगतस्य जीवस्य सर्वशक्तित्वादिना जीवादन्यत्वेनैव शास्त्रावगतस्य सर्वेश्वरस्य च व्यक्तितोऽत्यन्तभेदात् तदैक्यमयोग्यत्वान्न प्रमेयम्। ननु लक्षितयोरेवैक्यं बोध्यं ब्रूमः। लक्षिते च शुद्धे। तस्मान्नायोग्यत्वमिति चेन्न। तत्रापि मानाभावात्। तत्त्वंपदाभ्यां प्रत्यक्षानुमानश्रुतिप्रमाणैर्भिन्नव्यक्तित्वेनावधृतयोरुभयोरुपस्थितत्वात् ऐक्यशङ्काऽपि हि नोदेतु लभते। तथा सति कुतस्त्यं तत्र तात्पर्यम्। ऐक्यं नास्ति। कथन्तु सामानाधिकरण्यमिति विमर्शे च आत्मनि तिष्ठन्, ऐतदात्म्यमिदं सर्वं, इत्यादीनां प्रमाणवाक्यानां, सदेव सोम्येदं सत्तेज ऐक्षत इत्यादिप्रयोगविशेषाणां, सर्वं समाप्नोषि ततोऽसि सर्व इत्याद्युपबृंहणानां च पर्यालोचनया

ब्राह्मणोऽहं मनुष्योऽहमितिवत् शरीरात्मभावाधीनमिति निश्चयः सुधियां सुलभः। लोके हि स्थाणुश्चोर इति बाधे, मुखं चन्द्र इति सादृश्ये, मनुष्योऽहं, नीलो घट इति शरीरात्मभावे अपृथक्सिद्धविशेषणत्वे च, आयुर्घृतमिति हेतुहेतुमद्भावे च सामानाधिकरण्यं दृश्यते। न च सामानाधिकरण्यदर्शनमात्रेण ऐक्यतात्पर्यमेषु गृह्यते, स्वरूपमात्रलक्षणा वाऽऽश्रीयते। तत् कस्मात्। भेदस्य पूर्वमवधृतत्वादेव। तथैव प्रकृतेऽपि।

अन्यैरुक्ताश्च दृष्टान्ता इह समञ्जसा। परमाणुः सावयव इति प्रमाणं नेष्यते। परमाणुपदेन निरवयवद्रव्यमेवाभिधीयत इति निश्चितत्वात् तद्विरोधेन सावयवत्वं तत्र बोद्धुं न शक्यत इति। एवं ईश्वरस्य सर्वज्ञत्वेनावगतत्वात् ईश्वरो न सर्वज्ञ इत्यप्रमाणम्। एवमेव आदित्यो यूप इत्यपि ऐक्यार्थे अप्रमाणम्। कुतः। पूर्वावगमविरोधात्। एवं प्रत्यक्षविरोधादेव ऐक्यपरत्वाभावे निश्चिते नैरर्थक्यपरिहाराय अर्थान्तरे वक्तव्ये आकाङ्क्षादिवशात् सन्निहितविधिविषयस्तुतिपरत्वमङ्गीक्रियते। न तु अन्यशेषत्वात् अभेदपरता नास्तीति निर्णयः। प्रत्यक्षबाधेन अभेदपरत्वकोट्युत्थानस्यैव विरहात्। अनेनैव पूर्वप्रमितत्वन्यायेन उत्पन्नशिष्टगुणान्तरावरुद्धे कर्मणि गुणान्तरानन्वयः। न तु भवदुक्तेन द्रव्यसामान्यस्य प्रकारान्तरेणैव लाभात् आमिक्षादिपदस्य द्रव्यसामान्यपरत्वे वैयर्थ्यापत्तिरिति न्यायेन। आमिक्षावाजिनयोर्विकल्पसमुच्चयान्यतराश्रयणसम्भवेन वैयर्थ्याप्रसक्तेः। अत एव द्रव्यसामान्याक्षेपविरहाच्च। तथा च शास्त्रदीपिका—

> तस्मादुभयोस्तुल्यबलत्वात् पूर्वस्मिन्नेव कर्मणि विकल्पः समुच्चयो वेति प्राप्तेऽभिधीयते।—
>
> आमिक्षाया बलीयस्त्वमुत्पत्तौ चोदनाच्छ्रुतेः।
> उत्पन्ने वाजिनं वाक्यात् तेन तद्दुर्बलं मतम्॥

> यत्तु सगुणोत्पन्नमपि कर्म स्वरूपमात्रेण निष्कृष्य शक्य गुणान्तरं विधातुमित्युक्तं, तदयुक्तम्। तथापि रूपोत्पत्तिवाक्यावगतस्यानुवादात् तत्स्वरूपमालोच्यमानमेव गुणयुक्तमवगम्यते। ततश्च नैराकाङ्क्ष्यादयोग्यत्वाच्च गुणान्तरमत्र निवेशमलभमानं आत्मनिवेशनक्षमकर्मान्तरोत्पत्तिं सूचयति।

इति। प्रमाणान्तरावगतस्य विशिष्टस्य वस्तुनः अन्यत्र स्वरूपमात्रोक्तावपि विशिष्टमेवोपस्थितं भवतीति वाक्यन्यायविचक्षणा इह प्रपद्यन्ते। भवांस्तु साक्षात् विपरीतमाह 'विशिष्टस्याभिधाने सत्यपि विशेषणं परित्यज्य लक्षणया स्वरूपमात्रं बोध्यते' इति। तदपि विशिष्टगुणन्यायादिदमयुक्तमिति जानातु भवान्। तच्छब्देन उत तमादेशमप्राक्ष्य इत्यारभ्याधीतसकलविशेषविशिष्टं ब्रह्माभिधीयते। त्वंशब्देन नामरूपप्राप्त्यवस्थाविशेषविशिष्टो जीवः। एवं पृथग्भूतयोः विरुद्धस्वभावयोः अनयोरुपस्थित्यनन्तरं सामानाधिकरण्येन ऐक्यं प्रतीयते। अस्य च यथाश्रुतस्य अयोग्यत्वात् कथं निर्वाह इति विमर्शो जायते। तत्र परीक्षासार्वाधिकस्यैत प्रमाणभूतपूर्ववृत्तप्रमाणान्तरावधृतभेदाविरोधिना केनचित्प्रकारेण तन्निर्वाहः कार्य इति न्याय्या सरणिः। एतत्प्रमाणेन पूर्वप्रमितभेदबाधनमन्याय्यम्। अत एव व्यावहारिको भेदः। पारमार्थिकभेदं तु श्रुतिर्बोधयतीति व्यवस्था अप्रामाणिकी ज्ञेया। अभेदे असन्दिग्धं प्रमिते इव व्यवस्थाऽऽद्रियेत। उक्तरीत्या भेदस्य दृढप्रमाणप्रमितत्वात् तद्विरोधेन विशेषणपरित्यागेन स्वरूपमात्रलक्षणाया अन्याय्यत्वात्, तत् त्वमसीति पूर्वप्रमितभेदाविरुद्धार्थप्रतिपादनसम्भवात्, एवं शरीरात्मभावनिबन्धनतया सामानाधिकरण्यस्यापि मुख्यत्वाच्च नात्र परमात्मजीवात्माभेदपरता युक्ता। अतो व्यावहारिकतात्त्विकभेदाऽपि नास्ति। तस्मात् तत्त्वमसीति वाक्यं न जीवेश्वराभेदे प्रमाणमिति सिद्धम्।

किञ्च तत्त्वपदे ईश्वरे जीवे च श्रुती। तदभिधायकत्वात् अभेदबोधक सामानाधिकरण्य तु वाक्यम्। पदद्वयसमभिव्याहाराधीनत्वात्। श्रुति-वाक्यसमवाये च श्रुतिः प्रबला। अथापि वाक्यस्यैव वैयर्थ्यापत्तेः आन-र्थक्यप्रतिहतानां विपरीत बलाबलमिति न्यायेन प्रातिपदिक एव लक्षणा-श्रयणं अगत्या भवति। तत्र यावता वैयर्थ्यं परिहृतं भवति तावदेव लाक्षणिकत्वं आश्रयणीयम्। नाधिकम्। अप्रामाणिकत्वात्। तत्र सिंहो देवदत्त इत्यादाविव एकपदलक्षणयैवोपपत्तौ पदद्वयलक्षणा न युज्यते। प्रमाणान्तरबाधापत्तेश्च। भवद्रीत्या अभेदानुरोधे हि जीवेश्वरभेदग्राह-कप्रमाणोपरोधो भवति। न चाबाधेनोपपत्तौ बाधो युक्तः। एतेन प्रोद्गा-तॄणामित्यत्र विभक्तिस्वारस्याय प्रातिपदिकस्यान्यथा नयनवदत्रापि प्रातिपदिकस्यैवान्यथा नयनमिति प्रत्युक्तम्। तत्र प्रमाणान्तरप्राप्तार्थोप-मर्दाभावात्। पदद्वयलक्षणाविरहाच्च। तत्र पाशाधिकरणन्यायप्रवृत्ति-बाधकस्य कास्यभोजिन्यायस्य पाशाधिकरणसोमनाथीये दर्शितत्वाच्च।

यच्च—किञ्च न तावत् प्रातिपदिकस्य निरवकाशत्वम्। विभक्तेः सङ्ख्यायामिव विशेष्यांशे सावकाशत्वात्। नापि प्राधान्यम्। प्रधानार्थ-वाचकप्रत्ययस्यैव प्राधान्यात्। तदुक्तं, "प्रकृतिप्रत्ययौ सहार्थं ब्रूततस्यास्तु प्रत्ययः प्राधान्येनेति", इति, तदपि न चारु। विशिष्टाभिधायिनः प्राति-पदिकस्य निरवकाशत्वे चोदिते लक्षणागम्यविशेष्यांशमादाय सावका-शत्वोक्तेरयोगात्। अन्यथा एकत्वलक्षणोपयोगिबहुत्ववाचितया वचन-स्यापि प्रोद्गातॄणामित्यत्र सावकाशत्वापत्तेः। प्रत्ययप्राधान्यं च तस्य कमर्थमाश्रित्योच्यते। यद्यभेद न स प्रत्ययार्थः। अननुशासनात्। विशे-षणविभक्तीनामभेदार्थत्वमिति प्रवादश्च पार्ष्ठिकबोधविषयाभेदान्वय-मूलः। न त्वभिधेयत्वमूलः। नीलो घट इत्यादौ अभेदस्य संसर्गमर्याद-यैव लाभाच्च न वाच्यत्वम्। अथ प्रातिपदिकार्थेत्यादिपाणिनिसूत्रं अभिहितकारकवाचिनी प्रथमेति वार्तिकं वाऽनुसृत्य प्रातिपदिकार्थ-

मात्र वा कर्तृकारक वा तत् त्वमित्यत्र प्रथमार्थ इत्युच्यते तन कस्तो लाभ । न ह्यभेदप्राधान्य तेन लभ्यते । यत्तु प्रोद्गातॄणामित्यत्र उद्गातृपदे यौगिकत्वपक्ष ब्रह्मानन्दः खण्डयति तत्र भाट्टदीपिकायां खण्डदेवोक्तं समाधानमनुसन्धेयम् ।

एवमेतस्मिन् पदे लक्षणया सामानाधिकरण्यनिर्वाहोऽपि श्रेयान् । न तु जीवेश्वराभेदः कथमपि तत्त्वमसिप्रतिपाद्य । वस्तुतस्तु नात्र लक्षणा । सर्वेषां शब्दानां तत्तद्रूपविशिष्टपरमात्मनि मुख्यवृत्तत्वात् । देवमनुष्यादिशब्दा किल तत्तच्छरीरिवाचिन । तथैव च परम शरीरो तमपि तेऽभिदधति । अपृथक्सिद्धविशेषणवाचिनां शब्दानां विशेष्य-पर्यन्तत्वस्य लोकव्युत्पन्नत्वात् । शास्त्रेण सर्वशरीरित्व परमात्मनः सिद्धौ तयैव व्युत्पत्त्या सर्वेषां शब्दानां तत्पर्यन्ताभिधायित्वस्य स्वय सिद्धेः पारिभाषिकास्तु लक्षणां विनैवाभेदान्वय इत्याहु –

“वय तु ब्रूमः सोऽयं देवदत्तः, तत्त्वमसीत्यादौ विशिष्टवाचकानां पदानां एकदेशपरत्वेऽपि न लक्षणा । शक्त्युपस्थितयोर्विशिष्टयोरभेदान्वयानुपपत्तौ विशेष्ययोः शक्त्युपस्थितयोरेवान्वयाविरोधात् । यथा घटोऽनित्य इत्यत्र घटपदवाच्यैकदेशघटत्वस्यायोग्यत्वेऽपि योग्यघटव्यक्त्या सहानित्यत्वान्वय । यत्र पदार्थैकदेशस्य विशेषणतयोपस्थितिः तत्रैव स्वातन्त्र्येणोपस्थि-तये लक्षणाभ्युपगमः । यथा नित्यो घट इति । अत्र घटपदात् घटत्वस्य स्वातन्त्र्येणानुपस्थित्या तादृशोपस्थित्यर्थं घटपदस्य घटत्वे लक्षणा । एवमेव तत्त्वमसीति वाक्येऽपि न लक्षणा । शक्त्या स्वातन्त्र्येणोपस्थितयोः तत्त्वपदार्थयोरभेदान्वय बाधकाभावात् । अन्यथा गेहे घट , घटे रूप, घटमानयेत्यादौ घट-त्वगेहत्वादेरभिमतान्वयबोधायोग्यतया तत्रापि घटादिपदानां विशेष्यमात्रपरत्वे लक्षणैव स्यात । तस्मात् तत्त्वमसीति वाक्ये

आचार्याणां लक्षणोक्तिरभ्युपगमवादेन बोध्या ।

इति । अत्रेदं वक्तव्यम् । पदं नाविशिष्टशक्तिः विशिष्टमुपस्थाप्य विरमति । तत्रान्वयानुपपत्तिप्रतिसन्धानानन्तरं पुनर्विशेष्यमात्रोपस्थित्यर्थं पुनः पदव्यापारोऽपेक्ष्यत एव । अन्यथा शाब्दबोधानुपपत्तेः । स च व्यापारः अपेक्षितविशेष्यमात्रोपस्थापकत्वात् विशिष्टोपस्थापकव्यापारादन्य एव । अन्यश्च लक्षणैव । तथा चाहुः 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणे'ति । गेहे घट इत्यत्र गेहत्ववता धर्मिणः घटाधिकरणत्वस्य उपपन्नतया विरोधप्रतीतिविरहात् लक्षणाया न प्रसङ्गः । नीलो घट इत्यत्र धर्मिणोरभेदः प्रतीयते । एकस्मिन् घटधर्मिणि घटत्वनीलत्वयोः समवायात् विरोधो न प्रतीयत इति अत्रापि न लक्षणा । तत्त्वमसीत्यत्र तु तच्छब्देन सर्वज्ञत्वादिविशिष्टस्य त्वंपदेन किञ्चिज्ज्ञत्वादिविशिष्टस्य च धर्मिणः प्रतीतौ एकस्मिन् धर्मिणि तयोरसम्भवात् विरोधस्फूर्त्या धर्ममपहाय धर्मिमात्रबोधनाय व्यापारान्तरमपेक्ष्यते । तच्च लक्षणारूपमिति दुष्परिहारा लक्षणा । अतः पूर्वोक्तरीत्यैव लक्षणापरिहारः ।

यदत्र दूषणमुक्तम्—"शरीरपर्यन्तत्वमिति लक्षकत्वं वा, तत्रापि शक्तत्वं वा, शरीरविषयवृत्त्यैव तत्प्रतिपादकत्वं वा । नाद्यः । मुख्यत्वानुपपादनात् । न द्वितीयः । शरीरवाचिनामित्यसाधारण्येन निर्देशानुपपत्तेः । प्रवृत्तिनिमित्तमनुष्यत्वादिजातेः शरीरिण्यवृत्तेश्च । न तृतीयः । अन्यविषयवृत्तेरन्यानुपयोगेन शरीरशरीरिणोरनादिधर्मासिद्धाभेदनिबन्धनोऽयं प्रयोगो वाच्यः । तथा चात्राप्यभेदनिबन्धन एवायं प्रयोगः । अभेदस्तु बाधकाभावादत्र तात्त्विक इत्येव विशेषः," इति । तदनवकाशम् । लक्षकत्वानङ्गीकारात् । मुख्यत्वस्योपपादितत्वात् । शरीरवाचिना देवमनुष्यादिशब्दानामित्यस्मदुक्तौ शरीरवाचिनामित्यत्र शरीरमात्रवाचिनामित्यवधारणाभावात् । शरीरवाचितया सर्वसम्प्रतिपन्नानां न तावन्मात्रवाचित्वं, अपि तु शरीरपर्यन्तवाचित्वमित्यभि-

प्रायात्। मनुष्यत्वजाति शरीरिणि विरहस्येष्टत्वात्। मनुष्यत्वमानिम च्छरीरं प्रतिसम्बन्ध्यात्मत्वेनैव वाच्यत्वप्रतिपादनात्। अत एव तृतीय विकल्पस्यानुत्थानात्। एवमभिज्ञाना व्यवहारस्य शरीरशरीरिभावनिबन्धनत्वान् 'वर्णाचक्रे पक्षिमृगता' इत्यादिस्मरणात्। अत एव अनादि धर्मसिद्धाभेदनिबन्धनत्वानुपपत्ते । भ्रान्तव्यवहारस्यानादरणीयत्वात्। यत्तत्र शक्यशरीराभेदेन लक्षणया वा प्रयोगोपपत्तौ अनेकशक्तत्वस्यान्याय्यत्वामति अद्वैतानन्देनोक्तम्, तन्न। अनेकशक्त्यनभ्युपगमात्। एकयैव शक्त्या विशिष्टबोधाङ्गीकारात्। केवलशरीरमात्रपरतया प्रयोगस्य आत्माज्ञानमूलत्वात्। जीवमात्रपर्यन्तप्रयोगस्य परमात्माज्ञानमूलत्वात्।

ननु भोगायतनत्वं शरीरलक्षणम्। तेन परस्य ब्रह्मणः सशरीरत्वे भोगप्रसङ्ग इति चेन्न। यस्य पृथिवी शरीरमिति वेदेऽपि शरीरपदप्रयोगदर्शनेन उभयसाधारणस्यैव प्रवृत्तिनिमित्तस्य वाच्यत्वात्। न च वैदिकप्रयोगो लाक्षणिकः। मानाभावात्। अन्यथा घटपदं स्वगृहस्थनीलघटे शक्तम्। अन्यत्र लाक्षणिकमिति प्रसङ्गात्। उभयसाधारणं च प्रवृत्तिनिमित्तं चेतनं प्रति अपृथक्सिद्धविशेषणं यद् द्रव्यं तत्त्वम्। इष्टं च प्राचामद्वैताचार्याणां प्रपञ्चापादानस्य जडद्रव्यस्य सर्वेश्वरशरीरत्वम्। यथाऽऽहुः शङ्कराचार्याः सर्ववेदान्तसिद्धान्तसारसङ्ग्रहे—

स्वतन्त्रः सत्यसङ्कल्पः सत्यकामः स ईश्वरः।
तस्यैतस्य महाविष्णोर्महाशक्तेर्महीयसः॥ ३१२
सर्वज्ञत्वेश्वरत्वादिकारणत्वान्मनीषिणः।
कारणं वपुरित्याहुः समष्टिं सत्त्वबृंहितम्॥ ३१३

इति। मनीषिण आहुरित्यनेन स्वसम्मतिं समस्तां तत्र दर्शयत्याचार्यः। न च लाक्षणिक एव व्यवहारोऽत्र निर्दिष्ट इति वाच्यम्। मुख्यत्वेऽपि अद्वैतसिद्धान्ताविरोधात्। लाक्षणिकत्वाभ्युपगमनिबन्धनाभावात्। शरीरत्वेनैवाध्यस्तत्वस्य सुवचत्वात्। न हि शरीरशरीरिभावसम्बन्धोऽद्वैतेन

विरुद्ध्यते। अपि तु तस्य सत्यत्वम्। अयुक्तं च लाक्षणिकत्वमित्युक्त-मेव। अत्र जगन्मूलकारणस्येश्वरस्य महाविष्णुत्वाभिधानात् भगवद्‌द्रूपो न शाङ्करमतानुसारिण इत्येतदपि स्पष्टम्।

अत्रेदं तत्त्वम्। जीवेश्वरभेदः सर्वाभ्युपगतः। तत्त्वमसीत्यत्र तत्पदेन त्वपदेन च ईश्वरे जीवे च उपस्थिते सामानाधिकरण्यावगतस्याभेदस्य तत्रानन्वयात् सिंहो देवदत्त इत्यादाविव तदन्वयानुगुणः प्रकृत्यर्थः कश्चन वाच्य इति प्रतीयते। अथ कोऽसावर्थो भवितुमर्हतीति विमर्शे, ऐतदात्म्यमिदं सर्वं, य आत्मनि तिष्ठन्, यो विज्ञाने तिष्ठन् इत्यादिभिः परस्य जीवात्मानं प्रत्यप्यात्मत्वोपदेशात्, तेन जीवस्य परं प्रति शरीरत्वा-वगमात्, शरीरत्वकण्ठोक्तेश्च, शरीरवाचिनां शब्दानां शरीरिवाचक-शब्दैः सामानाधिकरण्यस्य अयं पण्डितो देवदत्तो ब्राह्मण इत्यादिषु दृष्टत्वाच्च त्वशब्दः त्वदात्मपर इति न्यायानुसारी निर्णयो भवति। सर्वस्य सत् आत्मा। अतस्तवापि स एवात्मेत्युक्तं भवति।

एवं समञ्जसेऽर्थे सम्भवति परैरुच्यमानोऽत्यन्तमसमञ्जसोऽर्थः सर्वथा न युज्यते। तथा हि। पूर्वावगतभेदानुपमर्देनैव सिंहो देवदत्त इत्यादौ सामानाधिकरण्यप्रतीताभेदनिर्वाहः सर्वैः शङ्करैः क्रियते। तस्य न्यायस्येह परित्यागे हेतुर्नास्ति। अहं नेश्वर इति प्रत्यक्षेण, अहं नेश्वरः दुःखित्वात्, परतन्त्रत्वात् अल्पज्ञत्वात्, इत्यनुमानेन, 'अन्योऽन्तर आत्मानन्दमयः' इत्यादिकया श्रुत्या, 'उत्तमः पुरुषस्त्वन्यः' इत्यादिस्मृत्या च जीवेशभेदो हि सुप्रमितः। कथं नाम एतावत्प्रमाण-प्रमितभेदबाधक्षमता तत्त्वम्पदसामानाधिकरण्यप्रतीतस्याभेदस्य भवेत्? यदि भवेत् सिंहो देवदत्तः ब्राह्मणो विद्वानित्यादिष्वपि भवेत्। किञ्च त्व तत्तुल्यः तदाधारः तदधीनः इत्येवमादिरीत्या एकपदलक्षणयैव अभेदा-न्वयोपपत्तौ पदद्वयेऽपि लक्षणाङ्गीकारोऽयुक्तः। अखण्डार्थनिरासावस-रोक्ताश्च सर्वे दोषा इहानुसन्धेयाः। एवं प्रत्यक्षानुमानश्रुतिस्मृतिशतात्म-

कस्य स्वप्रमाणाप्रामाण्यप्रसञ्जकत्वात् सुदृढप्रतीतिविषयस्य जगतो मिथ्यात्वापादकत्वात्, पदवाक्यदोषबहुलत्वाच्च तत्त्वमसिवाक्यस्य नाद्वैतपरत्वं सम्भवि।

किञ्च त्वंतत्पदाभ्यामुपस्थितयोर्जीवेश्वरयोः सामानाधिकरण्यबोधिताभेदान्वयः कुतो न भवति? भेदादिति चेत्, किं विशेषणमात्रेऽयं भेदः उत स्वरूपेऽपि? आद्ये विशेष्याभेदः प्राक् प्रतिपन्नो न वा। प्रतिपन्नश्चेत् अस्य वाक्यस्य ऐक्ये मानत्वोक्तिरयुक्ता। असम्भविनो चान्यत प्रतिपत्तिः। प्रत्यक्षानुमानाभ्यां भेदस्यैव सिद्धेः। ऐक्यबोधकस्य श्रुतिवाक्यान्तरस्य एतत्तुल्यत्वेन प्रामाण्यानुपपत्तेः। अप्रतिपन्नश्चेत् विशेषणमात्रभेदोक्तिरयुक्ता। विरुद्धविशेषणानां विशेष्यभेदकत्वावश्यम्भावात्। अन्ये सिंहो देवदत्त इत्यादिवत् पूर्वं प्रतीतभेदाविरोधेन अर्थान्तरलक्षणयैव अभेदान्वयो निर्वाह्य इति नात्र जीवेश्वरैक्यप्रमितिर्भवितुमर्हति।

अपि च निर्धर्मकस्वरूपमात्रस्य प्रत्येतुमशक्यत्वात् पदद्वयेनापि स्वरूपमात्राभिधाने घटो घट इतिवत् अबोधकत्वेन वाक्यस्यैवाप्रामाण्यापत्ते, स्वरूपमात्रावगाहिनिर्विकल्पकजनकत्वस्य क्वापि वाक्ये अदृष्टत्वेनाभ्युपगमायोगात्, अभ्युपगमेऽपि तत्पदलक्ष्यस्वरूपस्य त्वम्पदलक्ष्यस्वरूपेण सहैक्याबोधकत्वाच्च नास्य वाक्यस्य ऐक्ये मानत्वं कथमपि सम्भवति।

न च तात्पर्यस्य सर्वतो बलीयस्त्वात् सर्वमिदं समम्। अद्वैततात्पर्ये मानाभावात्। वाक्यस्थैः पदैरेव हि तात्पर्यमध्यवधारणीयम्। न हि रामो रावणमवधीदित्युक्ते तात्पर्यबलीयस्त्वमपदिश्य रावणपक्षपातिभिरभिधीयमानमाक्षणिकविपरीतार्थान्तरपरत्वं वाक्यस्यास्माभिरङ्गीकर्तुं शक्यम्। अथोच्येत—जीवो यदि परमार्थतः सर्वेश्वराद् भिन्न, तस्य बन्धश्च पारमार्थिकः, उपासनेन च क्रियारूपेण यजनेनेव स्वर्गो मोक्षस्तस्य भवति नहि स्वर्गवन्मोक्षोऽप्यनित्यः स्यात्। साध्यत्वात्। तथा

च वाक्याधिकरणान्ते भाष्यम्—

"स्थिते न क्षेत्रज्ञपरमात्मैकत्वविषये सम्यग्दर्शने क्षेत्रज्ञः परमात्मेति नाममात्रभेदात् क्षेत्रज्ञोऽयं परमात्मनो भिन्नः, परमात्माऽयं क्षेत्रज्ञाद् भिन्नः इत्येवञ्जातीयक आत्मभेदविषयो निर्बन्धो निरर्थकः। ये तु निर्बन्धं कुर्वन्ति, ते वेदान्तार्थं बाधमानाः श्रेयोद्वारं सम्यग्दर्शनमेव बाधन्ते कृतकमनित्यं च मोक्षं कल्पयन्ति। न्यायेन च न सङ्गच्छन्ते"

इति। अत्र ब्रूमः। न मोक्षस्यानित्यत्वापत्तिः। स्वरूपाविर्भावस्यैव मोक्षत्वात्। स्वभावतः अपहतपाप्मत्वादिगुणाष्टकविशिष्टं हि परमात्मन इव जीवस्यापि स्वरूपम्। तत्तु संसारावस्थायां कर्मणा तिरोहितम्। उपासनप्रीतेन परमात्मना प्रतिबन्धके कर्मणि कार्त्स्न्येन निवर्तिते पूर्वं तिरोहिता अपहतपाप्मत्वादयो गुणाः प्रादुर्भूताः सन्तः पुनस्तिरोभावप्रसङ्गरहितास्तथैवावतिष्ठन्त इति कथमनित्यता मोक्षस्य। तस्मान्मोक्षानित्यत्वभियाऽपि न वेदान्तविनाशनं कार्यं, नापि जगन्मिथ्यात्वसाधनव्यग्रतया कुतर्कावलम्बनमिति।

एवं तत्त्वमसीति वाक्यस्य किं जीवेश्वराभेदपरत्वं उत शरीरात्मभावादिसम्बन्धविशेषपरत्वमिति विप्रतिपत्त्या संशये सति तन्मात्रान्वयिभिरेव न्यायविशेषैः अभेदपरत्वमसम्भवीत्युक्तम्। दृष्टान्तपरम्परापर्यालोचनेनाप्येवमेतदिति निर्धारणं शक्यमित्यन्ये निरूपयन्ति। तत्रायमाह—सर्वे दृष्टान्ता अन्यथोपपद्यन्त इति। तत्रेदं वक्तव्यम्। अन्यथोपपद्यन्ते न वेति नायं प्रश्नः प्रकृतः, येनान्यथोपपद्यन्त इति प्रदर्शनं युक्तं स्यात्। अपि तु एषु प्रतीयमानो भेदो नियामको भवति नेति। 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति दृष्टान्तानुरोधेन हि सन्दिग्धविषयावधारणं कर्तव्यमाह सूत्रकारः। तत्त्वमसीत्यत्र अर्थविप्रतिपत्तौ यस्य पक्षस्य दृष्टान्ता अनुकूलाः स न्याय्य इति निश्चयो भवति। एवं

न्यायविद्भिरुच्यमाने अस्मत्पक्षानुरोधेन दृष्टान्ताश्च यथाप्रपद्यन्त इति प्रत्यवस्थानं कथं युज्येत । तथा च एषां दृष्टान्तानां भेदप्रमाणानुरोधेनापि अद्वैतं मिथ्येति सिद्ध्यति ।

बृहदारण्यके 'ब्रह्म वा इदमग्र आसीत् । तदात्मानमेवावेदहं ब्रह्मास्मीति' वाक्येऽपि अभेदपरत्वे न किञ्चिद् गमकम् । इदमिति शब्दावगतं सर्वमनूद्य तस्य ब्रह्मात्मकत्वविधायकत्वात् । इदमिति हि चेतनाचेतने उभे अप्युच्येते । तत्र अचेतने ब्रह्माभेदो नेष्टः । तद्वदेव चेतनेऽपि नेष्टव्यः । बाधात् । पूर्वं जडत्वाजडत्वाभ्यामिव उत्तरत्र अणुत्वमहत्त्वाभ्यां भेदस्य निश्चितत्वात् । वक्ष्यामश्च । न हि एकरूपो ब्रह्माभेदश्चेतनाचेतनयोः सुवचः । न चैकपदोपात्तेष्वर्थेषु भिन्नरूपाभेदोपदेशो न्याय्यः ।

'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् । तथर्षीणाम् । तथा मनुष्याणाम्' इति वाक्येऽप्युपरितने जीवानां बहुत्वेन परस्परभेदस्य, प्रत्यबुध्यतेत्यनेन बद्धतया वर्णितेभ्यस्तेभ्यो ब्रह्मभेदस्य चावगमात् 'स एव तदभवत्' इत्युपसंहारे तदविरोधेन तदात्मकोऽभवदित्येवार्थः । तदात्मकत्वानुभवं लेभे इति भावः । मुक्तो बभूवेति यावत् । न तु तदभिन्नोऽभवदिति । बाधात् । अत एव 'अहं मनुरभवं सूर्यश्च' इत्यस्मिन् वामदेववाक्ये अहमित्यन्तर्यामिण एवाभिधानम् । यत्तु 'पश्यन् प्रतिपेदे' इति बाधनिमित्तब्रह्मभावस्यात्र प्रतीतेर्न तथाभिपरत्वमिति । तन्न । विरोधाभावात् । बाधनिमित्तब्रह्मभावपरत्वस्य अन्तर्यामिपरत्वस्य चैकत्वात् । मदन्तर्यामी कश्चिदस्तीति बोधे सत्येव हि अहमिति तस्य निर्देशः सम्भवी । ततश्च ब्रह्मभावः । सर्वभावो वा । 'तदभवत्' इत्यस्य हि सर्वमभवदित्येव स्वरसतोऽर्थः । एवंविधबोध एव 'शास्त्रदृष्ट्या तूपदेशः' इति सूत्रेऽभिसंहितः । तदुक्तं श्रीभाष्ये—

एतदुक्तं भवति । अनेन जीवेनात्मनाऽनुप्रविश्य, ऐतदात्म्यमिदं

सर्वं, अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा, य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति, एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः, इत्येवमादिना शास्त्रेण जीवात्मशरीरकं परमात्मानमवगम्य जीवात्मवाचिना अहन्त्वमादिशब्दानामपि परमात्मन्येव पर्यवसानं ज्ञात्वा मामेव विजानीहि 'मामुपास्स्व' इति स्वात्मशरीरकं परमात्मानमेव उपास्यत्वेनोपदिदेशेति। वामदेववत्। यथा वामदेवः परस्य ब्रह्मणः सर्वात्मत्वं सर्वस्य च तच्छरीरत्वं शरीरवाचिनां च शब्दानां शरीरिणि पर्यवसानं पश्यन् अहमिति स्वात्मशरीरकं परं ब्रह्म निर्दिश्य तत्सामानाधिकरण्येन मनुसूर्यादीन् व्यपदिशति— अहं मनुरभवं सूर्यश्चेति। यथा च प्रह्लादः 'सर्वगत्वादनन्तस्य स एवाहमवस्थितः' इत्यादि वदति।'

इति। अथ यत् 'अहं भूमिमददामार्याय' इत्यादिप्रयोगाणामुपहितमादायोपपत्तिरिति, तत्रोच्यते। उपहितो वा स्वतः सिद्धो वा जीवस्तावत् तत्र वाच्यः। ब्राह्मणोऽहं मनुष्योऽहमिति व्यवहारे तत्तच्छरीरावच्छिन्नो जीवो वाच्य इत्येतदपि निर्विवादम्। तथा च तेनैव न्यायेन जीवशरीरकः परमात्मापि तद्वाच्य इत्येतदपि समञ्जसमिति।

यत्तु, अन्तर्यामिणि भेदाप्रसक्तेर्न तदभेदपरा श्रुतिरिति, तत् कामं तथा। जीवे ब्रह्माभेदस्य तात्त्विकत्वेन तदभेदस्यायोग्यत्वात् तत्परताऽपि न सम्भवतीति तु ज्ञेयम्। वस्तुतस्तु सर्वभवनफलकवेदनविषयतया अहं ब्रह्मास्मीत्युक्ते अभेदविधाने नास्ति तात्पर्यमिति बोध्यम्। सर्वभवनं च सर्वकात्म्यसाक्षात्कार इत्युपनिषद्भाष्ये स्पष्टम्। किञ्चात्रानुपासनाप्रकरणत्वं भवदभिमतं नास्ति। 'अथ योऽन्यां देवतामुपास्ते' इति उपास्तिश्रवणात्। तदनुरोधेन पूर्वोक्तवाक्योक्तवेदनस्यापि उपासनात्मक-

ज्ञानपरत्वात्। यत्तु वेदनश्रवणानुरोधेन उपास्तिरेव वेदनपर इति, तद साधु। सामान्यस्य विशेषे उपसंहारस्य न्याय्यत्वात्। विशेषस्य सामान्यपरत्वे लक्षणाप्रसङ्गात्। ननु अथ योऽन्यां देवतामुपास्त इत्यादिना भेदनिन्दनात् अभेदपरता गम्यत इति चेन्न। "तस्य, देवता ममात्मा न भवति, नाहं तस्या शरीरमिति मत्वा, देवता ममात्मा, अहं तस्या शरीरमिति मति विना यो य उपास्ते स यथावन्नोपास्त इत्येवं निन्दापरत्वात्।

'स यश्चायं पुरुषे। यश्चासावादित्ये। स एक' इत्यत्राप्यन्तर्यामितया ऐक्यमेवोपदिश्यते। न तु 'ब्रह्मविदाप्नोति परमिति शुद्धस्य ब्रह्मणः प्रकृततया तस्मिन्नुपाधिगतभेदस्य तात्त्विकत्वप्रसक्तौ तन्निराकरणार्थं त्वेन ऐक्योपदेशः। ब्रह्मशब्देन बृहत्त्वबृंहणत्वविशिष्टाभिधानात्। वेदनकर्मत्वात्, प्राप्तिकर्मत्वात् प्राप्तिवेदनकर्तृत्वैलक्षण्यप्रतीतेः, एतेषामुपलक्षणत्वे प्रमाणाभावाच्च शुद्धप्रकरणाभावात्। शुद्धे प्रतीते च तत्रोपाधिकृतभेदस्य तात्त्विकत्वप्रसक्तिविरहात्। न हि घटाकाशमहाकाशयोस्तात्त्विको भेदो लोके दृष्ट, येनेह तच्छङ्का उन्मिषेत्, तत्परिहाराय च ऐक्योपदेशोऽपेक्ष्येत।

अत एव "न चैवं छान्दोग्ये य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मीत्यत्र स एवैनान् ब्रह्म गमयतीति भेदपरोत्तरवाक्यविरोधः। तस्योपासनाप्रकरणस्थत्वेनाहंग्रहोपासनापरतया विरोधाभावात्" इति शङ्कासमाधाने अद्वैतसिद्धिग्रन्थे दृश्येते। तत्र स एनान् ब्रह्म गमयतीति छान्दोग्य चतुर्थाध्याये उपकोसलविद्यायां पठ्यते। तत्र 'य एष आदित्ये पुरुषः' इति वाक्यं न दृश्यते। तदयं किं क्वचित् प्रक्षिप्तः पाठः अथवा ग्रन्थकृत एव प्रमाद इति चिन्त्यम्।

मुण्डके ब्रह्म वेद ब्रह्मैव भवतीत्यत्र विष्णुरेव भूत्वेतिवत् साम्यमेवाच्यते न त्वभेद इति पूर्वमेवोक्तम्। समाने वृक्ष इत्यस्मिन् अन्यमीशं यदा पश्यति तदा वीतशोको भवतीति भेदज्ञानस्य मोक्षोपायत्व

मुच्यत इति तावत् स्पष्टम्। अथ भेदः काल्पनिक इत्यत्र किमपि प्रमाणं नास्ति। अतो मुक्तावप्यनुवर्तत एव। तस्मान्महिमानमित्यस्य पश्यतीत्यत्रान्वयेऽपि भेदप्रतीतिरविहतैव। परन्तु एवमन्वये इतिशब्द-वैयर्थ्यं क्रियाध्याहारश्च दोष इति पश्यन्तः केचित् 'यदाऽन्यमीशं पश्यति तदा वीतशोकः अस्य ईशस्य महिमानं इति एति, गच्छति। इतीति इण्धातोर्लटि गुणाभावे छान्दसं रूपम्। 'इतः' इति द्विवचनवत्।' इत्याहुः। एतदनुसारेण मुक्तौ तत्साम्यमेव न तु तद्भाव इति कण्ठोक्तं भवति।

'यथा नद्यः स्यन्दमानाः' इति दृष्टान्तोऽभेदवादिनामनुपपन्न एव। अन्यथा नयनमयुक्तमित्युक्तत्वात्। 'परात्परं पुरुषमुपैति दिव्य' इति देशान्तरस्थब्रह्मप्राप्तिरूपमुक्त्यर्थभिधानाच्च अभेदपक्षो न घटते। दिवि श्रीवैकुण्ठे भवं दिव्यम्। यत्तु एवंविधाया मुक्तेः सगुणोपासनाफलत्वेन ब्रह्मविद्याफलत्वासम्भवात् स्वरूपभूतब्रह्मप्राप्तिपरमिदं वाक्यमिति, तेन अद्वैतप्रक्रियामनुसृत्य इदं वाक्यमन्यथा नेयमित्येवोक्तं भवति। न हि सगुणोपासनातिरिक्ता ब्रह्मविद्याऽद्यापि सिद्धा। निर्गुणस्यासिद्धत्वात्। प्रपञ्चमिथ्यात्वस्यासिद्धत्वात्। कस्यापि वाक्यस्याभेदपरत्वस्यासिद्धत्वात्। 'तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" इत्यस्मिन् वाक्ये नामरूपादिति प्रकृतिरुक्ता। विद्वानिति जीवः। परात्परं पुरुषमिति ब्रह्म। प्रधानात्परो जीवः। तस्मादपि परः पुरुषः। तं अनुत्तमे उत्तमे लोके स्थितं प्रकृतिविनिर्मुक्तो जीवो गच्छति, यथा पर्वतान्निस्सृत्य स्यन्दमानाः प्रवहन्त्यः सरितः समुद्रं गच्छन्ति, तथा। द्वा सुपर्णेत्यादिमन्त्रद्वये च वृक्ष इति अनीशयेति च प्रकृतिरुक्ता। द्वेति अन्य इति च जीवेशौ परस्परविलक्षणौ पृथगुक्तौ। त एव त्रयः पुनरिहोच्यन्ते। स्यन्दमाना इति दृष्टान्ते, उपैति दिव्यमिति दार्ष्टान्तिके च गमनं स्पष्टमुच्यते। तथा चास्वारस्यलेशमपि विना मन्त्रैः स्वस्वार्थे

ब्रह्मविशेषणत्वमाक्षिप्यते। तेन कारणं कार्यं च सर्वं ब्रह्मात्मकम्। 'द्वा सुपर्णा समानं वृक्षम्' इति कार्यस्य ब्रह्मात्मकत्वं स्पष्टमुक्तम्। सर्वस्यापि कार्यस्य ब्रह्मणि लयवचनात् सृष्टिवचनाच्च कारणस्यापि तथात्वं ज्ञायते। एवं सति प्रपञ्चोपादानस्य अविद्यात्वं वा प्रपञ्चस्य मिथ्यात्वं वा जीवेश्वरभेदो वा कथमुच्यते, किमर्थमाश्रीयते। विशिष्टया कार्यकारणयोरभेदस्यैव कारणवाक्येषु सर्वेषु प्रमितत्वात्। विशेष्यस्य ब्रह्मणः विशेषणस्य तादृशस्य चाभेदस्य क्वाप्यप्रतीतेः। तस्मादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञया अभेदो नैवाक्षिप्यत इत्येतदनुरोधेन वाक्यान्तराणामभेदपरत्वाश्रयणं वन्ध्यापुत्रमहाराजप्रीतये वन्दिभिस्तदीयस्तुतिशिक्षणकल्पमिति ध्येयम्।

द्वितीयाद्वै भयं भवतीति भेदस्य भयहेतुत्वेन निन्दितत्वादभेद एवोपनिषदर्थ इत्येतदप्युपहास्यम्। तस्मादेकाकी बिभेतीत्येकत्वस्यापि निन्दितत्वात्। न च परमार्थदर्शनरहितस्य तन्निमित्तभयसम्भवात् एकाकी बिभेतीत्युक्तमिति वाच्यम्। परमार्थदर्शनरहितस्य एकाकित्वाभावेन एव निर्देशानुपपत्तेः। विशालप्रपञ्चमध्ये वर्तमानो हि सः। स कथमेकाकी भवेत्। भवद्रीत्या एकाकिनः परमार्थदर्शनराहित्यं तन्मूलकं भयं च न घटते। यस्यैतद् द्वयं तस्यैकाकित्वं भवदभिमतं न घटते। तथा च व्याहतार्थमिदं वाक्यं भवेत्।

किञ्च एकाकी बिभेतीति एकाकित्वनिमित्तकमेव भयमुच्यते। मलिनः स्नातीति मालिन्यनिमित्तकस्नानवत्। तेनोपस्थितं परित्यज्यानुपस्थितहेत्वन्तरकल्पनमयुक्तम्। किञ्च तस्मादेकाकी बिभेतीति वर्तमानापदेशोऽयं लोकसिद्धानुवादः। अन्धतमसे अरण्ये वा असहायो गच्छन् हि बिभेति। तदिदमिहोच्यते। तत्र परमार्थदर्शनाभावनिमित्तकस्य भयस्य न प्रसङ्गः।

नन्वस्मदभिमतमेवेदं भवता प्रत्यपादि। एवमेकाकित्वनिमित्तकं

हि भय परमार्थदर्शनरहिताविद्यादशायामेवेति चेन्न । "इयमविद्यादशा । इतोऽन्या परमार्थदर्शनदशाऽपराऽस्ती"ति गमकस्यात्र अत्यन्तमविद्यमानत्वात् । परमार्थत्वेन गृहीतस्य एकाकित्वस्य तद्धेतुकभयस्य च तथैवानुवादात् । किञ्च एकाकित्व यदि अविद्यादशास्थ असहायत्वरूप तर्हि द्वितीयाद्वै भयं भवतीत्युक्त द्वितीयत्वमपि तादृशमेव चोरसरीसृपादिनिष्ठम ।

तथा हि । सोऽबिभेदिति असहायत्वप्रयुक्त भय पूवमुक्तम् । तस्मादेकाकी बिभेतीति लोकप्रसिद्धभयनिदर्शनात् । तदनन्तर "काममहमसहाय । तथाऽपि कुतो मया भेतव्यम । चोरसरीसृपसिंहव्याघ्रादिकल्पाः केचनानिष्टकारिणः सन्ति चेत् तैः पीडासम्भवात् अहो बत निस्सहायोऽस्मीनि भीतिर्युक्ता । त एव तु न सन्ति । मदन्यस्य यस्य कस्याप्यभावात् । अतो मदनिष्टकारी कोऽपि नास्ति । तेन स मा पीडयिष्यतीति भयस्य नावकाशः । तथा सति एकाक्यस्मीति कुतो मया भेतव्यम्" इति पर्यालोच्य स तद्भयान्मुक्त इत्युक्त्वा तद्युक्तमेवेत्याह श्रुतिः "कस्माद्धि अभेष्यत् । द्वितीयाद्वै भयं भवती"ति । द्वितीये सति तस्मादनिष्टमापतेदिति भय युक्तम् । तदेव तु नास्ति । अतस्तत्र प्रातिकूल्यस्य तदधीनानिष्टोपनिपातस्य च प्रसक्तिविरहात् एवं विवेकिनस्तस्य भयनिवृत्तियुक्तेति भावः । इत्थं पूर्वेण सङ्गतार्थत्वात् अत्राप्यद्वैतगन्धोऽपि नास्ति ।

यदि तु द्वितीयाद्वै भयं भवतीत्यस्य परमार्थदर्शनाभावप्रयुक्तभयपरत्व स्यात् तदा 'तत एवास्य भयं वीयाय' इत्येतत् तादृशभयापगमपरमेव स्यात् । तदेकवाक्यत्वात् । तेन तस्य परमार्थदर्शनं सम्पन्नमिति स्यात् । तत्तु नोपपद्यते । 'स वै नैव रेमे' इत्यनुपद तस्यारतिवचनात् । 'स द्वितीयमैच्छत्' इति रिरसावचनाच्च । तदिह द्वितीयाद्भयश्रवणमात्रेण अद्वैतवर्णनसरम्भो भवतामचमत्कारायैव कल्पते ।

अत्र श्रुतिनिगूढं तात्पर्यमाचार्या वदन्ति–भगवान् यज्जगत् सृजति तत्र तस्य स्वानिष्टपरिहारादिकं नोद्देश्यम्। न हि स कश्चिदस्ति, यस्तस्यानिष्टं किञ्चित् कर्तुमीष्टे। न च तस्यावाप्तसमस्तकामस्य अनवाप्तमवाप्तव्यं किञ्चिदस्ति, यज्जगत्सृष्टिप्रयासेन ईप्सेत्। केवलं दययैव तु प्रवर्तते। दया नाम स्वार्थनैरपेक्ष्येण परहितप्रावण्यम्। भगवत इयमपारा प्रलयावस्थावस्थितचेतनविषया दया। तदिदं

अचिदविशिष्टान् प्रलये
जन्तूनवलोक्य जातनिर्वेदा।
करणकलेबरयोगं
वितरसि वृषशैलनाथकरुणे त्वम्॥

इत्याचार्यचरणानुगृहीतदयाशतकश्लोके स्पष्टम्। अत्रार्क्म भय साक्षात् प्रथमसृष्टचतुर्मुखनिष्ठम्। तद्द्वारा तु भगवति। 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यादिपूर्वं सृष्टेः प्राक् ब्रह्मणः एकत्वं द्रढयितुं केवलं कल्पनामात्रसिद्धाविमौ भयतदपगमौ उपन्यस्ताविति तु साधीयः।

'एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति' इत्यत्र भेदनिन्दयाऽप्यभेदसिद्धिरित्यपि न। एतस्मिन् अल्पमपि भेदं कुरुते चेत्, तदा भयं भवतीत्युक्ते देशविशेषावच्छेदेन कालविशेषावच्छेदेन वा तत्स्वरूपस्वभावयोर्भेददर्शने सत्यनर्थो भवतीति स्वरसता लभ्यते। प्रकृतौ स्वरूपस्वभावभेदो बहुधा भवति। जीवे स्वभावभेदः। तथा कश्चन भेदः अन्यथाभावः ब्रह्मणि नास्तीति तदुभयविलक्षणमेतत्। एवं सति तयोरियताऽपि कश्चन भेदोऽस्तीति यो मन्येत तस्य यथावस्थितब्रह्मज्ञानविरहात् संसारानुवृत्तिभयं भवतीति भावः।

यद्यप्यत्रास्मच्छ्रुति समभिव्याहारात् भेदं प्रति प्रतियोगित्वमस्य न प्रतीयते, तथापि वैयधिकरण्यानेन उपदेशन्यायेन च उपस्थितत्वात् एतस्यैव सत्यमङ्गीकृत्य स्वस्मिन् स्वभेदाप्रसक्त्या तन्निषेधायोगात् उक्तरीत्या

प्रधानजीवयोरिव शङ्कनीयस्वरूपस्वभावान्यथाभावरूपो भेदो निषिध्यत इत्युपपादनीयम्। उपक्रमोक्तभगवत्कल्याणगुणचेतनाचेतनात्मकसकल-प्रपञ्चबाधस्यान्याय्यत्वेन भेदस्य सप्रतियोगिकत्वासम्भवाच्च तथोप-पत्तिर्वक्तव्या।

उपपन्नतरमर्थान्तरं चाहुः। 'प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति' इति पूर्वं प्रतिष्ठयाऽभयमुक्तम्। तत्र प्रतिष्ठा नाम अविच्छिन्न-स्मृतिसन्ततिरेव। अत्र श्रद्धावर्धनाय व्यतिरेकेऽनर्थः प्रकृतवाक्ये उच्यते। एतस्मिन् ब्रह्मणि अल्पमप्यन्तरं स्मृतिविच्छेदं यदा कुरुते तदा भयं भवतीति।

'एको देवः सर्वभूतेषु गूढः' इतीदमपि नाद्वैते प्रमाणम्। 'आत्मनि तिष्ठन्' इतिवत् सर्वभूतेषु गूढ इति भेदावगमात्। भूतशब्दस्य प्राणि-वाचित्वस्य कोशसिद्धत्वात्। चेतनाधिष्ठितप्राणादिवाचित्वेऽपि विशेष्य-विशेषणभावमात्रभेदात्। चेतनाधिष्ठितप्राणशरीरादिषु गूढ एको देव इत्युक्तावपि हि चेतनभेदः सिद्ध्यत्येव। चेतनस्य शरीराधिष्ठानुर्दुःखि-त्वात्। तत्र गूढस्य तु देवत्वात्। 'अनश्नन्नन्यो अभिचाकशीति' इत्युक्तरीत्या द्योतमानत्वात्। देवत्वे सत्येव गूढत्वात्। न च एक इत्यनेन जीवाभेदो बाध्यते। तस्य सर्वभूतेषु एक एव गूढ इति शरीरादिभेदप्रयुक्तभेदाभाव-परत्वात्। पूर्वोत्तरपरामर्शेन अस्या उपनिषदो भेदपरत्वस्योपपादि-तत्वाच्च।

"यावन्मोहं तु भेदः स्याज्जीवस्य च परस्य च।
ततः परं न भेदोऽस्ति भेदहेतोरभावतः॥"

इत्यादिस्मृतावपि व्यक्त्यैक्यं नोच्यते। किन्तु जीवस्य परस्य च कर्म-सम्बन्धासम्बन्धज्ञानसङ्कोचासङ्कोचसुखदुःखभोगाभोगादिरूपो यो भेदः तस्य संसारदशायां वर्तमानस्य निश्शेषकर्मक्षयान्निवृत्तिरुच्यते। व्यावर्त-कधर्मो हि भेदः। स च प्रकृते संसारित्वासंसारित्वरूपो विवक्षितः।

यायन्मोहमित्युक्ते । देहात्माभिमानो मोह । तदधीनं विषयप्रावण्य यावत् तावदित्यर्थ । अतो य स्वाभाविको व्यक्तिभेद यश्च अणुत्व महत्त्वपारत न्त्र्यस्वातन्त्र्यादिरूपो भेद, तदनिवृत्तावपि न विरोध । जीवस्य परस्य च तत पर न भेदोऽस्तीत्युक्ते जीवो नश्यतीत्ययमर्थो न युक्तो वक्तुम्। तयोर्विद्यमानो भेदो नश्यति। जीव परेण परम साम्य मुपैतीत्ययमर्थो हि समञ्जस । सर्वप्रमाणसामञ्जस्यापादकत्वात्। वैपरीत्यात्तु अर्थान्तर हेयम्।

'क्षेत्रज्ञ चापि मा विद्धि'इत्यत्रापि न जीवपरमात्मनोरभेद उपदिश्यते।

'न त्वेवाहं जातु नासं न त्व नेमे जनाधिपा ।' इत्युपक्रम एव जीवेश्वरयोः जीवाना मिथश्च भेदस्योक्तत्वात्।

"अपरेयमितस्त्वन्या प्रकृति विद्धि मे पराम्।
जीवभूता महाबाहो ययेद धार्यते जगत्॥"

इति प्रकृतिवदेव जीवस्यापि विभूतित्वेनाभिधानात्।

'उत्तम पुरुषस्त्वन्य परमात्मेत्युदाहृतः।'

इत्यन्यत्वस्य कण्ठत एवोक्तत्वाच। इदम् यत्वमेव पञ्चदशाध्यायार्थः। यथोक्त यामुनाचार्यैः —

"अचिन्मिश्राद्विशुद्धाच चेतनात्पुरुषोत्तम ।
व्यापनाद् भरणात् स्वाम्यादन्यः पञ्चदशोदितः॥"

इति। न च सामानाधिकरण्य स्वरूपाभेदपरमेव। 'रसोऽहमप्सु', 'अहं क्रतुरहं यज्ञः' 'आदित्यानामहं विष्णु' इति विभूतिपरत्वस्यैवेह निरूढत्वात्। अतः ऐक्ये किमपि प्रमाणवाक्य न प्रदर्शयितु शक्यमिति सिद्धम्।

मतिविभ्रममात्रोत्थमद्वैत त्रातुमुत्सुकैः ।
बहुभिर्बहुधाऽप्युक्तं याति सैकतसेतुताम्॥

## १६. ऐक्यानुमानम्

अथानुमानेन जीवेशैक्यं साधयितुं प्रवर्तते । तत्तु सर्वथाऽशक्यमिति इयतैव निरूपणेन शक्यमवगन्तुम् । जीवाः परमात्मनस्तत्त्वतो न भिद्यन्ते, आत्मत्वात्, परमात्मवत्, इत्यादि हि सर्वं तदैक्यानुमानं प्रत्यक्षश्रुतिभ्यां बाधितम् । नाहमीश्वर इति भेदप्रत्यक्षस्य दुरपह्नवत्वात् । 'अन्योऽन्तर आत्मानन्दमयः' 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इत्यादिश्रुतिवाक्यैश्च भेदस्य कण्ठोक्तत्वात् । नन्वयं व्यावहारिको भेदः । तात्त्विकभेदाभावस्तु साध्यत इति चेन्न । दत्तोत्तरत्वात् । अबाधितप्रत्यक्षावगतादन्यस्य तात्त्विकभेदस्याप्रसिद्धत्वेनासाधनीयत्वात् । तत्प्रसिद्ध्यप्रसिद्धिभ्यां व्याघाताच्च । यदि हि स प्रसिद्धः तदभावः साधयितुं न शक्यः । अथाप्रसिद्धः अप्रसिद्धप्रतियोगिकोऽभावः कथं साध्येत ।

घटो हिमालयान्न भिद्यते, पृथिवीत्वात्, हिमालयवत्, इत्याभाससाम्यं च । अत एवाप्रयोजकत्वं च । यत्तु श्रुत्यनुग्रहान्नेमौ दोषाविति तत् तन्निग्रहस्यैवोपपादितत्वान्निरस्तम् । एवं जीवैक्यानुमानदौस्स्थ्यमपि द्रष्टव्यम् । विमतानि शरीराणि चैत्राधिष्ठितानि शरीरत्वात्, सम्मतवत्, इत्यत्र हि 'नेमानि मम शरीराणि' इत्यबाधितानुभवेन बाधः । 'विमतानि शरीराणि न चैत्राधिष्ठितानि तद्भोगानायतनत्वात् घटवदिति सप्रतिसाधनत्वम् । महीमहीधरादिकं सर्वं चैत्राधिष्ठितं, वस्तुत्वात्, तच्छरीरवत्, इत्याभाससाम्यं च

विदुषामुपहास्यानि प्रयुज्यन्ते पुनःपुनः ।
असम्यञ्च्यनुमानानि तस्थुषा दुःस्थिते मते ॥

भेदो मिथ्या भेदत्वात् दृश्यत्वाद्वा, चन्द्रभेदवत्, इतीदमनुमानं वादिनं प्रति किमर्थं प्रयुज्यते । घटो मिथ्या घटत्वात् दृश्यत्वाद्वा, कल्पितघटवदित्यनुमानादस्य को विशेषः । तस्यापि प्रमाणत्वादविशेष एवेति

चेन्न, तर्हि यन्वदेव तस्यापि मिथ्यात्व सिद्धमिति किमिदानीं वि।शष्य साधनम । परमते च तद्वदेव न मिथ्यात्वमिति सिद्धत्वान् पुनः साधनमनवकाशम् । वाच, वाचितत्वमुपाधि, भेदो न मिथ्या, प्रमितत्वात्, ब्रह्मवत्, इति प्रतिसाधन, उक्ताभाससाम्य चेत्यनुमान दोषा द्रष्टव्या ।

किञ्च भवत्प्रयुक्तो बाणो भव तमेव प्रहरतीति न्यायेन "अभेदो मिथ्या अभेदत्वात्, देशात्माभेदवत् इत्यनुमीयमानमभेदमिथ्यात्व भवता दु सम धानमेव । यत्तु शून्यवादापत्तिरिति तन्न । भेदमिथ्यात्वा नुमानऽप्यस्य प्रतिकूलतर्कस्य सुवचत्वात् । प्रक्षण स्वतरभेदाभावे हि मिथ्याभुतप्रपञ्चाभेदापत्त्या तद्वदेव मिथ्यात्वात् शून्यमेव तत्त्व मित्यापतात ।

कथञ्च शून्यवादापत्ति । स्वाभेदाभाव स्वस्मिन् स्वभेदप्रसङ्गात् स्वरूपस्यैवासिद्ध्या शू य स्यादिति चेन्न । स्वरूपस्य स्वतःसिद्धत्वात् । तर्केण शून्यत्वापादनासम्भवात् । ननु स्वाभेदाभाव वस्तु किंरूप स्यादिति चेत् स्वेतरभेदाभावे यद्रूप तद्रूपमेव । स्वेतरभेदशून्य यदि किमपि वस्तु स्यात् तत् स्वाभदशून्य कुतो न स्यात् । स्वतरस्य तात्त्विकस्य विरहात् तद्भेदोऽनपे क्षत इति चेत् स्वभेदस्य तात्त्विकस्य विरहात् तदभावरूपः स्वाभेदोऽप्यनपेक्षित एव । तस्मादुभावपि भेदाभेदौ अविशेषेण सत्यौ वा मिथ्या वा । तत्रानेकपुत्रस्य दुष्पितुरेकस्मिन् पुत्र इव भेदे भवतो द्वेषः पापायैव । 'विमता भेदधी मिथ्या भेदधीत्वात्, चन्द्रभेदधीवत्' इत्यनुमानमुक्त्वा "आभाससाम्यस्य तात्त्विकत्वे प्रत्येतव्यत्वानुपपत्त्यैव निरास" इति यदुक्त, तत् स्वमताभिनिवेशभूम्ना परपक्ष विस्मृत्य । न हि दूषयत्वन मिथ्यात्व परोऽभ्युपगच्छति, येन तं प्रति तात्त्विकत्वे प्रत्ये तव्यत्वानुपपत्तिरुद्भाव्येत । तस्मादिद अन्यानि चाप्रत्यान्यनुमानानि पूर्ववदेव दुरनुमानानीति ज्ञेयम् ।

## १७. अंशत्वम्

अथार्थापत्तिमाह। 'पादोऽस्य विश्वा भूतानि' 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति श्रुतिस्मृत्योरंशत्वव्यपदेशादपि जीवब्रह्माभेदसिद्धिरिति। अंशत्वस्य प्रकारान्तरेणासम्भवात् घटाकाशस्य महाकाशस्येव कल्पितप्रदेशत्वरूपमंशत्वं जीवस्य वाच्यम्। तथा चाभेदसिद्धिरिति मन्यते। अत्र वदामः। विश्वानि भूतानि सहस्रशीर्षेत्यादिवर्णितमहिमातिशयविशिष्टस्य पुरुषस्य पादः अंशः इति तावदस्याः श्रुतेरर्थः। पूर्वं 'एको देवः सर्वभूतेषु गूढः' इत्यत्र भूतशब्दवाच्यजीवान्तर्वर्तित्वाकथनात् ब्रह्मणस्ततो भेदः सिध्यतीति परकृताक्षेपसमाधानार्थं 'भूतशब्दो न चेतनवाची। अपि तु चेतनाधिष्ठितशरीरवाची' त्युक्तवता भवताऽत्र चेतनवाचित्वं कृत्वा तस्य ब्रह्मांशत्वमुक्तमिति यदुच्यते तेनाव्यवस्थितत्वं विप्रतिषिद्धभाषित्वं चात्मनः ख्याप्यत इति पश्यतु भवान्।

अथ पुरुषस्य भूतानि कथमंशा इति पर्यालोचने अस्येत्यनेन परामृष्टस्य पुरुषस्य ये विशेषाः पूर्वावगताः, ये च भूतानां, तदपरित्यागेनैवांशता वाच्या। प्रथमावगतत्वात्, श्रुतिगम्यत्वाच्च। पदान्तरेण पश्चादेव हि अंशत्वमवगम्यते। तत्र कारणं कार्यं च विशिष्टमित्युपपादितम्। विशिष्टे च विशेषणस्यांशत्वात् जीवानां ब्रह्मविशेषणत्वाच्च अंशत्वमन्यथैव साधूपपन्नमिति अस्येत्यस्य सहस्रशीर्षत्वाद्युपलक्षितचैतन्यपरत्वाश्रयणे भूतशब्दोक्तजीवानां कल्पितप्रदेशत्वाश्रयणे च नार्थापत्तिः प्रसरति।

अंशो नानाव्यपदेशादिति सूत्रे नानाव्यपदेश इति भेदव्यपदेश उच्यते, स्रष्टृत्वसृज्यत्वनियन्तृत्वनियाम्यत्वादिवचनरूपः। अन्यथा चापीति अभेदव्यपदेशः तत्त्वमस्यादिरूपः। उभयव्यपदेशादंशत्वम्। अंशत्वेऽङ्गीक्रियमाणे उभावपि व्यपदेशौ उपपन्नौ भवतः। अतोंऽशत्वमङ्गीकर्तव्यमिति भावः। तत्र स्रष्टृत्वसृज्यत्वादिभिः स्वरूपभेदः सिद्धः। अतो भेदव्यपदेशो मुख्यः।

अपृथक्सिद्धविशेषणरूपांशवाचिना पदेन अंशिनो विशेष्यस्या-प्यभिधानात् अभेदव्यपदेशोऽपि मुख्यः । तदेवमन्यथैवोपक्षीणत्वात् जीवपराभेदे अशास्त्रार्थापत्तिर्न प्रमाणमिति सिद्धम् ।

अथ बिम्बप्रतिबिम्बभावमाश्रित्य यज्जीवेश्वरैक्यं साधयितुमिष्यते तद् वृथा । बिम्बप्रतिबिम्बभावासम्भवस्य विस्तरेणोपपादितत्वात् ।

बिम्बैक्यं प्रतिबिम्बस्य काममस्माभिरिष्यते ।
दृश्यते किन्तु जीवस्य न ब्रह्मप्रतिबिम्बता ॥
अनेन हेतुना तस्मादस्मान् प्रति न शक्यते ।
ऐक्यं प्रतिष्ठापयितुं जीवात्मपरमात्मनो ॥

## १८ अणुत्वम्

अणुराम्नायते जीवो विभुश्च पुरुषः परः ।
शङ्काऽपि जायेत कथमेतयोरेकतां प्रति ॥

यत्तु 'नित्यः सर्वगतः' 'स वा एष महानज आत्मा' इत्यादिभिर्विभुत्वावगमादणुत्वमिति तदेनयोः परमात्मविषयत्वाभिरस्तम् । अथ जीवो नाणुः प्रत्यक्षगुणाश्रयत्वात्, प्रत्यक्षत्वाच्च, घटवत् । आत्मत्वात्, अमूर्तत्वाच्च, ईश्वरवत् इत्यादिभिरनुमानैरनणुत्वसिद्धिरिति चेन्न । "भागो जीवः स विज्ञेयः" इत्यादिश्रुत्या बाधात् । जीवो न विभुः क्रियावद्द्रव्यत्वात् घटवत् इति प्रत्यनुमानाच्च । न चासिद्धिः । क्रियाश्रयस्य साधयिष्यमाणत्वात् । अप्रयोजकत्वाच्च । यत्तु देहव्यापिसुखाद्युपलम्भापत्तेः प्रतिकूलतर्क इति, तत् धर्मभूतज्ञानव्याप्त्या उपपन्नत्वान्निरस्तम् । गीतं हि भगवता—

"यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।
क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥"

इति । यच्च 'वालाग्रशतभागस्य शतधा कल्पितस्य च' इत्यस्य व्याप्तस्य

प्रतिपादकबहुश्रुतिविरोधेन दुर्विज्ञेयपरत्वमिति तदपि न। व्यापकत्व-श्रुतीनां परमात्मविषयत्वात्। प्रकृतायां जीवविषयत्वेन विरोधाभावात्।

उत्क्रान्तिगत्यागतिश्रवणाच्च जीवस्य न विभुत्वम्। अत्राह—उत्क्रमणादीनां बुद्धिगतानां उपहिते श्रुत्या प्रतिपादनमिति। न त्वेवं कल्पने किञ्चित् प्रमाणमस्ति। प्रत्युत 'एष आत्मा निष्क्रामति' इति जीवस्यैवो-त्क्रान्तिरभिधीयते। स एनान् ब्रह्म गमयतीति गन्तुरेव च मुक्तिः श्रूयते। नन्वव्यापकस्यैव अव्यापकं प्रत्येव गमनम्। ब्रह्म च व्यापकम्। तत् प्रति गमनासम्भवेन गमनपदस्य उपाधिकृतभेदराहित्यपरतया नास्य गतिमुक्तिसामानाधिकरण्यप्रतिपादकत्वमिति चेत्, सत्यमव्यापकस्यैव गमनम्। अत एव गन्तुर्जीवस्याणुत्वं ब्रूमः। भवता तु व्यापकत्वं सिद्धं कृत्वा गतेरुपाधिगतत्वमुच्यते। तथा च श्रूयमाणगत्यनुपपत्तेरप्यद्वैतम-श्रौतमिति सिद्ध्यति।

यच्चाव्यापकं प्रत्येव गमनमिति तदपीष्टमेव। गतिप्राप्यदेशविशे-षावच्छेदेनैव ब्रह्मप्राप्तेर्मुक्तित्वात्। गतिश्रवणस्यैवात्र प्रमाणत्वात्। परं ज्योतिरुपसम्पद्येति च गतिपूर्विका मुक्तिरुच्यते। 'तथा विद्वान् नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' इति च। पूर्वत्र ज्योति-श्शब्देन तेजोविशेषविशिष्टं अप्राकृतं रूपं व्यञ्जितम्। इह पुरुषशब्देन तद्दिव्यं रूपं साक्षादुक्तम्। पुरुषमुपैति दिव्यरूपविशिष्टं ब्रह्म प्राप्नोति। एवं मुख्यार्थस्योपपन्नत्वात्। "परमपुरुषस्य सर्वत्र सन्निहितत्वेन तं प्रति गमनासम्भवेन उपैतीत्यपि पूर्ववदर्थान्तरपरम्" इति दुस्सिद्धान्तानुरोधेन श्रुतिविनाशनं न शोभते।

यदपि "उपाधिगतया उपहिते गतिप्रयोग औपचारिक एव। न चैवं कृतहान्याद्यापत्तिः। यद्बुद्ध्यवच्छिन्नेन येनैवात्मना यत् कृतं तदवच्छिन्नेन तेनैव (तदवच्छिन्ने तस्मिन्नेव तेन) भोगजननात्। न ह्यात्मनः प्रदेशो-ऽस्ति। यत्तु अवच्छिन्नस्य कर्तुर्भोक्तुर्भेद इति, तन्न। अवच्छेद्यात्मनो-

ऽवच्छेदकभुद्धेश्च ऐक्ये अवच्छिन्ने भेदस्य वक्तुमशक्यत्वात्" इति तदप्यसाधु। चिदचिद्ग्रन्थिर्हि जीव। तत्र जायमानो भागः चितिं वर्तते न वा। आद्ये भोगसङ्करप्रसङ्ग। आत्मन अच्छेद्यत्वेन सर्वत्र एकत्वात्। एवं च कर्तृव्यतिरिक्तानामकृताभ्यागमप्रसङ्ग। अन्त्ये कर्तुरपि भोगो न स्यात्। चेतनावृत्तित्वात्। न खलु स्वावृत्ति सुखं वा दुःखं वा चेतनोऽनुभवितुमलम्। एवं सति कृतहानिप्रसङ्ग इति। नन्व हङ्कार एव करोति, अहङ्कार एव भुङ्क्ते। यो यत् करोति स एव तद् भुङ्क्ते। स तद् मुक्त एव। तत्र नास्ति कृतहान्यादिप्रसङ्ग इति चेत् तर्हि चिद् शबलित अचेतन एव केवलो जीव इति स्यात्। तत्र कस्य ऐक्यं बोध्यते। नाचेतनस्य। अनिष्टत्वात्। न चेतनस्य। तस्य जीवत्वाभावात्।

अथैव जीवस्याणुत्वे सति 'स चानन्त्याय कल्पते' इत्येतद्विरुध्यत इति चेत् कामं विरुध्यते। भवतो यथा 'जीवो भागः स विज्ञेय' इत्येतद् विरुध्यते तथा। कथं परिहार इति चेत् स्वरूपताऽणुरपि मुक्तो ज्ञान सङ्कोचनिवृत्त्या परिपूर्णविकासेन च धर्मभूतज्ञानद्वारा विभुभवनयोग्यताधानित्यर्थ इति न विरोध इति। न च गुणिनाऽणुत्वे गुणः कथं सर्वत्र प्रसरेदिति वाच्यम्। दीपप्रभावत् पराश्रितत्वनियमेन ज्ञानस्य धर्मत्वेऽपि रूपादिवद् गुणत्वाभावात्। प्रभावदेव द्रव्यत्वात्। सङ्कोचविकासरूपाव स्थावत्त्वेन द्रव्यलक्षणयोगात्॥

"बुद्धेर्गुणेनात्मगुणेन चैव
आराग्रमात्रो ह्यवरोऽपि दृष्ट।"

इत्यत्र आराग्रमात्रत्वस्य बुद्धिगुणहेतुकत्वोक्तेः स्वाभाविक विभुत्वमुक्तं भवतीत्यपि न युक्तम्। बुद्धेर्गुणेन आराग्रमात्र। उपाधिभेदेन तत्तत्परिमाण इत्यर्थ। आत्मगुणेन च अवरोऽपि। स्वाभाविकेन

स्वगुणेन अवरोऽपि ततोऽल्पपरिमाणोऽपि भवतीत्यर्थात्। यत्तु अवर-शब्दस्य नास्ति वरो महान् यत इति ब्रह्मानन्दीय विवरणं तत् श्रुतेः केवलं कदर्थनम्। अवरशब्दस्य 'तस्मिन् दृष्टे परावरे' इत्यादिप्रयोग-दर्शनेन अपकृष्टे निरूढत्वात्।

वस्तुतस्तु दुर्वोधात् समन्वित इति पदं समासघटकमपि 'भीष्म-द्रोणप्रमुखतः सर्वेषां च महीक्षिताम्' इत्यत्र प्रमुखत इतिवत् बुद्ध्या निष्कृष्य बुद्धेर्गुणेन अन्तःकरणसत्त्वप्रभृतिगुणेन, आत्मगुणेन तद-धीननानाविधार्थविषयकाध्यवसायेन च समन्वितो यः प्राणाधिप इति योजनात् आराग्रमात्रत्वे बुद्धिगुणो न हेतुरिति द्रष्टव्यम्।

अङ्गुष्ठमात्रः, आराग्रमात्रः, ततोऽवरश्च शास्त्रेषु दृष्टः। परमार्थ-तस्तु 'जीवो भागः स विज्ञेयः' इति श्रुतिः स्वमतं वदतीत्याचार्या इह सुष्ठु भाषन्ते। तत् सिद्धमणुर्जीव इति।

तमो यद्वत्तद्वद् विहित इह येनाम्बरमणि-
विषं यद्वत्तद्वद् विहितममृतं येन भुवने।
मयाऽसौ लेखन्या श्रुतिमितिनिजैश्वर्यविततिं-
द्रढिम्ने दैत्यारिः स्वयमिदमुदारो विलिखति॥

इति
विशिष्टाद्वैतसिद्धौ
जीवेश्वरविभागो नाम
द्वितीयः परिच्छेदः

# अथ तृतीयः परिच्छेदः

## १ श्रवणादि ।

श्रेयस्कामैरवगन्तव्यतया शास्त्रैरुपदिश्यमानेषु तत्त्वहितपुरुषार्थेषु त्रिषु तत्त्व तावत् चिदचिदीश्वररूपेण त्रिधा विभज्यते । तत्र अचितो मिथ्यात्व चिदीश्वरयोरभेदं चाभ्युपेत्य परे अद्वैतसिद्धान्तमातिष्ठन्ते । सोऽयं सिद्धान्तः केवलमाभिमानिकः । सर्वप्रमाणप्रतिकूलत्वात् । अत एव ते सर्वाणि प्रमाणानि हठादेव अन्यथान्यथा नेतुमुद्युञ्जते । स एषां तत्त्वविषयो महान् विपर्यय इयता प्रबन्धेन न्यरूपि । अथ हित विषयो निरूप्यते ।

'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति तावत् परमपुरुषार्थप्राप्त्युपाया विधीयते । अत्र तव्यप्रत्ययान्तेषु चतुर्षु पदेषु कस्त्र किंविधिरित्यत्र विप्रतिपत्तिः । तत्र परे वदन्ति । आत्मा परोक्षभ्रमसिद्धत्वात् प्रपञ्चस्य, तत्साक्षात्कारेणैव तन्निवृत्तिर्भवति । न परोक्षज्ञानेन । प्रमात्मकसाक्षात्कारस्य अपरोक्षभ्रमनिवर्तकत्व चान्वय व्यतिरेकाभ्यामेव सिद्धमिति न तदसाधनत्व शास्त्रेण विधेयम् । ज्ञानस्य प्रमाणपरतन्त्रत्वेन पुरुषपरतन्त्रत्वाभावाच्च तथा । स च साक्षात्कारः तत्त्वमसीति वाक्येनैव जायते । वाक्येन च न केवलेन । अपि तु श्रवणा हितातिशयेन । अतः करणकोटिप्रविष्ट श्रवणम् । तच्च श्रोतव्य इति विधीयते । अत एवाङ्गम् । अस्य फलोपकार्यङ्गे मनननिदिध्यासने मन्तव्यो निदिध्यासितव्य इत्याभ्यां विधीयेते इति । अद्वैतसिद्धान्तानु रोधेनायं निर्णय इति स्पष्टमेतत् । अद्वैते च प्रमाणलेशोऽपि नास्ति ।

प्रत्युत सर्वाणि प्रमाणानि तद्विरोधीनीति स्थितम्। अतस्तदनुसारेण क्रियमाणोऽयं निर्णयोऽप्यनुपपन्न इति स्वयं सिद्धत्वात् न तत्प्रति विशेषतः किमपि प्रतिपादनीयम्। अथापि वैशद्यार्थं विमृशाम।

"येनाहं नामृता स्यां किमहं तेन कुर्याम्। यदेव भगवान् वेद तदेव मे ब्रूहि" इत्युपक्रमात् मोक्षसाधनं 'आत्मा वा अरे' इत्यादिना उपदिश्यत इति ज्ञायते। तस्मात् मोक्षसाधनं लोकतः प्राप्तमिति वादो न युज्यते। किञ्च श्रोतव्य इत्यत्र किमुद्देशेन किं विधीयते। आत्मसाक्षात्कारोद्देशेन श्रवणमिति चेन्न। आत्मसाक्षात्कारस्यानुपस्थितत्वेन उद्देश्यत्वेनान्वयायोगात्। द्रष्टव्य इत्यनेन तदुपस्थितिरिति चेन्न। तत्रत्यतव्यप्रत्ययोक्तभावनाविशेषणत्वेनैव तदुपस्थितेः श्रवणभावनायामन्वयायोगात्। पदान्तरकल्पनयाऽन्वय इति चेन्न। आत्मा द्रष्टव्यः श्रोतव्य इत्यात्मकर्मकभावनान्वये सर्वत्र समाने सति परस्परं गुणप्रधानभावानुपपत्तेः। न हि समिधा यजति, इडो यजतीत्यत्र परस्परमङ्गाङ्गिभावो भवति। नाप्यरुणया पिङ्गाक्ष्येत्यत्र द्रव्यगुणयोः। एतेन द्रष्टव्यः श्रोतव्य इत्यव्यवहितपाठरूपसन्निधानात् श्रवणस्य दर्शनेन साक्षादन्वयादङ्गित्वमिति निरस्तम्। उभयत्र आत्मकर्मकत्वस्य तुल्यत्वेन परस्परमुद्देश्यविधेयभावेनान्वयस्य प्रत्येतुमशक्यत्वात्।

किञ्च द्रष्टव्य इति भवदभिमतः साक्षात्कार उच्यत इत्येतदसिद्धम्। अमृतत्वकामेन आत्मा द्रष्टव्य इति हि वाक्यार्थः। तत्र द्रष्टा मुमुक्षुरन्यः। द्रष्टव्यश्च सर्वान्तरात्माऽन्यः। न चान्येनात्मना अन्यस्यात्मनः साक्षात्कारः सम्भवति। अत एव द्वैतमिष्यते। उपाधिकृतश्च भेद इति चेन्न। एवं वचनस्यान्यथा नेयत्वेन इदमपि प्रमाणमद्वैतिनां प्रतिकूलमित्येव पर्यवसानात्। द्रष्टव्य इति विधेयदर्शनविशेषप्रतीतेश्च। विधिसरूपोऽयमनुवादः। न तु विधिरिति चेन्न। एवं कल्पनस्यैव दोषत्वात्।

अपि च भवदभिमत साक्षात्कार शब्देन जननीय इति को निर्बन्धः । न हि लोके शब्दजन्य एव साक्षात्कार प्रत्यक्षभ्रमनिवर्तक इति नियमो दृश्यते । न च प्रकृते तथा नियमपरो शब्दोऽस्ति । न च मन्त्रपाठबलात् मन्त्रेणैव स्मर्तव्यत्वनियमकल्पनवत् तत्त्वमसीति वाक्य श्रवणबलात् तेनैव साक्षात्कारः सम्पाद्य इति कल्पनम् । तस्य ऐक्यबोधकत्वेन चरितार्थत्वात् । न च साक्षात्कारस्य जनकापेक्षायां उपदेशनिराकाङ्क्षस्यापि अस्यैव वाक्यस्य अनाम्नातमन्त्रकल्पकस्मरणार्थतया विधायकब्राह्मणवाक्यस्येव ग्रहणमिति वाच्यम् । विधिवशात् सम्प्रतिपन्नस्य निदिध्यासनस्यैव तज्जनकत्वस्वीकारौचित्यात् । न च निदिध्यासनजनितसाक्षात्कारस्य विरहकान्तासाक्षात्कारवदयथार्थत्वम् । आप्तैक्येन प्रकृते विषयाबाधात् । तत्र तु बाधात् । श्रूयते च फलोपकार्यङ्गत्वं निदिध्यासनस्य श्रवणतः । तत्र फलसाधनत्वे वा दोषः । शाब्दापरोक्षस्वीकारदुर्दशापरिहारेण लाभस्तु महान् । एवं च श्रवणमननयोरर्थतः प्राप्तिमङ्गीकृत्य निदिध्यासनविधिमात्रपरतया एकवाक्यत्वमपि रक्षितं भवति । अन्यथा हि विधेयभेदात् वाक्यत्रयं भवति ।

किञ्च यदि चरमवृत्तिरूप आत्मसाक्षात्कार एवेह उद्देश्यः तर्हि तत्प्राकृत परोक्षरूपे वैदिकवाक्यार्थबोधे श्रवणमननेऽपेक्षिते स्यात् । अर्थतस्तत्र प्राप्तिरिति चेन्न । तथापि नियमासिद्धेः । तथा चोपासनादीनां श्रवणमननेऽपेक्ष्य स्वयमेव बुद्धिमद्भिरवधारणे कृते फलहानिर्न स्यात् । तत्त्वमसीति वाक्येन ऐक्यावधारणे च । अथ तत्साधारण्येन उद्देश्यत्वमिष्यते, मनननिदिध्यासनयोः वाक्यार्थज्ञानार्थश्रवणाङ्गत्वमपि स्यात् । न च तद् घटते । अनुपयोगात् । न च साक्षात्कारार्थश्रवणमात्राङ्गत्वं युक्तम् । तस्याविहितत्वेनानुवादायोगात् ।

किञ्च मननादेरङ्गत्वे मानाभावः । तव्यत्वेन आत्मकर्मत्ववाचिना श्रवणसाम्यप्रतीतेः । न च मननेनात्मानं प्राप्नुयादिति बोधे जाते प्राप्ते-

ज्ञानरूपत्वात् तत्र च पूर्ववाक्ये श्रवणस्य साधनत्वेन विहितत्वात् साधनाकाङ्क्षायाः शान्तत्वात् तत्साधनश्रवणस्यैवोद्देश्यत्वं वाच्यमिति तदङ्गत्वसिद्धिरिति शङ्क्यम्। आत्मप्राप्तेरुद्देश्यत्वे सर्वत्र समाने प्रथमश्रुतश्रवणमात्रेण साधनाकाङ्क्षानिवृत्तेरयोगात्। न हि आग्नेययागविधानमात्रेण अपूर्वसाधनाकाङ्क्षा निवृत्तेति कृत्वा उपांशुयाजादेस्तदङ्गत्वं युक्तं वक्तुम्। नापि समिद्यागमात्रेण प्रधानेनिकर्तव्यताकाङ्क्षा निवृत्तेति कृत्वा इडादेस्तदङ्गत्वम्।

यदुक्त—"शब्दशक्तितात्पर्यावधारणं तावद्विचारः। अवधृततात्पर्यकश्च शब्दः करणमिति विचारस्य करणकोटिप्रवेशेन इतिकर्तव्यतान्तराभावादङ्गित्वनिर्णयः", इति, तदसत्। मननस्याप्येवं करणकोटिप्रवेशापत्त्या अङ्गित्वस्यैवाभ्युपगन्तव्यत्वेन अङ्गत्वभङ्गप्रसङ्गात्। मननाभावे श्रवणावधृतस्य तात्पर्यस्याप्रतिष्ठानात् मननस्यापि तात्पर्यावधारण एवोपयोगात्। किञ्च किन्नाम करणकोटिप्रविष्टत्वम्? किं करणत्वमेव, यद्वा करणतावच्छेदकत्वं, अथवा सन्निपत्योपकारकाङ्गत्वमात्रम्। नाद्यः। शब्दमात्रस्य करणत्वात्। तात्पर्यज्ञानस्य पृथक्कारणत्वात्। पृथगन्वयव्यतिरेकव्यतिरेकवत्त्वात्। चेष्टाप्रकरणादिभिः तात्पर्यज्ञानस्य जातत्वेऽपि प्रमादादिना शब्दान्तरोच्चारणे विवक्षितबोधाभावात्। समीचीनशब्दप्रयोगे सत्यपि तात्पर्याग्रहे बोधाभावात्। न चैतावता अवधृततात्पर्यकः शब्दः करणमिति तात्पर्यमन्तर्भाव्य करणत्वमुवचम्। न हि आलोकविशिष्टस्य चक्षुषः प्रत्यक्षं प्रति, समिद्धस्याग्नेर्दाहं प्रति, उद्यमननिपातनविशिष्टस्य कुठारस्य छिदां प्रति करणत्वं केनचिदभ्युपगम्यते। आकाङ्क्षादिकमपि करणकोटिप्रविष्टं नैव कैश्चिदङ्गीक्रियते। आकाङ्क्षादिमत्पदकदम्बकं शाब्दकारणमिति व्यवहारः प्रमास्थले वस्तुतः पदानि आकाङ्क्षादिमन्ति भवन्तीत्यभिप्रायेण क्रियते। न त्वकाङ्क्षादेरपि करणत्वाभिप्रायेण।

अत एव न द्वितीयः। विशिष्टरूपेणान्वयव्यतिरेकादर्शनात्। तृतीये तु इतिकर्तव्यतात्वस्य सिद्धत्वात् करणकोटिप्रवेशाभिधानं तन्मूलकेति कर्तव्यतात्वाभाववचनं च न घटते। करणस्वरूपनिष्पादकानां सन्निपत्योपकारकाणामपि इतिकर्तव्यतात्वात्। तदुक्तं शास्त्रदीपिकायामपूर्वाधिकरणे—'एवं प्रकारभेदे सत्यपि सर्वाण्यङ्गानि यागापूर्वनिष्पत्तावनुग्राहकाणि भवन्तीत्येकरूपेणेत्थम्भावेन स्वीक्रियन्ते" इति। तद्व्याख्याने सोमनाथीये च—

'नन्वेवं साक्षादुपकारजनने व्याप्रियमाणत्वात् प्रयाजादीनामेवेत्थम्भावेन स्वीकारः स्यात्। ततश्च तेषामेव विकृतावतिदेशः स्यात्। न त्ववघातादीनाम्। इत्यत आह—एवमिति। कथं भावयेदिति ह्युपकारजननप्रकारमात्रमेवापेक्ष्यते। न तु साक्षादुपकारजननप्रकार एव। ततश्च सत्यप्यवान्तरविशेषे सर्वेषामेवाङ्गानामित्थम्भावेन सङ्ग्रहः। नारादुपकारकाणामेवेत्यर्थः।"

इति। एतेन

"ननु सन्निपत्योपकारकत्वेऽपि न फलोपकारकमनननिदिध्यासनरूपाङ्गं प्रति शेषिता। अन्यथा प्रयाजादिकं प्रति अवघातादिः शेषी स्यात्।"

इत्युत्थिताया शङ्कायाः समाधानं यदुक्तं—

विशिष्टयागप्रविष्टतया शेषित्वं इष्टापत्तं। असाधारण्येन शेषिता तु असाधारणफलोपकारकत्वे स्यात्।

इति। तन्निरस्तम्। शङ्कितुर्मीमांसकस्याभिप्रायाग्रहणात्। यद्यवघाताङ्गं प्रयाजा तर्हि तदर्थं पृथगनुष्ठीयेरन्। यथाशक्तिप्रयोगे च प्रधानार्थतयाऽननुष्ठानेऽपि सति सम्भवे अवघातमात्रोद्देशेनानुष्ठीयेरन्। अवघातातिदेशे च तदङ्गतया प्रयाजानामप्यतिदेशः स्यात्। न चेदं सर्वैरनिर्दिश्यते। इति शङ्कितुरभिप्रायः। समाधानमपि अमीमांसकोचित-

मेवोक्तम् । न हि प्रयाजादिवर्जं अवघातादिमात्रवैशिष्ट्यं यागस्य कदाचिदपि भवति । प्रथमं सकलाङ्गकलापसाहित्यस्य ततः परं सर्वप्रधानाङ्गसाहित्यस्य चेष्टत्वात् । प्रयोगविधौ सर्वेषामङ्गानां अविशेषेण फलभावनायामितिकर्तव्यतात्वेनान्वयात् । पश्चाच्च तत्र करणत्वेनान्वितस्य प्रधानयागस्य एषां च परस्परमन्वयात् । तस्माद् विशिष्टयागप्रविष्टत्वोक्तिः अवघातशेषित्वे इष्टापत्त्युक्तिश्च अत्यन्तासमञ्जसे ।

धर्मे प्रमीयमाणे तु वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥

इति मीमांसाभिधानस्य श्रवणापरपर्यायस्य विचारस्य इतिकर्तव्यतात्वे आप्ततमैः सुस्पष्टमुक्ते सति अत्र इतिकर्तव्यतात्वं प्रतिषिध्य करणत्वं साग्रहं साधयन् अत्रभवान् नूनं तदश्रुतपूर्वी । अथवा अभिनिवेशातिशयमहिम्नाऽत्यन्तं विस्मृतवान् ।

यच्च द्वैतिनामाक्षेपमनूद्य समाहितम्—

ननु शब्दसामर्थ्यरूपेण लिङ्गेन 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति वाक्येन फलसम्बन्धात् प्रकरणेन च श्रवणादिकं निदिध्यासने सन्निपत्याङ्गमिति चेन्न । निदिध्यासनपदस्य 'बर्हिर्देवसदनं दामि' इत्यादाविव साक्षात्काररूपफलसम्बन्धे न शक्तिरिति शब्दसामर्थ्याभावात् । वाक्येऽपि योग्यताबलात् श्रवणमेवाध्याह्रियते । तथा च तच्छ्रवणात् ध्यायमानो निष्कलं ब्रह्म पश्यतीत्यनुकूलार्थस्यैव पर्यवसानात्

इति तदप्यनुपपन्नम् । वादिवाक्यस्य यथावदर्थानवगमात् । लिङ्गेनेत्यस्य फलसम्बन्धादित्यत्रान्वयस्याविवक्षितत्वात् । वाक्येनेत्यत्र चकाराश्रवणात् । प्रकरणेन चेत्यत्र तच्छ्रवणेनोत्तरत्रैवान्वयप्रतीतेः । यल्लिङ्गं, यच्च वाक्यावगतफलसम्बन्धाधीनं प्रकरणं, ताभ्यां श्रवणादिकं निदिध्यासने सन्निपत्याङ्गमिति हि वाक्यस्यार्थः । श्रोतव्य इति शब्दसामर्थ्यात् श्रवण-

मवगम्यते। तच्च वाक्यार्थनिश्चयजनकतया लोके ज्ञातम्। मन्तव्य इति शब्दसामर्थ्यावगतं मननमपि ज्ञातस्य निश्चयस्य प्रतिष्ठापकं ज्ञातम्। सुज्ञातसुनिश्चित एवार्थे निदिध्यासनसम्भवात् श्रवणमननयो निदिध्यासनोपकारकत्वं ज्ञायते। इदं तदुपकारसामर्थ्यं लिङ्गम्। एवं शब्दावगतार्थसामर्थ्याभिप्रायेणैव शब्दसामर्थ्यरूपेण लिङ्गेनेत्युक्तम्। पश्यते निष्कलं ध्यायमान इति समभिव्याहाररूपवाक्येन निदिध्यासनस्य दर्शनरूपफलसम्बन्धोऽवगतः। ध्यायमानः पश्यति इति हि ध्यानेन पश्यतीत्येतदर्थकम्। एवं फलवति ध्याने प्रकरणोदयात् फलवत्सन्निधावफलं तदङ्गमिति न्यायेन तदुपकारसमर्थयोः श्रवणमननयोस्तदङ्गत्वं भवतीति वादिना समञ्जसमिदमुपपादनम्।

अन्यत्र योग्यताबलात् श्रवणमेवाध्याह्रियत इत्याद्युक्तं तत्र नूनं लोब्धव्यम्। को नु भो अध्याहारस्य प्रसङ्गः। अनध्याहारपक्षखण्डनं अध्याहारपक्षावलम्बिना कथं शक्यते। रामो रावणमवधीदित्यत्र विभक्तिव्यत्यासो योग्यताबलात् क्रियते। तथा च रामं रावणोऽवधीदित्यनुकूलार्थं एव पर्यवसानमिति रावणविजयवादिना यावद् वाक्यार्थवर्णनकौशलं तावदेवेह दृश्यते। तथा चाद्वैतानुरागभूम्ना यत् किमपि कर्तुं सज्जा भवन्त इत्येषा स्थितिरत्राप्यभिव्यक्तेत्यास्तां तावत्।

इमां दुरवस्थां परिहर्तुकामो व्याख्याता मूले 'अध्याह्रियत इत्यस्य 'तत इत्यनेन परामृश्यत' इति विचित्रं व्याख्यानं कुर्वन् मन्त्रं विनाशयति।

"न चक्षुषा गृह्यते नापि वाचा
नान्यैर्देवैस्तपसा कर्मणा वा।
ज्ञानप्रसादेन विशुद्धसत्त्व-
स्ततस्तु तं पश्यते निष्कलं ध्यायमानः॥"

इत्ययं मुण्डकमन्त्रः। अत्र

कर्मणः पूर्वमुक्तत्वात् तस्यैव श्रवणरूपविचारात्मकस्य तत

इत्यनेन परामर्शः। कर्मत्वरूपेण परामर्शेऽपि योग्यताबलात् श्रवणात्मककर्मभानम्। न कर्मणेति निषेधस्तु तदन्यकर्मणः। ज्ञानप्रसादपदेन निष्कामकर्मानुष्ठानाधीनसत्त्वशुद्धेः, ध्यायमानपदेन निदिध्यासनस्योक्तत्वात् अवशिष्टश्रवणस्यैव तत्पदेन वक्तुमौचित्यात्।

इति तदीय व्याख्यान दृश्यते।

प्रधर्षणेभ्य ईदृग्भ्यो नून भीता किल श्रुतिः।
निलीना क्वापि संवृत्ता जनाना दृष्टिगोचरात्॥

न चक्षुषा बाह्येन ज्ञानेन्द्रियेण, न वाचा कर्मेन्द्रियेण, नाप्यन्यैः बाह्यैः ज्ञानकर्मेन्द्रियैः, नापि तपसा अनशनप्रधानेन कायक्लेशेन, नापि इष्टिपशुसोमरूपेण वैदिककर्मणा परमपुरुषो गृह्यते, इति पूर्वार्धे "नाहं वेदैर्न तपसा न दानेन न चेज्यया" इति, "न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः" इति चोक्तरीत्या असाधनवर्गनिर्देश परिसमाप्य विशिष्टं साधनमुपदेष्टुमुत्तरार्धं प्रवर्तत इति स्पष्टमेतत्। तुकारेण पूर्ववाक्योक्तार्थगन्धोऽपीह नास्तीति निस्सन्देहमावेद्यते। 'प्रकृतव्यावृत्त्यर्थश्च तुशब्दः' इति भूमाधिकरणे भवद्भाष्यम्।

तस्मात् तत इत्यनेन पूर्वोक्तपरामर्शे तुशब्दात्मकश्रुतिविरोधः एको दोषः। निषिद्धसाधनभावस्यैव कर्मणः अनुपदं साधनत्वोक्तौ विप्रतिषेधो द्वितीयो दोषः। न च सामान्यविशेषन्यायेनास्य परिहारः। विशेषाश्रवणात्। उभयोः सामान्यमुखेनैव प्रवृत्तेः। ज्ञानप्रसादेनेति विशुद्धसत्त्व इति च द्वाभ्या पदाभ्या व्यवधान तृतीयो दोषः। अनुपस्थितश्रवणकल्पन चतुर्थो दोष.। श्रुतमतवेदान्तार्थस्य परमात्मदर्शनकाङ्क्षिणः तदर्थं यतमानत्वावस्थायां क्रियमाणो ह्ययमुपदेशः। अत्र श्रवणोपस्थापकं किमपि प्रमाण नास्ति। एतेन ज्ञानप्रसादेनेत्यस्य मननाधीनबुद्ध्यैकाग्र्यपरत्वाश्रयण पञ्चमो दोष इति ख्यापितम्। मननादपि पराया एकाव-

स्याया इह प्रस्तावात्। एवं विशुद्धसत्त्वपदस्य निष्कामकर्माधीनचित्त-शुद्धिपरत्वाश्रयणे षष्ठो दोषः। निष्कामकर्मानुष्ठानस्य विविदिषार्थत्वा-भ्युपगमात्। श्रवणात् प्राक्तनी हि विविदिषा। तस्या अपि प्राक्तनी चित्तशुद्धिः निष्कामकर्मानुष्ठाननिष्पन्ना। तस्या इह कीर्तनं कृतं इति। तच्छब्दस्य स्वाव्यवहितपूर्वपठितसत्त्वशुद्धिपरामर्शित्वं सम्भवति तदना-श्रयणे सप्तमो दोषः। श्रवणस्य दर्शनसाधनत्वेनाव्यवहितत्वाभावं चापरो दोषः।

कस्तर्हि मन्त्रार्थं इति चेत्, उच्यते। पूर्वार्धे तावन्नास्ति विशेषः। किं तर्हि साधनमिति चेत् तदाह—ज्ञानेत्यादिना। तु किन्तु ध्यायमानः मुमुक्षुः मोक्षार्थं ध्यानं कुर्वन् पुरुषः ज्ञानप्रसादेन ज्ञानस्य सत्यं ज्ञान मिति प्रसिद्धस्य ज्ञानस्वरूपस्य 'बुद्धिर्ज्ञानमसम्मोहः' इत्युक्तरीत्या ज्ञान प्रवर्तकस्य वा भगवतः प्रसादेन ध्यानशब्दाभिधेयभक्तिप्रसूतेनानुग्रहेण विशुद्धसत्त्वः विमलान्तःकरणः साक्षात्कारयोग्यतासम्पन्नचित्तः ततः भगवत्प्रसादाधीनोक्तयोग्यतासम्पत्त्यनन्तरं तं पश्यति। मुक्त्युपायसा क्षात्कारसिद्धौ भगवदनुग्रहः प्रधानहेतुरिति भावः।

"तेषामेवानुकम्पार्थमहमज्ञानजं तमः।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥"

इति गीतावचनमिहानुसन्धेयम्। तदेवं ध्यानस्य फलवत्त्वात् लिङ्गप्रकर-णाभ्यां श्रवणादिर्ध्यानाङ्गत्वं परैरुच्यमानं न दूषणार्हमिति ज्ञेयम्।

यदपि "आनन्तर्यमचोदना" इति तृतीयप्रथमस्थन्यायेन द्रष्टव्यः श्रोतव्य इति सन्निधानमत्र न नियामकमिति प्रतिपक्षोक्तिनिरासाय व्याख्यात्रा उक्तम्—

तत्र हि हस्तावनेजनस्य सर्वसंस्कारत्वात् कर्तुश्च प्रयोगान्व यित्वेन कारयिष्यमाणसर्वकर्मार्थत्वं लिङ्गप्रकरणाभ्यां युक्तम्। प्रकृते तु प्रकरणस्य फलान्वयात् पूर्वमसिद्धत्वात् लिङ्गस्य च

मननादौ सत्त्वेऽपि सन्निधानसहकृतलिङ्गस्य बलवत्त्वेन श्रवणे दर्शनान्वयनियामकत्वमसम्भवात्।"

इति, तदपि न चारु। न हि हस्तावनेजनस्य कर्तृसंस्कारत्वात् लिङ्ग-प्रकरणप्रवृत्तिस्तत्रोक्ता। कर्तृसंस्कारत्वेन करिष्यमाणसर्वार्थत्वप्रतीतावपि सन्निधिरूपस्थानात् अनन्तरपठितोलपराजिस्तरणमात्राङ्गत्वमिति प्राप्ते प्रबलाभ्यां लिङ्गप्रकरणाभ्यां स्थानबाधान् निर्विगात सर्वार्थत्वमिति सिद्धान्तकरणात्। लिङ्गप्रकरणविरुद्धमानन्तर्यमप्रमाणमित्येव तत्र निर्णयात्। "आनन्तर्यमचोदना" इति हि सूत्रम्। अचोदना अप्रमाण-मित्यर्थः। स्वत एव लिङ्गप्रकरणे सन्निध्यपेक्षया प्रबले। अतस्ताभ्यां सन्निधेर्बाधात् सर्वार्थत्वम्। युक्त्यन्तरं च सूत्रोक्तम्—'वाक्यानां च समाप्तत्वात्' इति। पृथक् पृथक् वाक्यस्य समाप्तत्वात् परस्परमन्वयो नास्तीत्यर्थः। प्रकृते च 'येनाहं नामृता स्यां किं तेन कुर्याम्' इति मोक्ष-साधनस्य प्रक्रान्तत्वात् दर्शनादीनां च तत्साधनत्वयोग्यत्वेन लिङ्गसत्त्वात् द्रष्टव्यः श्रोतव्य इति प्रत्येकं वाक्यसमाप्तेश्च हस्तावनेजनन्यायेन सन्नि-धानकृतः परस्परान्वयो नास्त्येव।

द्वैतिभिरुक्तरीत्या तु निदिध्यासनस्य 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' इत्यनेन फलसम्बन्धावगमेन प्रकरणसत्त्वात्, श्रवणमननयो-र्ध्यानस्य च मिथ उपकार्योपकारकभावयोग्यत्वेन लिङ्गसत्त्वाच्च श्रवणस्य ध्यानाङ्गत्वमेव, न तु सन्निधिना दर्शनाङ्गत्वमिति द्रष्टव्यम्। न च आत्मकर्मकभावनान्वये सर्वेषां समाने परस्परमङ्गाङ्गिभावो न घटत इति त्वयैवोक्तत्वादिदमयुक्तमिति वाच्यम्। आरुण्यवदुपकारक एवाङ्ग-त्ववाचोयुक्तेः। यद्वा अस्य दोषस्य भवत्पक्षेऽपि सत्त्वेन साम्यात्। 'यश्चो-भयोः समो दोषः' इति न्यायात्।

यदुक्तं निदिध्यासनस्य फलसम्बन्धात् पूर्वं प्रकरणं नास्तीति तन्न। पश्यते ध्यायमान इति वाक्यान्तरेण दर्शने विनियोगस्य दर्शितत्वात्। तत्रार्थान्तरमुक्तमिति चेन्न। तस्य निरस्तत्वात्। तन्मतानुसारेण प्रक-

रणस्य निर्विषयत्वाच्च। यच्च सन्निधानसहकृतं लिङ्गं प्रबलं श्रवणस्य दर्शनान्त्यर्थनियामकमिति तच्च न। सन्निधानाप्रयोजकत्वस्योक्तत्वात्। प्रकरणाद् दुर्बलं हि तत्। लिङ्गस्याप्यभाव एव। न हि श्रवणस्य अपरोक्षज्ञानजनने सामर्थ्यमस्ति। शाब्दबोधात्मकपरोक्षज्ञानमात्रोपयोगित्वात्। न हि श्रवणे वधूननात्पर्यकात् शब्दात् सम्यगात्मविषयकमपरोक्षज्ञानं जायते। जायते च इष्टं च भवता आत्मविषयकं परोक्षज्ञानं श्रवणसमनन्तरम्। न चास्मिन् तत्त्वज्ञाने प्रथममुपयुक्तस्य श्रवणस्य मनननिदिध्यासनानन्तरभाविनि साक्षात्कारे दृष्टविधया कश्चिदुपयोगोऽस्ति, यदर्थं श्रवणापेक्षा तद्विधिश्च स्याताम्। अदृष्टविधयोपयोगे चापूर्वविधिः स्यात्। तत्र नियमविधित्वाभ्युपगमविरोधः। तथा च श्रवणस्य साक्षात्कारजननसामर्थ्यात्, साक्षात्कारस्य मनननिदिध्यासनात्मकद्वारं विना साक्षात् श्रवणाधीनाकारस्वीकारासामर्थ्याच्च न लिङ्गमस्तीति सिद्धम्। अतः 'सन्निधानसहकृतं लिङ्गं प्रबलम्। तेन च श्रवणे दर्शनान्वयि" इति रिक्तं वचः।

यत्तु निदिध्यासनजनितः साक्षात्कारः विरहिकामिनीसाक्षात्कारवद् भ्रमः स्यादिति तत्परिहृतं विषयाबाधादिति। अथ यत्

न च मूलप्रमाणदार्ढ्यात् प्रमात्वम्। तर्हि तदेव साक्षात्कारणमस्तु। किं तदुपजीविनाऽन्येन ?

इति शङ्कामुत्थाप्य समाधानमुक्तं, तत् परिहास्यम्। आध्मातोऽग्निर्दाहक इत्युक्ते यदि कश्चिद् ब्रूयात् 'तर्हि आध्मानमेव दाहकमस्तु। किं तदुपजीविनाऽन्येनेति', तत्तुल्यं हि एतत्।

आत्मसाक्षात्कारो मोक्षसाधनमित्येतदभ्युपेत्य एतावदुक्तम्। तदेव तु नास्तीति ब्रूमः। प्रमाणाभावात्। अपरोक्षभ्रमः परोक्षज्ञानेन न निवर्तते। अतस्तद्व्यावृत्त्या तस्य तत्साधनत्वमिति ह्युच्यते। देहात्मभ्रमः प्रत्यक्षभ्रम एव। तस्य बाधः अनुमानेन शास्त्रजन्यज्ञानेन चद् भवति

तत् कथम्? नास्ति तत्र बाध इति चेन्न। तर्हि सा प्रमैव स्यात्। भ्रम इति नोच्येत। न हि बाधं विना भ्रमत्वनिश्चयः सम्भवति। कथं तर्हि भ्रमानुवृत्तिरिति चेत् ज्ञानानिवर्त्यदोषानुवृत्तेः। यत्तु देहात्मैक्यज्ञानं न भ्रम इति तदयुक्तमित्यन्यत्रोक्तम्।

यदपि भामतीकारोक्तं निदर्शनं—'न हि माधुर्यसाक्षात्कारं विना तिक्तत्वभ्रमनिवृत्तिः', इति, तदप्यापातरमणीयम्। गुडादितिक्तताज्ञाने भ्रमत्वावगमरूपस्य बाधस्य प्रकारान्तरेणैव सिद्ध्या तदर्थं तन्माधुर्यानुभवस्यानपेक्षितत्वात्। तिक्तताग्रहणाननुवृत्तिरूपया निवृत्तेः पित्तादिदोषनिवृत्तिहेतुकत्वेन तत्रापि माधुर्यानुभवस्यानपेक्षितत्वात्। प्रत्युत माधुर्यानुभवस्य रसान्तरग्रहणनिवृत्तिसापेक्षत्वात्। औपाधिकरसान्तरानुभवप्रतिबद्धो हि स्वाभाविकरसानुभवः। प्रतिबन्धश्च प्रतिबन्धकनिवृत्तिसापेक्ष इति। न च रज्जुसर्पभ्रमो रज्जुदर्शनादेव निवर्तत इति शङ्क्यम्। भ्रमस्य क्षणिकत्वेन स्वयं निवृत्तेः। तदयथार्थत्वस्याप्तवचनादेवावगमात्। तत एव भ्रमानुवृत्त्यभावात्। ततः परं धर्मिप्रत्यक्षेण निवर्तनीयस्य कस्यचिदभावात्। क्वचित् स्वप्रत्यक्षेणैव भ्रमत्वज्ञानेऽपि सर्वत्र तथैवेति नियमासिद्धेः। एवं प्रत्यक्षभ्रमोच्छेदः प्रत्यक्षेणैवेति नियमादर्शनात् न तदनुरोधेन आत्मसाक्षात्कारस्य मुक्त्युपायत्वसिद्धिः। नतरां तत्साधनतया श्रवणस्य विधिर्वा अङ्गित्वं वेति सिद्धम्।

नन्वद्वैतविषयपरोक्षज्ञाने तत्त्वमसीत्यादिना जातेऽपि सम्प्रति प्रापञ्चिकभेदभ्रमोऽस्माकं न निवर्तते। अतोऽपरोक्षसाक्षात्कार एवैतन्निवर्तक इति निश्चीयत इति चेन्न। उक्तरीत्या साक्षात्कारेण निवर्तनीयस्य कस्यचिदभावात्। विषयगतमज्ञानं निवर्तनीयमस्तीति चेन्न। तत्सत्त्वे मानाभावस्योक्तत्वात्। परोक्षापरोक्षविभागसिद्ध्यै केवलं भवद्भिः कल्पितत्वात्। तत्सत्त्वेऽपि प्रपञ्चाध्यासमूलभूताज्ञानस्य तत्कार्यैः सह शब्दप्रमयैव निवृत्तत्वेन तदर्थं साक्षात्कारस्यानपेक्षितत्वात्।

ननु प्रपञ्चाध्यासमूलभूताज्ञानम् आत्माज्ञानमेव । तन्निवृत्तये अस्त्येव साक्षात्कारापेक्षा चेन्न । अद्वैते सिद्ध एव कल्पनस्योचितत्वात् । तस्य चाद्याप्यसिद्धेः । कथमसिद्धिरिति चेत् श्रुत्यादिभिः विश्वमिथ्यात्वे ज्ञातेऽपि प्रपञ्चानिवृत्तेश्च । यद्यविद्यासिद्धः प्रपञ्चोऽभविष्यत् नूनं तन्मिथ्यात्वज्ञानेन आप्तवचनात् मया रज्जुर्दृष्टा न सर्प इति तत्त्वं जानतः रज्जुसर्प इव निवृत्तोऽभविष्यत् । न च निवर्तते । तस्मान्नायमविद्यासिद्धः । अपि तु सत्य एव ।

ननु शङ्खश्वैत्ये निश्चितेऽपि यथा पीतिमभ्रमोऽनुवर्तते, चन्द्रैकत्वनिश्चयेऽपि द्वित्वभ्रमश्च तद्वद्बाधितस्यापि प्रपञ्चस्य भ्रमोऽनुवर्तत इति चेत् तर्हि तद्वदेव भ्रमनिवृत्तये साक्षात्कारानपेक्षा स्यात् । न हि शङ्खपीतिमभ्रमनिवृत्तये तदीयश्वैत्यसाक्षात्कारे यत्नं कुर्वन्ति । चन्द्रद्वित्वभ्रमनिवृत्तये वा तदेकत्वसाक्षात्कारे । किन्तु यः पारमार्थिको भ्रमहेतुर्दोषः तन्निवर्तनाय प्रयतन्ते । तन्निवृत्तौ स्वयं श्वैत्यैकत्वसाक्षात्कारो भवति । अतः पुनरपि साक्षात्कारवैयर्थ्यमेव । ज्ञानानिवर्त्यत्वात् प्रपञ्चसत्यत्वं च ।

किञ्च शङ्खसाक्षात्कारे सत्यपि तत्पीतिमभ्रमो जायते, न तु निवर्तते । तथा चन्द्रसाक्षात्कारे सत्यपि तद्द्वित्वभ्रमश्च । अतो धर्मिसाक्षात्कारस्य तद्धर्मभ्रमनिवर्तकत्वं न लोकसिद्धम् । शुक्तौ इदं रजतमिति भ्रमस्य इयं शुक्तिरिति साक्षात्कारो यद्यपि निवर्तकः तथापि तद्विषयीभूतधर्मविरुद्धधर्मावगाहित्वादेवास्य तन्निवर्तकत्वम् । तद्वत् सप्रपञ्च आत्मेति भ्रमस्य निष्प्रपञ्च आत्मेति सविकल्पकसाक्षात्कारो निवर्तकः, न तु भवदभिमतो निर्विकल्पक इत्येव लोकरीत्या सिद्ध्येत् । अपि च शुक्तिसाक्षात्कारानन्तरमपि पुनस्तामेव शुक्तिं दूरात्पश्यन् रजतं मन्यते । अतः साक्षात्कारस्यात्यन्तिकभ्रमोच्छेदकत्वं न सिद्धं लोके इति एतदनुरोधेन नात्मसाक्षात्कारस्य अपवर्गसाधनत्वकल्पनमयुक्तम् ।

अद्वैतसाधनत्वं तैः श्रवणस्य यदीरितम् ।
दृश्यतां सर्वमेवेदं यत्तु बालभाषितम् ॥

## २. ज्ञानविधिः ।

मोक्षोपायस्य ज्ञानस्य विधेयत्वे पुरुषपरतन्त्रत्वेन क्रियात्वापत्तौ क्रियासाध्यस्य मोक्षस्य स्वर्गवदनित्यत्वापत्तिरिति बिभ्यतो ज्ञानसामान्यस्य विधेयत्वं निराकुर्वन्ति। ज्ञानमपि मानसी क्रियेति प्राज्ञा अङ्गीकुर्वन्त्येव। यथाऽऽह वाचस्पतिः समन्वयसूत्रभामत्याम् - 'सत्यं ज्ञानं मानसी क्रिया' इति। कल्पतरुकारश्च—'यद्वादि पूर्वपक्षे ज्ञानस्य भावार्थत्वाद् विधेयत्वम्' इति, तत्र क्रियात्वमभ्युपेत्य विधेयत्वं निराक्रियत इत्याह—सत्यमिति" इति। तथाऽपि विहितक्रियाजन्यत्वेनानित्यो मा भून्मोक्ष इति विधेयत्वं निरस्यन्ति। वयन्तु तस्य विधेयत्वेऽपि हानिकामप्यपश्यन्तः तन्निरसनमनुपपन्नत्वान्न सहामहे।

यो हि परागदृष्टिः कश्चित् तं वयं ब्रूमः 'मां पश्ये'ति। न चायममुख्यो व्यवहारः। न च चाक्षुषज्ञानस्य साध्यत्वं नास्ति। पूर्वमभूतस्य तस्य तदानीं तेन स्वप्रयत्नेनोत्पाद्यमानत्वात्। यथा घटमानयेत्युक्तो नियोज्यस्तदानयति तथैव हि मां पश्येत्युक्तः पश्यति। न च पश्येति वदता ज्ञानस्य साध्यत्वमनुद्दिष्टम्। न चेन्द्रियार्थसन्निकर्षसम्पादनमात्रे पुरुषव्यापारस्योपरमात् ततः परमुत्पद्यमानस्य न पुरुषतन्त्रत्वम्। जलाग्नितण्डुलसंयोगनिष्पत्तिमात्रे तदुपरमात् पाकस्यापि अपुरुषतन्त्रत्वापत्तेः।

साध्यभेदेन साधनव्यापारविशेषा भिद्यन्ते। यदा मृदः प्रतिमाः क्रियन्ते, तदा हस्तयोरेव साक्षात् तत्र व्यापारः। अग्निज्वलने न तथा। सस्यजलसेचने जलमार्गविधानमात्रेऽस्माकं व्यापारः। जलं तु स्वयं प्रसृतं केदारं व्याप्नोति। न चानेन विशेषेण अग्निज्वलनं वा जलसेचनं वा पुरुषतन्त्रं न भवतीति शक्यं वक्तुम्। साक्षाद्वा परम्परया वा तदुद्देशप्रवृत्तक्रियानिष्पाद्यत्वं हि साध्यत्वम्। तच्च ज्ञानेऽप्यस्ति।

यदुच्यते "स्वर्गेच्छा स्वर्गसाधनीभूताया यागादिकृतौ न कारणम्। किन्तु यागादिचिकीर्षेति, तत् विदुषां विस्मयावहम्। स्वर्गकामनयैव हि पुरुषः तत्साधनयागकृतिमारभते। स्वर्गेच्छायास्तत्र कारणत्वं कथं निराकर्तुं शक्यते। अत एव स्वर्गस्य साध्यत्वमपि दुरपह्नवम्। परन्तु तत्र प्राप्यत्वेन साध्यत्वम्। न तूत्पाद्यत्वेन। यद्यपि यागचिकीर्षया यागो जन्यते तथापि तस्याश्चिकीर्षाया स्वर्गेच्छाप्रयुक्तत्वात् तज्जन्येन यागेन यजमानस्य स्वर्गप्राप्तिसम्पादनाच्च स्वर्गस्य साध्यत्वं न विहन्यते। इदन्तु साध्यत्वं प्रयोजनत्वपर्यवसायि। ज्ञानस्य तु यागादिवदुत्पाद्यत्वात् विधेयत्वे न काचिदनुपपत्तिः।

स्योद्देशप्रवृत्तपुरुषव्यापारनिष्पाद्यत्वेन पुरुषतन्त्रम्। अत एव 'पत्नी आज्यमवेक्षते' इति विधिः। चाक्षुषज्ञानेन आज्यं संस्कुर्यादिति मुख्यवृत्त्यैव बोधः। अन्यत् सवमथता लभ्यम्। यदि चैव नेष्यते यागस्यापि विधिर्न स्यात्। देवतोद्देशेन द्रव्यत्यागस्य ज्ञानरूपत्वात्। न च तत्र आवृत्त्यादिरूपमाश्रित्य कुकल्पना काचित् सुकरा। यत् सर्वथा पुरुषतन्त्रं न भवति, गोरारुण्यं, पशोरेकत्वं इत्यादि, तदपि उपादेयद्रव्यगतत्वेन विधेयमिष्यते। तथा सति किं वक्तव्यं ज्ञानं प्रति यत् पुरुषप्रयत्नाधीनात्मलाभमेव। यदुक्तं नैतत् कर्तुमकर्तुमन्यथाकर्तुं वा शक्यते। तस्मान्न पुरुषतन्त्रमिति, तदपि नास्ति। इच्छया विषयाणां द्रष्टुं, अद्रष्टुं दूरे स्थित्वा स्थूलं, सन्निधाय विशदं च द्रष्टुं शक्यत्वात्। तदेवं 'स्वप्ना त मे साम्य विजानाहीतियत् ज्ञानस्य विधेयत्वऽनुपपत्तिलेशविरहात् 'ब्रह्मविदाप्नोति परम्' 'ब्रह्म वेद ब्रह्मैव भवति' इत्यादीनां परमहितोपदेशिनीनां श्रुतीनां कदर्थनदुर्दशा नानुभवनीया परैरिति पश्याम। विहितं तु ज्ञानं छागपशु न्यायेन विशेषे उपसंह्रियमाणं ध्यानोपासनादिव्यपदेशभाक् भक्तिरूपं भवतीत्यस्माकं दर्शनम्। श्रवणमननयोरप्राप्तत्वादविधेयत्वं चेति।

ननु ज्ञानस्य विधेयत्वसम्भवेऽपि मिथ्याभूतस्य वस्तुनः तत्त्वसाक्षात्कारनिवर्त्यत्वस्य लोकसिद्धत्वान्न विधेयत्वमिति चेन्न। बन्धनिवर्तको ब्रह्मसाक्षात्कारः स्वस्य भवितुमर्हतीत्यस्य विधिं विना ज्ञातुमशक्यत्वात्। विधौ सति हि अस्मत्कृतिसाध्यत्वबोधनद्वारा तत्सम्भवं अस्माक सं-ज्ञापयेत्। अन्यथा अशक्यत्वज्ञानान्न प्रवृत्तिः स्यात्। स्वप्रयत्नं विनैव सिद्ध्येदिति ज्ञानाद्वा। अतः

"साधनत्वावगतिमात्रेण प्रवृत्त्यभावात्। साधनत्वमात्रं हि यागस्य फलं प्रत्यवगम्यते। तत् किं दैवनिर्मितस्येव निदाघसमयवर्तिमध्यन्दिनतपनातपतप्ततनोरिव मेघपुष्पगर्भमेघसङ्गस्य सन्तापोत्सादकत्वं कर्मणः फलजनकत्वं, उत अन्यकृतस्य प्रपादिवत्, भोजनादिवद्वा स्वयत्नकृतस्येति विशेषानवगमान्न प्रवर्तेत। विधिस्तु प्रवर्तकस्वभावात् कर्तुरेव फलं साधयतीति कल्पयतीति भवत्यनुष्ठापकः।"

इति न्यायरत्नमालायां पार्थसारथिमिश्रोक्तरीत्या साक्षात्कारस्यापि विधेयत्वमवश्य वाच्यम्। अन्यथा कृत्स्नं वेदान्तशास्त्रं अप्रवृत्तिकरमनर्थकं स्यादिति विभाव्यम्।

## ३. शाब्दापरोक्षम्।

अथ यच्छब्दादपरोक्षज्ञानोत्पत्तिमाहुः तदनुपपन्नमिति प्रदर्शयामः। शब्दस्य परोक्षज्ञानजनकत्वं सर्वसम्प्रतिपन्नम्। अनुमानवत् शब्दस्याप्यय स्वभावः। एतदत्यतिलङ्घनमेव तावत् पर्याप्तं परमतस्यानादरणीयत्वं प्रत्याययितुम्। तथापि तदुक्तीनामत्यन्तासामञ्जस्यादपि तथेति प्रदर्शयितुमियमस्माकं प्रवृत्तिः। शब्दस्य परोक्षज्ञानजनकत्वे "तद्धास्य विजज्ञौ" 'तमसः पारं दर्शयति' इत्यादिकं, 'वेदान्तविज्ञानसुनिश्चितार्थाः' इत्यादिकं च मानमित्याहुः।

निरन्तराभ्यासवशेन शर्वराद्
बभूवुरेते परिशुष्कचेतस ।
घृणा विना घ्नन्ति तव पदे पदे
श्रुतीर्यथा सत्त्वकुलानि सैनिका' ॥

कथन्नु भो तद्धास्य विजज्ञाविल्यस्य तत्र मानत्वम् ? यदुच्यते 'अपरोक्षज्ञानस्य पितुरुपदेशमात्रसाध्यत्वात्' इति तदयुक्तम् । विजाना तेरपरोक्षज्ञानवाचित्वाभावात् । ज्ञानसामान्याभिधायित्वात् । प्रकरणाच्च उपदेशजन्यस्य परोक्षज्ञानस्यैव प्रतीते । 'स्वप्नान्तं मे सोम्य विजानीहि' इत्यत्र 'स्वप्नान्तविषयकं अपरोक्षज्ञानं ते भवतु' इति न ह्यर्थ । 'भूय एव मा भगवान् विज्ञापयतु' इति श्वेतकेतोः प्रार्थनमसकृदावर्त्यते । न चात्र दर्शयत्वित्यर्थः । साक्षात्काराशुत्पत्त्यसम्भवात् । उपदेष्टव्यस्य तत्त्वस्य एकस्मिन् विशेषे पित्रा उपदिष्टे पुनर्विशेषान्तरजिज्ञासया श्वेतकेतुरुत्तरो त्तरं पृच्छति । 'पुरुषं सोम्योत हस्तगृहीतमानयन्ति' इत्येतद्दृष्टान्तेन निदर्शिते विशेषे श्रुते श्वेतकेतुस्तृष्णीं बभूव । पुन प्रश्नं नाकरोत् । तदेतद् व्यञ्जयन्ती श्रुतिराह—'तद्धास्य विजज्ञौ' इति । तत् उत समादेशार्थमत्यु पक्रान्तं बहुना विस्तरेणोपदिष्टं तत्त्वम् अस्य पितु सकाशात् विजज्ञौ विशद ज्ञातवान् श्वेतकेतुरित्यर्थ । अत्र साक्षात्कारस्य कः प्रसङ्ग ?

यत्त्वत्र ब्रह्मानन्दव्याख्यानम्—'तत् तस्मात् तत्त्वमसीत्याद्युपदेशात् आत्मानं विज्ञातवान्' इति तत् प्रबलप्रकरणोपस्थितसद्रूपार्थपरामर्शिन तच्छब्दस्य सन्निहितवाक्यपरामर्शित्वायोगात्, विभक्तिलोपकल्पने अध्याहारकल्पने च प्रमाणाभावात्, अस्येति षष्ठ्यन्तपदेनैव पितुरुपदे शस्य बोधनेन तस्य पुन पदान्तरेणोपस्थापनस्यानपेक्षितत्वाच्चायुक्तम् ।

अध्यायमध्ये सप्तमखण्डान्तेऽपि 'तद्धास्य विजज्ञौ' इति श्रूयते । न हि तत्र साक्षात्कारार्थो भवतामभीष्ट । उपदेशस्य सावशेषत्वात् । तथा सति तदेकरूपे अन्तिमवाक्ये को विशेषः, येन साक्षात्कारोऽर्थः स्यात् ।

श्रवणसमाप्तिर्ह्येषा। ततः परं मनननिदिध्यासनयोर्वृत्तयोः खलु साक्षात्कारोदयः।

श्वेतकेतुः पञ्चालानां समितिमियायेति कथा पञ्चमप्रपाठके कथिता। तत्र 'अननुशिष्य वाव किल मा भगवानब्रवीत् अनु त्वाऽशिषमिति' इत्यनेन पितुः सकाशात् सद्विद्यालाभानन्तरमेव तस्य तत्र गमनमिति स्पष्टमेतत्। न च पितुरुपदेशवाक्यैरेव तस्य साक्षात्कारे उत्पन्ने पश्चात् सभागमनमुपपद्यते। मुक्तत्वात्। जीवन्मुक्तावपि राजसभागमनशंकादेरयोगात्।

यत्तु 'तमसः पारं दर्शयति' इति सप्तमप्रपाठकान्ते उक्तेः तत्समानार्थत्वायात्र विज्ञानं दर्शनं अपरोक्षज्ञानमित्याश्रयणमुचितमिति, तन्न। प्रथमश्रुतविज्ञानानुरोधेन तत्राप्येतदेव विवक्षितमित्यवधारणात्। विशदज्ञाने दर्शनत्वोपचारात्। उक्तरीत्या मनननिदिध्यासने विना उपदेशानन्तरमेव साक्षात्कारायोगाच्च। यथा कालान्तरे साक्षात्कारो भवेत् तथा तदनुकूलं उपदेशरूपं प्रयोजकव्यापारं सनत्कुमारः करोतीत्यर्थसम्भवाच्च। न ह्युपदेशादेवेद दर्शनमिति वक्ता कश्चन शब्दोऽस्ति। अपेक्षितकर्मकारकपरं तच्छब्दं पञ्चम्यन्ततया योजयित्वा आत्मानमिति कर्माध्याहृत्य च पूर्वं श्रुतहानाश्रुतकल्पने अविगणय्य हठाद् दुर्व्याख्यातं श्रुतिवाक्यम्। अत्र तु तथा हठयोजनायापि पदं किञ्चिन्नास्ति। प्रयोजककर्तृव्यापारवाची णिजस्तीति चेन्न। तस्य परम्परासाधारण्यात्। पर्जन्यो जीवयति, कारीषोऽग्निरध्यापयतीति दर्शनात्। न च साक्षात्सम्भवे परम्पराश्रयणमन्याय्यमिति वाच्यम्। सम्भवाभावात्। शाब्दापरोक्षस्य लोकेऽप्रसिद्धत्वात्। दर्शनशब्दस्य हि चाक्षुषसाक्षात्कारो मुख्योऽर्थः। तस्येहासम्भवादर्थान्तरं लक्षणीयम्। तच्चार्थान्तरं यत्प्रसिद्धं तदेव भवितुमर्हति। न त्वप्रसिद्धम्। मुख्यार्थसम्बन्धाभावात्। प्रसिद्धं चार्थान्तरं साक्षादुपदेशजन्यं विशदज्ञानं वा मननादिपरम्पराजन्यसाक्षा-

स्कारो वा। अत शक्त्या लक्षणया वा दशिरत्र साक्षादुपदेशजन्य साक्षात्कारस्य न बाधक। तस्मादिदमपि वाक्य न भवता हस्तावलम्बं दातुमीष्टे।

यदपि चरमवाक्यस्य चरमज्ञानपरत्वे औचित्यमिति तत् क्लृप्तक्रमाविरोधे युज्येत। श्रवणमनननिदिध्यासनाना हि क्लृप्त क्रम। तत्र श्रवणानन्तर श्रयमाण दर्शनं श्रवणसमनन्तरोत्पन्नपरोक्षज्ञानरूप गौणं वा आश्रयणीयम्, व्यवधानसहं मुख्य वा। यदपि 'आचार्यवान् पुरुषो वेद' इत्यनेन आचार्योपदेशजज्ञानत्वमुक्त्वा तस्य तावदित्यादिना तज्ज्ञानादेव कैवल्योक्तेरपि शाब्दापरोक्षसिद्धिरिति तदपि न। उक्तयुक्तेरेव। आचार्यवत्त्व हि उपदेशसम्बन्धेनैव। तथा चाचार्याल्लब्धोपदेशः पुरुष मननानन्तर निदिध्यासनेन सद्वेद। तस्य शरीरपातानन्तर मोक्षो भवतीत्यर्थ। न हि वेदनाननुपद मुक्तिरिहोच्यत। तस्य न चिरमित्यश्रवणात्। अपि तु 'तावदेव चिर यावन्न विमोक्ष्ये' इति श्रवणात्। अतो वेदनान्तर शरीरान्निष्क्रमणावधि ब्रह्मसम्पत्तिरूपापवर्गे विलम्बप्रतिपादनेन भवत्सम्मतसद्योमुक्तिफलक साक्षात्कार इह न प्रतिपाद्यत इति स्फुटमवगमात् भवता न पर नानुकूल अपि त्वत्यन्त प्रतिकूलमिद वाक्यमिति विभाव्यम्।

वेदान्तविज्ञानसुनिश्चितार्था इत्यत्रापि शाब्दापरोक्षसिद्धिप्रत्याशा न कार्या। बहुधसाधारणमुपसर्गमात्रमाश्रित्य सर्वलोकविपरीत सिद्धान्तं स्थापयितुमुद्युक्तानाना भवतां वैचक्षण्य लोकोत्तरम्। विज्ञानमित्यत्र वीत्युपसर्गेण ज्ञाने विशेषविषयत्वस्य लाभात् सुपदेनापरोक्षत्वोक्तिरिति विप्रलम्भोक्तिः। सुपद हि स्वविशेष्य यादृश प्राप्तं तादृश एव तस्मिन् अतिशय कञ्चन बोधयितु शक्नोति। न तु जाति विपर्यासयितुम्। न हि सुगौरित्युक्ते गोत्वस्य गापदेनैव प्राप्तत्वात् सुपदमश्वत्व वक्तीति युक्तम्। वेदान्ताना विचारात्मक यद् विशिष्ट ज्ञानं तज्जनितः तत्त्वहितपुरुषार्था-

त्मकार्थविषयो निश्चयो हि परोक्षज्ञानात्मक एव। तत्रैव दार्ढ्यं सुपदेन बोध्यते। न च निश्चितपदेनैव दार्ढ्यस्य लाभात् सुपदं न तत्परमिति वाच्यम्। दार्ढ्ये तारतम्यस्य सत्त्वात्। सामान्यतो दार्ढ्यस्य निश्चितपदाल्लाभेऽपि तदतिशयस्य सुनोक्तेः। सुनिश्चितमिदमिति बहुलं व्यवहारो दृश्यते। न च साक्षात्कारपरः सः। एवमिमानि तावत् शाब्दापरोक्षे न प्रमाणानि।

नाप्यनुमानम्। यत्तु अपरोक्षत्वं तत्त्वमस्यादि वाक्यजन्यज्ञानवृत्ति अपरोक्षज्ञाननिष्ठात्यन्ताभावाप्रतियोगित्वात्, ज्ञानत्ववत्, इत्यनुमानमुक्त, तत् पूर्वप्रयुक्तसर्वानुमानवदेव दुरनुमानम्। अनेन हि अणुज्ञानवृत्तित्वमपि साधयितुं शक्यम्। न चायोग्यार्थज्ञानवृत्तित्वमुपाधिः। प्रकृतेऽपि शाब्दवृत्तित्वस्योपाधित्वात्। यत्तु तत्त्वमस्यादिवाक्यस्य अपरोक्षज्ञानाजनकत्वे अपरोक्षभ्रमनिवृत्तिर्न स्यादित्यनुकूलतर्कसत्त्वाद् विशेष इति, तन्न। प्रागेव निरस्तत्वात्। सन्निहितोऽर्थविषयो हि भ्रमः। तस्य परीक्षितप्रामाण्यतत्त्वावेदकश्रुतिजन्यपरोक्षज्ञानेनैव देहात्मैक्यभ्रमस्येव बाधसम्भवतीति। तदर्थमपरोक्षज्ञानमनपेक्षितमिति च। अन्यथा अस्मन्मतासिद्धेरितिवत् अस्य तर्कस्य परिहास्यत्वाच्च।

विमतः शब्दः नापरोक्षधीहेतुः, शब्दत्वात्, इति प्रतिसाधनं च। यत्तु दशमस्त्वमसीति वाक्ये व्यभिचार इति तन्न। किमिदं वाक्यं स्वात्मनि दशमत्वप्रत्यक्षवन्तं प्रति प्रयुक्तं अथवा तद्रहितं प्रति। आद्ये अनुवादकं वाक्यम्। एतज्जन्यं च ज्ञानं पूर्वजातप्रत्यक्षसमानविषयत्वात् प्रत्यक्षमिव भाति, न तु प्रत्यक्षमेव। तथात्वकल्पकाभावात्। अन्त्ये दशमत्वांशे परोक्षमेव ज्ञानम्। शब्दजन्यत्वात्। इन्द्रियसम्बन्धाभावात्।

एतेन यदुच्यते बहुलतमे तमसि लोचनहीनस्यापि तद्वाक्यादपरोक्षभ्रमनिवर्तकस्य दशमोऽस्मीत्यपरोक्षज्ञानस्य दर्शनात् यत्रापीन्द्रियसद्भावः तत्रापि तदप्रयोजकमेवेति, तन्निरस्तम्। परोक्षज्ञानस्यैव तत्र

जायमानत्वात्। अहमंशे प्रत्यक्षत्वेऽपि दशमत्वांशे परोक्षत्वात्। ज्वालै क्यप्रत्यक्षभ्रमस्यानुमानबाध्यत्वस्य भवतैव साधितत्वेन तदर्थं शाब्दापरोक्षस्याङ्गीकरणव्यर्थत्वाच्च। अन्धकारस्थितस्यान्धस्य दशमस्य स्वदशमत्वाभावभ्रमश्च दुर्वचः। इतरान् नव गणयित्वा स्वस्य दशमत्वं न जानातीति तदज्ञानमेव सम्भ्रमस्य हेतुः। न तु नाहं दशमोऽस्मीति भ्रमः। स्वकार्यदशमत्वापस्थितिसत्त्वासत्त्वाभ्यां व्याघातात्।

तं त्वौपनिषदं पुरुषं पृच्छामीत्युपनिषद्वाक्ये औपनिषदमित्यनेन शब्दस्य साक्षात्कारकरणत्वं बाध्यत इत्यपि शिलाधेनुदोहनम्। शास्त्रयोनित्वाधिकरणन्यायेन उपनिषदेकगम्यत्वं हि औपनिषदत्वम्। तत्र पुरुषसाक्षात्कारस्योपनिषत्करणकत्वं न लभ्यते। यतो वाचो निवर्तन्त इत्येतच्च ब्रह्मणो वाच्यत्वनिषेधपरमिति पूर्वमेवोक्तम्। अत "अथ निषेधः शक्त्या बोधकत्वाभावपरः। औपनिषदमिति विधिस्तु वृत्त्यन्तरेण साक्षात्कार्यत्वपर" इति व्यवस्थाकरणं जुगुप्सावहम्। 'चकितम भिधत्ते श्रुतिरपि' इतीदं न शब्दाविषयम्। अपि तु महिम्नोऽपरिच्छेद्यत्वपरम्।

मनसैवानुद्रष्टव्यम्, मनसा तु विशुद्धेन, इत्यादिभिः श्रावितं मनसो ब्रह्मदर्शनकरणत्वं दुरपह्नवम्। 'यन्मनसा न मनुते' इति न मनसः करणत्वनिषेधपरम्। किन्तु ब्रह्मणो दुर्ग्रहत्वपरम्। अन्यथा 'मन्तव्यः' इत्यस्यानुपपत्तेः। यत्तु मनसः करणत्वे अधिककल्पना। शब्दस्य करणत्वे स्वल्पकल्पनेति विशेष इति, तदपि न। मनसोऽन्तःकरणत्वेन सुप्रसिद्धत्वात्। मनःषष्ठानीन्द्रियाणि, इन्द्रियाणि दशैकञ्च, इति स्मृतेश्च। करणत्वस्य तृतीयया विभक्त्या बोधितत्वात् ज्ञानेन्द्रियत्वेनैव गणितत्वाच्च मनोविषये न किञ्चित् कल्पनीयम्। शब्दस्य तु अपरोक्षज्ञानकरणत्वं अदृष्टमश्रुतं कल्पनीयमिति इदमेवानादरणीयम्। सत् सिद्धं न भवत्यसिद्धम्। नाप्येवं साक्षात्कारो मुक्तिसाधनम्। न शब्दस्य

त भवत्सम्मता मुक्तिर्न मुक्तिरिति तत्त्वमिदं प्रतिष्ठापयितुम् ।
त्यात्मस्वरूपस्य न मुक्तित्वम् । न चोपलक्षणासाध्यत्वेन
त्वम् । चोद्यस्यासमाधानात् । उपलक्षितमात्मस्वरूपं मुक्ति-
ते । तस्यासाध्यत्वं चोद्यते । तदभ्युपगम्यैव उपलक्षणसाध्य-
ते । इष्टमेवेदं परेषाम् । तथा च साध्यत्वाभिमता मुक्तिः
स्वरूपा न युक्ताऽभ्युपगन्तुमिति परेषामाक्षेपस्तिष्ठत्येव । न
मुक्तेः साध्यत्वं, येन घटाकाशोत्पत्तिन्यायेन साध्योपलक्षणा-
साध्यत्वमित्यूरीक्रियेत । तदनयाऽप्यनुपपत्त्या आत्मस्वरूपस्य
धानं न सङ्गच्छते ।

१ कण्ठस्थितकाञ्चनन्यायेन प्राप्यत्वात् साध्यत्वमिति, तद-
वैषम्यात् । तत्र हि पुरुषः स्वकण्ठस्थितं काञ्चनं विस्मृत्य
न्या परिभ्रान्तः परैः प्रतिबोधितः पूर्वमेव प्राप्तमपि तदानीं प्राप्त-
ते । प्रकृते क एवं मन्यते ।—'नाहं प्रपञ्चः । अयमहमस्मि'
त्मनोऽज्ञातत्वात् । तस्मादनयाऽपि विधया साध्यत्वं नास्ति ।
उपलक्षणभूतायाश्चरमवृत्तेरपि साध्यत्वं भवद्भिरेव निराकृत
त्वाभावेन विधेयत्वं निराकुर्वद्भिः । तदनुकूलव्यापारस्य साध्य-
था अपि साध्यत्वमिति तर्हि आज्यावेक्षणवत् तदेव साध्यत्व-
स्या विधेयत्वमस्तु । तथा च श्रवणमप्यङ्गमेवास्तु, नाङ्गि ।
३ अविद्यातो मुक्तिर्हि मुख्यो मुक्तिशब्दार्थः । तेनाविद्यानिवृत्तिरेव
रे निवेश्या । न तु चरमवृत्तिः । मुक्तिसाधनत्वात् । न हि
धनत्वे ... त्वम् । किञ्च अविद्यानिवृत्तेर्मुक्तित्वे को दोषः ।

# अथ चतुर्थः परिच्छेदः

—— ० ——

## १ मुक्तिः ।

अथ मुक्तिविमर्शः । तत्राद्वैतमते बन्ध एवानुपपन्न इत्याचाम । तथा सति मुक्तेः कः प्रसङ्गः । जगदुपादानत्वेनाभिमता अविद्या जडा । न तस्याश्चेतनानधिष्ठिताया प्रवृत्तिः सम्भवति । स्वरूपतो मिथ्यात्वाच्च शुक्तिरजतादेरिव नितरां प्रवृत्तिशून्यता । चैतन्यं च निर्विकारम् । अतस्तस्यापि न प्रवृत्तिः । कथं सृष्टिर्बन्धो वा । न चास्या अनुपपत्तेरनादित्वेन परिहारः । यदा बन्धाप्रक्रम इत्यादेरस्य तेन परिहर्तव्यत्वात् । तेजस्तिमिरयोः कथं सम्पर्क इति चोद्यस्यानादित्वेन न परिहारः । न च शुद्धं यद्यपि प्रवृत्तिशून्यं तथाप्युपहितं प्रवृत्तिधर्मीति वाच्यम् । उपधानस्यैवान्यतरप्रवृत्तिसमन्तरादुपपन्नत्वात् । उभयोरपि च प्रवृत्त्यक्षमत्वात् । उपहितेऽपि प्रवृत्तिहेतुर्विशेषो नास्ति । न हि दीपगर्भस्य अथवा आकाशगर्भस्य घटस्य तेन विशेषेण प्रवृत्तिर्भवति ।

अस्य चोद्यस्य यैः कैश्चिदद्वैतिभिरुदीरितः ।
नाद्यावधि परीहारो घटते न कदाचन ॥

इदं संक्षिप्तमुक्तं प्राक् । एवं बन्धस्यैवायोगात् ततो मुक्तिवार्तायां नास्त्यवसरः । का च मुक्तिः ? अविद्यानिवृत्तिः । सा च चरमवृत्त्युपलक्षित आत्मैवेति चेत् नैतद्युक्तम् । मुक्तो ह्यात्मा । न तु मुक्तिः । 'मुक्तः प्रतिज्ञानात्' 'आत्मा प्रकरणात्' इति भगवता बादरायणेन सूत्रितत्वात् । यथा च मुक्तस्य मुक्तिरभिधानं दुःसिद्धान्तपरित्राणनिर्बन्धकृतमिति

इदमेव पर्याप्तं भवत्सम्मता मुक्तिर्न मुक्तिरिति तत्त्वमिदं प्रतिष्ठापयितुम् । असाध्यत्वादात्मस्वरूपस्य न मुक्तित्वम् । न चोपलक्षणसाध्यत्वेन तस्य साध्यत्वम् । चोद्यस्यासमाधानात् । उपलक्षितमात्मस्वरूपं मुक्तिरित्यभ्युपेयते । तस्यासाध्यत्वं चोद्यते । तदभ्युपगम्यैव उपलक्षणसाध्यत्वमात्रमुच्यते । इष्टमेवेदं परेषाम् । तथा च साध्यत्वाभिमता मुक्तिः असाध्यात्मस्वरूपा न युक्ताऽभ्युपगन्तुमिति परेषामाक्षेपस्तिष्ठत्यैव । न चौपचारिकं मुक्तेः साध्यत्वं, येन घटाकाशोत्पत्तिन्यायेन साध्योपलक्षणोपलक्षितत्वं साध्यत्वमित्यूरीक्रियेत । तदनयाऽप्यनुपपत्त्या आत्मस्वरूपस्य मुक्तित्वाभिधानं न सङ्गच्छते ।

यदपि कण्ठस्थितकाञ्चनन्यायेन प्राप्यत्वात् साध्यत्वमिति, तदप्ययुक्तम् । वैषम्यात् । तत्र हि पुरुषः स्वकण्ठस्थितं काञ्चनं विस्मृत्य विनाशबुद्ध्या परिभ्रान्तः परैः प्रतिबोधितः पूर्वमेव प्राप्तमपि तदानीं प्राप्तमिव मन्यते । प्रकृते क एवं मन्यते ।—'नाहं प्रपञ्चः । अयमहमस्मि' इति । आत्मनोऽज्ञातत्वात् । तस्मादनयाऽपि विधया साध्यत्वं नास्ति । अपि च उपलक्षणभूतायाश्चरमवृत्तेरपि साध्यत्वं भवद्भिरेव निराकृतं पुरुषतन्त्रत्वाभावेन विधेयत्वं निराकुर्वद्भिः । तदनुकूलव्यापारस्य साध्यत्वात् तस्या अपि साध्यत्वमिति तर्हि आज्यावेक्षणवत् तदेव साध्यत्वमादाय तस्या विधेयत्वमस्तु । तथा च श्रवणमप्यङ्गमेवास्तु, नाङ्गि ।

किञ्च अविद्यातो मुक्तिर्हि मुख्यो मुक्तिशब्दार्थः । तेनाविद्यानिवृत्तिरेव मुक्तिशरीरे निवेश्या । न तु चरमवृत्तिः । मुक्तिसाधनत्वात् । न हि साध्यसाधनयोरैक्यं युक्तम् । किञ्च अविद्यानिवृत्तेर्मुक्तित्वे को दोषः । तस्या आत्मस्वरूपरूपत्वेऽसाध्यत्वेन तदुद्देशेन प्रवृत्त्यसम्भवः । तदतिरिक्तायाः सत्यत्वे अद्वैतहानिः । मिथ्यात्वे मुक्तेरविद्यापरिणामत्वमिति चेत् तर्हि चरमवृत्त्यनन्तरं अविद्यानिवृत्तिर्भवति वा न वा । आद्ये उक्ता दोषास्तदवस्थाः । अन्त्ये मुक्तिरेव नास्ति । अविद्याऽनुवृत्तेः ।

ननु अविद्यानिवृत्तिस्तद्विरोधिचरमवृत्तिरूपैवेति न काचिदनुपपत्तिरिति चेन्न । उक्तोत्तरत्वात् । साधनरूपत्वाच्च साध्यात्मकत्व युक्तमिति ह्युक्तम् । अन्यथा चरमवृत्तौ जातायामप्यविद्या न निवर्तेत । जातायास्तस्या एव तन्निवृत्तित्वात् । न ह्युत्पन्ना पुनरुत्पाद्यते । चरमवृत्त्युत्पत्त्यनन्तर अविद्याध्वस । अथ तदनतिरिक्तश्चेत् पश्चादुत्पन्नो न स्यात् । पश्चादुत्पन्नश्च तदात्मको न भवितुमर्हति ।

अन्वयमुत्पद्यमानः तदात्मैवात्मनश्व इति चेत् कोऽभिप्राय ? किं तत्सजाती यव्यक्त्यन्तरात्मेति उत तद्व्यक्त्यात्मैवेति । नाद्य । अनभ्युपगमात् । नान्त्यः । उक्तव्यसम्भवदोषतादवस्थ्यात् । न हि सम्भवति पूर्वमुत्पन्ना व्यक्तिः पुनरप्युत्पद्यत इति । न खलु कश्चिदावक्षीत उत्तरक्षणोत्पन्नज्ञानध्वस पूर्वक्षणोत्पन्नज्ञानरूप इति । ज्वरनिवृत्तिरौषध रूपेति वा । यद्यप्यभावस्य भावरूपत्वमिष्यते तथाऽपि कालभेदे नेद सम्भवि । न च नैयायिकै कैश्चित् उत्तरोत्पन्नसयोगध्वसस्य पूर्वोत्पन्न विभागरूपत्वमङ्गीकृतम् । तद्वदत्र कृतेऽपीति वाच्यम् । तस्याप्युक्तरीत्याऽ युक्तत्वात । अन्यथा लाघवमात्रनिष्ठैः घटपटादीनामप्यन्योन्यात्मकत्वा ङ्गीकारापत्तेः । वस्तुतस्तु सयोगनाशातिरिक्तो विभागो नेष्टव्य इति स्पष्ट तत्त्वमुक्ताकलापे । तस्मादविद्यानिवृत्त्याकारा चरमवृत्तिर्मुक्ति- रिति पक्षो न घटते ।

किञ्च चरमवृत्तिनिवृत्तिर्यथाऽधिकरणस्वरूपा तथा अविद्यानिवृत्ति- रपि कुतो न भवति । साध्यत्वानुपपत्तेरिति चेत् किमस्मदिच्छानुसारेण वस्तुस्वभावविपर्ययो भवेत्, येनैवमुच्यते । किं नाम उष्णो न हस्तमात्र इति वह्निः शीतोऽङ्गीक्रियेत । प्रतियोग्यधिकरणरूपो वा ध्वस, तत्स मानाधिकरणभावान्तररूपो वा, अतिरिक्तो वेति त्रयः पक्षाः । तत्राद्याव लम्बने साध्यत्वानुपपत्तिः । द्वितीयः तत्समानाधिकरणभावान्तराभावा दसम्भवी । अविद्यानिवृत्त्याश्रयात्मनोऽद्वितीयत्वात । तृतीये त्वद्वैतभङ्गः ।

एतद्धियाऽविद्याध्वंसस्य चरमवृत्तिरूपत्वाश्रयणं साध्यसाधनभावविरोधादनुपपन्नम्। सकललोकध्वंसः तदन्तर्गतैकद्व्यणुकमात्ररूप इतिवदुपहास्यं च।

अथ यच्चरमवृत्त्युपलक्षितत्वमात्मन उच्यते तदपि विमर्शनीयम्। अनेन आत्मनि कश्चन विशेषो बोध्यते न वा। आद्ये तस्य सत्यत्वे अद्वैतहानिः। मिथ्यात्वे मुक्तावप्यविद्यानुवृत्तिः। अन्त्ये आत्मस्वरूपं मुक्तिरित्येतावदुक्तं स्यात्। तस्य पूर्वमपि सत्त्वान्मुक्तिसंसारयोरविशेषः। उपलक्षितत्वं च विशेषणं वा उपलक्षणं वा। नाद्यः। तेनैव सविशेषत्वापत्तेः। नान्त्यः। उक्तरीत्याऽविशेषप्रसङ्गात्।

"एवमद्वैतसिद्धान्तरक्षाबन्धधुरन्धरैः।
इयं मुक्तिरिति प्रौढैरपि वक्तुं न शक्यते॥"

## २. निवर्तकम्।

एवं वस्तुस्थितौ सत्यामपि सामान्यतः अविद्यानिवृत्तिर्मुक्तिरिति शक्यं प्रतिपत्तुम्। तत्राविद्याया निवर्तकं प्रतिपादयन् वृत्त्युपारूढचितो वा चित्प्रतिबिम्बधारिण्या वृत्तेर्वा निवर्तकत्वमित्याह। नेदमुपपद्यते। विशेषणविशेष्यभावभेदेऽपि अत्र स्थितं द्वयमेव चिच्च वृत्तिश्च। अत्र विषयः केवलं चिन्मात्रमिति मूलकारः। व्याख्याता तु वृत्तेरपि विषयत्वमस्त्येवेत्येतमपि पक्षं दर्शयति। अत्र विषयी कः। नोपाधिमात्रम्। जडत्वात्। न चिन्मात्रम्। सकलविषयविरक्तत्वात्। नोपहितम्। उभयानतिरेकात्। एवं ज्ञानस्यैवाभावे ज्ञातुः कथा दूरे। तथा च वृत्तिरियं कथमविद्यानिवर्तिका। यो हि "अहं ब्राह्मणः जानामि करोमि भुञ्जे" इति पूर्वमनुभूतवान् स चेत् "शुद्धचैतन्यरूपोऽहम्। न मद्व्यतिरिक्तं किञ्चिदस्ति" इति जानीयात् तस्य पूर्वानुभूतः सर्वो मिथ्याविषयो निवर्तेत। लोके हि यः शुक्तिरजतं पश्यति स पश्चात् शुक्तिं तत्त्वेन पश्यन् अनेन

यथार्थानुभवेन स्वस्य पूर्वस्मिन्न प्रत्ययस्य भ्रमत्वेनावस्थात। भातं रजतं च मिथ्यात्वेन। यो यथार्थानुभवः शुक्तिमात्रविषयः न तु पूर्वं रजतत्वेन गृह्यते तत्र रजतत्वाभावावगाही तेन पूर्वभातरजतमिथ्यात्वं न सिद्ध्यात। यत्र सत्यमेव रजतं येन दृष्टं तत्रैव पश्चात् रजतस्थाने परमार्थशुक्तिं पश्यतस्तस्य पूर्वानुभवस्य वा तद्विषयस्य वा बाधा भावात्। मिथ्यारजतदर्शनानन्तरमपि कालान्तरे तामेव शुक्तिं शुक्तित्वेन पश्यत इयमेव शुक्तिः पूर्वं मे रजतत्वेनाभादिति स्मरणाभावे पूर्वानुभवस्य वा तद्विषयस्य वा बाधाभावाच्च। तस्मात् शुक्तिं तत्त्वेन पश्यन् इदमेव वस्तु पूर्वं मे रजतत्वेनाभासीदिति योऽनुसन्धत्ते तस्यैव पश्चात्तन यथार्थज्ञानेन प्राक्तनाज्ञाननिवृत्तिर्भवतीति निश्चयमेतत्। तथैवात्रापि यदि मुमुक्षुः निदिध्यासनाय यथावस्थितमात्मानं पश्यन् 'इयन्तं कालमहमात्मानमन्यथा यथा गृहीतवानासम्। इदं तु मे पारमार्थिकं स्वरूपमि'त्यनुसन्दधीत तर्हि तस्यानेन यथार्थज्ञानेन पूर्वाज्ञाननिवृत्तिर्भवेत्। न च कश्चिदस्ति। तत्र यदि शुद्धचिन्मात्रविषया काचन वृत्तिर्भवति, कामं भवतु। तेन प्रपञ्चनिवृत्तिः कथं भवेत्। प्राक्तनप्रपञ्चप्रत्ययस्य कालान्तरभवस्य शुद्धचिन्मात्रप्रत्ययस्य च कः सम्बन्धः, को विरोधः, येन निवर्त्यनिवर्तकभावो भवेत्। न हि देवदत्तस्य स्वाप्नमन्यद्वा केवलस्वदेहदर्शनं तद्दृष्टयज्ञदत्तहस्त्यादीनां निवृत्तिं कुर्यात्।

किञ्च ब्रह्मज्ञानान्मुक्तिं वदन्ति श्रुतयः 'ब्रह्मविदाप्नोति परम्' 'ब्रह्म वेद ब्रह्मैव भवती'त्याद्याः। तत्र ब्रह्म ज्ञेयमन्यत्, तद्विषयं ज्ञानमन्यत् प्रतीयते। केवला वृत्तिर्न ज्ञानम्। नापि केवला चित्। अत एव नोपाहिताऽपि। विशेषाभावात्। आत्मधर्मः सविषयं ज्ञानं लोके प्रसिद्धम्। लोकप्रसिद्ध एव वैदिकशब्दार्थः। न चैवंरूपं ज्ञानं भवद्भिरिष्यते। तस्मात् केवलं पारिभाषिकं भवत्सम्मतं ज्ञानम्। तथा च श्रुतिसिद्धमोक्ष-

साधनं न भवति यद्भवद्भिरुच्यते । तद्विरुद्धमेव तत् । अविद्यापरिणामत्वात् ।

किञ्चोपादेयैकदेशस्य कृत्स्नोपादाननिवर्तकत्वं कुत्र दृष्टम् । 'क्वापि न । श्रुतिबलात्तु कल्प्यते" इति चेन्न । अविद्याया अविद्यानाशकत्वस्य क्वाप्यश्रवणात् । 'माया तु प्रकृतिं विद्यात्' इत्यनेन मायाशब्दवाच्या पारमार्थिकी त्रिगुणा प्रकृतिरिति बोधनात् । 'तरति शोकमात्मवित्' इत्यनेन आत्मा, तस्य वेदनं, वेदिता, इति त्रयमुक्त्वा वेदिता वेदनवशात् शोकं तरति लङ्घते जहातीति वेदनफलं शोकतरणमुच्यते, तत्त्वविद्यया अविद्यातरणम् । 'सोऽविद्याग्रन्थिं विकिरति' इत्यत्रापि एतद्यो वेदेत्युक्तो ब्रह्मवित् ब्रह्मविद्यामहिम्ना ग्रन्थिवत् दुर्मोचा अविद्या विद्येतरत् कर्म पुण्यपापरूपं विकिरति भिनत्ति निरस्यतीत्युक्तेः नाविद्याया अविद्यानिवर्तकत्वपरत्वं प्रसज्यते । 'तदा विद्वान् पुण्यपापे विधूये'ति स्पष्टार्थश्रुत्यन्तरसंवादिनी ह्येषा श्रुतिः । तस्मान्मुक्तिवदेव तत्साधनमपि भवता दुःस्थितम् । 'अविद्यया मृत्युं तीर्त्वा' इत्यत्र अविद्यया विद्येतरेण कर्मणा मृत्युं विद्योत्पत्तिप्रतिबन्धकं कर्म तीर्त्वा निरस्येत्ययमर्थ उच्यते ।

## ३. पुरुषार्थत्वम् ।

अद्वैतिसम्मताया मुक्तेः पुरुषार्थत्वं दुर्घटमेव । निरतिशयानन्दानुभवरूपत्वे हि तत् स्यात् । न च तेषां मते आनन्दो वा तदनुभवो वा अनुभविता वा मुक्तावस्ति । तथा सति पुरुषार्थत्वं कथं भवेत् । ननु ब्रह्म सुखात्मकमेवेति चेत् ततः किम् । न हि मुमुक्षोः स्वभोग्यत्वं विना किमपि वस्तु स्वयं सुखात्मकमित्येतावता पुरुषार्थतां भजेत । 'बद्धोऽहमिदानीं अत्यन्तं दुःखी भवामि । सर्वं दुःखमवधूय नित्यनिरतिशयानन्दभाग् भवेयम्" इति हि सर्वः कामयते । न चास्याः कामनाया विषयसिद्धिः अद्वैतमुक्तौ भवति ।

अत्राह—लोके सुखस्य पुरुषार्थता नापरकीयत्वेन अथवा स्वकी-

यत्वेन। किन्तु साक्षात्क्रियमाणत्वेन। इदं च मुक्तावप्यस्तीति निषेधात् पुरुषार्थत्वमिति। तन्न। सुखसाक्षात्कारस्याप्यभावात्। न हि शुद्धचैतन्य तदा स्वात्मकं स्ववृत्तिं वा सुखं साक्षात्करोति। ज्ञातृत्वाभावात्। सुखत्वं च नास्ति। निर्विशेषत्वात्। यत्तु सुखत्वमपि परित्यज्य साक्षात्क्रियमाणत्वेनैव पुरुषार्थत्वमिति, तद् दुःखेऽतिप्रसक्तम्। न हि दुःखस्य सतो न साक्षात्कारः। अत एवानुकूलतया वेद्यत्वं सुखलक्षणमाहुः।

यत्तूक्तं तु सुखस्य स्वकीयत्वेनैव पुमर्थत्वम्। न हि सुखसाक्षात्कारो भवत्विति परस्यापीच्छा दृष्टा घटते वा। स्वप्रवृत्त्यनापत्तेः। सम्बन्धस्य अपेक्षणीयसन्निधिकत्वाभिधानं साहसमात्रम्। व्याख्यातुर्ब्रह्मानन्दस्य तु—'स्वरूपसुखानुभवो जीवन्मुक्तस्यास्ति। तस्य पुमर्थताऽविहता। परममुक्तौ पुमर्थता नेष्यत एव। तदानीं तस्याव्यवहारेणानुपयोगात्।" इति मतम्।

अत साधु कृतं मुक्तेरद्भिरपुमर्थताम्।
यत्परत्वेन वेदान्ता भवन्त्यत्यन्तमादृताः ॥

मुक्तिकाले व्यवहारोऽस्तु मा वा। अथ पुरुषार्थत्वं मोक्षस्य कृत्वा वा तदर्थं प्रेक्षावन्तः प्रवर्तन्ते अकृत्वा वा। न तावदन्त्यः। प्रत्यक्षविरोधात्। आद्ये तेषां तत्र पुमर्थत्वधीः प्रमा वा अप्रमा वा। प्रथमे कल्पे मुक्तावपि पुरुषार्थत्व मनुवर्तत इत्यभ्युपगतं भवे त। द्वितीये फलसिद्धिर्न स्यात्। भ्रान्तप्रवृत्तित्वात्। शास्त्राणि चाप्रमाणानि स्युः। भ्रमहेतुत्वात्। प्रतारकत्वाच्च।

## ४ मोक्षभाक्।

मोक्षरूपपुरुषार्थभाक् च भवन्मते कोऽपि नास्ति। अहमर्थस्य बद्धस्य नष्टत्वात्। अवशिष्टस्य शुद्धचितः कदापि बन्धाभावात्। नित्यनिर्विकारत्वात्। अहमर्थगतश्चिदंश मुक्तिकाले भया पुमर्थभागित्यनेन न निर्दिष्टुं भवति। चिदंशस्य नित्यशुद्धबुद्धमुक्तस्वभावस्य पूर्वमपि अपुरुषार्थान्वयाभावेन पुरुषार्थापेक्षाविरहात्। यत्तु ज्ञातृत्वेन कर्तृत्वेन भोक्तृत्वेन

चाभिमतः अचिदंशः तस्येदानीमभावात्। न ह्याकाशस्य घटेन बन्धोऽपुरुषार्थः, तस्मिन् भिन्ने च बन्धनिवृत्त्या मुक्तिः पुरुषार्थश्च इष्येते। ततः को विशेषः प्रकृते।

किञ्चायं चिदंशः नानुभविता। अनुभवानाश्रयत्वात्। नानुभाव्यः। अनुभवान्तरविषयत्वाभावात्। स्वग्राह्यत्वानभ्युपगमाच्च। नानुभवः। विषयित्वाभावात्। एवं सति चिदंशे मुक्तिकालान्वयिन प्रति मुक्तौ पुरुषार्थस्य सम्भव इति किमभिप्रत्योच्यते। अत्यन्तनिवृत्तदुःखस्य आत्मनः नित्यनिरतिशयानन्दानुभवो हि मोक्षः। मोक्षस्य पुरुषार्थत्वसम्बन्धो नास्तीति वदन् लघुचन्द्रिकाकारः आर्जवशाली।

यदपि 'आत्मनः सुखमात्रत्वे सुखप्रकाशाभावेनापुमर्थत्वम्। उभयात्मकत्वे चाखण्डार्थत्वहानिः"
इति चोद्य परिहरता मूलकृतोक्तम्—

"सुखप्रकाशयोरेकात्मरूपतया उभयत्वस्यैवाभावात्। न चार्थभेदाभावे सहप्रयोगायोगः। अविद्याकल्पितदुःखजडात्मकत्वरूपव्यावर्त्यभेदेन तदुपपत्तेः"

इति, तदप्यरम्यम्। अपुरुषार्थत्वापादकस्य सुखप्रकाशव्यतिरेकस्यैव एवमभ्युपगतत्वात्। अविद्याकल्पितदुःखजडात्मकत्वव्यावृत्तिमात्ररूपे सुखत्वप्रकाशत्वे, न तु धर्मौ आत्मनि वर्तमानौ, इति ह्युच्यते। तथा च न सुखमस्ति, न तस्य प्रकाशोऽस्ति, इत्येव पर्यवस्यति। तथा च स्थितमपुरुषार्थत्वं मोक्षस्य। तत्र "तस्मात् स्वप्रकाशचिदभिन्नं सुखं पुमर्थः।" इत्युपसंहारो न युज्यते। इदमप्युक्तं ब्रह्मानन्देन—

"तथा च कैवल्ये सुखत्वाद्यसंसर्गेऽपि न क्षतिः।"

इति।

ब्रह्मानन्देन वदता ह्येवमार्जवशोभिना।
महान् खण्डनकाराणां भारोऽतीव लघूकृतः॥

किन्तु

नानन्दानुभवो मोक्षो न तस्य पुरुषार्थता ।
इति वेदान्तचिन्तायाः श्लाघ्यं खलु फलोदयम् ॥
मोक्षो न सिध्यति न तस्य पुमर्थभावो
मुक्तो न सिध्यति न तस्य सुखोपलम्भः ।
अद्वैतवर्त्मनि यतस्तदतस्त्यजन्त
सम्यक्समाश्रयत कञ्चन वेदमार्गम् ॥

## ५ जीवन्मुक्तिः ।

अथ यज्जीवन्मुक्तिरिति काञ्चिदवस्थामङ्गीकृत्य तत्समर्थनाय यथाशीलं बह्वीं कुकल्पनां कुर्वन्ति तत्र ब्रूमः । जीवन्मुक्तो नाम तत्त्वज्ञानेन निवृत्ताविद्योऽप्यनुवृत्तदेहादिप्रतिभास इति वदन्ति । भ्रमस्थले यथार्थज्ञानोत्पत्त्यनन्तरं भ्रमविषयप्रतिभासो नानुवर्तते । न हि शुक्तिप्रत्यक्षप्रमानन्तरं रजतप्रतीत्यनुवृत्तिर्दृष्टा । प्रबुद्धस्य वा स्वाप्नार्थप्रतिभासानुवृत्तिः । एवं यदि भ्रमसिद्धः प्रपञ्चः तर्हि तत्त्वज्ञाने जाते पुनः प्रपञ्चप्रतिभासो नैव भवितुमर्हति । अथायं भवति, तर्हि तत्त्वज्ञानं नोत्पन्नमिति निश्चेतव्यम् । कुतस्तु खलूत्पन्नतत्त्वज्ञानस्य अत एव निरस्ताविद्यस्य भ्रमसिद्धरज्जुसर्पादितुल्यदेहादिप्रतिभासानुवृत्तिः । तत्त्वज्ञानाधीनाज्ञाननिवृत्त्यनन्तरमपि देहानुवृत्तिदर्शनात् नाविद्यासिद्धं देहादिकमिति तु प्रत्येतव्यम् । अभिनिविष्टैस्तु उत्तरोत्तरं अयुक्तमेव बहूच्यते ।

तथा हि । "निवृत्तसर्पभ्रमस्यापि संस्कारात् भयकम्पानुवृत्तिवत् दण्डसंयोगनाशेऽपि चक्रभ्रमणवच्च संस्कारानुवृत्तेरविद्यानिवृत्तावपि तत्कार्यानुवृत्तिसम्भवात्", इति यदुक्तं तत्र दृष्टान्तावुभावप्यसमौ । सर्पभ्रमजनितं भयकम्पादि न हि सर्पवद् भ्रमसिद्धम् । सर्पभ्रमेण सत्येन कारणेन सत्यमेव भयाद्युत्पन्नम् । तत्संस्कारस्य सत्यस्य वृत्तौ तत्कार्यमपि युक्तं यदनुवर्तते । भ्रमविषयसर्पप्रतीतिस्तु पुनर्नैव भवति ।

एव चक्रभ्रमणस्थलेऽपि यथोचितं द्रष्टव्यम्। प्रकृते तु न तथा। देहादेरपि रज्जुसर्पादिवद् भ्रममात्रसिद्धत्वाभ्युपगमात्। मूलकारणभ्रमनिवृत्तौ पुनः प्रतीत्ययोग्यत्वात्।

नन्वविद्यायां नष्टायामपि तत्संस्कारोऽनुवर्तमानः देहादिप्रतिभासम नुवर्तयतीति चेन्न। विश्वमिथ्यात्वप्रयोजकस्य दृश्यत्वस्य उक्तमिथ्यात्व साधारण्यात् यथा मिथ्यात्वमपि मिथ्येत्युच्यते तथा अविद्यासंस्कारस्याप्यविद्यावदेव मिथ्यात्वेन तत्त्वज्ञानेन नाशावश्यम्भावेन अनुवृत्त्यसम्भवात्। अन्यथा सत्यत्वस्यापरिहार्यत्वेन अद्वैतहान्यापत्तेः। अविद्यासंस्कारे प्रमाणाभावाच्च। ज्ञानक्रिययोरेव हि संस्कारजनकत्वम्। यत्तु निस्सारितपुष्पाया सम्पुटिकाया पुष्पवासना दृश्यत इति, तत् सत्य तथा। वासना हि तत्र परमतः गन्धापरपर्याय। न तु स्वजनकसजातीयकार्यान्तरजनकः संस्कारः। अयं तु क्रियाज्ञानयोरेव।

अविद्याया नष्टाया तदुपादेयस्य संस्कारस्य स्थित्ययोगाच्च न तदधीनो देहादिप्रतिभास सम्भवति। यत्तु विनश्यदवस्थस्य समवायिकारण विना स्थितिर्दृश्यत इति, तन्न। समवायिकारणनाशः तत्समवेतकार्यनाशे कारणम्। अतः कारणनाशोत्पत्तिक्षणानन्तरक्षण एव कार्यनाशो वक्तव्यः। तस्मात् कारणनाशक्षणे अगत्या कार्यमस्तीत्यङ्गीकुर्वन्ति नैयायिकाः। असत्कार्यवादिनामेषा इदमपरिहार्यं भवति। सत्कार्यवादिना तु वेदान्तिनां तत् सर्वथा निरसनीयम्। नैवाभ्युपगमार्हम्। अभ्युपगमवादेऽपि तद्वत् प्रकृतेऽपि अविद्यानाशः प्रथमक्षणे। तदुपादेयसर्वकार्यनाशोऽनन्तरक्षण इति काममस्तु। यावद्देहपात संस्कारानुवृत्तिरिति तु कथमेतत्।

ननु प्रारब्धकर्मावसानपर्यन्त देहादिप्रतिभासोऽपरिहार्यः। अतस्तदुपपत्तये संस्कारस्यापि तावत्काल स्थितेरावश्यकतया तन्नाशं प्रति प्रारब्धकर्मणः प्रतिबन्धकत्वमिष्यते। एवं च प्रतिबन्धकाभावविशिष्ट-

हेतोस्तावत्कालमसत्त्वात् सत्कारानुवृत्तिरुपपन्नेति चेत्, प्रारब्धं कर्म अविद्यानाशं प्रत्येव कुतो न प्रतिबन्धकम्। अविद्यानाशमुत्पन्नं कृत्वा तत्संस्कारास्तित्वं, तन्नाशस्य प्रतिबन्ध्यत्वं च कुत कल्प्यते। जीवन्मुक्तिर्न सिद्धयतीति चेत् अप्रामाणिकी सा कामं न सिद्धयतु। का हानिः। आह च भगवती श्रुतिः 'न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति। अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः' इति। अत एव जीवन्मुक्तिरिति व्याहतम्। जीवतो मुक्त्यभावात्। मुक्तस्य जीवनाभावात्। वस्तुतस्तु प्रारब्धस्याप्याविद्यकत्वाविशेषात् तत्त्वज्ञानोदयस्यनन्तरं स्थितिर्दुर्लभा कुतस्तस्यान्यस्थितिप्रयोजकत्वम्।

एतेन तत्त्वे ज्ञातेऽपि द्विचन्द्रादिवद् बाधितानुवृत्तिसम्भव इति निरस्तम्। तत्त्वज्ञानाबाध्यस्य वास्तवस्य दोषस्य तत्र सत्त्वात्। इह तदसम्भवात्। ननु तिमिरादिदोषोऽपि न वास्तव इति चेत् तदन्यत्। चन्द्रद्वित्वबाधकेन तस्य न बाध इति तु सम्प्रतिपन्नम्। न च प्रकृते कृत्स्नाविद्याबाधकेन तत्त्वसाक्षात्कारेणाबाध्यं किञ्चिदस्ति। तत्सत्त्वे ब्रह्मवत् तस्य सत्यत्वापत्तेः। बाधो वा अबाधो वेति द्वावेव पक्षौ। न तु विलम्बेन बाध इति पक्षान्तरसम्भवः। विलम्बकारणस्य सर्वथा दुर्वचत्वात्।

नूनमतिसङ्कटामिमां स्थितिं जानाति तत्र भवान् मधुसूदनसरस्वती। अतः पक्षान्तरमाह—'यद्वा अविद्यालेशानुवृत्त्या देहाद्यनुवृत्ति' इति। लेशो नाम आकारः। अनेकाकारा अविद्या। तस्या निवृत्तावपि तदीय एक आकारोऽनुवर्तते। स हेतुर्देहाद्यनुवृत्तेरिति मन्यते। इदमपि पूर्ववदेवानुपपन्नम्। आकारिनाशात्तदाकारः कथमनुवर्तेत। न च व्यक्तिनाशात्पर जातिर्यथा तथेति वाच्यम्। व्यक्तिव्यतिरिक्तत्वात् नित्यत्वाच्च जातेः व्यक्तिनाशेऽप्यनुवृत्तिर्युक्ता। इह तु आकारस्याप्यविद्यान्तर्गतत्वात् तया सह नाशावश्यम्भावेनानुवृत्तिर्न घटते।

अथान्यदाह—लेशः शक्तिः। अविद्याया बह्व्यः शक्तयः। तत्र या प्रपञ्चे पारमार्थिकत्वादिधीहेतुः शक्तिः, या च तत्रार्थक्रियासमर्थत्वसम्पादिका शक्तिः तयोस्तत्त्वसाक्षात्कारेण निवृत्तावपि अपरोक्षप्रतिभासयोग्यार्थावभासजनिकायाः शक्तेरनुवृत्तेः तद्वती अविद्याऽपि तिष्ठत्येवेति। अत्र यद्यप्युपादानं विनाप्युपादेयानुवृत्तिकल्पनाप्रयुक्ता दुरवस्था नास्ति, तथापि तत्त्वसाक्षात्कारे उत्पन्ने सति कथमविद्यातच्छक्त्योरनुवृत्तिरिति चोद्यमपरिहृतमेव। न च प्रारब्धस्य प्रतिबन्धकत्व गतिः। तदनुवृत्त्यनुपपत्तेरपि प्रदर्शितत्वात्। आविद्यकस्य यस्य कस्यापि सर्वंघस्मरेण तत्त्वज्ञानाग्निना अवशेषणासम्भवात्। अवशेषणे सत्यत्वस्यानिवार्यत्वात्।

देहादिप्रतिभासेन तत्त्वज्ञानोदयेऽपि वः।
न प्रपञ्चस्य मिथ्यात्वमिति युक्तो विनिर्णयः॥

यत्तु 'भूयश्चान्ते विश्वमायानिवृत्तिः' इति श्रुत्या भूयश्चान्त „इत्यनेन पूर्वमपि मायानिवृत्तिरस्तीति बोधनात् जीवन्मुक्तिसिद्धिरिति तदङ्गीकुर्मः। परं तु भवताऽपि जीवन्मुक्तस्य मायानुवृत्तिरभ्युपेयते। तथा चाविद्यावतः कथं मुख्यवृत्त्या मुक्तत्वम्। अमुख्या मुक्तिः प्रमाणान्तरविरोधेन कल्पनीया। देहाद्यनुवृत्तिमत्त्वात् तदधीनप्रवृत्तिनिवृत्तिमत्त्वात् क्षुत्पिपासादिमत्त्वाच्च नैतेषां निवृत्तिरूपा सा मुक्तिः। किन्तु मुक्तस्य यो निरतिशयानन्दब्रह्मानुभवः शास्त्रैरवगम्यते तत्सजातीयं विलक्षणमनुभवं विलक्षणोऽधिकारी लभत इत्यनेन सामान्येन स मुक्त इत्युच्यते। यत्तु देहादिप्रतिभासस्य तदीयस्याबन्धकत्वमुच्यते तदश्रद्धेयम्।

यदपि सूत्रभाष्ये परकीयोऽनुभवविशेषः परेण कथं प्रतिक्षिप्येतेत्युक्तं तत्पक्षान्तरेऽपि सुवचम्। परकीया स्थितिः परेण कथं साध्येतेति। योऽस्माकं स्वानुभवः या च मुक्तप्रायाणां महतां प्रवृत्तिनिवृत्तिभ्यां जायमाना तदवस्थानुमितिः, या च 'न ह वै सशरीरस्य'त्यादिका श्रुतिः,

एते सर्वे यावद्देहसम्बन्धं तत्प्रयुक्तसुखदुःखानुभवस्यावर्जनीयत्वावधारणाय 'अत्र ब्रह्म समश्नुते' इति श्रुत्याभिप्रेतं विलक्षणब्रह्मानुभवस्य मुक्तसाम्य अवशापतिपतितेषु सुखदुःखादिषु निःसङ्गत्वं चापेक्ष्य उपचारात् मुक्तत्वव्यवहार इति निश्चीयते। एवमुपपत्तौ यन्मुख्य मुक्तत्वं कृत्वा बह्वायासभाजनतामात्मा नीयते तदस्थाने। एतेन 'यद्वा अज्ञानस्य सूक्ष्मावस्था लेश' इत्येतदपि अयुक्तम्। तत्त्वसाक्षात्कारेण सर्वावस्थाज्ञाननाशस्य अवश्य वाच्यत्वात्।

अतो जीवन्मुक्तिः सर्वथाऽनुपपन्ना। सान्त च अद्वैतिन एव य इमा नेच्छन्ति।

## ६ भगवत्प्रसादः।

मुक्तानामानन्दतारतम्यमस्माभिरपि नाङ्गीक्रियते। यत्तु ईश्वरस्य मुक्तिहेतुत्वं दूष्यते तन्न सृष्यामहे। यदुच्यते—

'तस्य तावदेव चिरमित्यादिश्रुत्याऽस्य उत्पन्नतत्त्वसाक्षात्कारस्य प्रारब्धकर्मक्षयमात्रमपेक्षणीयमिति प्रतिपादनेन ईश्वरप्रसादापेक्षा वक्तुमशक्या। स्मृतिपुराणादीनि श्रुतिविरोधेन स्तुतिपराणि। यमेवैष वृणुत इति भक्तिजन्येश्वरप्रसादस्यापि तत्साक्षात्कारस्वरूप एवोपयोगस्य बाधितत्वेन स्मृत्यादीनामपि तदनुसारित्वात् वैपरीत्येन साध्यसाधनभावे मानाभाव'।"

इति, तदिदं 'श्वगानि य साऽपि हि पापभाग्भवेत्' इति न्यायेन अनुवदतामस्माकमपि पापावहम्। तस्य तावदेव चिरमित्यनेन परमात्मसम्पत्तेः प्रारब्धकर्मक्षयापेक्षत्वे बाधिते परमात्मप्रसादस्यानपेक्षणीयत्वं कथं सिध्यति। न हि तावदेवत्येत्रकारस्तं व्यवच्छिनत्ति। तावदेव नाधिकं कालमिति कालाधिक्यव्यवच्छेदपरत्वात् तस्य। अपेक्षणीयत्वं

कथं सिध्यतीति चेत् सर्वकारणत्वादीश्वरस्य । चेतनस्य च कारणत्वं तदिच्छाद्वारा। इच्छाविशेष एव च प्रसादः ।

'पृथगात्मानं प्रेरितारं च मत्वा
जुष्टस्ततस्तेनामृतत्वमेति ।'

इति च श्रुत्या कण्ठतो भगवत्प्रसादस्य अमृतत्वसाधनत्वमुक्तम् । प्रेरितारं च मत्वा उपास्य, ततः तस्मादुपासनाद्धेतोः, तेन प्रेरकेणेश्वरेण, जुष्टः प्रीतिविषयीकृतः अमृतत्वमेतीत्यर्थात् । श्रुतिशतप्रपञ्चानुष्टमेतत् भगवतः सर्वफलप्रदत्वं फलमत उपपत्तेरिति प्रतिपादयता सूत्रकृता सामान्यनाऽभिहितम् । "पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ" इति विशेषतश्च । "मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्" इत्यादि प्रसिद्धम् । किमेतत् सर्वमन्यथा नेयम् उत अद्वैतसिद्धान्तस्यावद्धताऽवधारणीयेति स्वहृदयं पृच्छन्तु भवन्तः ।

यत्तु यमेवैष वृणुत इत्यत्र ईश्वरप्रसादस्य साक्षात्कारे उपयोगो बाधित इति, तन्न । तेन लभ्य इत्यनेन प्रतिपन्नस्य तत्प्राप्तिरूपस्य ब्रह्मविदाप्नोति परमित्यन्यत्रोक्तस्य परमफलस्य साधनतया 'यमेवैष वृणुते' इत्यनेन व्याख्याताया भक्तेरन्वयात् । एवं स्ववाक्य एव साध्याकाङ्क्षायाः शान्तत्वेन उत्तरवाक्येऽन्वयायोगात् । प्रत्युत एतदुपपादनार्थत्वेन उत्तरवाक्यमेव पूर्ववाक्यस्य शेषः । कथं भक्तेन लभ्यः परमात्मेति चेदुच्यते तस्यैष आत्मेति । तस्य भक्तस्य, एष आत्मा, स्वां तनूं स्वस्वरूपं, विवृणुते कार्त्स्न्येन प्रकाशयति । यथावत् प्रकाशिते भगवत्स्वरूपे भक्तस्य भक्तिरुत्तरोत्तरं वर्धते । ततः प्रसन्नो भवति भगवान् । स्वमस्मै ददाति । अयं तं लभते । एवमनेन लभ्यः स इति । इदमेव गीतम्—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥

इति । तस्मान्नात्र साक्षात्कारः पृथगुपाय उक्तः । नापि भक्तेस्तत्र विनियोगः । भक्तिरेव तु मुक्तिसाधनम् । तत्र द्वारमीश्वरप्रसादः । सेयं भक्तिः अहरहरभ्यासेन परिपाकवती दर्शनसमानाकारा भवति । एतद्रूपस्यैव साक्षात्कार इत्येवाचार्यैर्व्यवह्रियते । यदेयमेव भवति तदा प्रवृत्ति उत्तरपूर्वाघयोरश्लेषविनाशौ । प्रारब्धावसाने अर्चिरादिना मार्गेण परमं व्योम प्राप्तस्य परिपूर्णब्रह्मानुभवः, यस्यान्तो नास्ति । स एव मोक्ष इति सर्वमनवद्यम् ।

इति विशिष्टाद्वैतसिद्धौ फलसिद्धिर्नाम चतुर्थः परिच्छेदः ।

नमः सकलकल्याणहेतवे भवसेतवे ।
नित्याय निरवद्याय शब्दाय पुरुषाय च ॥

श्रीवासतातार्यपदारविन्द-
मूलं मधु स्वादु निपीय भूयः ।
मदेन चित्तेन तव स्मरामि
न चेदहं तद् भगवन् क्षमस्व ॥

भद्राम्बातुजपुत्रसम्मितसुधीवंशेऽधिगन्तुं जनिं
यच्छ्रीमतशीलवृत्तविभवोदारान् गुरून् सेवितुम् ।
यच्छास्त्राणि बहूनि भाग्यमभवत् प्राप्तुं प्रवक्तुं च मे
तस्मै मे परिणाममञ्चति विशिष्टाद्वैतसिद्ध्यात्मना ॥

अदूषि न द्वेषवशेन किञ्चि-
द्धनार्जनेनाभिहितं न किञ्चित् ।
अनुक्रमेण नीतिपथं यदुक्तं
तथाविधैरेव तदीक्षणीयम् ॥

निष्पद्यते स्म मधुसूदननिर्मितेन
नाद्वैतसिद्धिरुरुणाऽपि निबन्धनेन ।
मोहस्य सर्वमितिमानवग्रव्यवस्था-
विक्षोभणेन महतोऽजनि किन्तु सिद्धिः ॥

उत्पद्यन्ता समन्तादुपनिपदुदितासीमभूमाभिराम-
ज्योतिश्चिन्तानुबन्धोद्भवनिरतिशयानन्दसान्द्रान्तरङ्गाः ।
अन्तःशत्रुप्रसूतव्यसनघनहृतालोकलोकोपकार-
स्फारोत्साहप्रवाहा जगति सुबहवो माननीया महान्तः ॥

स्वच्छस्फीतयशस्यहोबिलमठे पङ्क्तौ गुरूणां चतु-
श्चत्वारिंशपदेऽभिषेचनमहं सम्प्राप्य विभ्राजते ।
प्राज्ञः श्रीनिगमान्तदेशिकयतीशानः सतामाश्रय-
स्तस्याव्याजकृपाकटाक्षविषयो ग्रन्थं न्यबध्नादिमम् ॥

वस्वब्धनन्देन्दुविदेशवत्सरे
विलम्बिसिंहेऽवसितं निबन्धनम् ।
एतद्विशिष्टाद्वयसिद्धिनामकं
वृषाद्रिनाथाङ्घ्रिसरोजसङ्गिनः ॥

जयति निगमचूडादेशिकेन्द्रो यतीन्द्रो
जयति जयति च श्रीयामुनेयः सनाथः ।
पदकमलसमीषा व्यायता नित्यमेषा
जयतु भुवि विशिष्टाद्वैतसिद्धिर्निबद्धा ॥

समुल्लसन्तीश्वरात्मसंविरसर्वार्थसिद्धय ।
विशिष्टाद्वैतसिद्धिर्मे तासां भवतु पञ्चमी ॥

इति

मीमांसार्णवस्य मीमांसाकेसरिणः पूर्वोत्तरतन्त्रप्रदीपस्य देशिकदर्शन
धुरन्धरस्य न्यायमीमांसाशिरोमणे पण्डितराजस्य, श्रीशैलवंश
तिलकलक्ष्मीकुमारकोटिकन्यकादानश्रीदेशिकतातयार्यतन
यस्य नायल्पाक्कं चतुर्वेद शतक्रतु श्रीश्रीनिवास
तातयार्यमहादेशिकचरणारविन्दचञ्चरीकस्य
श्रीशैलताताचार्यस्य प्राच्यविद्येश्वरस्य
कृतिषु
विशिष्टाद्वैतसिद्धि ।

---

# अनुबन्धः ।

—.०:—

## "द्रविडात्रेयदर्शनम्"

१. अथ श्री पोलक श्रीरामशास्त्रिणा बहु परिश्रम्य कृतस्य महतो विमर्शस्य फलभूते उपरि निर्दिष्टनाम्नि निबन्धे अस्मद्गुरुपरम्परोपरि निश्शङ्क साभिनिवेश आरोपिताना दूषणाना आत्यन्तिकीं निरवकाशता प्रतिपादयामः । अन्यच्च तत्तत् प्रासङ्गिकम् । पर्वणा सङ्ख्या तदनुसारिणी ।

२. द्रमिडाचार्यः ससारिणा जीवस्य मुक्तिप्राप्तौ व्याधकुलवर्धित-राजकुमारवृत्तान्तं निदर्शयामास । तमिम श्रीशङ्करः अद्वैतानुगुण प्रतिपादयति स्म । श्रीभाष्यकारः पुनः

> यथा च कश्चिद् राजकुमारः बालक्रीडासक्तः नरेन्द्रभवनान्निष्क्रान्त मार्गभ्रष्टः नष्ट इति राज्ञा विज्ञातः स्वय चाज्ञातपितृकः, केनचिद् द्विजवर्येण वर्धितः अधिगतवेदशास्त्रः षोडशवर्षः सर्वकल्याणगुणाकरस्तिष्ठन्, 'पिता ते सर्वलोकाधिपतिस्त्वामेव नष्टं पुत्र दिदृक्षुः पुरवरे तिष्ठति' इति केनचिदभियुक्ततमेन प्रयुक्तं वाक्य शृणोति चेत्, तदानीमेव 'अहं तावज्जीवतः पुत्रः, मत्पिता च सर्वसम्पत्समृद्धः' इति निरतिशयहर्षसम्पन्नो भवति •। राजा च स्वपुत्रं जीवन्तं अरोगं अतिमनोहरदर्शनं विदितसकलवेद्य श्रुत्वाऽवाप्तसमस्तपुरुषार्थो

भवति। पश्चात् तदुपादाने च प्रयतते। पश्चात् तावुभौ सम्बध्येते चेति।

इति समन्वयाधिकरणान्ते भाष्ये द्रमिडाचार्यनिदर्शनमेतत् अद्वैतस्यात्यन्तं प्रतिकूलमिति व्यञ्जयामास। "स एव बोधितः त्यक्त्वा व्याधजातिप्रत्ययं कर्माणि पितृपैतामहीमात्मनः पदवीमनुवर्तते राजाऽह-मस्मीति" इति निदर्शनोपन्यासः शाङ्करः। अयमस्यार्थः। नाहं व्याध इति प्रतिबोधं प्राप्य राजपुत्रः तदवधि अनुष्ठितानि व्याधकर्माणि त्यजति। राजाऽहमस्मीति प्रतियन् पितृपैतामहीयमात्मनः पदवीमनु-वर्तते। राज्यश्रियं प्राप्नोतीति यावत्। एवं नाहं संसारीति प्रतिपद्यमानः संसारिकर्माणि न त्यजति। यावद्देहपातमाहारव्यवहारापरित्यागात्। अहं ब्रह्मैवास्मीति सप्रकारकज्ञानाद् ब्रह्मभावमपि न प्राप्नोति। अनिष्ट-त्वादितिना सप्रकारकज्ञानस्योपायत्वम्। निष्प्रकारकज्ञानस्य तु राजाऽह-मस्मीति प्रत्ययो न निदर्शनम्। एवं प्रतिपद्यमानो राजपुत्रः यथा राज्य-श्रियं प्राप्नोति तथाऽहं ब्रह्मास्मीति प्रतिपद्यमानः ब्रह्मभावं प्राप्नोतीति हि निदर्शनार्थः। न च राजत्वप्रतिपत्त्यनन्तरं तन्महिमप्राप्तिवद् ब्रह्मत्वप्र-तिपत्त्यनन्तरं प्राप्यं किञ्चिदस्ति। अतो दृष्टान्तासामञ्जस्यम्।

एतेनात्र 'तत्त्वमस्यादिवाक्यमैक्यपरम्। तच्छेषः सृष्ट्यादिवाक्यम्' इत्यानन्दगिरिविवरणमप्यसङ्गतमिति स्पष्टम्। अहं राजेति प्रतिपत्ति-मात्रे निदर्शनस्यापर्यवसानात्। व्याधत्वस्य राजपुत्रे आरोपितस्य निवृत्तावपि व्याधेषु व्याधत्वम्, आत्मनि आरोपितस्य देहत्वादेर्निवृत्ता-वपि देहादिषु देहत्वादेरनिवृत्त्या सृष्टिवाक्यानां स्वार्थपारमार्थ्योपपत्तौ मिथ्यार्थत्वकल्पने प्रमाणाभावात्। तदिदं द्रमिडाचार्योक्तं निदर्शनं नाद्वैतानुकूलम्।

३ 'द्रविडोऽपि च तत्त्वमसीति यथो विनिवर्तकमेव निरूपितवान्। शबरेण विवर्धितराजशिशोर्निजजन्मविबुद्धिनिदर्शनतः॥'

इति तोटकश्लोके द्रविडपदेन तदाचार्यशङ्करविवक्षैवेति अत्यन्त युक्तम् । नात्र व्याख्यातुर्भ्रमः कल्पनीयः । अतिप्राचीने नैष्कर्म्यसिद्धिग्रन्थे 'एव गौडैर्द्राविडैर्नः पूज्यैरर्थः प्रभाषितः' इति निस्सन्देह शङ्करपरतया द्राविडपदप्रयागाद्दुदीच्येषु तदन्तेवासिषु द्राविड इत्येव स पप्रथे तस्मिन् काल इति हि स्फुटमवगम्यते ।

४. उज्ज्वलाकारो हरदत्तोऽन्यो वाऽर्वाचीनोऽद्वैती शाङ्करमेव पन्थानमनुसरतीति सहजसिद्धमेतत् । तेन प्रकृतविमर्शस्य न कश्चिदुपयोगः ।

५ ब्रह्मनन्दिकृतवाक्यग्रन्थः द्रविडाचार्यकृतस्तद्भाष्यग्रन्थश्च चिरान्नष्टौ । आनन्दगिरिप्रभृतिभिरपि न दृष्टौ । तत्र 'सिद्धन्तु निवर्तकत्वात्' इति कस्मिन् प्रकरणे केनाभिप्रायेणोक्तमिति स्वय ज्ञातुमस्माकमशक्यम् । अद्वैतिनस्तु अन्यार्थान्येव सन्ति उपनिषदादिवाक्यानि हठादेव स्वाभिमतार्थे प्रमाणयन्तीति सर्वविदितमेतत् । अस्य वाक्यस्यार्थं प्रति ते एककण्ठा अपि न भवन्ति । केचिद् ब्रह्मणि पदाना व्युत्पत्त्यभावशङ्कापरिहारपर वदन्ति । अन्ये ब्रह्मणोऽप्रमेयत्वकृताप्रामाण्यनिरासपरम् । इतरे तत्त्वमस्यादिशास्त्राप्रामाण्यप्रतिक्षेपपरम् । एवमपि तु व्याख्यातुं शक्यमिदम् । ननु वेदान्तशास्त्रमप्रमाणम् । निष्प्रयोजनत्वात् । तत्त्वहितबोधद्वारा मोक्षलाभो हि तस्य परम प्रयोजनम् । स मोक्षो यद्युपायेन साध्यः तर्हि स्वर्गवदनित्यः स्यात् । अथ न साध्यः तर्हि तदुपायावेदकं शास्त्रं व्यर्थं सदप्रमाणम् । एवमाक्षेपे प्राप्ते आह सिद्धन्तु निवर्तकत्वादिति । सिद्धमेव शास्त्रप्रामाण्यम् । नैतदाक्षेपार्हमित्यर्थः । कस्मात् । निवर्तकत्वात् । शास्त्रबोधितो ह्युपायः न मोक्षमुत्पादयति, याग इव स्वर्गादिकम्, येनानित्यः स्यात् । अपि तु प्रतिबन्धक निवर्तयति केवलम । ब्रह्मवदेव अपहतपाप्मत्वादिगुणाष्टकसम्पन्न हि जीवस्वरूपम् । तच्च कर्मणा तिरोहितम् । भक्तियोगात्मकेन शास्त्रविहितेन निदिध्या-

अनेन भगवत्प्रसादद्वारा निवृत्तेऽस्मिन् प्रतिबन्धके स्वस्वरूपमाविर्भवति। तत्र कोऽनित्यत्वप्रसङ्गः। एवं प्रतिबन्धकनिवर्तकत्वात् वेदान्तशास्त्रं हितस्योपायस्य मोक्षानित्यत्वप्रसङ्गविरहेण प्रयोजनवत्त्वेन च सिद्धं प्रमाण्यमिति। तस्मादिदं वाक्यं नाद्वैतपरम्।

तथा च लघुसिद्धान्तारम्भे श्रीभाष्ये—यदुक्तमविद्यानिवृत्तिरेव मोक्षः। सा च ब्रह्मविज्ञानादेव भवति, इति, तदभ्युपगम्यते—इति।

६ सिद्धन्तु निवर्तकत्वादित्येतत् इष्टसिद्ध्यादिग्रन्थान् दृष्टवानपि मधुसूदनसरस्वती व्याकरणवाक्यकारवाक्यमिति विशिष्य यदाह तेन स प्राचीनैरुक्तं तस्य ब्रह्मनन्दिवाक्यत्वं वस्तुतो नास्तीति निस्सन्देहमावेदयति। प्राञ्चो भ्रान्ता इत्येव तस्याध्यवसायः।

७ आनन्दगिरिणा द्रमिडभाष्यस्य अनल्पग्रन्थत्वज्ञापनात् द्रमिडभाष्यमतिसंक्षिप्तमिति श्रुतप्रकाशिकाकारोक्तिः द्रमिडभाष्यादर्शननिबन्धनेत्यवसीयते, इत्याह शास्त्री। ब्रह्मनन्दिवाक्यं द्रमिडाचार्योक्तित्वेन वदन् आनन्दगिरिः स्वस्य तदुभयग्रन्थादर्शित्वं प्रख्यापयति। तत्र आनन्दगिरेरविवक्षितां वदन्नेव शास्त्री अत्र श्रुतप्रकाशिकाकारस्य तदुक्तिविरुद्धाभिधायित्वेन दोषं प्रसञ्जयन्मोदते। श्रु० प्र० विरुद्धत्वेन तदुक्तेरेवाप्रमाण्यं कुतो न भवति। शाङ्करछान्दोग्यभाष्ये 'विवरणमल्पग्रन्थमिदमारभ्यते' इत्यत्र अल्पग्रन्थमित्यनेन द्रमिडभाष्यव्यावृत्तिरिति का निर्बन्धः, येन तस्य विस्तृतत्वं वाच्यम्। अल्पग्रन्थमिदम्, न तु विस्तृततया श्रोतॄणामायासोद्वेगकरम्, इति भावः किं न स्यात्। श्रुतप्रकाशिकायां च 'द्रमिडभाष्यकारादयो हि परपक्षप्रतिक्षेपाद्यनादरेणातिसंक्षिप्तान् ग्रन्थानरचयन्।' इत्युक्तम्। तत्र यथासम्भवं संक्षिप्ता ग्रन्था आसन् इत्यभिप्रायः। अत एव तत्त्वटीकायां 'अत्र पूर्वाचार्या ब्रह्मनन्द्यादयः। तन्निबन्धनानामतिसंक्षेपाद् गहनत्वं सूचयति—संचिक्षिपुरिति" इति श्रीदेशिकः।

८ छान्दोग्यभाष्ये शाङ्करे स्थलद्वये आचार्यग्रहणं द्रमिडाचार्यपरमिति निश्चायकं प्रमाणं नास्ति। अनवलोकिततद्ग्रन्थस्यानन्दगिरेरेकत्र तथा विवरणं केवलमाचार्यपदश्रवणमात्रेणोत्प्रेक्षितत्वादविश्वसनीयम्। अत एव स द्वितीयस्थले एकदेशित्वेन आचार्यान् निर्दिशति।

९. क्षत्रियस्य जानश्रुतेः शूद्रेत्यामन्त्रणं उपपादयन् भगवान् सूत्रकारः 'शुगस्य तदनादरश्रवणात् तदाद्रवणात् सूच्यते हि।' इत्याह। अत्र केचिदेव विवरणमकुर्वन्। स्वस्मिन्ननादरव्यञ्जकहंसवाक्यश्रवणात् अस्य जानश्रुतेः शुगुत्पन्ना। तया स रैक्वस्य सकाशमाद्दुद्राव। इदं शोकहेतुकमाद्रवणं सूच्यते रैक्वेण शूद्रेति क्षत्रियमामन्त्रयता। शूद्रशब्देन कथं तत्सूचनमिति चेदुच्यते—तदाद्रवणात्। शुचा आद्रवतीति शूद्र इति हि प्रकृते शूद्रशब्दनिष्पत्तिः। अतः प्रकृते तदाद्रवणात् शोकनिमित्तकाद्रवणवाचित्वाद्धेतोः शूद्रपदेन तत्सूचनं युक्तमिति भावः। इति। एतदनुसार्येव सूत्रभाष्ये शाङ्करं विवरणम्। अस्य क्लिष्टत्वात् श्रीभाष्ये विवरणमन्यथा। शुगस्येति सूत्रखण्डः शूद्रपदव्युत्पत्तिप्रदर्शनपरः। शुगस्य सञ्जातेति शूद्रः। शोकवतीति शूद्र इति यावत्। एतेन "शूद्रेत्यस्य जातिशूद्रेति नार्थः। अपि तु शोकयुक्तेत्यर्थः", इति प्रतिपादितं भवति। जानश्रुतेः शोकवत्त्वं कथमिति चेत् तदुक्तं—तदनादरश्रवणात् तदाद्रवणात् सूच्यते हीति। तदनादरश्रवणं शोककारणम्। तदैव रैक्वं प्रति आद्रवणं शोककार्यम्। ताभ्यां सूचयति हि उपनिषत् जानश्रुतेः शोक उत्पन्न इति। इति।

अत्र सूच्यत इति सूत्रोक्तसूचनकर्मत्वं प्राचां मते शुचा आद्रवणस्य। शङ्करमते शुच एव। "तामृषी रैक्वः शूद्रशब्देनानेन सूचयाम्बभूव" इति भाषणात्। शूद्रशब्दार्थस्तु उभयत्र समानः शुचा आद्रवणरूपः। श्रीभाष्यमते शोचितृत्वमेव केवलं तदर्थः। श्रुतप्रकाशिकायां एतत्समर्थनं कृतम्। इदं द्रमिडाचार्यखण्डनमिति शाङ्करा लिखन्ति।

तत् तत्र आचार्यपदनिर्दिष्टो न द्रमिडाचार्य इति प्रदर्शितत्वादयुक्तम्। किञ्च 'हंसवचनश्रवणात् शुगेनमाविवेश। तेनासौ शुचा आद्रवती'ति पदैः शुगस्य तदनादरश्रवणात् तदाद्रवणात्' इति सूत्रपदविवरणात्मकैः अत एव तत्र प्रमिताक्षरैश्च 'एववादिन आचार्या सूत्रव्याख्यातार एव भवित्। न तु वाक्यव्याख्यातारो द्रमिडाचार्या' इति सुबोधम्।

शूद्रशब्दस्य जातिवाचित्वभ्रमं निराकुर्वन् सूत्रकार 'शुगस्य' इत्याह। अनेन अस्ते तस्य शब्दस्य प्रवृत्तिनिमित्तं शोकः, न जातिरिति प्रतिपादितं भवति। शुड्मात्रोपादानात् तन्मात्रं प्रवृत्तिनिमित्तं, न तेन सहान्यत् किमपीत्यपि सिद्ध्यति। शब्दे 'द्र' इत्यस्य श्रवणात् द्रवणमपि वाच्येऽन्तर्भावनीयमिति पर मेनिरे। आद्रवणादिति पञ्चम्यन्तेन तस्य सूत्रैकवश्यैवाक्ते न वाच्यान्तर्भाव इति भगवत सूत्रकारस्याशयप्रतीतेः श्रीभाष्ये तदनादरणम्। शैवभाष्यमपि श्रीभाष्यमेवानुरुन्धे। तत्र व्याख्याताऽपि 'अत शूद्रेत्याम त्रयो न रूढ्या। किन्तु शोचत्स्वयोगेनैवेत्यर्थं" इत्याह। अथास्मिन्नर्थे अयशब्द कि निरुक्तप्रक्रियया निष्पादनीय उत औणादिकप्रक्रिययेति विमर्शे चरम कल्प वयमाद्रियामहे। प्रथममन्ये। तत्र द्रवणस्य वाच्यान्तर्भावपक्षावलम्बनात् शुचा द्रुद्रावत्याद्यर्थेषु शूद्रशब्दस्य, रुजं द्रावयतीत्यर्थे रुद्रशब्दस्येव नैरुक्तप्रक्रियया निष्पत्ति" इति परिमलोक्तिर्युज्यते। रुज द्रावयतीत्यर्थे रुद्रशब्दस्येव शोचतीत्यर्थे शूद्रशब्दस्य नैरुक्तप्रक्रियया सिद्धिः" इति तु पक्षान्तरावलम्बिशिवार्कमणिदीपिकाकारेण युज्यते। पदे 'द्र' इत्यस्यानुपपादनात्। स्पष्टार्थवैपरीत्यात्। यत्त औणादिकस्य योगार्थो दुर्लभ इति तन्न। बाधादृष्ट्या सम्भव योगार्थोन्मेषस्याप्रामाणिकत्वात्। उणादिप्रत्ययान्तानि प्रातिपदिकानि अव्युत्पन्नानीत्यस्य केवलरूढानि, योगार्थप्रतीति विनैव स्वार्थबोधकानीति तत्त्वात्। अथ यदव्यवस्थितधियाऽपि योगार्थलाभेऽपि रूढ्यर्थनिरास कथमिति तत् हरिशब्दस्य भगवद्वाचकत्वेऽपि इन्द्र

वाचकत्वनिरासः कथमितिवदुपहास्यम । पदाना सकृदर्थावगमनस्वाभाव्यात् । बाधात्परित्यक्तस्य पुनः प्रतीत्यनुपपत्तेः शूद्रशब्दः रूढ्या जातिपरो वा, वैदिकब्रह्मविद्याधिकारिपरतया अर्थान्तरपरो वा इति हि संशयः । तत्र एकतरपक्षावधारणे पक्षान्तरनिरासः स्वय सिद्ध्यति ।

अथ यत् 'शदेरूच' इति सूत्रपाठमनङ्गीकृत्य 'शुचेदश्च' इति सूत्रान्तरपाठं कल्पयन्त " इत्यादि, तत्र "शुचेर्दश्चेति । अस्य सूत्रस्य धातुवृत्तौ शूद्रशब्दव्युत्पादनावसरे उदाहृतत्वात् प्रक्षिप्तत्व वदन्तो निराकृता इति वेदितव्यम्" इति भावप्रकाशिकाग्रन्थोऽनुसन्धेयः । इदानीन्तनेषु मुद्रितेषु सिद्धान्तकौमुदीपुस्तकेषु 'शदेरूच' इति सूत्रं न दृश्यते । दृश्यते तु 'शुचेर्दश्च' इति सूत्रम् ( २ २० )

साधु. शास्त्री निष्कपटं लिखति—' शूद्रशब्दस्य औणादिकप्रक्रियया निर्वाहोऽपि न रामानुजभाष्यश्रुतप्रकाशिकोक्तप्रकारेण कार्यः । किन्तु न्यायरत्नामणिशिवार्कमणिदीपिकाद्युक्तरीत्या रकप्रत्ययेऽनुवर्तमाने 'शदेरूच' इति सूत्रेण 'शद्लृ शातन' इति धातोः निष्पन्नः शूद्रशब्द इत्यङ्गीकार्यम्" –इति । परग्रन्थोक्तत्वात् परिहार्यम् । स्वग्रन्थोक्तत्वात् स्वीकार्यमित्ययमत्र साराशः । इदन्तु नः खेदाय यच्छास्त्री आत्मनः प्रमाद न बुध्यते । शोकार्थशूद्रशब्दनिष्पत्तिर्हि सम्प्रति विमृश्यते । तत्र "शोचतीत्यर्थे शूद्रशब्दस्य व्युत्पत्तिर्व्याकरणप्रक्रियया न दृश्यते । नाप्युणादिप्रक्रियया । उणादिसूत्रे हि 'शद्लृ शातने' इति धातोः शूद्रशब्दो निष्पादितः" इति शातनार्थकधातुनिष्पन्नत्वादौणादिकस्य शूद्रशब्दस्य, शोकार्थकः सः औणादिको दुर्लभ इति प्रकृतविरुद्धतया शिवार्कमणिदीपिकायामुपन्यस्त प्रकार अत्यन्तमादरणीय प्रतिजानान शास्त्री नून सर्वसम्भाव्यः ।

१० व्याचक्षत इति स्थिते द्रविडाचार्या इति निर्णयः कथम् । अन्ये व्याख्यातारो नैवासन्नित्यत्र किं मानम् । सम्प्रदायविदः आगम-

विदः इत्यादिगौरवोपपदविरहात् अ य एव केचिद् व्याख्यातार इहाभि प्रेता इति युक्तम्।

१ अत्र 'सात्मीभावात्' इति युक्तः पाठ। सात्मीकरणमित्यादिव्यवहारस्य साम्प्रदायिकत्वात्।

१२ अत्रापाते कल्पतरौ सम्यग्गहणवता भास्करस्य भ्रमकथनं, ब्रह्मनन्दिवाक्ये 'दध्यादिवत्' इति दृष्टा त परित्यज्य, 'परिणामस्तु' इत्येताव मात्रग्रहण, तस्य मिथ्यापरिणामाभिप्रायत्वप्रतिज्ञान चेति सर्वमिदं अत्यन्तमनृजु। 'सव्यवहारमात्रत्वात्" इति ब्रह्मनन्दिवाक्यस्य अनिर्वचनीयत्व नैवार्थः। अपि तु कार्यावस्थाया यद् भवति तस्य सव्यवहारमात्रत्वादित्यर्थ। यदेव कारणभूत वस्तु तदेव अवस्थान्तर विशिष्टं कार्यं भवतीति असदनिष्पाद्यत्वपोषस्य नावकाशः। पूर्वमभूतस्य अवस्थान्तरस्योदयान प्रवृत्त्यानर्थक्यचोद्यावकाश। अवस्थान्तरे किं भवतीति चेत् सव्यवहारो भवति। नामान्तरेणाभिधान एव या असाध्या तादृशार्थक्रियाकरण च। एव सव्यवहारायावस्थान्तरमात्र भजनात् वस्तु तदेवेति सत्कार्यवादसमर्थनमिह क्रियते। नानिर्वचनीय त्वस्य प्राप्तिरपि।

१३ अत्रोदाहृतेन भास्करभाष्यग्रन्थेन अद्वैतमतस्य वास्तव रूप सुप्रकटितम्। "सूत्रकार अभ्युपगतो परिणामपक्ष सूत्रयाम्बभूव। अयमेव ब्रा ह्मणे वाक्यकारवृत्तिकाराभ्या सम्प्रदायत समाश्रित। तथा च वाक्य—परिणामस्तु दध्यादिवत्, इति" इति वदता हि श्रुतिः सूत्र सम्प्रदाय वाक्य तद्भाष्यमित्यस्य सर्वस्य न केवलमननुरोधि अपि तु विरुद्धमिति अद्वैतस्य पताका अर्पिता। अथ किमद्वैतस्य मूल मिति चेत् तदप्याह—

विगीत विच्छिन्नमूल महायानिकबौद्धगाथितं
मायावादं व्यावर्णय न्तो लोकान् व्यामोहयन्ति।

इति। वैदिकोऽपि मायावादोऽस्ति। सर्वेश्वराधिष्ठितत्रिगुणात्मक-प्रकृतिरूपमायामाश्रित्य हि प्रामाणिकाः जगदुत्पत्तिस्थितिसंहारान् उप-पादयन्ति। अतस्तद्व्यावृत्तये माहायानिकबौद्धगन्धित्वविशेषणम्। विगीतं शिष्टगर्हितम्। विच्छिन्नमूलं न्यायवैशेषिकमीमांसाशास्त्रनि-ष्णातैः आमूलात् छिन्नमित्यर्थः। व्यावर्णयन्तः विशेषेण वैदिकत्वेनैव, सर्वतः आभिमुख्येन उपन्यस्यन्तः। लोकान् न साक्षिदेव जनान्। व्यामो-हयन्ति यथा बुद्धिमन्तोऽपि स्खलन्ति तथा अभिनिविश्य मोहयन्ति, इति।

इत्थमद्वैतसिद्धान्तोपालम्भतत्परं भास्करभाषितं अस्मत्पक्षदूषणो-पयोगि भवतीति मत्वोदाहृत्य इदमाह—

ब्रह्मसूत्रव्याख्यातारौ वाक्यतद्भाष्यकारौ ब्रह्मनन्दिद्रमिडाचार्यौ,
इति रामानुजार्यैरुच्यते। तन्नास्तीति भास्करवाक्यादवगम्यते।

'छान्दोग्ये वाक्यवृत्तिकाराभ्या'मिति हि स वदति ' ताभ्यां
सूत्रव्याख्याने सति तत्रत्यमेव हि तयोर्वाक्यमुदाहार्यम्।

इति। ब्रह्मसूत्रव्याख्यातारौ ताविति भगवद्रामानुजेन क्वापि नोक्तम्। 'पूर्वाचार्याः संचिक्षिपुः' इत्येतावन्मात्रमुक्तम्। अनेन ब्रह्मसूत्राणि ताभ्यां व्याख्यातानीति कथं लभ्यते। ब्रह्मसूत्रैः तदीयया बोधायनवृत्त्या च स्थापितमर्थं तावुभौ स्वस्वग्रन्थे संक्षिप्तवन्तावित्येव तत्राभिप्रायः। 'द्रमिडभाष्यकारादयो हि परपक्षप्रतिक्षेपानादरेणातिसंक्षिप्तान् ग्रन्थान् व्यरचयन्।' इति श्रु० प्र० ग्रन्थेन तत्स्पष्टम्। न हि व्याख्याने परपक्षा-नादरः सम्भवी। "अत्र पूर्वाचार्या ब्रह्मनन्द्यादयः। तन्निबन्धनानामति-संक्षेपाद् गहनत्वं सूचयति—संक्षिपुरिति। सूत्रस्थापितार्थपरैर्ग्रन्थै-रित्याशयः" इति तत्त्वटीकया तत् स्पष्टतरीकृतम्। सूत्रस्थापितार्थपरैः न तु तद्व्याख्यानरूपैरिति ह्युच्यते।

पुनराह—वाक्यवृत्तिकारौ निदिशन् भास्करः बोधायनं कुतो न,

निर्दिशति । अनिर्देशो बोधायनवृत्तेः शशशृङ्गायमाणतां ज्ञापयतीति ।
मूलभूतानां सूत्राणाम् अर्वाचीनयोः भाष्यवृत्तिग्रन्थयोः कण्ठतो निर्देशं
कृत्वा स तदुभयमध्यवर्तिनां बोधायनादिग्रन्थानां 'सम्प्रदायत' इति
सामान्येन निर्देशं कृतवानिति विभाव्यम् । अथवा अतिविस्तृतत्वात्
सा वृत्तिरत्यन्तदुर्लभा बभूव । अतस्तां भास्करो न ददर्शेत्येवास्तु ।
ततः किम् । भगवद्रामानुजो हि तां वृद्धानां मुखात् श्रुत्वा अन्विष्य
शिष्यसशिष्यः कृत्स्नं भारतमटित्वा अन्ते कश्मीरेषु एकं कोशमुप
लभ्य सूत्राणां तात्त्विकमर्थं, ब्रह्मनन्द्यादीनां बोधायनमतानुसारितां च
बुद्ध्वा प्रजहर्ष । श्रीभाष्यं च बभाषे । प्रत्यक्षदृष्टसकलप्रपञ्चापह्नववा
दिनां भाशा एकग्रन्थापह्नवसाहसं न विस्मयावहम् ।

१५ पूर्वग्रन्थेषु सत्सु किमर्थं नवीनग्रन्थकरणप्रवृत्तिरिति शङ्कां
वारयता भगवद्यामुनमुनिना 'यद्यपि' इत्युपक्रम्य तस्मिन् काले प्रचारवन्तो
ग्रन्था निर्दिष्टाः । बोधायनवृत्तेः प्रचारलोपादनिर्देशः । तथाऽपि सम्प्र
दायक्रमेण सा श्रूयमाणैवासीत् । अत एव तदुपलम्भे भगवद्रामानुजस्य
महान् प्रयत्नः । 'विवृतानि च तानि परिमितगम्भीरभाषिणा द्रमिड
भाष्यकृता' इति आत्मसिद्ध्युक्तिः ब्रह्मनन्दिवाक्यस्य यद् द्रमिडभाष्यं
तद्विषयैव । न तु ब्रह्मसूत्रभाष्यविषया । परिमितभाषित्वकथनेन द्रमिड
भाष्यकीर्तनेन च प्रसिद्धद्रमिडभाष्यकारकृतविवरणस्यैव प्रतीतेः ।
क्वचिद् 'भाष्यकृता' इत्येव पाठः । तत्रापि वाक्यव्याख्यानात्मकद्रमिड
भाष्यमित्यर्थः । भाष्यमिति तस्यैव पूर्वं प्रसिद्धेः 'सूत्रस्थापितार्थपरे
ग्रन्थे' इति पूर्वोदाहृततत्त्वटीकासूक्त्या अत्रापि तात्पर्यस्यावगमि
तत्वात् । आत्मसिद्धौ "विस्तृतानि च तानि गम्भीरन्यायसागरभाषिणा
भगवता श्रीवत्साङ्कमिश्रेणापि' इति वदनन्तरवाक्ये तत्र पूर्ववाक्यार्थ-
द्रमिडभाष्यव्याख्यानं नैवाभिप्रेतम् । वाक्यद्वयेऽपि तानीति ब्रह्मसूत्राण्येव
हि परामृश्यन्ते । ब्रह्मसूत्रस्थापितार्थस्य सङ्क्षेपेण प्रतिपादनपरो

द्रमिडभाष्यग्रन्थ·, सूत्राणां विस्तरेण विवरणपरः श्रीवत्साङ्कग्रन्थः, इत्युच्यते आचार्यैः। अनयोः परस्परं मूलमूलिभावः नैवात्राभिप्रेतः, नैव प्रतीयते। लक्ष्मीपुर-श्रीनिवासाचार्योक्तिश्चिन्त्या।

१५ अभिनवग्रन्थकरणे स्वप्रवृत्तिवैयर्थ्यपरिहाराय "यद्यपि सूत्रात्मको मूलग्रन्थोऽस्ति, संक्षेपरुचीनां तदनुरूपो द्रमिडभाष्यग्रन्थोऽस्ति, विस्तरापेक्षिणां तदनुरूपः श्रीवत्साङ्कग्रन्थोऽस्ति" इत्येव भगवद्यामुनमुनिभावे आत्मसिद्धिवाक्येभ्य· निस्सन्देह सुस्पष्टमवगम्यमाने 'दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते' इत्यनेन न्यायेन अन्यथा प्रतिपद्यमानः शास्त्री, श्रीभाष्यकारप्रभृतयः सर्वे अस्मदाचार्या धूर्ता इति घोषणे संरम्भी कल्पनापरम्परां महतीं उद्वमति।

यामुनाचार्योक्त द्रमिडभाष्य प्रसिद्धात् वाक्यव्याख्यानरूपाद् द्रमिडभाष्यादन्यत्। अस्य व्याख्यान श्रीवत्साङ्कमिश्रकृत विस्तृत विवरणमिति प्रथमा कल्पना। अस्य श्रीवत्साङ्कमिश्रस्य रामानुजप्रभृतिभिः कीर्तन वा गम्भीरन्यायसागरभाषिणेति यामुनकृतः पुरस्कारो वा न क्रियते। श्रीवत्साङ्के प्रयुक्त भगवत्त्वविशेषण एतैः स्वकल्पिते बोधायने प्रयुक्तम्। श्रीवत्साङ्कग्रन्थे उक्त विस्तृतत्व स्वकल्पित एव बोधायनवृत्तिग्रन्थे उक्तम्। इतीय द्वितीया सावयवकल्पना। अनयोरभिनवद्रमिडभाष्यकारश्रीवत्साङ्कमिश्रयो· पौर्वापर्यं विपर्यस्य "विस्तीर्णवृत्तिकारो भगवान् बोधायनः पूर्वमासीत्। तत· पर तदुक्तार्थसंक्षेपकारो द्रमिडभाष्यकृदभूदिति रामानुजादयः कल्पितवन्तः" इति परमाद्भुता अनन्यबुद्धिगोचरीभावार्हा तृतीया कल्पना। इत्थ वस्तुतः नवीनद्रमिडभाष्यतद्विवरणश्रीवत्साङ्कग्रन्थमूलकत्वे स्थिते सङ्केतेनैव बोधायनमहर्षिटङ्कद्रमिडाचार्यादिग्रन्थमूलकत्व स्वसिद्धान्तस्य ऐककण्ठ्येन घोषयन्तीति स्वसिद्धान्तसिद्धमिथ्याप्रपञ्चगोपुरस्वर्णकलशायमाना चरमा कल्पना।

शिष्टसम्प्रदायबाह्योऽयं शास्त्री अस्मदाचार्याणां स्वरूपस्वभावादिक

यथावद् ज्ञातुं नेष्ट इति साहसिकमेतत्। अतः वर्णाश्रमधर्मव्यवस्था सर्वा ब्राह्मणखलानां कुसृतिरिति घोषयन्तो द्राविडसंह्निन इव यद्यमेव वदति तन्न गणनीयम्। आत्मसिद्धिश्रीसूक्ते तात्त्विकार्थस्योक्तत्वात् कल्पना इमाः सर्वा ध्वस्ता एव। महर्षिर्बोधायन स्वयमेव भगवत्त्व-विशेषणार्हः। नेतरस्थानापन्नया। भगवद्यामुनमुने प्रशिष्य श्रीरामानुज। तात्त्विकस्य औपनिषदार्थस्य तत्त्वटीकाविशेषैरेव स्वेनाधिगतत्वात् तस्मिन् परमा भक्तिः श्रीरामानुजस्य। अत एव तद्विषयमेव मङ्गलं श्रीमद्गीताभाष्यवेदार्थसंग्रहयोरुपक्रमे निबध्नाति। एवं आचार्यकोटिप्रविष्टत्वात् स्वप्रबोधहेतुभूतात्तत्प्रन्थकर्तृत्वाच्च तस्य पुरस्कारे कृते तत एव ततः प्राक्तनानामाचार्याणां ग्रन्थकाराणां च आराधितत्वात् तेषां विशिष्य पुरस्कारो न क्रियते।

अस्मदाचार्याः सर्वे भगवच्चरणाम्भोजभजनरसिकाः तत्प्रीणनैकपराः सत्यनिष्ठाः। 'परलोकममायया' इत्यस्या स्थितौ प्रतिष्ठिताः। सत्यैकाल म्बिभाष्य यतिपतिकथितम् इति श्रीदेशिकः। श्रीमद्रहस्यत्रयसारो ते कस्यापदेशः

आस्तिक्यवान् निशितबुद्धिरनभ्यसूयु

सत्सम्प्रदायपरिशुद्धमनाः सदर्थी।

सङ्केतभीतिरहितः स तृणेष्वसक्त

सद्वर्तनीमनुविधास्यति शाश्वतीं नः॥

इति। अन्यत्र ग्रस्य महावदान्य इति च।

१६ महानन्दिघावय अतिरुचि त व्या दाग्यविवरणतत्परम्। सूत्रार्थसंग्रहस्तत्र न मनागपि। भिक्षभाष्य तु आपेक्षिकरूपेषत्स्यपि सूत्रार्थीता अपि विषया विशद प्ररूप्यन्ते। अतः श्रीयामुनाचार्यैः 'यद्यपि इदमथाप्यत्र सूत्राणि प्रणीतानि इति सूत्रनिर्देशानन्तर 'विशु-

तानि च तानि 'द्रमिडभाष्यकृता' इति ब्रह्मनन्दिन विहाय द्रमिड-भाष्यकृन्निर्दिष्टः। अनेन ब्रह्मनन्दी विरुद्धमतावलम्बीति तस्मिन्ननादरो दर्शित इति न प्रत्येतव्यम्। द्रमिडभाष्यमूलकात्वेन तदादरणीयत्वस्य सिद्धत्वात्। व्यासरूपाया ब्रह्मनन्दिनः परित्यागात् तस्यानद्वैतित्वं सिद्धम्। तर्हि सितासितग्रन्थकारकोटौ तस्य निवेशः कथमिति चेत् काऽनुपपत्तिः। सितग्रन्थकार· आचार्यटङ्कः। श्रीवत्साङ्कश्च। अन्ये आसनग्रन्थकाराः। एव प्रामाणिकार्थावबोधकाना अन्यादृशानां च विविधाना निबन्धनाना समं लोके प्रचारात् मृदुप्रज्ञाः सदसद्विवेचना-क्षमाः तत्त्वनिर्णय प्रति वञ्चितबुद्धया भवन्ति। न यथावत्प्रतिपद्यन्ते, अन्यथा च प्रतिपद्यन्ते। अतः आचार्यटङ्कद्रमिडाचार्यश्रीवत्साङ्कमिश्र-ग्रन्थप्रतिपाद्यार्थानुसारी श्रीमन्नाथमुनिप्रणीतन्यायतत्त्वसम्बन्धी प्रक-रणग्रन्थ प्रणीयत इति ह्यत्र भगवद्यामुनमुनिराह। आदरणीयत्वव्य-ञ्जनायैव हि टङ्कस्य विशेषणम चार्येति। न होदमुत्तरत्रान्वेति। असित-ग्रन्थकारेषु बहुमानतात्पर्यायोगात्। श्रीवत्साङ्कबहुमानस्य पूर्वमेव प्रकाशि-तत्वेन केवलनाममात्रग्रहणात्। कालक्रमानुरोधेन निर्देशकरणात् श्री-वत्साङ्कस्य टङ्कानन्तरमकीर्तनात्। तदत्र दौर्जन्यप्रकाशनस्य अणुरप्य-वकाशो नास्तीति मन्तव्यम्।

१७ श्रीवत्साङ्कौ न द्वौ। एक एव तु सः। इति वस्तुतत्त्वस्थितेः सितासितवाक्ये श्रीवत्साङ्कस्थाने श्रीकण्ठात्प्रेक्षणमाकाशचित्र भवति।

१८ शिवार्कमणिदीपिकासहितश्रीकण्ठभाष्यप्रकाशक हालास्यनाथ-शास्त्री शङ्कराचार्यादपि प्राचीनः श्रीकण्ठ इत्याह। अय तु शास्त्री तदनिच्छन् "भास्करादपि प्राचीनः श्रीकण्ठः" इति वदन् आशामोद-केन तृप्यति। तत्र प्रमाण दर्शयति—अन्तर उपपत्तेरित्यधिकरणे 'सुख-विशिष्टाभिधानादेव च' इति सूत्रविवरणावसरे भास्कराचार्यभाष्यम्—'अत्रावसरे अत एव तद्ब्रह्मेति सूत्रमन्ये पठन्ति।' इति। इदं सूत्रं

अल्पपाठभेदेन श्रीकण्ठरामानुजभाष्ययाद् दृश्यते। तत्र भास्कराचार्यमनु-वदन् खण्डयश्च रामानुज ततोऽर्वाचीन इति सिद्धम्। अत श्रीकण्ठभाष्ये तत्सूत्र एवैव तथा वदति भास्कर इति युज्यते। ततोऽस्मात् प्राचीन श्रीकण्ठ इति। ननु शङ्करादन्ये बहव सूत्रवृत्तिकारा भास्करात्पूर्वम-भवन्निति उदाहृतादात्मसिद्धिग्रन्थात् अन्येभ्यश्च ज्ञायते। तेषु कश्चिदेतत् सूत्र पठितवन्त स्यु। श्रीकण्ठ एवेति का नियम। अत्र किमप्युत्तरं वक्तु शास्त्री न प्रभवति। अथवा प्रत्यक्षदृष्टे कारणे किमनुमानप्रयासेन। "आभासा एव च। सत्यमिथ्योपाधिभ्यां बद्धस्य ब्रह्मण एव जीवभाव इति पक्षद्वयेऽपि युक्त्य आभासा एव" इति श्रीकण्ठाक्त सत्योपाधिपक्ष कस्य? भास्करस्य न वा?

१९ रामानुजादिभ्यः प्राचीन श्रीकण्ठ इत्यपि न। 'त्रिमूर्त्यति रिक्त सदाशिवः। ब्रह्मादयस्त्रयोऽप्यनीश्वरा।" इति शैर्निरस्त पक्षो न श्रीकण्ठस्य। अथ हि 'ईक्षतिकर्मव्यपदेशात् स' इत्यधिकरणान्ते 'विष्णुशिवयो उपादाननिमित्तया अवस्थाभेदमन्तरेण स्वरूपभेदो नास्तीत्यर्थः।' इति वदति। यच्च 'नारायण उपादानं रुद्रो निमित्त मित्येक मतम्' इति प्रकृत्यधिकरणे श्रुतप्रकाशिकायामुक्त मतं श्रीकण्ठ-स्येति तदपि न। प्रकृत्यधिकरणान्ते श्रीकण्ठेन 'तस्योपादानमपि निमित्त परं ब्रह्मैव' इत्यैक्याभिधानात्। पत्युरसामञ्जस्यादित्यधिकरणे च "तथा सति तद्बलमपहाय श्रुतिमिरुपादानमपि परमेश्वर इत्यभ्यु-पेयम्। इति।

नारायणपर ब्रह्मत्वम्न नारायणात्परमिति वदता पक्षः श्रुतप्रकाशि-कायां खण्ड्यते। एकवादी च श्रीकण्ठ एवेत्यपि न। प्राचीनतरग्रन्थेन शैवेन कर्नाचिदेवमुक्तम्। तत्खण्डितम्। तदेवानूदित श्रीकण्ठेनेत्येव युक्तत्वात्। अत्र किं निदर्शनम्। अनादिमत्परं ब्रह्मेति गीतात्रयो दशाध्यायश्लोके अनादि मत्परमिति पदच्छेदं कृत्वा खण्डयति श्रीशङ्करः।

भगवद्रामानुजेन एवमेव पदं छिन्नम्। एतेनानयोः पौर्वापर्यविपर्यासो न हि भवितुमर्हति।

७० शास्त्रिण उन्माद उपर्युपरि वर्धते। श्रीकण्ठः विशिष्टाद्वैत-मार्गप्रदर्शक इति प्रतिजानीते। तदुपजीविनः श्रीभास्करप्रभृतय इति च। तत्र प्रमाणं आनन्दलहर्यां 'श्रीकण्ठाचार्यभाष्योक्तानुकृतिसरणिः क्वापि भाष्ये परेषां प्रायो दृष्टा' इति दीक्षितोक्तिः, 'तदनुकरणेन प्रवृत्तस्य रामानुजभाष्यस्य' इति तद्व्याख्याने तदुक्तिश्चेति। अत्र तत्त्वं प्रकाश्यते। 'व्याससूत्रमिदं नेत्रं विदुषां ब्रह्मदर्शने। पूर्वाचार्यैः कलुषितम्' इति श्रीकण्ठोक्तिं विवृण्वन् दीक्षितः "कलुषितमित्यनेन *प्राचीन-भाष्यादिग्रन्थानां* सामान्येनाद्घाटितमपि सूत्राक्षराननुसारित्व" इत्युपक्रम्य 'एवं भाष्यकारेण परभाष्येषु अनुचिताध्याहारादिक्लेशं विशिष्यानुद्घाटितमपि श्रोतॄणां दिक्प्रदर्शनाय तत्र तत्र वयं किञ्चिन्नदर्शयामः' इति प्रतिज्ञाय विशिष्य शङ्करकलुषितत्वे निदर्शनाय पक्षपातेन तद्विहाय द्वेषमात्रेण श्रीभाष्ये दोषान् प्रदर्श्य 'अप्रसिद्धश्रुतिस्मृत्यादिकल्पनावलम्बनभाष्यकारादिभिस्तु कृत्स्नमपि शास्त्रं कलुषितमिति स्पष्टमेव' इति द्वैतभाष्यकृतं कालुष्यमुक्त्वा प्राचीनभाष्यदूषणप्रकरणं समाप्य श्रीकण्ठादर्वाचीनभाष्यकाराणामपि दूषितत्वं विवक्षन् अर्वाचीनेषु पूर्वाचार्यत्वं कथं घटेतेत्यनुपपत्तिं परिजिहीर्षुः, "अर्वाचीनभाष्यकाराणां आचार्यपरम्परायां श्रीकण्ठात् प्राक् ये आसन् ते पूर्वाचार्याः, तैः स्वकृतेनासमञ्जसोपदेशेन सूत्रं कलुषितम्। तथाविधदुरुपदेशनिबन्धनात् अर्वाचीनभाष्यकारा अपि तत्कालुष्यकारिणः' इत्यभिप्रेत्य "एवमर्वाचीनभाष्यादिप्रणेतॄणां ये पूर्वपूर्वोपदेष्टारः तानुद्दिश्य पूर्वाचार्यैः कलुषितमित्युक्तिः" इत्याह। अतः श्रीभाष्यस्य श्रीकण्ठात् प्राचीनत्वं दीक्षितेन कण्ठत उक्तम्।

अथ च अनुपपत्त्यधिकरणमणिदीपिकायां सम्भोगप्राप्तिसूत्रभाष्य-

व्याख्यानावसरे 'ननैव दहरविद्याया परमेश्वर उपास्य इति निर्णयोऽनुपपन्न । नारायणस्यैव तदुपास्यत्वात्" इत्युपक्रम्य "यद्वेदादौ" इति मन्त्रस्यायमर्थ । तद्वाद्यन्तया प्रतिष्ठित स्वर ओङ्कार । तस्य प्रकृतिरकार । तस्मिन स्वप्रकृतावकारे लीनस्य अकारतां प्राप्तस्य यः परो वाच्य । इदम्पर तत्पर इत्यादौ वाच्य परपदप्रयोगदर्शनात् । स महेश्वर । इत्थं सवशब्दजालप्रकृतितया निखिलवाचकोत्कृष्टाकार वाच्यस्य निखिलवाच्योत्कर्षो युक्त इत्यौचतीमवलम्ब्य अकारवाच्यस्य सर्वेश्वरत्वप्रतिपादकोऽय मन्त्रो नारायणपर एव पर्यवस्यति । तस्मादत्र परमेश्वरस्योपास्यत्वानर्णयो न युक्त इत्याशङ्का मनसि निधाय उपक्रमादिभिरन्यथा निर्णयस्य युक्तत्वमुपपादयितुमुपक्रमते—अथ खल्विति ।" इति श्रीकण्ठेन मनसि निहिततयोक्ताया शङ्काया विषय साक्षाद् वेदार्थसङ्ग्रहतद्व्याख्यानया स्थित ।

वदाद्यन्तरूरतया वदबीजभूतप्रणवस्य प्रकृतिभूताकारवाच्यतया महेश्वरत्व प्रतिपाद्य दहरपुण्डरीकमध्यस्थाकाशवर्तितया उपास्यत्वमुक्तम् । अयमथः । सर्वस्य वदजातस्य प्रकृतिः प्रणव उक्त । प्रणवस्य च प्रकृतिरकार । प्रणवविकारा वेदः स्वप्रकृतिभूत प्रणव लीन । प्रणवोऽप्यकारविकारभूतः स्वप्रकृताकारे लीनः । तस्य प्रणवप्रकृतिभूतस्य अकारस्य य परः वाच्य स एव महेश्वरः' इति । सर्ववाचकजातप्रकृतिभूताकार वाच्य सर्ववाच्यजातप्रकृतिभूतो नारायणो यः स महेश्वर इत्यर्थं ।

इति तत्रत्यम् । तत्र विवरणम्—

इदम्परस्तत्पर इत्यादिषु परशब्दस्य वाच्यतार्थत्वादित्ययं इति । अथेदानीं आनन्दलहरीतद्व्याख्यानयोः का गतिरिति चतु द्वे, अवस्थे, चित्तकालुष्यरहिता तद्वती च । पूर्वा मणिदीपिकारचनाकाले ।

उत्तरा अन्यलेखनकाल इति। अथवा तत्समाननामा अन्योऽयं क्षुद्रो-ऽप्पय्यः। अयमेव पक्षो युक्ततरः। न हि दीक्षितेन्द्रस्य "श्रीकण्ठैरेव आनन्दमया ब्रह्मतत्प्रतिष्ठारूप इति स पन्था दर्शितः" इत्येवं अत्यन्तम-पष्टं कि ञ्चद्वाक्यं भवेत्। किञ्च श्रीकण्ठेन 'ब्रह्म पुच्छं प्रतिष्ठे'त्यत्र प्रथमं 'ब्रह्म प्रणव। तस्य परमेश्वरवाचकत्वात् तदाधारत्वम्' इति स्वमत-मुक्तम्। ततः परं 'परमा शक्तिः आनन्दमय इत्युच्यते। तद्धर्मित्वेन प्रतिष्ठेत्युच्यते परं ब्रह्म' इति केषाञ्चिन्मतमुक्तम्। तदनन्तरं 'आनन्द-मयः सदाशिवः। तस्यापि कारणं परमशिवाख्यं ब्रह्म तत्प्रतिष्ठेत्युच्यते' इत्यन्येषां मतमुक्तम्। स्वोपजीव्येषु श्रीभाष्यादिग्रन्थेषु दृष्टा सरणिं परित्यज्य तत्र तत्र स्वतन्त्रं किञ्चिद्वक्तुं श्रीकण्ठ ईहते। तादृशेषु स्थलेषु इदमेकम्। आनन्दमयोऽपि ब्रह्म, पुच्छमपि ब्रह्मेति श्रीभाष्यसि-द्धान्तं श्रीकण्ठो नेच्छति। इदमजानन् श्रीकण्ठभाष्यं यथावदगृह्णन् अयं व्याख्याता तत्रभवान् अप्पय्यदीक्षितः कथं भवेत्। प्रासङ्गिकमेतावाऽयम्।

२१. रामानुजादिभिः श्रीकण्ठाचार्यनामग्रहणे बीजमन्विष्यन् स्वप्रकृत्यनुरूपं किमपि किमप्याह। अप्पय्यदीक्षितनामग्रहणे यद् बीजं तदेव तत्रापि बीजमिति ऋजुमतीनां सुबोधम्।

२२. सिद्धित्रयटिप्पणीकाराशयमाक्षिपन् 'तत् स्वसम्प्रदायबोधाय-नोपज्ञत्वश्रद्धाजन्मूलाभिनिवेशवशीकृतचेतस्कत्वप्रयुक्तम्' इत्याह।

पश्यति परेषु दोषानसतोऽपि जनः सतोऽपि नैव गुणान्।
विपरीतमिदं स्वस्मिन् महिमा मोहाञ्जनस्यैषः ॥

इति वत किमद्रमणीयं सुभाषितमभाषि आचार्यचरणैः। बोधायनोप-ज्ञत्वापह्नवश्रद्धाजन्मूलाभिनिवेशवशंवदचेतस्कत्वप्रयुक्तं स्वजल्पितं सर्व-मिति कुतः प्रामाणिकैः स्वात्मा न शिक्ष्यते। स्वमतग्रन्थेषु कीर्तितत्वात् ब्रह्मनन्दिद्रमिडभाष्यकारौ तद्ग्रन्थौ च परमार्थत आसन्नित्यङ्गीकृत्य ते षामद्वैतनिष्ठत्वं साङ्गिरन्ते। बोधायनोऽपि तथा कीर्तितश्चेत् तत्रापि

शैवत श्रयु । तदभावात् स्वरूपमेवापलपाम इति सरभन्ते ।

यामुनाचार्य कुतो न भाष्य चकारेति पृच्छति शास्त्री । गौडपादा गोविन्दपादा वा कुतो न चकारेति पृष्टो यदुत्तर दास्यति तदत्रापि तेऽस्य नुसन्धेयमिति श्रमः । विमर्शः कथ कार्य । तत्त्वोपलम्भमार्ग क इत्यादौ जात्यन्ध शास्त्री ।

'यद्रूपध्यानानुसन्दधे यतिपति' इत्यादिदेशिकश्रीसूक्तीरेव प्रमाण यन् "रामानुजार्यः स्वीयसम्प्रदार्य यामुनेयप्रबन्धमुखेनैव जग्राह" इत्य द्भुत निर्णय करोति । स्वसिद्धान्तपरमप्रमाणभूतश्रीभाष्यप्रणेतु समस्ता त्वेन स्तूयमानस्य रामानुजस्य आचार्यसम्बन्धस्य ताभाव स्वयं देशिको घोषयतीति यस्य बुद्धौ प्रतिभानं भवति तस्य अस्मत्सम्प्रदायसम्बन्धि विषयचिन्तायां वा सामान्यतो विषयविमर्शे वा कियती योग्यतेति सुग्रह सर्वेषाम् । 'वयमस्मिन् शारीरकमीमांसाशास्त्रे प्रदर्शयिष्याम' इति प्रतिजानान शङ्कर 'पूर्वैर्न प्रदर्शित सार्थ । नाहं गुरुमुखात् इममर्थं गृहीतवान्" इति ख्यापयति । 'प्रतैराचार्यरत्नैरपि पारजगृहे शङ्कराद्यैस्त देव' इति दीक्षितोक्त्या अद्वैतमार्गस्य प्रथमप्रवर्तक शङ्कर एवेति स्पष्टमभिधानात् अयं गुरुमुखात् किमपि न जग्राहेति सिद्ध्यति । 'एव गौडैर्द्राविडैर्न पूज्यैरर्थ प्रभाषित" इति नैष्कर्म्यसिद्ध्युक्त्या गौडशङ्करयोर्मध्ये य कोऽपि नासीदिति निश्चीयते ।

अनुपद ।वचित्प्रतर भाषते शास्त्री—अत एव रामानुजार्येण स्वग्रन्थेषु स्वीयसाक्षाद्गुरूणां पञ्चपाणां मध्ये केषाञ्चिदपि वन्दनं न कृतम्—इति । ननु यो गुरुमुखात् सम्प्रदायार्थ न जग्राह तस्य स्वीया साक्षा द्गुरव पञ्चपा कथम् । किमिमे भोजने शिक्षाप्रदा । श्रीदेशिकादि भिरेव साक्षाद्गुरव पञ्चपा आसन्नित्युक्तमिति चेत तर्हि एव स्पष्टोक्तौ सत्यां यामुनग्रन्थानुसन्धानादिकथनमात्रेण साक्षाद्गुरुमुखात् सम्प्रदायार्थग्रहणाभावानुमान कथ युज्यते । पञ्चपाणां सत्त्वात् तत्रैतस्य

चन्दनामतर्रातरहार पर्यैरचेदिति विभ्रमन् स्वामिन तदाद्विशेष श्रुतवतः प्राचार्यस्य वन्दनेन सर्वे ते तुष्टबुर्यात मन्यमानस्य न तेषु तस्यापि वन्दनमकरोदात वस्तुस्थित्यवगमे किं महान् क्लेशोऽस्य । द्वेषाभिनिवेशा तत्स्थिरं विभ्रमयन् । शङ्करेण स्वगुरुवन्दनानिवर्तनात् तस्यापि समानः गुरुमुखाद् वेदान्तार्थग्रहणाभावप्रसङ्ग इति वाद्धमेन न मुच्यते ।

२३　विस्तृतानि च तानीति श्रीवत्साङ्कमन्थ प्रचारे तदा वर्तमानं निर्दिशन् गम्भीरन्यायसागरभाष्यप्रणयनेन तस्य स्थायितामस्य स्फुटी-कुर्वश्च भगवद्यामुनमुनि तन्नामनिर्देशपूर्वकं तदुक्तानामनुदाहरणेन अनवलोकितत्तद्ग्रन्थ इति कथमनुमीयेत । न हि दृष्टं सर्वं तथा उदा-हर्तव्यमित्यनुन्मत्तः कश्चिद्वदेत् । विश्वनोगुप्तानां सूत्राणां समञ्जसानि सिद्धान्तानुगुणान्यर्थान्तराणि स्वयमेव यदि वदन्ति तत्र न कापि वाच्यता । यत्र शङ्करेण आनन्दमयब्रह्मवादस्य, 'अविभिन्न भेदनिर्दे-शात्' इत्युक्तस्य आविष्कारस्य, गुहां प्रविष्टावात्मानाविरुक्तस्यात्म-भेदस्य कार्याधिकरणपूर्वोक्तपक्षत्रयस्य, अचिरादिनानप्राप्यमुख्य-मोक्षस्य च सूत्रैः सम्यगवगम्यमानस्य विपर्यासेन खण्डनाय मनेन स्वोत्प्रे-क्षितार्थोऽन्य कश्चित् वर्ण्यते तत्र हि पूर्वाचार्यसूक्तयः प्रमाणतयाऽवश्य-मुदाहर्तव्याः । न तत्र वाक्यभाष्यवचनं वृत्त्यन्तरवचनं वा किञ्चिदु-दाहृतम् । "विज्ञानादिभावे वा तदप्रतिषेधः" इति सूत्र पञ्चरात्र-प्रामाण्यस्य सूत्रकाराभिमतत्वे प्रमाणान्तरं किमपेक्षितमिति चाभि-प्राय । वाकारः पूर्वपक्षनिवर्तकः श्रूयते । पूर्वाधिकरणेषु तत्तत्प्रामाण्ये प्रतिषिद्धे अत्र 'तदप्रतिषेधः' इति असन्दिग्धसुस्पष्टाथाक्षरैः पाञ्चरात्र-प्रामाण्याप्रतिषेध सिद्धान्तयति भगवान् सूत्रकार । तत्र हेतुमाह 'विज्ञा-नादिभावे' इति । 'सङ्कर्षणो नाम जीवो जायते' इत्यादौ भगवत एव अवतारूपजन्माभिधानात् जीवोत्पत्तिर्वा ततः करणोत्पत्तिर्वा

नैवोच्यते। न परमेव ज्ञानात्पत्त्यनभिधानम्। उत्पत्तिप्रतिषेधोऽप्यस्ति। अतो न च विरोधो भवतामप्यस्तीति हेत्वन्तरं 'विप्रतिषेधाच्च' इति सूत्रान्तरेणोक्तम्। अथ सत्रार्थो युक्तो न वा, समञ्जसो न वा। अप्रामाण्यवादिभिरूप्यमानोऽर्थ एव स्वशास्त्रे समञ्जसश्च किं भवति, इति प्रामाणिकत्वमात्मन इच्छद्भिः स्वहृदयमवधार्य पर्यालोचनीयम्। सूत्राननुगुणस्वपरीतार्थवर्णनपरैस्तु पूर्वाचार्यग्रन्थोदाहरणमवश्यं कर्तव्यम्। न च पाञ्चरात्राप्रामाण्यं प्रतिपादयत् वाक्यं वा भाष्यं वा शङ्करेण येन वा किञ्चिदुदाह्रियते। सूत्राणां स्पष्टसमञ्जसार्थवर्णनपरैः पुनः अन्यग्रन्थोदाहरणं नातीव आदर्तव्यम्। तेषामेव स्वयं पुष्कलप्रमाणत्वात्।

विज्ञानादिभावे वा तदप्रतिषेध इत्यस्मिन् सूत्रे तदप्रतिषेध इत्यस्य उत्पत्त्यसम्भवस्याप्रतिषेध इति शाङ्करं विवरणं पाञ्चरात्रप्रक्रियानभिज्ञत्वमूलमनुमन्यामः। परस्यैव हि षाड्गुण्यसम्पन्नस्य ईश्वरस्य परस्परविलक्षणानाशरीरपरिग्रहरूपा उत्पत्तिरुपपद्यत एव। वासुदेवविग्रहाद् विलक्षणः सङ्कर्षणविग्रह उत्पद्यते। तस्य च कार्यविशेष ईश्वरसङ्कल्पाभिमतः। एवं प्रद्युम्नविग्रहस्य सङ्कर्षणविग्रहात्, तस्माच्च अनिरुद्धविग्रहस्य विलक्षणस्य विलक्षणकार्यव्यवस्थावतश्च उत्पत्तिरिति पाञ्चरात्रे प्रतिपाद्यते। अत्र कानुपपत्तिः। तस्मादुत्पत्त्यसम्भवस्याप्रतिषेधो दुर्वचः। प्रतिषेध्य एव सः। प्रतिषिद्धश्च। अत तत्प्रामाण्याप्रतिषेध इत्येव सूत्रार्थः। एवं 'विप्रतिषेधाच्च' इत्यनन्तरसूत्रस्यापि शङ्करोक्तोऽर्थोऽनुपपन्न इति द्रष्टव्यं श्रुतप्रकाशिकायाम्।

२४ तदेतत् यामुनाचार्यैरागमप्रामाण्ये सम्भावितसमस्तपूर्वपक्षनिराकरणेन प्रपञ्चितम्। तदनुसारेणैव भाष्यकारैः श्रीपाञ्चरात्राधिकरणं व्याख्यातम्" इति न्यायपरिशुद्धौ श्रीदेशिकचरणाः। अत्राह शास्त्री—
'एवं वदन् वेङ्कटनाथः भाष्यकारेणापि बोधायनवृत्त्यनुसारेण पाञ्चरात्रा

धिकरणं न व्याख्यात इति सूचयति" इति। वाक्येभ्यः भावमवगन्तुं न सर्वः शक्तः। अपि तु वाक्यन्यायव्युत्पत्तिः अर्थस्वभाववक्तृस्वभावपरिज्ञानं च यस्यास्ति स एव। अत्र 'तदनुसारेणैव' इत्येवकारेण किं व्यवच्छिद्यत इति प्रथमतः श्रोत्रा चिन्तनीयम्। द्वेधा ह्यत्र भाति। तस्यानुसारेण नान्यस्येति, तस्यानुसारेण न त्वननुसारेणेति च। अत्र आद्ये पक्षे अन्यस्य शङ्करादेरित्यर्थः सङ्गतः। अप्रामाण्यवादिनः परे। तैरुद्भाविता ये दोषाः, सम्भाविताश्च ये, तेषां सर्वेषां परिहारेण प्रामाण्यं यामुनाचार्यैः प्रपञ्चितम्। तेषामनुसारेण नान्येषामनुसारेणेति हि पूर्ववाक्यपर्यालोचनया स्वरसतोऽर्थः प्रतीयते। अतोऽप्रामाण्यवादिनां शङ्करादीनामत्र व्यवच्छेदः। शङ्करादिपक्षप्रतिक्षेपेण हि श्रीभाष्यप्रवृत्तिः। तदनुसारेणैवेत्यत्र तच्छब्देन आगमप्रामाण्यग्रन्थपरिग्रहे शङ्करादिभाष्यव्यवच्छेद एवकारेण। एवं वाक्यन्याय उक्तः। अथार्थस्वभाव उच्यते। "पाञ्चरात्राधिकरणं भाष्यकारैर्व्याख्यातम्"। कथं व्याख्यातम्? पाञ्चरात्रप्रामाण्यस्थापनपरतया। एवं प्रामाण्यस्थापनपरतया व्याख्यानविषयेऽनुसरणे तदनुकूलयामुनाचार्यकर्मकत्वोक्ते तदन्ययोर्ग्रन्थयो व्यवच्छेदः प्रतिकूलविषय एव भवितुमर्हति, नानुकूलविषयः। 'तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति श्रीभाष्यकारा बोधायनमतानुसारित्वं स्वस्य प्रतिजानाना स्वानुकूलत्वं तस्य प्रकटयन्ति। इदं जानन्तः श्रीदेशिकचरणाः भाष्यकृता बोधायनानुसारित्वं व्यवच्छिन्दन्तीत्येतत् कावेरी सह्याद्रेरेवोत्पद्यत इत्यत्र कावेरीप्रवाहस्य पर्जन्यप्रतीतित्वं व्यवच्छिन्दन्तीतिवदुपहास्यम्।

अथ वक्तृस्वभावः। श्रीदेशिकस्य भगवद्रामानुजे कियती भक्तिः, श्रीमद्भाष्ये तत्प्रतिष्ठापिते सिद्धान्ते च कियती श्रद्धा, कियानादरः इति सर्वमिदं सर्वविदितम्। स किं भाष्योक्तस्य बोधायनवृत्तमूलकस्य प्रतिषेधं कुर्वन् सम्प्रदायस्य मूलच्छेदं कुर्यादिति बुद्धिमन्तः

सागरमवगाढुमपरिवृढाना कोमलमनसा वेदानादरो मा भूदि-
त्येवपरम्। यथैव हि भगवतो जैमिनेः कर्मणः फलोपन्यास
कर्मश्रद्धासंवर्धनाय"

इति समादर्शित स्म। न भाष्यकाराः कृत्स्नस्य पाञ्चरात्रस्याप्रामाण्य-मनाचन। अपि तु निरुद्धांशे। तदपि क्वचिदंशे विरोधोऽस्तीति कृत्वा। वस्तुतो विरोधो नास्त्येव क्वचिदपि, इत्येव तेषा मतिः। किमर्थमेवं कृत्वा विन्नन मति चेत वेदेषु मृदुधिया अनादरानुदयादयेति जैमिनि-कृतकर्मफलोपन्यासपूर्वकं भाष्याविरोध समर्थयन्ते परमगुरवः। अत्रैव समर्थनमपि 'विज्ञानादिभावे वा तदप्रतिषेध.' इति अत्यन्तासन्दिग्धा-तिस्पष्टार्थसूत्रावष्टम्भात्। सूत्रविरोधे हि अन्येषामुक्तयस्तदनुगुण-तया योजनीयाः। तथा योजयितुमशक्या निरसनीयाः। परमतनिराकर-णप्रकरणात् पाञ्चरात्रप्रामाण्यमपि परमत, न सूत्रकारस्य स्वमतमिति बहवो भ्रान्ताः। पूर्वत्र सर्वत्र प्रामाण्य परमतं, अप्रामाण्य स्वमतम्। अन्तिमे उत्पत्त्यसम्भवाधिकरणे तु अप्रामाण्यं परमतं, प्रामाण्य स्वम-तम्। प्रथमे हि स्मृत्यधिकरणे "स्मृत्यनवकाशदोषप्रसङ्ग इति चेत" इति प्रामाण्य पूर्वपक्षीकृत्य नान्यस्मृतीत्यादिना अप्रामाण्य सिद्धान्त-यित्वा इममेव क्रममुत्तराधिकरणेषु अनुवर्तमान सूचयित्वा चरमेऽधिक-रणे प्रकरणापास्यत अप्रामाण्ये 'उत्पत्त्यसम्भवात्' 'न च कर्तुः करणम्' इति हेतुद्वयमुक्त्वा 'विज्ञानादिभावे वा तदप्रतिषेध.' 'विप्रतिषेधाच्च' इति तन्निरासपर सूत्रद्वय प्रणयन् अप्रामाण्यस्य पूर्वपक्षत्व अत एव परमतत्व, प्रामाण्यस्य सिद्धान्तत्व अत एव स्वमतत्व च संशयस्य अल्पमप्यास्पद-मविना स्फुटीकरोति। इत्थं सुप्रबलया श्रुत्या अर्थे प्रमीयमाणे दुर्बलेन प्रकरणेन विपरीतमर्थं वदन्तः अप्रामाणिकाश्चेत् निरस्यन्ते। प्रामाणि-काश्चेत् सूत्रकारसमानाभिप्रायतया नीयन्ते। पूर्वकाण्डे भेदनिरूपणपरे द्वितीयेऽध्याये चरम शाखान्तराधिकरणे अभेदनिरूपणपरम्। उत्सर्गा-

पद्दाश्या भेदनिरूपणस्य त्रिकीर्षितत्वाभासङ्गतिरिति वदन्ति । तथाऽत्र सुवचम् । अप्रामाण्यशङ्कापनं पादार्थः । तत्र प्रामाण्यनिरूपणमपवाद इति । परन्तु परपन्नप्रतिक्षेपस्यैवेह पादार्थत्वात् सर्वेष्वधिकरणेषु स स्थित इति न मात्रयाऽप्यन्यस्य किञ्चिदस्ति ।

६७ मीमांसावृत्तिकाराः उपवर्षं अद्वैतीति मनोरथं कुर्वन्ति । शरीरातिरिक्तात्मसाधनपरतया वर्णिते 'एक आत्मनः शरीरे भावात्' इत्यधिकरणे उपवर्षः सूत्रभाष्ये कीर्तितः । तावता किं साऽद्वैतीति सिध्यति । शास्त्रतात्पर्यविद् इति शबरः निर्दिशति शङ्करः । किं तेन शबराऽद्वैती ? वर्णानपद्ब्रह्मसत्रधर्मशास्त्रेतिहासपुराणप्रत्यक्षानुमानादिसर्वप्रमाणविरुद्धमद्वैतमिति परप्रयुक्तम् । अहम्प्रत्ययविषयविज्ञानव्यतिरिक्तद्रष्टनित्यनानात्मवादी उपवर्ष इति शाबरे तन्मतनिरूपणादवगम्यते । अतः स नाद्वैतीति निश्चितमेतत् । अत्र उमामहेश्वरशास्त्रिणा तत्र्चर्चा द्रमिडाचार्यमनुबध्नाति शास्त्री । तत्र 'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संक्षिप्तिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते ' इति स्वयं बोधायनवृत्त्यनुसारित्वं श्रीभाष्यकृतो वदन्ति तद्पणप्रवृत्तः सः प्रथमं श्रीभाष्यकृत्वनाप्तत्वाद् अश्रद्धेय तदित्याह । प्रमाणं विना प्रतिपक्षाचार्येष्वनाप्तत्वशङ्किः नीचप्रकृतितां दर्शयन्ती प्रकारं यादेष्वनधिकारित्वं कल्पयति । अथ बोधायनवृत्तिः द्वैतविरुद्धा चेत् अद्वैतग्रन्थकाराः तां कुतो न खण्डयन्ति । भास्करभाष्यादिकं हि खण्डयन्ति, इत्याह । शङ्कराचार्यः खण्डयत्येव ताम् । अर्वाचीनास्तु न तद्दर्शिनः । अतो न खण्डयन्ति । द्वैतपरत्वं तर्हि मन्त्रादिस्मृतिरानविरुद्धा साऽनुपादेयेत्याह । मन्त्रादिस्मृतिश्रुतिविरोधो न द्वैतस्य अपितु अद्वैतस्येति परेषामेव स्वहृदयसाक्षिकमप्रियम् । सङ्केतमात्रात् अविरोधं वदन्तो वर्तन्ते । सत्रभाष्यस्य सूत्रबोधायनवृत्त्याद्यविरुद्धता तत्खण्डनपरता च श्रीभाष्यादिषु स्फुटमेव प्रदर्शिता ।

बोधायनग्रन्थस्य विशिष्टाद्वैतपरत्वं श्रीभाष्ये कण्ठत उक्तं अविश्वसनीयं प्रतिज्ञाय स्वयमाह—"उपवर्षेण भगवता वृत्तिकृता सूत्राण्यद्वैतपरतया व्याख्यातानि" इति। यदि श्रीशङ्कर एव एवमवक्ष्यत् तदाऽपि तत्त्वचन्द्रिकाकारानुसारेण तं प्रति "तव चाप्तत्वात्। त्वदीयवचनमात्रेण उपवर्षवृत्तेरद्वैतपरत्वस्य निश्चेतुमशक्यत्वात्" इत्यस्माभिर्वक्तव्यमभविष्यत। स तु न तथोक्तवान्। भगवद्रामानुजापेक्षया आत्मानमाप्ततरं लोका ग्रहीष्यन्तीति मन्यत इव तत्त्वचन्द्रिकाकारः। सूत्रभाष्ये 'भगवता उपवर्षेण' इति सविशेषणनामनिर्देशमात्रेण तस्य कृतेरद्वैतपरत्वं प्रतिज्ञायते। तच्चानुपपन्नमित्यवोचाम। उपवर्षेण शारीरके यदुक्तं तदेव शबरस्वामिना पूर्वतन्त्रे अभिहितमिति श्रीशङ्कर आह—

इत एव चाकृष्य आचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम्—इति। तत्र च शबरस्वामी आत्मनः अहम्प्रत्ययविषयत्वं अहम्प्रत्ययस्य चाव्यामोहत्वं आत्मनो विज्ञानातिरिक्तत्वं विज्ञानधर्मित्वमित्यादि वदति। न चोपवर्षस्याद्वैतित्वे इदं सर्वं सङ्गच्छते। शबरादयो वेदविदो यथा नाद्वैतिनः तथैव तेषां पूज्यतम उपवर्षोऽपि नाद्वैती।

बोधायनवृत्तिखण्डनं शङ्करेण क्रियमाणं पश्यन्नेव श्रीरामशास्त्री बोधायननामग्रहणाभावात् अदूषितत्वं प्रतिज्ञाय अनुपदमाह—

> यत्तु श्रुतप्रकाशिकाकारस्य कल्पनं 'परेषामार्षव्याख्यानातिलङ्घित्वं 'उपासात्रैविध्यात्' 'सर्वत्र प्रसिद्धोपदेशात्' इत्यादिषु स्पष्टतरमिति तत् कुलटायाः पतिव्रतया दोषारोपमनुकरोति।

इति। का कुलटा का पतिव्रतेति नूनं न जानाति शास्त्री। उपासात्रैविध्यादित्यत्र भामती—

> तदेव स्वमतेन व्याख्याय प्राचां वृत्तिकृतां मतेन व्याचष्टे—अथवेति। न वाक्यभेद इत्यभिमानः प्राचां वृत्तिकृताम्। तदेतदालोचनीयम्—कथन्न वाक्यभेद इति।

२८. श्रीकण्ठस्य श्रीभाष्यचारत्वं दुरपह्नवम् । अग्रे निरूपयिष्यते ।

२९ श्रीकण्ठस्यात्यन्तमर्वाचीनत्वे चिन्तामण्युक्ता युक्तयः अप्रकम्प्याः । सर्वदर्शनसङ्ग्रहे भास्करदर्शनानिरूपणं तत्प्रचारबाहुल्याभावात् । भास्करादीन् अपहाय सर्वान् दर्शनकारान् निरस्य सिद्धान्तस्थापने प्रवृत्तः श्रीदेशिकोऽपि श्रीकण्ठं वा तदीयं शैवविशिष्टाद्वैतं वा न निर्दिशति । न निरस्यति । न च स्वोपजीव्यत्वात् तदनिराकरणमिति युक्तम् । शारीरकं वक्ष्याम इति वदता वृत्तिकृतः अत एव शरीरात्मभावप्रयुक्तविशिष्टाद्वैतस्य प्रसिद्धत्वात् । जगन्मिथ्यात्वाधानाद्वैतवादः उपवर्षासम्मत इति शाबरे तन्मतोपपादनेन स्फुटमवगम्यमानत्वेन, अहम्प्रत्ययविषयज्ञातृनानाजीवसाधनात् शुद्धचैतन्यरूपैकात्मत्वप्रयुक्ताद्वैतस्यापि तदसम्मतत्वावगमेन च विशिष्टाद्वैतमेव तत्सम्मतमित्यवश्यं वक्तव्यत्वाच्च । सूत्रकारसिद्धान्तितस्य शरीरात्मभावस्य शङ्करादपि प्राचीनेन शठकोपसूरिणैव सुस्पष्टमभिहितत्वेन अन्योपजीवनस्यात्यन्तमनपेक्षितत्वात् । विलक्षणत्वाधिकरणे 'दृश्यते तु' इति सूत्रे पुरुषादिभ्यश्चेतनत्वेन प्रसिद्धेभ्यः विलक्षणानां केशनखादीनामुत्पत्तिं निदर्शयतः श्रीशङ्करस्यापि जगद्ब्रह्मणोः शरीरात्मभावसम्बन्धो मनसि स्थित एव । अतः सर्वथा श्रीकण्ठो देशिकेन नियतं खण्डितोऽभविष्यत् यदि स प्राचीनोऽभविष्यत् । 'सुदर्शनाचार्यैरपि तात्पर्यसङ्ग्रहे गरुडैक्यभावनादृष्टान्त एवोपात्तः । तदनुवर्तिना श्रीकण्ठाचार्येणापि तथैव मतमिति युक्तम् ।" इति शिवाद्वैतनिर्णये दीक्षितोक्त्या सुदर्शनापरनामहरदत्तानन्तरकालिक एव श्रीकण्ठ इति स्पष्टम् । तदनुवर्ती श्रीकण्ठ इत्युक्तेः । हरदत्तः द्वादशे त्रयोदशे वा शतके स्थित इति निर्धारयन्ति । अतस्ततोऽर्वाचीनः श्रीकण्ठ इति सिद्धम् । तदनुवर्तित्वेनोक्तस्य तद्गुरुत्वं वदन् शास्त्री नूनं परमप्रामाणिकः ।

३० ब्रह्मनन्दिवाक्यं द्रमिडभाष्यं च हठादेवाद्वैते योज्यते ।

कुतो न सम्भवी ? स चेत् प्रामाणिकः अन्यः कुतो न ? अन्यश्चेदप्रामाणिकः स कुतो न ? अस्मदीय रुद्वादी, न युष्मदीयः इत्यस्माभिरपि सुवचम् । वादकरणकौशलमन्यत् दौर्जन्यमन्यदिति निबन्धकर्तॄणां इय दुरवस्थाऽवश्यम्भाविनी ।

अन्यदाह—"रामानुजोदाहृतानुपूर्व्यैव निर्दिष्टवाक्यसत्त्वेऽपि न विरोधः । तद्वाक्यानां सद्विद्यायाः सगुणत्वव्यवस्थापकत्वाभावात् ।" इति । कथमिदमित्यत्राह—"अन्तर्गुणेत्यस्य प्रत्यग्गुणेत्यर्थ इति, गुणशब्दः स्वरूपपर इति, देवतापदस्य ब्रह्मरूपा परा देवता, इत्यर्थ इति तथा च प्रत्यगात्मरूपा परा देवतेति द्रविडाचार्यवाक्यार्थ इति कथितत्वात् । तथा च 'अन्तर्गुणामेव देवतां भजेत' इत्यनेन द्राविडाचार्यवचनेन प्रत्यग्ब्रह्मणोरभेदं तत्त्वमसिवाक्यार्थं विजानातीत्यर्थलाभात्" इति । पुनरपि जाड्यप्रकाशनमेव । 'घटोऽस्ति' । अत्र घट इति पट इत्यर्थः । तथा चास्य वाक्यस्य पटसत्त्वप्रतिपादकत्वात्त्यास्माभिरुक्तत्वात् भवत्सम्मतं यद् घटास्तित्वव्यवस्थापकत्वं तन्नास्तीत्येतद् यावत्समञ्जसं तावदेव हीदं भवद्वचनम् । अन्तर्गुणा अन्तर्गतगुणा, न पृथगनुसंहितगुणा परा देवतेति मुख्ये अबाधिते स्वरसेऽर्थे स्थिते अमुख्यार्थकल्पनं कुतः क्रियते । क्रियमाणं च कथं सुधियामङ्गीकार्यम् । एवं च 'अन्तर्गुणामेव देवतां भजेत' इत्येतावन्मात्रालोचनेऽपि जघन्यवृत्तिलभ्यो भवत्सम्मतोऽर्थो न परिग्राह्यः । मुख्यवृत्तिलभ्यस्तु अस्मदुक्तोऽर्थो ग्राह्य इति सिद्ध्यति । इत्थं सति सद्विद्याया अपि सगुणत्वं ततः दहरविद्याविकल्पश्च वाक्यकारभाष्यकारोक्तं सङ्गतं भवतीत्यभ्युच्चयाय वाक्यकारेण विद्याविकल्पश्चोक्तः' 'व्याख्यातं च द्रमिडाचार्येण विद्याविकल्पं वदता' इति ताभ्यामुक्तो विद्याविकल्प इति श्रीभाष्यकारा आहुः । प्रत्यगभेदो ब्रह्मण इहोक्त इत्यपार्थं वर्णयतां विकल्पोक्तिरियं प्रतिकूला । अत इमां परित्यजन्ति । 'परिणामस्तु स्यात् दध्यादिवत्'

इत्यत्र 'दध्यादिवत्' इत्येतदिव।

'परिणामात्' इति परिणामे सूत्रकारे स्पष्टं वदति 'इयं चोपादानपरिणामादिभाषा न विकाराभिप्रायेण। अपि तु यथा सर्पस्योपादानं रज्जुरेवं ब्रह्म जगदुपादानं द्रष्टव्यम्।' इति स्वकल्पितं स्वकीयं दर्शनं प्रवर्तयन् वाचस्पतिः सूत्रकारं खण्डयति। 'परिणामस्तु स्याद् दध्यादिवत्' इति वदन्तं भाष्यकारं च। इदं वाक्यमुदाहृत्य स्वसिद्धान्तानुगुणं वाचस्पतियोजनं खण्डयन्ति तत्र तस्यायमभिप्रायः। तथा योजनमशक्यम्। अस्फुटार्थत्वात्। निराकरणमनपेक्षितम्। सूत्रकारे निरस्ते तदनुसारिणां सर्वेषां निरासस्य कैमुतिकन्यायसिद्धत्वात्।" इति। न हि सूत्रकारखण्डनं शाङ्करं गोप्यं रक्षति वाचस्पतिः। "स्वमतपरिग्रहार्थमेकदेशिमतं दूषयति" इति आनन्दमयाधिकरणान्ते 'इदं त्विह वक्तव्यम्" इतीदं भाष्यवाक्यमवतार्य, उपरि 'सूत्राणि त्वेवं व्याख्येयानि' इत्येतद् भाष्यवाक्यं 'वेदसूत्रयोर्विरोधे 'गुणे त्वन्याय्यकल्पना' इति सूत्राण्यन्यथा नेतव्यानि" इत्येवमाशयं स्पष्टं वदति। परिणामवादिनः सूत्रकारप्रभृतयः सर्वे प्राञ्च आचार्याः। तत्खण्डनपुरस्सरं स्वयमभिनवविवर्तवादं प्रवर्तयन्तः अद्वैतिन इत्यसदपलपनम्।

स्वमतप्रतिद्वन्द्वित्वात् शङ्करादिभिरनुदाहृतानि ब्रह्मनन्दिद्रमिडभाष्यवाक्यानि भगवद्रामानुजेनोदाहृतानि चिरन्तनसम्प्रदायानुरोधिनोऽर्थस्य प्राचीनत्वप्रदर्शनाय। तत्र भगवत्याचार्ये बहुधा कल्पनादोषानुद्भावयन् शास्त्री स्वकल्पनासाम्राज्ये अभिमानमभिषिञ्चन् उन्मत्तचर्यां चरति। तत् सर्वमुपेक्षामहे। इदमेकमभिज्ञैर्ज्ञातव्यम्।

"यद्यपि सचित्तेन निर्भुग्नदैवतगुणगणं मनसा
अनुधावेत् तथाऽप्यन्तर्गुणामेव देवतां भजते"

इति द्रमिडभाष्यम्। अत्र 'यद्यपि सचित्ता न' इत्यनेन 'अन्यचित्त' तथाऽनुधावेदिति गम्यते। किन्तद् यदिति विमर्शे दहरोपासनमिति

प्रतीयते। तत्रैव देवतातः पृथक् गुणगणोपासनविधानात्। दहरविद्या-निष्ठ ब्रह्मणो विभक्त गुणगणं पृथगुपास्ते। तथा सद्विद्यानिष्ठो नोपास्त इत्युक्त भवति। एवं चेत् निर्गुणोपासनमिदं प्रसज्यते। अन्य चोपासनस्य फलं एतदनुरूपं निर्गुणप्राप्तिरेव भवितुमर्हति। एवं चेत् सगुणप्राप्तिकामाना दहरविद्या, निर्गुणप्राप्तिकामाना सद्विद्येति व्यवस्थितत्वात् 'विकल्पाऽविशिष्टफलत्वात्' इति सूत्रकारोक्तो विकल्पोऽनयोर्विद्ययोर्न भवतीति शङ्का यद्यपीत्युक्ता। अत्र समाधिः तथापीत्यादिनोच्यते। उपासनविषयत्वाभावेऽपि गुणाना उपास्ये ब्रह्मणि विद्यमानत्वात् उक्ताया अनुपपत्तेर्नास्त्यवकाशः अनुपासितापहतपाप्मत्वादिगुणापि हि परा देवता स्वयमन्तर्गतगुणैव, वस्तुतस्तद्गुणसहितैव। अतस्तद्गुणवत्या एव तस्याः प्राप्तिः। अतोऽविशिष्टफलत्वं विकल्पश्चेति सर्वं समञ्जसमिति।

अन्तर्गुणा भगवतीति सक्षेपशारीरकश्लोकोचाहे कृत्स्नमेवेद द्रमिडभाष्य श्रीभाष्यकारेण कल्पितमिति ब्रूयात्। तत्सत्त्वात्तु अद्वैतमेव तदर्थं वदयामीति सन्नह्यति। तत्रेद सुधीभिविभाव्यम्। 'युक्त तद्गुणकोपासनात्' इति वाक्ये मूलभूते उपासनपदप्रयोगात् 'अन्तर्गुणामेव देवता भजते' इति भाष्ये भजिप्रयोगाच्च' अद्वैतसम्मत केवलज्ञानमत्रोभयत्र नभिप्रेतमिति स्पष्टम्। दहरविद्याया निर्भुग्नदैवतो गुणगणः पृथगुपासनविधानात् पृथगनुसन्धानविषय इत्यर्थः। सद्विद्यायां तु गुणा अन्तरेव वर्तन्ते। पृथगुपासनविध्यभावात् अननुसन्धीयमाना एव वर्तन्त इत्यर्थः। एवं च गुणशब्दः उभयत्र समानार्थः। गुणेषु विद्याद्वये उपासनविषयत्वतदभावाभ्यां विशेष उच्यते। एवं सति अन्तःशब्दस्य प्रत्यगर्थत्वे गुणशब्दस्य स्वरूपरूपविचित्रार्थत्वे च किं मानम्? यद्यपि तथाप्योः साङ्गत्यं च कथम्? न हि सद्विद्यायां गुणानामनुपास्यत्वं ब्रह्मणः प्रत्यग्रूपत्वविरोधि। येन तत्र शङ्का भवेत्। न च प्रत्यग्रूपत्वाभिधानमात्रं समाधानं भवति। दहरविद्या सगुणविषया। सद्विद्येय निर्गुणा-

विषयेत्येतावन्मात्रं हि वक्तव्यं यदि विवेकविवक्षा । एवं पूर्वाचार्यसूक्त्य नुरोधि विशिष्टाद्वैत श्रीभाष्यकारै: स्वबुद्धिकल्पितम् तत्खण्डनपरं अद्वैत चिरन्तनाविच्छिन्नसम्प्रदायागतमिति शब्दानां स्वसम्मतमाया विशेषासद्भव्युत्पत्त्यन्तरमाश्रित्य वदतीव ।

"अन्तर्गुणा भगवती परदेवतेति
प्रत्यग्गुणेति भगवानपि भाष्यकारः
आहस्म"

इत्यत्र 'भगवान् भाष्यकारोऽपि अन्तर्गुणा परदेवतेत्यनेन प्रत्यग्गुणेत्याह स्म" इत्य वयाऽर्थश्च । अन्तर्गुणेत्यस्य प्रत्यग्गुणेत्यर्थं इत्युक्तं भवति । मूलस्थस्य पदस्य एव विवरणं करोति श्लोककारः । अन्यथा प्रथम इति शब्दोऽनान्वित स्यात् । अतोऽत्र प्रत्यग्गुणेत्यपि मूलमस्ति तत् स्वसिद्धान्तविरुद्धत्वात् परै परित्यक्तमित्यादि रागद्वेषोद्रूपिशाचावेश विकृतचेतसाऽभिहृत सर्वं केवलं प्रलपितम् । प्रत्य गुणेत्यस्यापि "प्रत्यक्षः ध्यानाविषयत्वात् अप्रकाशमाना, न तु पराक्ष ध्यानगोचरत्वात् प्रकाश माना गुणा यस्या सा भग ते । तद्गुणैव उपासनाकाले अप्रकाशमानैः वैगुण्यैर्याशब्दैव देवता प्राप्यते," इत्यक्लिष्टार्थवर्णनस्य सुशकत्वात् अन्यथाकरणं आचार्याः स्वप्नेऽपि न चिन्तयेयुरिति सम्प्रदायपरि मानभिज्ञ सद्गाहः शास्त्री कथं जानीयात् ।

सव्यवहाग्मात्रत्वादिति भद्दानन्धुक्तेरर्थः प्रागेव सुनिरूपितः । नात्रा द्वैतिसम्मतस्य मिथ्याव्यवहारस्य गन्धोऽप्यस्ति । सव्यवहार समी चीन सत्यरूपी व्यवहारो ग्राह्यः । तदाहुः श्रीमदाभनवरङ्गनाथब्रह्मतन्त्र परकालमहादेशिकाः गूढार्थसङ्ग्रहे—"बौद्धस्य व्यावहारिकस्याप्रामाण्य- कत्वादिति अनुचितेति तात्पर्येण ( जैन ) परीक्षामुखसूत्रेषु मुख्य साव्यवहारिक चेति प्रत्यक्षविभागः प्रदर्शित । 'संव्यवहार अबाधितो व्यवहार इति प्रभाचन्द्रेण प्रमेयकमलमार्ताण्डे निरूपितम् । अयमेवार्थ

'सव्यवहारमात्रत्वात्' इत्यत्र ब्रह्मनन्दिनोऽपि विवक्षितः ।" इति (७८५ पु)
सत्यमिदं वाक्यं 'वाचारम्भणं विकारो नामधेयम्' इति श्रुत्यभिप्रायानु-
सारि । परं तु अद्वैतमत्रापि नास्ति, नाभिप्रेतम् । सत्य एव विकारः
अवस्थान्तरं, सत्यमेव तदनुगुणं नाम च वाचा व्यवहारेण हेतुना फल-
भूतेन आरम्भणं उपादानकारणेन द्रव्येण आलभ्यमानं स्पृश्यमानं
भवति । मृद्विकारभूतं घटादिशब्दाभिधेयं च किल कार्यवस्तु मृत्तिकेत्येव
सत्यम् । न तु मृत्तिकेतरत्किञ्चिद्द्रव्यत्वेन । अतः कारणमेव कार्यं
द्रव्यम् । अवस्थाभेदेन तु कार्यत्वम् । एवं एकविज्ञानेन सर्वविज्ञानप्रसि-
द्ध्यर्थं सत्कार्यवादस्थापनपरेयं श्रुतिः ।

भ्रान्तः इमां घटकश्रुतिं घोषयति । दूषयति च यस्य पृथिवी शरीर-
मित्यादेर्घटकश्रुतित्वम् । 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति
वाचारम्भणमित्यादेः प्रतिज्ञातार्थोपपादकत्वं सूत्रितं भाषितं च । घटक-
श्रुतित्वं न केनाप्युक्तम् । अनुपपन्नं च । भेदस्यात्यन्तं तिरस्कारात् ।
व्यावहारिकमिति भवद्भिः अपारमार्थिकस्यैवोक्तेः । अतो भवद्रीत्या
भेदवादुकश्रुतिरेषा, न तु घटकश्रुतिः । यस्य पृथिवीति व्यतिरेकनिर्दे-
शात् । 'भोक्ता भोग्यं प्रेरितारं च' इति भेदश्रुतियाथार्थ्यं, शरीरत्वव्यपदे-
शेन 'विद्वान् ब्राह्मणः' इत्यादिवत् अभेदपरस्य 'सर्वं खल्विदं ब्रह्म'
'इदं सर्वं यदयमात्मा' इत्यादिसामानाधिकरण्यस्य मुख्यत्वं च समर्थ-
यन्ती 'यस्य पृथिवी शरीरमित्यादिरेव घटकश्रुतिरित्यास्तां तावत् ।

३४—२५ अत्र भगवद्विग्रहविषये वाक्यकारभाष्यकारवचनान्यु-
दाहृत्य वेदार्थसङ्ग्रहे यन्निरूपणं कृतं, यच्च तत्र व्याख्याने उक्तं तदनूद्य
विमृशति शास्त्री । भगवतः स्वाभाविकाः कल्याणगुणा इव रूपमप्यस्ति ।
श्रुतत्वादिति श्रीमद्भाष्यकृतां सिद्धान्तः । तत्र वाक्यं प्रमाणयन्तस्ते
वेदार्थसङ्ग्रहे

वाक्यकारश्च एतत्सर्वमाह—'हिरण्मयः पुरुषो दृश्यत इति

विषयत्येतावन्मात्र हि वक्तव्यं यदि विवेकविवक्षा। एवं पूर्वाचार्यसूक्तय नुरोधि विशिष्टाद्वैत श्रीभाष्यकारैः स्वबुद्धिकल्पितम् तत्खण्डनपरं अद्वैतं चिरन्तनाविच्छिन्नसम्प्रदायागतमिति शब्दानां स्वसम्मतमाथा विशेषासद्भ्युत्पत्त्यन्तरमाश्रित्य वदतीष।

"अन्तर्गुणा भगवती परदेवतेति
प्रत्यग्गुणेति भगवानपि भाष्यकारः
आहस्म'

इत्यत्र "भगवान् भाष्यकारोऽपि अन्तर्गुणा परदेवतेत्यनेन प्रत्यग्गुणेत्याह स्म" इत्य वयार्थश्च। अन्तर्गुणेत्यस्य प्रत्यग्गुणेत्यर्थं इत्युक्तं भवति। मूलस्थस्य पदस्य एव विवरणं करोति श्लोककार। अन्यथा प्रथम इति शब्दोऽनान्वित स्यात्। अतोऽत्र प्रत्यग्गुणेत्यपि मूलमवति तत् स्वसिद्धान्तविरुद्धत्वात् परं परित्यक्तमित्यादि रागद्वेषोद्भ्रान्तपिशाचावेश विकृतचेतसाऽभि इव सर्वं केवलं प्रलपितम्। प्रत्यग्गुणेत्यस्यापि "प्रत्यक्षः ध्यानाविषयत्वात् अप्रकाशमाना, न तु पराक्ष ध्यानगोचरत्वात् प्रकाश माना गुणा यस्या तां भजते। तद्गुणैव उपासनाकाले अप्रकाशमानैः तैर्गुणैर्विशिष्टैव देवता प्राप्यते," इत्यक्लिष्टार्थवर्णनस्य सुशकत्वात् अन्यथाकरणं आचार्या स्वप्नेऽपि न चिन्तयेयुरिति सम्प्रदायगरि मानमिम तद्वाह्य शाक्षी कथं जानीयात्।

सत्यवहारमात्रत्वादिति मद्वानन्युक्तेरर्थः प्रागेव सुनिरूपितः। नात्र द्वैतिसम्मतस्य मिथ्याव्यवहारस्य गन्धोऽप्यस्ति। सद्व्यवहार समी चीन सत्यरूपो व्यवहारो ह्युक्त। तदाहु श्रीमदामनवद्भनाथमहातन्त्र परकालमहादेशिकाः गूढ येसद्महे—"बौद्धस्य व्यावहारिकस्यातात्त्विं कत्वोक्ति अनुचितेति तात्पर्येण (जैन) परीक्षामुखसूत्रेषु मुख्य सांव्यवहारिक चेति प्रत्यक्षविभागः प्रदर्शित। 'संव्यवहार अबाधितो व्यवहार इति प्रभाचन्द्रेण प्रमेयकमलमार्तण्डे निरूपितम्। अयमेवार्थः

सृष्टमिति गृहीत्वा स्वाद्रूप कृतकमिति परे प्रत्यवातत । अत्रोत्तर 'रूपं वा' इति । रूपमात्र हि श्रूयते । तत्र कृतकमिति विशेपण कुतो भवद्भिर्दीयते । विशेपणाभावात् स्वाभाविक नित्य तदिति प्रत्येतव्यम् । ननु रूप स्वाभाविकमस्ति चेत् अस्माभिर्दृश्येत । नेत्याह—अतीन्द्रियमिति । तर्हि दृश्यत इति कथं श्रुतिराहेति चेदत्रोत्तर—अन्तःकरणप्रत्यक्षमिति । कुत इदमवगम्यत इत्यत्राह—तन्निर्देशादिति । 'न चक्षुपा गृह्यते' 'मनसा तु विशुद्धेने'त्यादिश्रुतेरित्यर्थः ।

'तस्य च रूपस्यानित्यत्वादि वाक्यकारेणैव प्रतिपिद्धम्' इति वेदार्थसंग्रहश्रीसूक्तौ आदिशब्दग्राह्य मायामयत्वम् । अनित्यत्व निराकृत्य नित्यत्वे स्थापिते मायामयत्वं सुदूर निरस्तं भवति । कथमत्र तन्निरासलाभ इत्यत्र द्रमिडभाष्यविवरणमुखेन तात्पर्यदीपिकाया स दर्शितः ।

> अञ्जसैव विश्वसृजो रूपम् । तत्तु न चक्षुपा ग्राह्यम् । मनसा त्वकलुपेण साधनान्तरवता गृह्यते । 'न चक्षुपा विशुद्धेन' इति श्रुतेः । न ह्यरूपाया देवताया रूपमुपदिश्यते । यथाभूतवादि हि शास्त्रम् ।.. ..

इत्यादि द्रमिडभाष्यम् । अत्र तात्पर्यदीपिका—

> अञ्जसा अव्यवधानेन, स्वाभाविकमित्यर्थः । ऐन्द्रजालिकवत् मायाकृतमिति शङ्काव्यावृत्त्यर्थमाह—तत्तु, इति । मिथ्याभूत दुष्टेन्द्रियग्राह्यम् । अदुष्टकरणग्राह्यत्वात् परमार्थभूतमित्यभिप्रायः । पारमार्थ्यमेवोपपादयति—न हीति । अरूपाया रूपोपदेशः कथ नेत्यत्राह—यथाभूतवादीति ।

इति । अव्यवधानेन आगन्तुककारणव्यवधान विना । तेन लब्धोर्थः स्वाभाविकमिति । यद्यन्मिथ्या तत्तद् दुष्टेन्द्रियग्राह्यम् । तथा च शाबरं भाष्यं—यस्य च दुष्टं करणम्, इत्यादि । इह तु विशुद्धमनोग्राह्यत्वमुक्तम् । तथा चादुष्टकरणग्राह्यत्वान्न मिथ्यात्वमिति भावः । पूर्वपक्ष्यभि-

भाष्ये सर्वान्तरं स्यात्, लोककामेशापदेशात्, तथोदयादश्रुत्य नाम्' इत्यादिना। तस्य च रूपस्यानित्यतादि वाक्यकारेणैव प्रतिपन्नम्—'स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्' इति उपासितुरनुग्रहार्थं परमपुरुषस्य रूपसङ्ग्रह इति पूर्वपक्षं कृत्वा 'रूपं वाऽतीन्द्रियमन्तःकरणप्रत्यक्षं तन्निर्देशात्' इति। यथा ज्ञानादयः परस्य ब्रह्मणः स्वरूपतया निर्देशात् स्वरूपभूता गुणाः तथा इदमपि रूपं श्रुत्या स्वरूपतया निर्देशात् स्वरूपभूतमित्यर्थः।

इत्यवोचन्। 'भाष्यकारेणैतद् व्याख्यातम्' इत्युक्त्वा द्रामिडभाष्यमर्थं चोदाहरन्। तत्र 'स्याद्रूपं कृतकमनुग्रहार्थं' इति वाक्यग्रन्थं मनसि निधाय तस्य स्वसिद्धान्तानुगुणमर्थं वदन् श्रीशङ्करः सूत्रभाष्ये अन्तरधिकरणे 'स्यात्परमेश्वरस्यापि इच्छावशात् मायामयं रूपं साधकानुग्रहार्थम्' इत्याह। इदं वाक्यग्रन्थविरुद्धमिति निरूपणाय श्रीभाष्यकृत वाक्यग्रन्थं सभाष्यमुदाहृत्य तात्त्विकमर्थं प्रतिपादयन्ति। तत्र 'स्याद्रूपं कृतकं' इति कृतकत्वमुक्तम्। कृतकत्वं क्रियया निर्वृत्तत्वम् न्यायत्वम्। अनित्यत्वमिति यावत्। 'तस्य प्रमा च वचनैः कृतकेतरैश्चेत्' इति प्रसिद्धः प्रयोगः। कृतकेतरैः नित्यैर्वेदवचनैरिति ह्यर्थः। अन्याऽप्यर्थः मायामयमिति। इन्द्रजालवत् क्रियया निर्वर्त्यमानत्वात्। एवमर्थं मायामयमिति शङ्कर आह। ऐश्वर्यात् सर्वशक्तत्वात् तच्चेतसां तदुपासकानां अनुग्रहार्थं अभिमतसिद्ध्यर्थं कृतकं अरूपेणैव सता परमात्मना तदानीमेव कृतं सृष्टं दर्शितं वा स्यादिति वाक्यार्थः। एवमुक्तं भगवद्रूपस्यानित्यत्वं मायामयत्वं च निराक्रियते 'रूपं वाऽतीन्द्रियमन्तःकरणप्रत्यक्षं तन्निर्देशात्' इत्यनेन। वाकारोऽत्र श्रूयमाणः पूर्ववाक्यस्य पूर्वपक्षपरत्वं प्रकाशयति। हिरण्मयः पुरुषो दृश्यत इति रूपं श्राव्यते। अत्र, अरूपत्वाद् ब्रह्मणः उपदिश्यमानमिदं रूपं उपासकानुग्रहाय ब्रह्मणा

सूत्रमिति गृहीत्वा स्वाद्रूप कृतकमिति परे प्रत्यजानत। अत्रोत्तरं 'रूपं वा' इति। रूपमात्रं हि श्रूयते। तत्र कृतकमिति विशेषणं कुतो भवद्भिर्दीयते। विशेषणाभावात् स्वाभाविक नित्य तदिति प्रत्येतव्यम्। ननु रूप स्वाभाविकमस्ति चेत् अस्माभिर्दृश्येत। नेत्याह—अतीन्द्रिय-मिति। तर्हि दृश्यत इति कथं श्रुतिराहेति चेदत्रोत्तर—अन्तःकरणप्रत्यक्षमिति। कुत इदमवगम्यत इत्यत्राह—तन्निर्देशादिति। 'न चक्षुषा गृह्यते' 'मनसा तु विशुद्धेने'त्यादिश्रुतेरित्यर्थः।

'तस्य च रूपस्यानित्यत्वादि वाक्यकारेणैव प्रतिषिद्धम्' इति वेदार्थसंग्रहश्रीसूक्तौ आदिशब्दग्राह्यं मायामयत्वम्। अनित्यत्वं निराकृत्य नित्यत्वे स्थापिते मायामयत्वं सुदूरं निरस्तं भवति। कथमत्र तन्निरासलाभ इत्यत्र द्रमिडभाष्यविवरणमुखेन तात्पर्यदीपिकायां स दर्शितः।

> अञ्जसैव विश्वसृजो रूपम्। तत्तु न चक्षुषा ग्राह्यम्। मनसा त्वकलुषेण साधनान्तरवता गृह्यते। 'न चक्षुषा विशुद्धेन' इति श्रुतेः। न ह्यरूपाया देवताया रूपमुपदिश्यते। यथाभूतवादि हि शास्त्रम्। . ..

इत्यादि द्रमिडभाष्यम्। अत्र तात्पर्यदीपिका—

> अञ्जसा अव्यवधानेन, स्वाभाविकमित्यर्थः। ऐन्द्रजालिकवत् मायाकृतमिति शङ्काव्यावृत्त्यर्थमाह— तत्तु, इति। मिथ्याभूत दुष्टेन्द्रियग्राह्यम्। अदुष्टकरणग्राह्यत्वात् परमार्थभूतमित्यभिप्रायः। पारमार्थ्यमेवोपपादयति—न हीति। अरूपाया रूपोपदेशः कथं नेत्यत्राह—यथाभूतवादीति।

इति। अव्यवधानेन आगन्तुककारणव्यवधानं विना। तेन लब्धोर्थः स्वाभाविकमिति। यद्यन्मिथ्या तत्तद् दुष्टेन्द्रियग्राह्यम्। तथा च शाबरं भाष्यं—यस्य च दुष्टं करणम्, इत्यादि। इह तु विशुद्धमनोग्राह्यत्वमुक्तम्। तथा चादुष्टकरणग्राह्यत्वान्न मिथ्यात्वमिति भावः। पूर्वपद्यभि-

माय रूपमुक्त्वा निराकरोति भाष्यकार न ह्यरूपाया इति । अत्र युक्ति —यथाभूतवादि हि शास्त्रमिति ।

अत्र यदाह शास्त्री—स्याद्रूपमित्यस्य पूर्वपक्षत्व 'रूपं वा' इत्यस्य सिद्धान्तत्वमित्यनुपपन्नम् । उत्तरत्र अकृतकत्वबाधकशब्दाभावात्, इति, तद् वाक्यव्युत्पत्तिदारिद्र्यनिबन्धनम् । अकृतकत्व यथा तत्र गम्यते तथापपादित प्राक् । अन्यदाह दार्जन्यात् "रूपज्ञानीन्द्रियमित्येव पाठ' । वाकार परेण स्वमतानुगुण्याय कल्पित । चकारश्च निष्का सित " इति । किं वाक्यमन्यथा दृष्ट महात्मना, येनैव सावधारणमुच्यते । चार्वाक कश्चिदाह—नाग्निहोत्र जुहोति, न सोमेन यजेतेति, अनृत वदेत्, कलञ्ज भक्षयेदिति च अस्मत्सिद्धा तमूलप्रमाणे वेदे स्थिते धूर्ता भ्रान्तियमानिन नञ्च पूर्वत उद्धृत्य परत्र योजयामासुरिति । तस्याय ज्येष्ठो भ्राता ।

परमेश्वरस्य रूपादिकं वयमप्यभ्युपगच्छाम इति शङ्कराचार्य वाक्यानि बहून्युदाहरन्नाह । अत एव लोकव्यामोहनरत्वमद्वैतिनाम् । बौद्धनिराकरणपराणि सूत्राणि तथैव व्याख्यायन्ते । तेषामेव तु सिद्धा न्ताऽङ्गीक्रियते जगन्मिथ्येति । अपारमार्थिकत्वेऽपि नासत्त्व प्रति भासिकत्व वस्तुच्यते । विमत मिथ्या दृश्यत्वात् शुक्तिरूप्यवदिति साध्य- मान मिथ्यात्व सगुणब्रह्मणोऽपि तुल्यम् । तच्च त्रैकालिकात्यन्ताभाव प्रतियोगित्वम् । अयं पट एतत्तन्तुनिष्ठात्यन्ताभावप्रतियोगी अंशित्वात् पटान्तरवदिति च तत्त्वप्रदीपकारश्चित्सुखाचार्य अनुमानविशेषेणाद्वैत प्रतिष्ठापयति । तथा च यदा परमेश्वर उपासकानुग्रहाय रूपमात्मन सृजति तदापि तन्नास्त्येव । कथं यथाभूतवादित्व शास्त्रस्य । स्वच्छाव शात् रूपसृष्टे पूर्वं अरूपैव हि देवता । तत्र 'न ह्यरूपाया रूपमुपदिश्यते' इति भाष्यस्य कथं सङ्गतिः ।

हिरण्मय 'पुरुष' इत्यत्र हिरण्यविकार इत्यर्थे सति कृतकत्वमुक

म्यात्। अतोऽत्र उपमा भागा हिरण्यतुल्या इति। तदिदं वाक्यकारे-णोक्तम्। इदमुपपादयन् द्रमिडभाष्यकार आह—'न मयडत्र विकारमा-दाय प्रयुज्यते अनारभ्यत्वादात्मनः।' इति। परमात्मस्वरूपस्य वा विग्र-हस्य वा आरभ्यत्वे, उपादत्वे सति तत्र हिरण्मयविकारत्वशङ्काया अपि वाऽवसरो भवेत्। तत्तु नास्ति। उभयोर्नित्यत्वश्रवणात्। अतोऽत्र रूपस्याकृतत्वमभिमतं सिद्धं च। न ह्यत्र शरीरस्यारम्भत्वं सिद्धं कृत्वा तत्र हिरण्मयस्योपादानत्वं निषिध्यते येनाकृतत्वं न सिध्येत्। अनारभ्यत्वादित्युपादानस्यैव निषेधात्।

३६ कप्यासं पुण्डरीकमेवमक्षिणी, इत्यत्र कप्यासमित्यस्य वाक्य-कारोक्तेषु षट्स्वर्थेषु यो यमिच्छति स तं गृह्णातु। न मे यत्र क्वापि निर्भर इति श्रीशङ्करो मेने। मर्कटपृष्ठभागरूपेऽर्थे हीनोपमादोषशङ्काप-रिजिहीर्षया "कप्यास इव पुण्डरीकमत्यन्ततेजस्वि। एवमस्य देवस्या-क्षिणी। उपमितोपमानत्वात् न हीनोपमा" इत्येतमेकमर्थमभिधाय शङ्कनीयदोषपरिहारं कृत्वा विरराम। भगवद्गुणरसज्ञो यतिराजः तद-नुरूपं चरममर्थत्रयं परिजग्राह। तदनादरव्याजेन प्रथमस्य त्रयस्य पूर्वपक्षत्वमुपपादयामास व्यासार्यः। अन्यथा स्थिते श्रीभाष्यकारप्रभृतयः हीनोपमादोषं शङ्करे वदन्तीति भ्राम्यन् अभिनिविष्टो दीक्षितः स्वव्या-ख्येयमूलग्रन्थमप्याक्षिप्य

"एवं चात्र केषाञ्चित् वेदपरिहरणीयन्यायविरोधमविगणय्य काव्यपरिहरणीयहीनोपमादोषभयात् कपिशब्दस्य सूर्ये योगा-श्रयणमारोपितवृश्चिकभयादाशीविषमुखे निपतनम्। हीनोपमा-दोषमेकं परिहर्तुं प्रवृत्तानां च तेषां ब्रह्मोपासनां कुर्वन्ति ( त्वं प्रति ) ब्रह्महत्यां करोतीति वदतामिव अश्लीलनिहतार्थत्वरूपौ द्वौ दोषौ प्रसज्येयाताम्। परमेश्वरलोचनोपमाने हीनोपमादो-षादपि च तदभिव्यक्तिस्थाने भगवति सूर्ये मर्कटप्रतिलङ्घरूप-

शब्दप्रयोगरूपमश्लीलं कष्टतरम् ।'

इत्यादि वदति । परमेश्वरलोचनोपमाने पुण्डरीके मर्कटासनोपमा शङ्करोक्ता हीनोपमेति नैव श्रीभाष्यकारादिभिरुक्तम् । कप्यासनं पुण्डरीकं च साक्षादुपमानमस्माभिरिति पक्षे कप्यासनोपमा हीनोपमेति श्रुतप्रकाशिकायामुक्तम् । तस्मादन्यथावादी दीक्षित । तथाप्येतदुक्तौ विशेषौ दोषौ परिहरन् श्रीरङ्गरामानुजमुनिर्भावप्रकाशिकायामिदमाह—

"ननु हीनोपमाया आलङ्कारिकैर्दोषत्वेन परिगणनात् सा त्यज्यते चेत् सिद्धान्तेऽप्यमङ्गलस्य कप्यासशब्दस्य प्रयोगादश्लीलत्वं स्यात् । तथा अप्रसिद्धत्वात् निहतार्थत्वं च स्यादिति दोषद्वयं सिद्धान्तेऽप्यस्तीति चेन्न । अश्लीलत्वस्य सर्वपक्षसाधारणत्वात् । निहतार्थत्वं तु एतादृशजुगुप्सितार्थस्वीकारापेक्षया ज्याय इति तदेव युक्तमिति भावः ।"

इति । अयं भावः । कप्यासपदश्रवणे कपिपृष्ठभागस्मरणस्य नियतभावित्वात् सर्वेषु पक्षेषु जुगुप्सनीयार्थस्मृतिकारित्वरूपाश्लीलत्वदोषः समानः । अतः 'यश्चोभयोः समो दोषः' इति न्यायेन सोऽस्माकं प्रतिनोद्भावनीयः । निहतार्थत्वं तु अगत्या अङ्गीक्रियत एव । रविकरविकसितेत्याद्यर्थान्तरपरेणापि सता कप्यासपदेन जायमानः यस्यार्थस्य स्मृतिरत्यन्तं दोषावहेति भवान् मन्यते तस्य साक्षादेव वाच्यतया स्वीकारो हि अत्यन्तमनुचित इति । इत्थं दीक्षितोद्भावितदोषपरिहाराय भावप्रकाशिकोक्तार्थ एव 'मर्कटजघनसदृशपुण्डरीकसादृश्यार्थमन्तरं तु अश्लीलत्वादिदोषदुष्टतया वाक्यकृदनादृतत्वात् भाष्यकारेणापि नादृतम् ।' इति उपनिषद्भाष्ये संक्षिप्योक्तः । अत्रोक्तं वाक्यकृदनादृतत्वं 'तदर्थत्रयस्य पूर्वपक्षत्वं तत्स्वभावादेवावगतम्' इति श्रुतप्रकाशिकया व्यञ्जितम् । भाष्यकारानादृतत्वं तु तेन तस्यानभिधानाद् ज्ञायते ।

तदेवं श्रीरङ्गरामानुजमुनिं प्रति शाखिणः कार्यविष्फूर्जथुः स्थाने ।

३७—४० परमार्थतो ये अद्वैतिनः तेषां शैवत्वं श्रीकण्ठभाष्यभक्तिश्च नोपपद्यते । अद्वैतविरोधी खलु श्रीकण्ठः । तथा हि । ईक्षत्यधिकरणे निर्विशेषवादं खण्डयति । समन्वयाधिकरणे अविधेयज्ञानं निराकरोति । गुहाधिकरणे बुद्धिजीववादं पूर्वपक्षीकृत्य परास्यति । भूमाधिकरणे 'तस्मादिह ब्रह्मणि न द्वैतनिषेधप्रसक्तिः' इत्यवधारयति । अंशाधिकरणे 'ब्रह्मणि एवाज्ञानाज्जीवभावकल्पने बहुश्रुतिविरोधादिदोषप्रसक्तिर्दुर्वारा' इति जीवब्रह्मैक्यं प्रतिषेधति । सगुणमेव ब्रह्मस्वरूपं मुक्तप्राप्यं फलमिति 'उपास्यतेऽतस्तद्वचनात्' इत्यत्र सिद्धान्तयति । द्वैतनिषेधः, जीवब्रह्मैक्यं, ब्रह्मणो निर्विशेषत्वं चाद्वैतस्य जीवितम् । तदयं विध्वंसयति । तस्य पक्षे पतद्भिः कथं वस्तुतः अद्वैतिभिर्भवितुं शक्यम् । एषामद्वैतित्वं वा मिथ्या, शैवत्वं वा ।

तदास्ताम् । "श्रीकण्ठमतं वेदार्थसंग्रहेऽनूद्य निरस्यते । तत्र तात्पर्यदीपिकायां 'व्योमातीतवादं हृदि निधाय तत्परिपाटीमुपन्यस्यति' इति व्योमातीतवादत्वेन निर्दिष्टं तन्मतमेव ।" इत्याह शास्त्री स्वप्रकृत्यनुगुणवाक्यविन्यासवत्या पद्धत्या । अत्रापि सः यथावद् ग्रन्थार्थपरिज्ञानपाटवदौर्विध्यमेवात्मनः प्रख्यापयति । जगदुपादानभूतः पुरुषात्मा यो दहराकाशः तस्मादतिरिक्तः तदन्तवर्ती कश्चिदुपास्यः, न स्वयं दहराकाश इति वादः व्योमातीतवादः । श्रीकण्ठस्तु दहराकाशस्य तदन्तर्वर्तिनश्च उभयोरुपास्यत्वं मन्यते । अनयोर्वादयोर्मिथः कः सम्बन्धः ? व्योमातीतवादः प्राचीनोऽन्यः । श्रीकण्ठप्रवर्तितः अर्वाचीनः शक्तिशिवविशिष्टाद्वैतवादोऽन्य इति ग्रहणे अपटुः शास्त्री । व्योमातीतवादस्य व्योमानतीतवादस्य च प्रस्फुटमपि भेदं न ग्रहीतुमीष्टे ।

"व्योमातीतवादं हृदि निधाय" इति विवरणवाक्यस्य परिहासपरतया वा जाड्यभूम्ना वा बालिशैकभाषणार्हं कञ्चिदभिप्रायं वर्णयति । एवंविधोऽभिप्रायः कश्चन अस्य वाक्यरचेत् सः पूर्वमुदाहृते (२०)

'इत्याशङ्क्य मनसि निधाय' इति अनुपपत्त्यधिकरणशिवार्कमणिदीपिका-वाक्ये वक्तः सुसङ्गतो भवेत्।

श्रीव्यासार्यनिगमान्तमहादेशिककाल एव वाक्यद्रमिडभाष्ययोलुप्तत्व श्रीकण्ठस्य तदवलोकन दशातिशीथ पूर्णचन्द्रावलोकनमेव। "'तस्मिन् यदन्तरिति कामव्यपदेशा' इति वाक्यकारात्तकामशब्दस्य श्रीकण्ठभाष्यशिवार्कमणिदीपिकापर्यालोचनाया गौण्या वृत्त्या ब्रह्मैवाय इति लाभात् न वाक्यकारग्रन्थविरोध । न च श्रुतिवाक्यविरोधः" इति गम्भीर वदन् शास्त्रार्थविमर्शमार्गे स्वस्य पङ्गुबन्धभाव भूयोऽपि परिपूर्ण प्रकाशयति। 'अथातो ब्रह्मजिज्ञासा" इति सूत्रस्थब्रह्मशब्दस्य दिङ्नागधर्मकीर्तिप्रभृतिग्रन्थपर्यालोचनाया गौण्या वृत्त्या शून्यमेवार्थ इति लाभात् अस्मत्सिद्धान्तस्य न ब्रह्मसूत्रविरोध न च श्रुतिवाक्य विरोध इति प्रकटसौगतः कश्चन यदि ब्रूयात् तत्र किमुत्तरं प्रतिपद्येत शास्त्रीति ज्ञातुं नून बहुधः कुतूहलिनः स्यु !

अत्र श्रीकण्ठभाष्यस्वरूप प्रति वक्तव्यमुच्यते। तन्त्रमात्रसिद्धः केवलनिमित्तकारणमात्रभूतः शिव प्राचीने शैवे सर्वैरभ्युपगतः। शिव भक्ताः तदर्चनपरा अपि तथैव समतिपेदिरे। औपनिषद् निमित्तोपादाना-भयकारणत्व यस्योच्यते तादृशब्रह्मभाव तस्य नैव ये केचिदपि शैवा मेनिरे। वैदिके मार्गे विष्णोः पारम्यं स्थितम्। यज्ञेषु पूर्णाहुतिर्हि तदुद्देश्यका। वेदान्तेषु च कण्ठोक्त तस्य सर्वस्मात्परत्वम्। कालक्रमेण तत्र विप्रतिपत्ती जातायां समीचीने यौ प्राज्ञास्तत् प्रतिष्ठापयामासुः। अथापि केषांचित् शिवस्यापि वेदान्तवेद्यब्रह्मभावसम्पादने उत्कण्ठा अजायत। तत्फलमिदं श्रीकण्ठभाष्यम्। अस्य प्रसिद्धिसम्पादनेच्छया कैश्चित् प्रार्थितः चिन्नबोम्मो नाम राजा अप्पय्यदीक्षित तद्व्याख्यान करणे न्ययुङ्क्त। कारणविशेषैः क्रमेण लोभशैवतां प्राप्त सः तदङ्गी कृत्य शिवार्कमणिदीपिकामकरोत्। अस्य खण्डनपरा अपि ग्रन्थाः

प्रादुरभवन् । अथापि मीमांसकमूर्धन्यत्वात् दीक्षितस्य अनर्गलं तेनाभिवृष्यमाणेषु मीमांसान्यायेषु आकृष्टचेतसो विद्वांसः तं ग्रन्थमाद्रियन्त । ततः प्रभृति श्रीकण्ठभाष्यं लोके प्रसिद्धमासीत् ।

एवं विद्वन्मण्डलाभिनन्द्यन्यायमालाभासुरेण व्याख्यानेनोपष्टब्धमपि श्रीकण्ठभाष्यं स्वरूपतो निस्सारं, निश्शोभम् । नूनं अनतिव्युत्पन्नः शास्त्रेष्वनवीती प्रजापतिपशुपतिसुरपतिप्रमुखदेवतान्तरव्यतिरेकेण भगवत्पारम्यप्रतिष्ठापने प्राचीनैः प्राज्ञैराचार्यैः यो मार्गः अनुसृतः तमेवानुसृत्य शिवपारम्यप्रतिष्ठापनपरं अभिनवब्रह्मसूत्रभाष्यं प्रणेतुं प्रवृत्तः श्रीकण्ठः शिवालयगुरुः कश्चित् । शिवपारम्यवादस्य निर्गुणब्रह्मजीवब्रह्मैक्यप्रपञ्चमिथ्यात्ववादिनोऽद्वैतिनो नानुकूलाः । उपादानकारणत्वस्य उपनिषत्सु ब्रह्मसूत्रेषु च स्पष्टं प्रतिपाद्यमानस्य द्वैतमते निर्वाहः कष्टसाध्यः । अतो विशिष्टाद्वैतमेव तान्त्रिकस्य शिवस्य वेदान्तप्रवेशे महोपकारकमिति मन्यमानः सः तदनुसरन् कार्त्स्न्येन श्रीभाष्यानुकारे परिहास्यता भवेदिति सूत्रपाठाधिकरणभेदादिषु शाङ्करभाष्यमप्यनुसरन् इतः कांश्चन ततः कांश्चन विषयानादाय स्वभाष्यमकरोत् । शास्त्रेषु निरूढपरिचर्याविरहात् विपुलं विचारं परपक्षप्रतिक्षेपं वा न करोति । विशिष्टाद्वैतस्योपजीव्यत्वात् तत्खण्डनं क्वचिदपि न करोति । देवताविपर्यासातिरिक्तस्य निराकरणीयस्याशस्य विरहाच्च ।

यथा नाथमुनिप्रभृतीनां महापुरुषाणां तथा श्रीभाष्यप्रभृतीनां उत्तमग्रन्थानां वैशिष्ट्यं यथावदवगन्तुमक्षमः शास्त्री यस्यकस्यापि ग्रन्थस्य स्वरूपयाथात्म्यावगमे अप्रगल्भ इति दृढं प्रतीमः । स्वकीयत्वमत्या महत्करणं परकीयत्वमत्या तुच्छीकरणं च पामरलक्षणम् । शाङ्करस्य सूत्रभाष्यस्य श्रीकण्ठभाष्यस्य च शब्दतोऽर्थतश्च कियदन्तरमिति ज्ञातुं यस्यास्ति शक्तिः स नूनं श्रीभाष्यस्य श्रीकण्ठभाष्यस्य च कियदन्तरमिति ज्ञातुं शक्नुयात् । निष्पक्षपातः पण्डितः कश्चित उभय

पश्यतु। न तत्र कस्य पूर्वत्वं कस्योत्तरत्वमिति स्वयं निश्चिनुयात्। शास्त्रिणो विवेचनपाटवमत्यन्तशून्यम्। 'भोजनं देहि राजेन्द्र घृतसूप समन्वितम्' इत्यस्य 'माहिष च शरच्चन्द्रचन्द्रिकाधवलं दधि' इत्यस्य च विशेष यो न जानाति स मूढः। यो जानाति स नूनं श्रीकण्ठभाष्यस्य भाष्यान्तरस्य च विशेषं जानाति।

अस्याधिकरणस्य चमत्कारश्चोतनि। तत्राल्पमेवोदाहराम। सर्ववेदा न्तप्रत्ययाधिकरणे उपक्रमे 'पूर्वत्र निरूपितो नित्यत्वादिगुणकस्त्वम्पदार्थ पशुरुपासकः। सर्वज्ञत्वादिगुणकस्तत्पदार्थः पतिरुपास्य शिवश्च। तदिह कथमुपासनमित्याकाङ्क्षाया तन्निरूपणमुत्तरत्राभिधत्ते" इति सूत्र वर्तिष्यमाणं चाह। अत्र त्वम्पदार्थतत्पदार्थनिरूपणस्य सूत्तराभि धान 'इदानीं विरक्तस्य तत्त्वपदार्थविवेकार्थं द्वितीयः पाद आरभ्यते।' इति तृतीयाध्यायद्वितीयपादारम्भे, द्वितीये पादे 'तत्त्वपदार्थौ परिशो धितौ' इति तृतीयपादारम्भे च कल्पतरूक्तपनसारि। अद्वैते तत्त्वमसि वाक्यजन्यपदद्वयलक्ष्यार्थसाक्षात्कारस्य मुख्यमोक्षोपायत्वात् तत्र तथा पदार्थवर्णनं युज्यते। विशिष्टाद्वैते उपासनस्यैव सप्रकारकसाक्षात्कारद्वारा उपायत्वात् जीवेश्वरयोः तत्त्वपदार्थतया कीर्तनमनपेक्षितमयुक्तं च। केवलं श्रीभाष्यानुसरित्वप्रच्छादनाय कृतम्। 'कथमुपासनमित्या काङ्क्षाया तन्निरूपणमिति पादार्थवर्णनमयुक्तम्। न हि परविद्याप्रकार स्तृतीयपादार्थः। इत्यमेवाथ चतुर्थपादारम्भेऽपि वदति। 'पूर्वत्रोपपादित पराविद्याप्रकार' इति। चतुर्थाध्यायारम्भे तु एतद्विरुद्धमेव भाष्यते—

> विचारिता खलु उपासकोपास्योपासनभेदाश्रयधर्मादयस्तृतीयाध्याये। इह पुनश्चतुर्थोऽध्याये प्रथमे पादे उपासनाप्रकारः निरूप्यते।"

इति। अथ 'सर्वेषु वेदान्तेषु दहराद्युपासनं विधीयते' इति विषयनिर्देश करोति। किं सर्वेषु वेदान्तेषु दहराद्युपासनं विधीयते? सर्ववेदान्तप्रत्यय

मित्यस्मिन् सूत्रखण्डे विवक्षितमर्थं श्रीशङ्करेण विवृतमप्यय न गृह्णाति। ततोऽनेन श्रीभाष्यमनुसृत्य 'शाखाभेदेन प्रकरणभेदात्' इति युक्तिमुक्त्वा 'उपासनं भिद्यते' इति सामान्यतः प्रतिज्ञा क्रियते। अनन्तरं दहरविद्याया गुणभेदाद् भेद उच्यते। शाङ्करे—

'अस्ति चात्र वेदान्तान्तरविहितेषु विज्ञानेष्वन्यदन्यन्नाम तैत्तिरीयकं वाजसनेयकं कौथुमं शाट्यायनकमित्येवमादि। तथा रूपभेदोऽपि कर्मभेदस्य प्रतिपादकः प्रसिद्धः "वैश्वदेव्यामिक्षा। वाजिभ्यो वाजिनम्" इत्येवमादिषु। अस्ति चात्र रूपभेदः। तद्यथा केचिच्छाखिनः पञ्चाग्निविद्यायां षष्ठमपरमग्निमामनन्ति। अपरे पुनः पञ्चैव पठन्ति।'

इति पञ्चाग्निविद्यायामुक्तो रूपभेदः अनेन दहरविद्यायामुक्तः। तत्र सामान्यतः 'विज्ञानेषु' उक्तः नामभेदः अनेन पञ्चाग्निविद्यायामुच्यते— "छान्दोग्ये पञ्चाग्निविद्यायां कौथुममिति नाम, बृहदारण्यके वाजसनेयमिति नाम। तत्र नामभेदादुपासनं भिद्यते" इति। एवं यथा पूर्वपक्षे तथा सिद्धान्तेऽपि भाष्यद्वयाविपय सङ्कीर्णमनुवदति। तत्र 'विद्यात् उपासीत, इति चोदना तावत्' इत्यतः प्रभृति 'आख्याऽपि वैश्वानरविद्येति' इत्येवमन्तः श्रीभाष्यानुवादः। 'दर्शयति च' इति सूत्रं 'दर्शयति च श्रुतिरुपासनस्य सर्ववेदान्तप्रत्ययत्वम्' इति व्याख्याय छान्दोग्यविहितदहरविद्यामुपजीव्य तैत्तिरीयदहरविद्यावाक्यं प्रवृत्तमिति प्रदर्शितं श्रीभाष्ये। अत्र विद्यैक्यप्रदर्शनप्रकारं विपर्यस्य वदन्नपि श्रीकण्ठः 'श्रुतिरेव विद्यैक्यं दर्शयति' इति श्रीभाष्यानुसारेणैव सूत्रं विवृणाति। इत्थं दहरविद्यैक्ये श्रुत्यैव प्रदर्श्यमाने, तद्दृष्टान्तेन विद्यान्तराणामपि ऐक्यसम्भवे प्रतिपाद्यमाने च एतदधिकरणपूर्वपक्षे दहरविद्यायाः गुणभेदेन भेदोद्भावनं चोदनाद्यविशेषेण तन्निरस्य ऐक्यस्थापनं च नैव युज्यते। श्रीभाष्ये नैव तत् कृतम्। श्रीकण्ठस्तु इदं ज्ञातुमशक्तः स्वतन्त्रं

किञ्चिद्द्रापयितुमना वक्ष्यति।

भगवद्रामानुजकुलाद् गृहीतया मितया अतुष्यन् श्रीशङ्करकुलादपि भूयो ग्रहीतुं प्रवृत्तः "छान्दोग्यबृहदारण्यकशाखयो रुपजंग्यपृथिवी-पुरुषयोषिदाख्यस्याग्निपञ्चकस्य वेद्यतया यत् स्वरूपमाम्नातं तदुभय-त्रापि समानम्। अतो न विद्याभेदः।" इत्याह। पूर्वांशे नामभेदाद् भेदाशङ्का पञ्चाग्निविद्यायाम्। अत्र विद्याया नामग्रहणमपि विना रूप-भेदाभावान्न भेद इति वदति। नियतसङ्गतम्। व्याख्यातुः कौशलं नाल-मत्यन्तमनिपुणस्य मूलग्रहस्य दुर्भगतां छादयितुम्। उत्पत्तिशिष्टगु-णावरुद्धे कर्मणि गुणान्तरनिवेशो न भवतीति न्याय आमिक्षावाक्ये व्युत्पादितः। आमिक्षावरुद्धे वैश्वदेवयागे वाजिभ्यो वाजिनमिति वाक्यान्तरविहितं वाजिनं न निविशत इति। श्रीकण्ठस्तु सर्वत्रप्रसिद्धि-सूत्रे 'यथा विश्वेदेवावरुद्धायामामिक्षायां वाजिनो न निवेशः' इत्याह। असद्धमिदं क्लेशेनापि समर्थयितुमशक्यमिति पश्यन् दीक्षितः अत्र न किञ्चिदुवाच। स्वयं तु वाजिनामनिवेशमेवाकृत्वा प्रकृतमर्थं सङ्गमया-मास।

श्रीभाष्यकारप्रभृतयः यद्यपि विशिष्टमेकमोपनिषदं तत्त्वमिति अस-कृद् भणते तथाप्यस्य दर्शनस्य विशिष्टाद्वैतमिति नाम श्रीमन्निगमान्त-महादेशिककालावधि न प्रसिद्धम्। अप्रसिद्धमप्यत्रापि यः कश्चित् एवं व्यवहृतवान् कामं भवेत्। तथापि दर्शनस्य नाम तदवधि नैव प्रसि-द्धम्। श्रीकण्ठः पुनः प्रसिद्धं तन्नाम कृत्वा असकृत् तथा स्वसिद्धान्तं व्यवहरन् नवीनस्य स्वोपज्ञस्य विशिष्टाद्वैतस्य प्राचीनाद् व्यावृत्तये शिवपदं घटयित्वा 'विशिष्टशिवाद्वैतं' इति स्वसिद्धान्तमाचष्टे (श्रोत्रा-पत्त्यधिकरणे)।

यथावन्नावगच्छति चाय श्रीमद्भाष्ये प्रतिष्ठापितं विशिष्टाद्वैतम्। 'अधिकं तु भेदनिर्देशात्' इत्यस्मिन् सूत्रे अयं लिखति—

न वयं ब्रह्मप्रपञ्चयोरत्यन्तमेव भेदवादिनः, घटपटयोरिव। तदनन्यत्वपरश्रुतिविरोधात्। न वाऽत्यन्ताभेदवादिनः, शुक्तिरजतयोरिवैकतरमिथ्यात्वेन। तत्स्वाभाविकगुणभेदपरश्रुतिविरोधात्। न च भेदाभेदवादिनः। वस्तुविरोधात्। किन्तु शरीरशरीरिणोरिव गुणगुणिनोरिव च विशिष्टाद्वैतवादिनः। प्रपञ्चब्रह्मणोरनन्यत्वं नाम मृद्घटयोरिव गुणगुणिनोरिव च कार्यकारणत्वेन विशेषणविशेष्यत्वेन च विनाभावरहितत्वम्। न हि मृदं विना घटो दृश्यते। नीलिमानं विना चोत्पलम्।

इति। 'भावे चोपलब्धेः' इति सूत्रे च

ततो मृद्घटयोरिव ब्रह्मप्रपञ्चयोरपि व्याप्यव्यापकभावादनन्यत्वम्।

इति। एतैर्वाक्यैः विशिष्टाद्वैतमित्यस्य श्रीकण्ठगृहीतोऽर्थः अयमिति ज्ञायते। विशिष्टघटकयोर्विशेषणविशेष्ययोरेकेनेतरस्य व्याप्त्या, कार्यकारणभावेन अविनाभावेन च यदनन्यत्वं तद् विशिष्टाद्वैतमिति। नायमर्थ उपपन्नः। पृथक्स्थितिविरहेऽपि शरीरशरीरिणोरन्यत्वात्, अनन्यत्वाभावात्। एवं गुणगुणिनोरपि। मृद्घटयोर्वैशिष्ट्यं च दुर्वचम्। न हि मृद्विशिष्टो घटः। तदत्र विशिष्टाद्वैतं नास्ति। एवमेव ब्रह्मप्रपञ्चयोरपि। ब्रह्मणः सर्वज्ञत्वेन चेतनाचेतनात्मकप्रपञ्चस्य किञ्चिद्ज्ञत्वजडत्वादिना चान्यत्वेन अनन्यत्वाभावात्। न च व्याप्त्याऽनन्यत्वम्। आकाशघटयोरनन्यत्वाभावात्। अत एवात्र मृद्घटदृष्टान्तोऽनुपपन्नः। तत्र द्रव्यैक्यात्। ब्रह्मणः प्रपञ्चस्य च स्वरूपैक्याभावात्। दार्ष्टान्तिकानुरोधेन 'मृदयं घट इत्यत्र यथा मृद्व्याप्तिर्घटे दृश्यते' इति व्याप्त्युक्तिरसङ्गता। व्याप्यव्यापकभावस्य विभिन्नद्रव्यद्वयवृत्तित्वात्।

यत्तु औपचारिकमिदमनन्यत्वमिति मणिदीपिकायामुक्तं, तेन मुख्यमनन्यत्वं नास्तीति स्फुटमाविद्यते। परन्तु औपचारिकेण किं नः प्रयोजनम्। 'सर्वं खल्विदं ब्रह्मे'त्यादिसामानाधिकरण्यनिर्वाहाय मुख्यं हि

अनन्यत्वमुपपादनीयम् । उपपादितं च श्रीभाष्ये । विशिष्टस्य ब्रह्मणः अद्वैतं विशिष्टाद्वैतम् । निर्विशेषब्रह्मणोऽद्वैतं न वेदान्तप्रतिपाद्यम् । अपि तु चिदचिद्विशिष्टस्येति तत्राभिप्राय ।

अशाधिकरणसाध्यम्यांशत्वस्योपपादनाय श्रीभाष्ये 'यथा गवाश्वशुक्लकृष्णादीनां गोत्वादीनां गोत्वादिविशिष्टानां वस्तूनां गोत्वादीनि विशेषणान्यंशाः, यथा वा देहिनो देवमनुष्यादिर्देहोंऽशः' इति निदर्शनं क्रियते । तत्र विशिष्टाद्वैतमुच्यत इति भ्राम्यन् श्रीकण्ठः शरीरशरीरिणो गुणगुणिनोश्च यथा, तथा ब्रह्मब्रह्मयोर्विशिष्टाद्वैतमित्याह । अंशो नानाव्यपदेशादिति सूत्रस्य चार्थं सर्वथा अजानन् असम्बद्धं भाषते । अंशत्वे हि नानाव्यपदेशः, अन्यथा च व्यपदेश, उभय हेतुः । अयं पुन 'अंशः मूर्त्येकदेश एव इत्यादिषु नानाव्यपदेशात् ।' इति भेदव्यपदेशमात्रं तत्र पर्याप्तमिव कृत्वा अन्यथा चापीति सूत्रांशमैक्यव्यपदेशरूपं हेतुं ऐक्यनिराकरणपरतया याभर्याति —

यदुक्तमयमात्मा ब्रह्मेत्यादिना ब्रह्मण एव जीवत्वमिति तत्राह—
अन्यथा । तत्त्वमसि, अयमात्मा ब्रह्म, इत्यादिकाद् व्यदेशात्
तयोर्जीवब्रह्मणोरर्थ्यैक्यापरभावेनानन्यत्वम् ।

इत्यादिना । मूलग्रदार्शनेयेन शैवत्वेन च भाष्यमिदं व्याख्यातुं प्रवृत्तो दीक्षित अस्य सर्वप्रकारमसौष्ठवं जानन् प्रथमादिस्थलेषु स्वयं वक्तव्यं किञ्चिदुक्त्वा अगत्या प्रविष्टं दुस्सहदुर्गन्धमेदुरं क्षुद्रवीथीमार्गमिव सहमानः त्वरितमपयाति । 'असदिति चेन्न प्रतिषेधमात्रत्वात्' इति सूत्रे श्रीभाष्योक्तमर्थमजानन् अर्थान्तरकथनलोलुपतया परित्यजन् वा श्रीकण्ठः स्वयमेवमभाषत—

पुनः शङ्कित्वा परिहरति । एवं कार्यकारणयोर्वैलक्षण्यात् कारणे कार्यमसदेव । असद्वा इदमग्र आसीदिति श्रुतेः, इति चेत् नैवं वाच्यम् । सालक्षण्यनियमप्रतिषेधमात्रपरत्वात् श्रुते ।

अतः कार्यकारणयोर्वस्त्वेकता न हीयत एव ।

इति । अत्र पुनः शङ्कत्वेत्यनेन पूर्वसूत्रोक्तार्थमनुपजीव्य कृता स्वतन्त्र-शङ्केति प्रतीतिर्भवति । कार्यकारणयोर्विलक्षणत्वादित्यनेन पूर्वसूत्रसाधिनार्थमूलैवेयं शङ्केति प्रतीयते । असद्वेति श्रुतेरित्यनेन श्रुत्यर्थानिश्चयमूला स्वतन्त्रैवेय शङ्केति भाति । सा लक्षणनियमप्रतिषेधमात्रपरत्वात् श्रुतेरित्यनेन श्रुतेर्विवक्षितमर्थमुक्त्वा अस्या श्रुतेरापातप्रतीतार्थमूला सा शङ्का परिहृता । अस्याः श्रुतेर्विवक्षितार्थकथनपर सूत्रमिति अय भाष्यकारो मन्यत इत्यवगम्यते । सर्वमिद बाधितम् । श्रुतेरत्र सम्बन्धलेशोऽपि हि नास्ति । श्रीभाष्ये स्पष्टमिदम् । अतोऽत्र व्याख्याता सङ्गतभाववर्णन कथञ्चित् कृत्वा अन्ते इदमाह—श्रुतेरित्यनेन 'दृश्यते तु' इति सूत्रश्रवण विवक्षितम, इति पूर्वाचार्यैः कलुषित ब्रह्मसूत्रनेत्र इत्थं प्रसादयति श्रीकण्ठः । यदयमन्ते श्रीभाष्यानुसारेण "कार्यकारणयोर्वस्त्वेकता न हीयत एव" इत्याह तत् आरम्भणाधिकरणे ब्रह्मप्रपञ्चयोः व्याप्यव्यापकभावेनानन्यत्वसाधनविरुद्धम् । अस्यानन्यत्वस्यौपचारिकत्वात । वस्तुनोरेकत्वाभावात् ।

इदञ्चात्र अन्ते वक्तव्यम् । विशिष्टाद्वैत स्वसिद्धान्त इति, सूक्ष्मचिदचिद्विशिष्ट ब्रह्म कारणं स्थूलचिदचिद्विशिष्टं ब्रह्म कार्यमिति च श्रीकण्ठेनासकृदुक्तावपि भगवद्रामानुजसिद्धान्तसिद्धं यद् विशिष्टाद्वैत न तादृशमनेन प्रतिपाद्यते । पाशुपततन्त्रे यत् स्थित तदेव वेदान्तसिद्धान् काश्चिदर्थान् योजयित्वा विशिष्टाद्वैतव्यपदेशेन प्रकाश्यते । 'तथाऽन्यप्रतिषेधात्' इति सूत्रं नारायणस्य शिवसाम्यनिराकरणपरतया व्याचक्षाणः श्रीकण्ठ आह—

> सर्वज्ञात् सर्वशक्तिमतः परब्रह्मणः शिवाद् विश्वाधिकात् प्रथम परप्रकृतिभूता परा शक्तिः प्रादुर्भवति । सा प्रथमभोक्तृत्वदशायां पुरुष उच्यते, यः 'सहस्रशीर्षा पुरुषः' इति श्रूयते । तदात्मन

एव शिवात् सकलचेतन ( चेतनाचेतन ? ) प्रपञ्चपरिणामः । अत एव 'सर्वो वै रुद्र' इति परमेश्वरस्य सर्वात्मताऽभिधान मुपक्रम्य, "पुरुषस्य नारायणस्य सर्वात्मत्वम् । उपादानत्वात् । कथमस्य सर्वात्मत्वम्" इत्याशङ्कायां 'पुरुषो वै रुद्र' इति, 'पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि' इति च पुरुषोऽपि परमेश्वरस्य महार्चिमूर्त्यात्मा जगदाकार इति निरूपितम् ।

इति । शैवानामेवंप्रक्रिया । न चोपपन्ना । तथा हि । शिवस्य परा शक्तिः किंरूपेति विवेचनीयम् । किं धर्मभूतज्ञानरूपा अथवा वह्नेर्दाहकत्वमिव तत्तत्कार्यकरणसामर्थ्यरूपा, यद्वा उभयात्मिका ? आद्ये तदा ईश्वरस्य सर्वज्ञत्वं भवेत् , न तु सर्वशक्तत्वम् । द्वितीये ज्ञातृत्वं न सिद्ध्येत् । नतरां सर्वज्ञत्वम् । तृतीये असम्भवः । ज्ञानस्य विषयप्रकाशमात्रानुकूलत्वात् । अन्यस्या तत्तद्वस्तूत्पत्त्यनुकूलत्वात् । उभयोरैक्यायोगात् । ज्ञानमन्यत् शक्तिरन्येति चेत् सुष्ठूक्तम् । न त्वेवं श्रीकण्ठाऽभ्युपगच्छति । अथैव शक्तिः ईश्वरवत् जीववच्च किं चेतनभूता अथवा अचेतनभूता ? आद्ये अचेतनप्रपञ्चप्रकृतित्वानुपपत्तिः । न हि चिद्वस्तु किञ्चित् चित्त्वं त्यक्त्वा अचिद्भवतीति वक्तुं शक्यम् , प्रमाणं वाऽस्ति । किञ्च ईश्वरतुल्यं वा तस्याश्चेतनत्वं, जीवतुल्यं वा ? आद्ये ईश्वरस्य ईश्वरान्तरं विशेषणमिति स्यात् । तुल्यत्वे विशेषणत्वं न घटते । विशेषणत्वे तुल्यत्वं न घटत इति व्याघातश्च । तुल्यत्वे अनेकेश्वरप्रसङ्गश्च । जीवतुल्यचेतनत्वे जीवान्तरवदयमप्येको जीव इति नानेन ईश्वरस्योपादानत्वादिनिर्वाहः सुकरः ।

अथैव शक्तिरचेतनभूतेति चेत् तर्हि 'सा प्रथमभोक्तृत्वदशायां पुरुष उच्यते यः सहस्रशीर्षा पुरुष इति श्रूयते' इत्येतदनुपपन्नम् । अचेतनायाः भोक्तृतया वा पुरुषतया वा परिणामायोगात् । नन्वचेतना शक्तिः परिणता

शरीरं भवति । तत्र प्रविष्ट आत्मा भोक्ता च पुरुषश्चेति चेत् स आत्मा किं परमेश्वरात्मैव अथवा तद्व्यतिरिक्तः । आद्ये पुरुषशब्दवाच्यो नारायणः साक्षादुपादानं, तद्द्वारा तदधिकः परमेश्वर उपादानमित्येतदनुपपन्नम् । अन्त्ये स किं विभुः अथवा अणुः । आद्ये अनेनैव विभुना सर्वकार्यनिर्वाहे किमनेनातिरिक्तेन परमेश्वरेण ? श्रुतिबलात् सिद्ध्यतीति चेत् 'किमिन्द्र त्वदुत्तरं', 'सूर्य आत्मा जगतस्तस्थुषश्च' 'सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः' इत्यपि श्रवणात् इन्द्रादीनामपि पारमैश्वर्यं स्यात् । एकस्यैव पारमैश्वर्यम् । अत इमाः श्रुतयोऽन्यपरा इति चेत् तुल्यम् । अन्त्ये अणोर्जगदुपादानत्वं कथं भवेत् । तस्मादिदं सर्वं अत्यन्तमवैदिकं वेदविरुद्धं युक्तिप्रमाणान्तरविरुद्धं च । तन्त्रवासनां हातुमशक्तः वेदान्तं प्रविश्य कालुष्यं जनयति ।

एकमेवाद्वितीयमिति श्रुत्या परं ब्रह्मैकमेव । तत्र अनेन जीवेनेति इदमा निर्देशात् चेतनान्तराणि सर्वाणि सृज्यकोटौ वर्तन्ते । तेषु कस्मिंश्चित् सुकृतावरोधात् ब्रह्मशिवेन्द्रादिपदलाभः । "यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः ।" इत्युपक्रम्य श्रीमतो नारायणस्य सर्वस्मात्परत्वम् । इदं भगवतः सर्वस्मात्परत्वं शिवस्य सम्पादयितुकामः शिवस्य जगदुपादानत्वं जीवानामणुत्वं मोक्षे शिवसायुज्यमित्यादि पूर्वतान्त्रिकैरनभ्युपगतं अयमभ्युपगच्छति । अन्यत्सर्वं तन्त्रसिद्धमेव । अतो वैदिकानामादरोऽत्र न युज्यते ।

४१ 'जीवब्रह्मणोरभेद एव वाक्यकाराभिमतः । न शरीरशरीरिभावः' इति ऊर्जितं प्रतिजानीते विना प्रमाणलवलेशम् । महतामधिक्षेपमात्रेण स्वसिद्धान्तसिद्धिं आत्मनः कृतकृत्यतां चाभिमन्यते । भगवता श्रीभाष्यकारेण महापूर्वपक्षे निर्विशेषब्रह्मात्मैक्योपष्टम्भकतया "तथा च वाक्यकारः 'आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्तेः' इति" इत्युक्त्वा

महासिद्धान्ते शरीरात्मभावलक्षणतादात्म्याभिप्रायकमेव वाक्यं, न तु निर्विशेषब्रह्मात्मैकत्वाभिप्रायकमित्यभिप्रेत्य 'आत्मेत्येव तु गृह्णीयात्' इति च वाक्यकार इत्युपसञ्जह्रे। 'सर्वस्य तन्निष्पत्ते'रिति हेतुपरस्य वाक्यखण्डस्य पूर्वं पूर्वपक्षे पठितस्य सुखं स्मरणं भविष्यतीति मत्वा सिद्धान्ते परित्यागः। वेदार्थसङ्ग्रहे कृत्स्नं वाक्यमुपात्तम्। अत्र शास्त्री पूर्व अद्वैतानुकूलतया उदाहृतमिदं पूर्णं वाक्यमपश्यन्नेव 'वेदार्थसङ्ग्रहे च वाक्यकारवचनं किञ्चिदधिकमुपात्त'मिति प्रलपति। एकस्यैव ग्रन्थेषु कीर्तितत्वात् वाक्यकार आसीत्, वाक्याभिधानस्तद्ग्रन्थश्चासीदित्ययमङ्गीकरोति। अ यथा बोधायनतद्वृत्तिग्रन्थाविव इमावपि शशशृङ्गायमाणौ, केवलं अस्मदाचार्यैः कल्पिताविति निःशङ्कं ब्रूयात्। एतत्पक्ष-तीनां हि न किञ्चिदवाच्यमस्ति। अङ्गीकृत्य, जीवब्रह्मणोरभेद एव वाक्यकाराभिमत इति वाच्यते, न शरीरशरीरिभाव इति च प्रतिपद्यते।

न तावद् वाक्यमप्यस्थं वाक्यान्तरमभिन्नमर्थं प्रदर्शयितुं शक्यते। भगवद्रामानुजादृतं तु वाक्यं किम्परमिति प्रामाणिकैः परिशीलनीयम्। प्रामाणिकाग्रेसरस्तु सः प्रथमं पूर्वपक्षानुगुणमेव तदुदाहरति—

> ब्रह्मात्मैकत्वविज्ञानं च 'अथ योऽन्या' इत्यादिवाक्यसिद्धम्।
> वदन्ति च एतदेव 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति।
> तथा च वाक्यकारः 'आत्मेत्येव तु गृह्णीयात् सर्वस्य तन्निष्पत्ते' इति।

इति। अत्र श्रुतप्रकाशिका—

> अस्यार्थस्य श्रुतिविवक्षितत्वसिद्धये सूत्रं दर्शयन्ति वदन्ति चेति।
> .. सूत्राभिप्रायविदः वाक्यं दर्शयन्ति—तथा चेति। तन्निष्पत्तेः तत्र [illegible] इत्यर्थः।

इति। तत्त्वटीका च—

उक्तस्य सूत्रकृदिष्टत्वमाह—वक्ष्यतीति। एतदेव, न त्वदिष्टमिति भावः। आत्मेति। स्वानन्यत्वेनेति यावत्। सूत्राभिप्रेत तद्विदुक्त्या स्पष्टयति—तथा, इति। भातस्य सर्वस्य तस्मिन्नन्यत्वादित्यर्थः। बाध वस्थायामधिष्ठानभूतब्रह्मात्मतया परिशिष्टत्वादिति भावः।

इति। यद्यद्वैतमेव श्रौतिनपद तत्त्व तर्हि सूत्र वाक्य च तत्परमेव भवतीति पूर्वपक्षे प्रदर्श्य श्रीभाष्यकृतः सिद्धान्त विस्तरेण शरीरात्मभावनिबन्धन सामानाधिकरण्यमुपपाद्यान्ते इद वदन्ति—

इदमेव शरीरात्मभावलक्षण तादात्म्य 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इति वक्ष्यति। 'आत्मेत्येव तु गृह्णीयात्' इति च वाक्यकारः।

इति। अत्र सूत्र वाक्यं च कथ शरीरात्मभावलक्षणतादात्म्यपरं, न तु जीवब्रह्माभेदपरमिति नोपपादितम्। श्रुतप्रकाशिकायामपि

परेण स्वरूपैक्यपरत्वेनोदाहृत सूत्र वाक्यकारवचन च व्याचष्टे—इदमेवेत्यादिना।

इति पूर्वपक्षे तदनुगुणतयोदाहृतत्व सिद्धान्ते एतदनुगुणतया व्याख्यायमानत्व च प्रवचमुक्तम्। न तु विस्तृतं विवरणे कृतम्। तत्राय भावः। सूत्रवाक्यं अद्वैते क्लिष्टयोजनीये भवत। न सिद्धान्ते। यथाश्रुतस्यैवार्थस्य ग्रहणादिति। तदत्र स्वरूपैक्यस्य वाक्यकाराभिमतत्वाभिधानं लोकायतस्य तदभिमतत्वाभिधानतुल्यमिति स्थितम्।

"तत्त्वमसीति तीच ब्रह्मणा सामानाधिकरण्यं स्वरूपैक्यनिबन्धनम्" इति शाङ्करः प्रतिज्ञा शून्य तत्त्वमिति प्रतिज्ञातुल्या। "'स आत्मा जगतः' इत्युक्तिः जगत तन्निष्पाद्यत्वेन तदनन्यत्वनिबन्धना" इति यदुच्यते तदयुक्तम्। यतः स आत्मेत्युक्त्या जगतः शरीरत्व सिद्ध्यति। शरीरस्य जगतोऽपि तदात्मकत्वात् तदनन्यत्व च सिद्ध्यति।

यत्तु अनुपद 'शरीरशारिभावन सामानाधिकरण्यकल्पन परकीय सिद्धान्त नष्यते। अप्रामाणिकत्वात्' इत्युच्यते तन वाक्यस्य प्रकाशितम्। यदि चार्वाका ब्रूयान 'देहातिरेकेण जावब्रह्मतदैक्यकल्पन परकीय सिद्धान्ते नेष्यते। अप्रामाणिकत्वात्" इति तादृशं खल्वेतत्। 'वाक्यभाष्यमन्थयोरपि शरीरशारारभावाकीर्तनात्। परेऽपि तादृशवाक्यादिमन्थाप्रदर्शनात' इत्यपि पूर्ववदेवोपहास्यम्। किं भवता भवदीयैर्वा ऐक्यपरो वाक्यादिग्रन्थो दृष्टो दर्शितो वा? येन तत्र तत्परत्वं सा नधारणमुच्यत। अस्मदीयैस्तु दर्शित एव। आत्मेत्येवत्यनन इतरस्य शरीरत्वमिति स्फुट प्रत्यायनात्। आत्मा हि कस्यचित् भवति। यस्य भवति तत् तस्य शरीरम्। अत एव श्रुतौ 'आत्मा च त्वा तनूश्च श्रीणीताम्' इत्यात्मना सह तनूग्रहणम्। सर्वस्य तन्निमित्तोरिति व चय खण्ड 'सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा' इति शरीरत्वभावप्रतिपादकश्रुत्यर्थसग्रहपर इति स्फुटमवगम्यते। अत इदं वाक्यमद्वैतविरुद्धमित्यतद् रपह्नवम्। अस्य कल्पितत्ववाद एक उच्छृङ्खलस्य तव शरणम।

विधिविवेकव्याख्याने ( २४ पु ) वाचस्पतिरेवमाह—येऽपि वेदान्तवादिनाऽपौरुषेयमङ्गीकृत्य वद वदशरीरिणमन्तर्यामिणमास्थिषत 'अथाधिदैवम्। यः सर्वेषु तिष्ठन् सर्वेभ्यो वेदेभ्योऽन्तरो य सर्वे वदा न विदुर्यस्य वेदा शरीरं य सर्वान् वेदानन्तरो यमयति एष त आत्माऽन्तर्याम्यमृत' इति श्रुते—इति। अनन जगद्ब्रह्मणो शरीरशरीरिभाववादिन प्राचीना वेदान्तिन इति स्पष्टम्। एते वेदान्तिन बोधायनमतानुसारिणो वाक्यकारप्रभृतय एव। एषामेव तदानीं प्रसिद्धवेदान्तग्रन्थकारत्वात्।

४२. भगवत्पारम्यवादिनाऽस्मदाचार्याः यथा चतुर्मुखेन्द्रादिद्वेषिणो न भवन्ति तथा शिवद्वेषिणोऽपि न भवन्ति। तत्त्वनिरूपणमात्रे

तात्पर्यात्। इतरस्य सर्वस्य भगवद्विभूतित्वेन सम्मतत्वात् द्वेषप्रसङ्ग-विरहात्। शास्त्री तु अद्वैतविरुद्धं शैवत्वमाश्रितः भगवति द्वेष एव शिव-भक्तिरिति भ्राम्यन् अविवेकी स्वदृष्टान्तेन परेषां भगवति भक्तिः शिव-द्वेष एवेति गृह्णन् भगवत्पारम्यस्य बोधायनटङ्कद्रमिडगुहदेवकपर्दिभा-रुचिप्रभृतिभिरङ्गीकृतत्वं वदन् श्रीदेशिकचरणान् प्रति धृष्टा दुष्टाश्च वाचो विमुञ्चति। तत्सर्वं स्वस्य शिवावहं परमपावनं च मन्यते पण्डितमानी पामरतमः।

४३ "यथा लोके राजा प्रचुरदन्दशूके घोरे अनर्थसङ्कटेऽपि प्रदेशे वर्तमानो व्यजनाद्यवधूतदेहः" इत्यादि दृष्टान्तं "तथाऽसौ लोकेश्वरः" इत्यादिदार्ष्टान्तिकं च वदन् द्रमिडभाष्यकारः सगुणब्रह्मवादीति निश्चप्रचम्। तस्य निर्गुणवादित्वे प्रमाणलेशविरहात् अनद्वैतित्वं च सिद्धम्। 'नासता स्तुतिरुपपद्यते' इति द्रमिडभाष्यानुसारि श्रीभाष्यं चिन्त्योपपत्तिकं वदति दूषणकुतूहली। 'विरोधे गुणवादः स्यात्' इत्यु-क्तरीत्या आपाततः असदर्थप्रतीतिस्थलेष्वपि गुणवादेन सदर्थपरत्वा-श्रयणात् न क्वचिदसदर्थे अर्थवादानां विश्रान्तिः। यत्तु बालोपच्छ-न्दनार्थलौकिकवाक्येष्विव अर्थस्य बाधितत्वेऽपि प्रशंसातात्पर्यं परीक्षका गृह्णन्तीति शिवार्कमणिदीपिकायामुच्यते तदयुक्तम्। वेदस्य भ्रमजनन-तात्पर्यायोगात्। बाधितस्थले वाक्यार्थबोधस्यैवानुदयात्। व्रीहीणा मेधेत्यादिषु तदन्तर्वर्तिनो जीवस्य वा अभिमानिदेवताया वा परमात्मन एव वा सम्बोध्यत्वात्।

४४ रुद्ररोदनोक्तिः भूतार्थवाद इति श्रीदेशिकचरणा वदन्तीति कुप्यति मिथ्याशैवः। एकत्वात् सर्वेश्वरस्य तदितरे सर्वे कर्मवश्या इत्यभ्युपगमो दुष्परिहरः। तत्र रोदनादेः कथमसम्भवः? बाधाभावे कथं गुणवादः स्यात्? वैदुष्यमन्यत्। वाचाटत्वमन्यदिति नायं ज्ञातु क्षमः। इदं श्लोकेन वयमुक्तपूर्विणः—

भोगसम्भवेन 'कर्मकृतशरीराभावात्' इति व्याख्यानं अकर्मकृतशरीरसद्भावबोधकमनपेक्षितम् ।

इति । अस्मन्मते 'अशरीरस्यापि भोगो भवती'ति नास्य सूत्रस्यार्थः । किन्तु स्वसङ्कल्पाधीनशरीराभावे ईश्वरसृष्टशरीरेण स्वप्न इव भोग उपपद्यत इत्यर्थः । अशरीरत्व सशरीरत्वमिति द्वे अवस्थे मुक्तस्य । पूर्वस्या निरतिशयानन्दात्मकब्रह्मसकलतद्विभूत्यनुभवमात्ररूपो भोगः । उत्तरस्या अर्चनस्तवनभाषणस्रगम्बरादिधारणाद्यात्मकः शरीरसाध्यो भोगः । एतत्साधनभूतं शरीर द्वेधा ईश्वरसृष्ट स्वसङ्कल्पाधीनं चेति । अत्र आद्य तन्वभावसूत्रोक्तम् । अन्त्य भावे जाग्रद्वदित्यनन्तरसूत्रोक्तम् । यत्तु शरीराभावदशाभोगपरतया तन्वभावसूत्रयोजनं परैः क्रियते तदयुक्तम् । सन्ध्यवदिति स्वप्नदृष्टान्तानुपपत्तेः । उच्चावचशारीरव्यापारप्रतिभासवान् हि स्वप्नः । न चैवंविधोऽयथार्थ प्रतिभासः 'मनसैतान् कामान् पश्यन् रमते' इति श्रुतौ विवक्ष्यते । मुक्तित्वानुपपत्तेः । अस्याः श्रुतेरर्थश्चास्मिन् सूत्रे नाभिप्रेतः । 'उपपत्तेः' इति सूत्रणात् । उपपत्तेरित्यस्य 'मनसैतान् इति श्रुतेः' इत्यर्थवर्णनं भामतीकृतमबद्धमिति बालोऽपि बुध्येत । अगत्या तत्र तथाऽर्थ उच्यते ।

देवतासायुज्यात् देवतावत् सर्वार्थसिद्धिः स्यादिति द्रमिडभाष्योक्तौ मुक्तिकाले सशरीरानुभाव्यसकलभोग्यवस्तुसम्पत्तिरुच्यत इति स्पष्टम् । अतस्तत्र 'अशरीरस्यापि' इत्येतदनन्वितं भाति । तस्मात् 'मुक्तः' इति तत्र विवक्षितमर्थमुक्त्वा व्यासार्यैः 'कथं मुक्तस्याशरीरत्वम् । स एकधा भवतीत्यादिना शरीराम्नानात्' इति शङ्कापरिहाराय 'कर्मकृतशरीराभावात्' इत्युपपत्तिरुक्ता । प्रौढग्रन्थार्थावगमपाटवराहित्यादनपेक्षितमिदमित्याह शास्त्री ।

४७-४८. ब्रह्मनन्दिकृतं वाक्य छान्दोग्यव्याख्यानमेव । द्रमिडभाष्यमपि तद्व्याख्यानमेव । आभ्या ब्रह्मसूत्राणि व्याख्यातानीति अस्मदू-

र्याचार्यै कैश्चिदपि नाक्तम्। इदं पूर्वं अष्टादशे पर्वणि अस्माभिः स्पष्टी कृतम्। अयं तु भ्रान्तः तथा कैश्चिदुक्तामिति दृढं गृहीत्वा तथा नेति पुनः पुनः वदति यथार्थवस्तुरत्नासनया वा महतस्तत्त्वस्य उपज्ञाता स्वय मिति दुरभिमानभूम्ना वा। वाक्यकार स्वकार्यरसमभिमन्य 'अस्मदी याचार्यस्य वाक्यकारस्य" इत्याह। यथा व्यासपदं तदीयं, यथा ब्रह्म सूत्राणि तदीयानि, तथा वाक्यकारोऽपि यदि तदीयः तत्र कस्य किं प्रतिवक्तव्यमस्ति। खण्डखण्डखरभावस्तु अत्र सर्वत्र सम्बन्धः। लोकप्रसिद्धमेतत्।

'सकृत्प्रत्यय कुर्यात् शास्त्रार्थस्य कृतत्वात्, प्रयाजादिवत्' इति पूर्वं पक्ष कृत्वा सिद्धन्तु उपासनशब्दात् इति सिद्धान्त वाक्यकारेण कृतः। इत आरभ्य वेदनमुपासनं स्यात् तद्विषये श्रवणात्' इत्यनेन वाक्येन वाक्यकाराभिप्राय स्फुट। मोक्षोपायतया उपनिषत्सु विहितं वेदनं उपासनरूपं भवति। अतो वेदन नाम उपासनातिरिक्तो मुक्त्युपायो नास्तीति सिद्ध्यति। उपासनं यावदायुषमावृत्तं वेदनम्। ध्यानमिति यावत्। तदत्र 'आवृत्तिरसकृदुपदेशात्' इति सूत्रयतो महर्षेर्भगवतः तदेव वाक्यकारस्य। अनावृत्तप्रत्ययस्यैव साक्षान्मोक्षोपायत्वं वदता शङ्करा चार्येण इदं सूत्रकारवाक्यकारयोर्मत खण्ड्यते। एवं सति वाक्यकार• किमद्वैती उत सिद्धान्तान्तरावलम्बीति निर्णये ऋजुधिया न क्लेश लेशो भविष्यति।

उपनिषण्णत्वादुपनिषदिति वाक्यम्। उपनिषदिति नाम्ना निर्व चनमिह क्रियते। तत्र यस्य शब्दराशेरुपनिषदिति नाम तस्यैवोपनिष ण्णत्वं विशिष्टमिति स्वरसतः प्रतीयते। अत एव श्रीमद्भाष्ये 'गहने हीयं संनिविष्टा' इति। अत्र सन्निविष्टेति उपनिषण्णेति स्थाने प्रयुक्तम्। स्वरसप्रतीतं इममर्थं नेच्छति श्रीशङ्करः। उपनिषद्दत्वं हि एवं सति ब्रह्मण उक्तं भवति। निर्विशेषब्रह्मवादिनस्तद्धि रूढम्। अतः समर्थं परि

त्सञ्च भाष्यकारमप्युपेक्ष्य 'उपनिपदणि वा अस्या परं श्रेय इत्युपनिपत्' इत्यन्यथा वाक्य योजयति ।

तल्लब्धिविवेकविमोकाभ्यासेत्यादिवाक्यवचनविवरणावसरे श्रीमद्भाष्ये अभ्यासविषये "निर्वचन च स्मार्तमुदाहृत भाष्यकारेण— सदा तद्भावभावितः' इति ।" इत्युक्तम् । अत्र स्मार्तमुदाहृतमित्येतावन्मात्रे तात्पर्यात् भाष्यकारेणेत्येतदनुवादमात्रम् । विधेयत्वाभावान्न व्यवच्छेदकम् । अत पूर्वोत्तरनिर्वचनान्यपि भाष्यकारोदाहृतान्येवेति व्यासार्या व्याचख्युः । एतदनुसारेणैवेद प्रथम व्याख्यातवन्तोऽपि श्रीदेशिकचरणाः 'निवर्चनञ्च स्मार्तमुदाहृतम् । तदपि भाष्यकारेण न तु वाक्यकारेणैव' इत्यपि श्रीभाष्यश्रीसूक्त्योर्व्याख्यातुं शक्यत्वात् ' अथवा अन्यत्र वाक्यकारेणैव श्रुतिरुदाहृता । अत्र तु भाष्यकारेणैव स्मृति 'इत्यर्थान्तरमवोचन् ।

अत्र कुमतिराह स्मार्तव्यतिरिक्तानि सर्वाणि निर्वचनानि न वाक्यकारेण नापि द्रमिडाचार्येण, अपि तु श्रीभाष्यकृतैवोदाहृतानीति भवितुमर्हतीति । वाक्यव्युत्पत्त्यभावविजृम्भितमिदम् । वाक्यकारो वा भाष्यकारो वा यदि पट्सु स्थलेषु अवश्योदाहर्तव्य निर्वचन नोदाहरिष्यत् किमिति अभ्यासमात्रे एतस्मिन् भाष्यकार स्मार्तं निर्वचनमुदाहरिष्यत् । किमिति च 'उदाहृत भाष्यकारेण' इति भाष्यकारोदाहृतत्व श्रीभाष्यकारो वदेत् । निर्वचन च स्मार्तं 'सदा तद्भावभावित ' इत्येतावन्मात्र हि वक्तव्यम । तस्माद् भाष्यकारेणोदाहृतमिति वदता भगवता निर्वचन सर्वं पूर्वाचार्योदाहृतमेवेति निस्सन्दिग्धमावेदितम् । तत्र पूर्वोक्तरीत्या एकविधं तात्पर्यं गृहीत्वा श्रौतान्यपि निर्वचनानि द्रमिडाचार्योदाहृतानीति व्यासार्या अवोचन् । तात्पर्यान्तरस्यापि सम्भवमालोच्य पक्षान्तरमप्याचार्यैरभ्यधायि ।

यत्तु 'निर्वचनञ्च स्मार्तमुदाहृत भाष्यकारेण' इति हि रामानुजभाष्यम् । तेन तत्पूर्वं पश्चाच्च निर्वचनोदाहरणं स्वकीयमिति गम्यते'

डस्य । 'अत्र निर्वचन 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः' इत्येवरूप भाष्यकारेण प्रदर्शितमिति श्रीभाष्यार्थ इति व्याख्यातुरभिप्रायः । "अत्र निर्वचन भाष्यकारेणोदाहृत "आहारशुद्धौ..." इति" इति वक्तव्ये 'भाष्यकारेणोदाहृतं' इत्येतादृशानुक्तावपि 'निर्वचन च स्मार्तमुदाहृत भाष्यकारेण' इत्युपरि भाष्यकारनिर्देशेनैव सर्वत्र भाष्यकारोदाहृतत्व ज्ञ पयामास श्रीभाष्यकार इत्युक्त भवति ।

यदपि 'पञ्चमहायज्ञाद्यनुष्ठान शक्तित क्रिया' इति क्रियास्वरूपकथनानन्तर 'क्रियावानेष ब्रह्मविदां वरिष्ठः' 'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति तन्निर्वचनोदाहरणमसमञ्जसम । 'ब्रह्मविदां वरिष्ठः' इति हि तत्त्वज्ञानी उक्तः न तूपासकः । तस्य च पञ्चमहायज्ञाद्यनुष्ठानं न सम्भवति । ज्ञानकर्मसमुच्चयनिषेधात् । विविदिषन्तीत्यत्र च वेदन तत्त्वज्ञान न तूपासनम्" इति, तद्विदुषा विस्मयावहम् । वादमार्गे अनुपान्वत्वप्रकाशनात् । उपासनातिरिक्तं वेदन परममुक्तिसाधनमिति श्रीशङ्करः । नेति भगवद्रामानुजः । अत्राय 'वेदनमुपासन स्यात् तद्विषये श्रवणात्' इत्यादिवाक्यवचनमुदाहृत्य यत्र यत्र मुक्त्युपायतया वेदन श्रूयते तत्रतत्र तद्वेदनमुपासनात्मकमेवेति वाक्यकारसिद्धान्तमुक्त्वा तद्दृढीकरणाय 'वाक्यकारश्च ध्रुवानुस्मृतेः विवेकादिभ्य एव निष्पत्तिमाह--तल्लब्धि रित्युपक्रम्य वाक्यकारवचनमुपन्यस्यति । तत्र क्रियावानेष ब्रह्मविदां वरिष्ठः' इत्यत्र ब्रह्मवेदन उपासनात्मकमेव वाक्यकारमते । वेदनमुपासन स्यादिति तेन सिद्धान्तितत्वात् । एवमेव विविदिषन्तीत्यत्रापि । एव पञ्चमहायज्ञादिक्रियाङ्गकोपसनात्मकमेव मुक्त्युपायतया वेदान्तविहित वेदनमिति वाक्यकारादिसिद्धान्तसिद्धतेः तद्विरुद्धः शाङ्करः केवलज्ञानवादोऽप्रामाणिकः प्रामाणिकैरुपेक्षणीय इति समञ्जस निरूपणे क्रियमाणे शङ्करमतविरुद्धत्वात् न तद्वाक्यकारमतमिति प्रत्यवतिष्ठमानस्य कियती बुद्धि-

डस्य । 'अत्र निर्वचनं 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः' इत्येवरूप भाष्यकारेण प्रदर्शितमिति श्रीभाष्यार्थ इति व्याख्यातुरभिप्रायः । "अत्र निर्वचन भाष्यकारेणोदाहृत "आहारशुद्धौ ." इति" इति वक्तव्ये 'भाष्यकारेणोदाहृतं' इत्येतादृहानुक्त्वापि 'निर्वचन च स्मार्तमुदाहृत भाष्यकारेण' इत्युपरि भाष्यकारनिर्देशेनैव सर्वत्र भाष्यकारोदाहृतत्व ज्ञापयामास श्रीभाष्यकार इत्युक्त भवति ।

यदपि 'पञ्चमहायज्ञाद्यनुष्ठान शक्तित क्रिया' इति क्रियास्वरूपकथनानन्तर 'क्रियावानेष ब्रह्मविदा वरिष्ठः' 'तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति तन्निर्वचनोदाहरणमसमञ्जसम् । 'ब्रह्मविदा वरिष्ठः' इति हि तत्त्वज्ञानी उक्तः न तूपासकः । तस्य च पञ्चमहायज्ञाद्यनुष्ठानं न सम्भवति । ज्ञानकर्मसमुच्चयनिषेधात् । विविदिषन्तीत्यत्र च वेदन तत्त्वज्ञान, न तूपासनम्" इति, तद्विदुषा विस्मयावहम् । वादमार्गे जनुपान्यत्वप्रकाशनात् । उपासनातिरिक्तं वेदन परममुक्तिसाधनमिति श्रीशङ्करः । नेति भगवद्रामानुजः । अत्राय 'वेदनमुपासन स्यात् तद्विषये श्रवणात्' इत्यादिवाक्यवचनमुदाहृत्य यत्र यत्र मुक्त्युपायतया वेदन श्रूयते तत्रतत्र तद्वेदनमुपासनात्मकमेवेति वाक्यकारसिद्धान्तमुक्त्वा तद्दृढीकरणाय 'वाक्यकारश्च ध्रुवानुस्मृतेः विवेकादिभ्य एव निष्पत्तिमाह--तल्लब्धि'रित्युपक्रम्य वाक्यकारवचनमुपन्यस्यति । तत्र क्रियावानेष ब्रह्मविदा वरिष्ठः' इत्यत्र ब्रह्मवेदन उपासनात्मकमेव वाक्यकारमते । वेदनमुपासन स्यादिति तेन सिद्धान्तितत्वात् । एवमेव विविदिषन्तीत्यत्रापि । एव पञ्चमहायज्ञादिक्रियाङ्गकोपासनात्मकमेव मुक्त्युपायतया वेदान्तविहितं वेदनमिति वाक्यकारादिसिद्धान्तस्थितेः तद्विरुद्धः शाङ्करः केवलज्ञानवादोऽप्रामाणिकः प्रामाणिकैरुपेक्षणीय इति समञ्जसं निरूपणे क्रियमाणे शङ्करमतविरुद्धत्वात् न तद्वाक्यकारमतमिति प्रत्यवतिष्ठमानस्य कियती बुद्धि-

भवतीति विद्वांसः कथं न विस्मयेरन् ?

स्वमोदर्थातिशयव्याख्यानायैव अपरं डिण्डिमभेषं शास्त्री ताडयति । क्रियानिर्वचनोदाहरणे वाक्यद्वयमुपात्तम्—'क्रियावानेष' इति, 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' इति च । अत्र अस्मदाचार्याणां सर्वेषां स्वभावसिद्धां सूक्ष्मेक्षिकां स्वयमपि कुर्वन् व्याचष्टे 'क्रियावानेष इति सन्दर्भितवाक्यम्' इत्याह । इदमर्थं महाभागः 'सद्ग्रहवचनम्' इति शोधयति । अस्य शोधनस्य कोऽर्थः इति नूनं सोऽपि न वेद । वाक्यद्वये उत्तरं विविदिषन्तीति सन्प्रत्ययसहितम् । पूर्वं तु 'क्रियावानेष' इत्येतत् सन्दर्भितम् । इति वाक्यद्वयस्य विशेषमाह व्याचष्टे । इदं 'न हि ब्रह्मविविदिषूणामस्त्युक्तम्' इति स्वयं शतप्रतिशिक्षाचार्यं विशदीचकार । एवमपि अजातबाधः ग्रन्थस्यान्यथाकरणसाहसमवलम्ब्यते । ईदृशं साहसमेव तदीयग्रन्थे आरम्भात् प्रभृति आवसानं दृश्यते । 'ब्रह्मन्मन्यमना हठेन पठितो माऽस्मिन् खलु स्खलतु' इति श्रीहर्षकृतमुपदेशं बुध्वाऽनुतिष्ठेच्चेत् शास्त्री ब्रह्मविदपचारफलतया भविष्यतो नरकाग्निदाहाद् बलीभवनादात्मानं पातुं प्रभवेत् । विविदिषन्तीति सन्प्रत्ययमालम्ब्य वाचस्पतिना काचन कल्पना कृता । तादृशं विशेषकरत्वं सना नास्तीति व्यञ्जनाय सन्दर्भितवाक्यस्योदाहरणमिति तत्त्वटीका भावप्रकाशिकयाव्यक्तम् ।

४९ श्रीसुदर्शनसूरि श्रीमद्वेङ्कटनाथश्च स्वकीयसिद्धान्तसाम्प्रदायिकत्वं वाक्यद्रमिडभाष्यमूलकत्वं च पुनः पुनः स्वग्रन्थेषु यदुद्घोषयतः, तत्तु देशपरम्परया तदवगमात्, श्रीभाष्यवदर्थसङ्ग्रहादिग्रन्थेषु वाक्यद्रमिडभाष्योक्तार्थोपन्यासाच्च । 'पूर्वाचार्याः संचिक्षिपुः । तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति भगवद्रामानुजोक्तिः किं न पर्याप्ता अस्मत्सिद्धान्तस्य साम्प्रदायिकत्वपूर्वाचार्यग्रन्थमूलकत्वयोरुपपादनाय । युष्मदस्मत्प्रत्ययगोचरयोरित्युपक्रम्य अप्रतिष्ठितदुर्बलतर्काव

अप्रसिद्धा अपि ग्रन्था उपलभ्यन्ते' इत्यादि। नूनमन्धः संवृत्तः शास्त्री, येन स्फुटं प्रकाशमानमर्थं यथावन्न पश्यति। श्रुतप्रकाशिकायां

'ब्रह्मण्युपनिषण्णेत्युपनिषत्। उपनिषण्णत्वाद्वोपनिषदिति हि वाक्यम्। 'गहने हीयं विद्या सन्निविष्टा' इति तद्विषयं द्रमिडभाष्यम्। गहने ब्रह्मण्युपनिषण्णा' इति भाष्यविषया वामनटीका।"

इत्युक्तं दृश्यते। तत्त्वटीकायामपि ईदृश्येवोक्तिः। अत्र किं वामनटीकां स्वयं दृष्टेति लोपो वर्तते? अप्रसिद्धा ग्रन्था उपलब्धा इति किं सूचनमपि वा क्रियते। असम्बद्धं भाषणं दोषां कृत्वा विदुषां शिरश्शूलजननसंरम्भं कुतोऽयं वहतीति न विद्मः।

"उपनिषण्णं वा अस्यां परं श्रेय इत्युपनिषत्" इति शङ्करोक्तिं दृष्ट्वा कदाचित् श्रुतप्रकाशिकाकारः तत्समानार्थकं वाक्यग्रन्थमभ्यूह्य द्रमिडभाष्यवाक्यवामनटीकावाक्यद्वयमपि कल्पयित्वा व्यवहृतवान् स्यात्" इति तर्क्यत इत्यत्यन्तपामरदुर्जनसरणिमाश्रित्य निश्शङ्कं लिखति। ननु कुतोऽयं तर्कः? श्रुतप्रकाशिकावचनात् द्रमिडभाष्यस्य वामनटीका काचिदासीदिति ग्रहणे काऽनुपपत्तिः। द्रमिडभाष्यस्य या काऽपि टीका नासीदिति किं कुत्र अदर्शनम्। अनुपलम्भान्नासीदिति चेत् वाक्यद्रमिडभाष्ययोरप्यनुपलम्भः समानः। अस्माकमिदानीमनुपलम्भेऽपि आप्तग्रन्थेषु तदुदाहरणात् तयोः स्थितत्वं ज्ञायत इति चेत् इदमपि तुल्यम्। वाक्यद्रमिडभाष्ये श्रीसुदर्शनसूरिणा स्वयं साक्षान्न दृष्टे। तेन वामनटीकाऽपि तेन दृष्टा भवितुं नार्हतीति चेत् कामभेवमस्तु। तथापि इमानि वाक्यानि तेन स्वयं कल्पितानीति वादस्य कोऽवकाशः। तेन दृष्टेषु प्राचीनग्रन्थेषु केषुचित् इमानि ब्रह्मनन्द्यादिवाक्यानि उदाहृतान्यासन्। तान्येवायमुदाजहार। एवं ऋजुमार्गेण उपपत्तौ सम्भवन्त्यां अनार्यपद्धतिमनुसृत्य कल्पकत्वं तस्य कुतः कल्प्यते। श्रीमन्निगमान्तमहादेशिककाल वधि स्थिता न्यायतत्त्व, प्रमेयसङ्ग्रहः तत्त्वरत्नाकरः,

पदार्थसंक्षेप प्रमाणपरित्राण इत्यादय सुबहवो ग्रन्था परधामगच्छा। तेषु तथाविधेषु वा ग्रन्थेषु कचिदुदाहृतानि वाक्यानि इमे आचार्या स्वयमप्युदाहरन्ति। तत्र का वाच्यता?

एव स्वदृष्टेषु कपुचिद् ग्रन्थेषु हिरण्मय इति रूपसामान्यात्, चन्द्र मुखवत्' इति वाक्य वाक्यकारीयत्वेनाक्त पश्यन् श्रुतप्रकाशिकाचार्यः स्वयमपि तत् तथा आह। अन्येषु कपुचित् द्रमिडभाष्यवाक्यत्वेनोक्त तत्पश्यन् श्रीदेशिकः एवमत्र द्वैधमस्तीति ज्ञापनाय यथाऽऽहुर्द्रमिडा चार्यः—हिरण्मय इति' इत्याह। 'अत्र भूमः सदुक्तौ न वयमिह सुग शायितु किञ्चिदद्धा' इति सङ्कल्पसूर्योदयविषये विप्रतिपत्ति प्रदर्श्य तत्रास्माभि रेतव्या दृष्टि हि अयमुपदिष्टवान्।

मैसूर् मुद्रित भाष्यवृत्तिसहित आपस्तम्बश्रौतसूत्रे ( II १०६ पु० )

आराद्ग्रामस्य इत्यत्र अरण्यावसाने ग्रामसीमान्तप्रभृति छर्दि र्दर्शनम्। ब्रह्मयज्ञप्रकरणे अच्छदिर्दर्श इत्यस्य व्याख्यानावसरे गुहदेवस्वामिनोक्तत्वात्।

इति रामाग्निचिद्वृत्तौ दृश्यते। अनेन गुहदेवनामा वेदभाष्यकार आसीदिति स्पष्टम्। वेदभाष्यकाराश्च मन्त्रब्राह्मणव्याख्यानावसरे सत्या प्रसक्तौ वेदान्तवेद्यपरब्रह्मसम्बन्धिविषयान्तरचिन्तामपि कुर्व न्ति। उदाहृत वृत्तिग्रन्थे 'ब्रह्मयज्ञप्रकरणे' इत्युक्त्या निर्दिश्यमान गुहदेव भाष्य तैत्तिरीयारण्यकविवरणरूपमिति गम्यते। तत्राय नून जगद्ब्रह्मणो शरीरात्मभावावलम्बिविशिष्टाद्वैतसिद्धान्त प्रतिपादितवान्। अत एव हि तदनुसारी उपवृत्तिकारः तत्र 'ननु कथ 'आत्मन ब्रह्मणे' इत्युच्यते? उच्यते। 'य आत्मनि तिष्ठन्नात्मनोऽन्तरः यमयति यस्यात्मा शरीर स आत्मा' इति जीवशरीरकेऽन्तर्यामिणि आत्मशब्दप्रयोगात्। तस्य च परमात्मत्वात्। परमात्मनो ब्रह्मत्वेन सर्वशाखाप्रसिद्धत्वात्। 'नारायण पर ब्रह्म' आत्मा नारायणः पर' इति नारायणपरब्रह्मपर

मात्मशब्दानां सामानाधिकरण्यात्।' इत्यादि वदति। ( आ० श्रौ० सू० ४ प्रश्ने ४ खण्डारम्भे 'इदं शकेयं यदिदं करोमि। आत्मा करोत्वात्मने' इत्यादिना विहितजपमन्त्रविवरणे )।

५२　श्रुतप्रकाशिकातत्त्वटीकयोः नमः प्रवरगुणैकास्पदाय' इत्यादिमङ्गलं द्रामिडाचार्यकृतत्वेनोदाहृतम्। तत्रायमाहः। अद्य यावदमुद्रितस्य मद्रस्थप्राचीनपुस्तकागारे रक्ष्यमाणस्य प्रभाकरमतानुसारिणः मीमांसान्यायकोशाभिधस्य ग्रन्थस्य प्रारम्भे इदं मङ्गलं अनयैवानुपूर्व्या दृश्यते। ब्रह्मसूत्रकारस्य बादरायणस्यात्र वन्दनं न क्रियते। क्रियते तु जैमिनेः। शबरादीनां च। एतैर्हेतुभिरिदं मीमांसान्यायकोशकारीयं मङ्गलमिति स्पष्टम्। "केनाप्युच्चार्यमाणमिदं मङ्गलं श्रुतवन्ताविमौ कस्येदमित्यविमृश्यैव ब्रह्मणः सगुणत्ववर्णनश्रवणमात्रतृप्तौ द्रमिडभाष्यमङ्गलमिदमिति ग्रन्थे लिखितवन्तौ। ग्रन्थस्य मङ्गलस्य वा आनुरूप्यमस्ति न वेत्यपि नालोचितवन्तौ।" इति।

अयं सर्वपर्यालोचनदक्षो महाविमर्शकः यत्पर्यालोचनाय यद्विमर्शनीयं तद्व्यतिरिक्तमेव पर्यालोचयितुं विमृष्टुं च शीलवान्। अर्वाचीनाः वाक्यरूपं मङ्गलं न निबध्नन्ति। शबरस्वामिप्रभृतीनां नमनाय श्लोकान् रचयन् कोशकारः जैमिन्यादीनां कृते वाक्यमेव लिलेखेति न युज्यते। सुव्युत्पन्नानन्यसाधारणपदविन्यासशोभिसङ्क्षिप्तातिगम्भीरवाक्यरचनाचतुरौ वाक्यद्रमिडभाष्यकाराविति तद्वाक्यानुसन्धायिनां सुधियां प्रत्यक्षमेतत्। नमः प्रवरगुणैकास्पदाय स्थिरत्रसकुलबीजभूताय भुवनकोशस्य गोप्त्रे ब्रह्मणे नमो जैमिनये वेदरहस्यसम्पुटनिगूढविस्फारयित्रे न्यायप्रज्वलितचेतसे' इति वाक्यद्वये च द्रामिडाचार्यमुद्रा सुलग्ना सुव्यक्ता दृश्यते। शालिकभवनाथाभ्यामनन्तरकालिके ग्रन्थकारे ईदृशवाक्यलेखनरीतिरत्यन्तमसम्भाविनी। अतो द्रमिडाचार्यस्यैवैतन्मङ्गलं पूर्वाचार्यैः स्वग्रन्थेषूदाहृतं श्रुतप्रकाशिकाचार्यः स्वयमप्युदाजहारेति निश्चेतव्यम्।

यत्तु व्यासवन्दनं कुतो न कृतमिति तत् व्यासस्य साक्षात्परब्रह्म भूतविष्णुरूपत्वात् तद्वन्दनेनैव एतद्वन्दनस्यापि सिद्धत्वाभिप्रायादिति समाधेयम्। व्यासाय विष्णुरूपायेति हि स्मृतिः। यत्तु जैमिनेर्ब्रह्मसूत्रासम्बन्धिनः कुतो नमनमिति। तेन अत्यन्तानभिज्ञता केवलं प्रकाश्यते। वेदान्तेषु ब्रह्मतरसम्बन्धिविषयविशेषावधारणमात्रोपयोगिनो हि न्याया भगवता बादरायणेन ब्रह्मसूत्रेषु निबद्धाः। वैदिकपदार्थवाक्यार्थावधारणोपयोगिनस्तु न्याया जैमिनिना निबद्धाः। ते यथा कर्मभागेन तथा ब्रह्मभागेनापि अत्यन्तसम्बद्धाः। अत एव हि सूत्रकारेण भाष्यकारैः व्याख्यातृभिश्च इमे न्यायाः पदे पदे उपजीव्यन्ते। तदत्र जैमिनेर्ब्रह्मसूत्रासम्बन्धित्वाभिधानं पण्डितस्य न गौरवावहम्। सुसम्बन्धित्वं नमनवाक्य एव 'वेदसम्पुटनिगूढविष्कारयित्रे न्यायप्रज्वलितचेतसे' इत्याभ्यां पदाभ्यां सुव्यञ्जितम्। सर्वोऽपि हि वेदान्तो वेद एव। तदर्थावधारणोपयुक्ताश्च न्याया जैमिन्युपज्ञानि। अतश्शास्त्रार्थविवरणप्रवृत्तो जैमिनिं प्रणमतीति सुश्लिष्टमेतत्।

अथ कथं द्रमिडभाष्यमङ्गलस्य मीमांसान्यायकोशे दर्शनमिति चेत् सत्ययं प्रश्नः समाधेयः। समाधानं चेदम्। इदानीं रक्ष्यमाणस्य तन्मूलभूतस्य वा पुस्तकस्य ये लेखकाः ते श्रुतप्रकाशिकादिषु पठितमिदं मङ्गलं श्रुत्वा तद्रामणीयकेन व्याकृष्टाः तस्याविस्मरणाय अस्य पुस्तकस्य प्रथमे पत्रे लेखनमकुर्वन्। अकारयन् वा। अत इदं तत्र भाति दृश्यते। 'नम प्रवर' 'नमो जैमिनये' इत्यनयोर्मध्ये दृश्यमानः 'नित्योदार' इति श्लोकोऽपि अन्यस्यैव यस्य कस्यचित् तत्र लिखितः। नायं द्रमिडभाष्यकारस्य। नापि कोशकारस्य। ब्रह्मविषयतया जैमिनिवन्दनवाक्यात् पूर्वं लिखितः। किञ्चायं मीमांसान्यायकोशकारः ख्यातिविचारे

'तस्मादन्यथाख्यातिरेव भ्रान्तिः। इयमेव ख्यातिः प्राचीनैर्द्रमिडाचार्यैः स्वीकृता'

इति वदति । अनेनाय वाक्यभाष्योभयदर्शीति ज्ञायते । एवं च द्रमिड-भाष्यारम्भस्थं मङ्गलं स्वग्रन्थे स्वयमेव निवेशितवानित्यपि युक्तम् । सा हि रमणीया रचना कस्य मनो न कर्षेत् ।

५३. सेश्वरमीमांसायां श्रीदेशिकचरणैः "उभयाभिप्रायवेदी भगवान् बोधायनः विंशतिलक्षणीं मीमांसां परस्परसङ्गमार्थं विस्तरेण व्याख्यदिति वृद्धा विदामासुः" इति यदुक्तं तत्रायमाह—वितथैतिह्यवर्णनमिदम् । वस्तुतस्तु बोधायनः ब्रह्मसूत्रवृत्तिमेव कृतवानित्युक्तं रामानुजार्येण । 'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सञ्चिक्षिपुः' इत्येव किल रामानुजार्यो वदति—इति । अपभाषणे चक्षुरन्धं भवेदिति दैवदण्डो वा, शतं दाप्य इति राजदण्डो वा यदि स्यात् नूनमीदृशं पण्डितनामधारी यः कोऽपि न भाषेत । बोधायनकृतां ब्रह्मसूत्रवृत्तिमित्यनेन बोधायनः ब्रह्मसूत्रवृत्तिमेव चकारेति कथं लभ्यते । न हि मल्लिनाथकृतं रघुवंशव्याख्यानमेते अध्यापयन्तीत्युक्ते मल्लिनाथः रघुवंशव्याख्यानमेवाकरोदित्यर्थो भवेत् । अधश्शीर्षं तिष्ठताऽपि श्रीमद्वेङ्कटनाथोक्तस्य ऐतिह्यस्य अप्रामाण्यमापादयितुमशक्यमिति दृढं गृह्णातु भवान् ।

५४. प्रतिवादिभयङ्करस्वामिनोऽपि 'स भगवान् महर्षिः बोधायनो ब्रह्ममीमांसाशास्त्रस्य सुविस्तृतां वृत्तिं कुर्वन्' इति वदतः सूत्रान्तरवृत्तिकरणव्यवच्छेदे नैव तात्पर्यम् । भगवद्बोधायनकृतामिति श्रीभाष्योक्तिप्रतिपन्नार्थानुवादमात्रे तात्पर्यात् । शाबरे उपवर्षकीर्तनेन पूर्वकाण्डवृत्तिकर्तृत्वं तस्य स्फुटमवगतमिति विंशतिलक्षणीवृत्तिकारत्वेन तस्य निर्देशः ।

५५. बोधायनमहर्षिकृता विंशतिलक्षणीवृत्तिर्वा ब्रह्मसूत्रमात्रवृत्तिर्वा नैवासीत् । विशिष्टाद्वैतिनां कल्पनामात्रसिद्धा सेति स्थापने सरभमाणः बहु लिखति । तत्रोपवर्षवृत्तिरासीदिति सर्वाभ्युपगतत्वात् बोधायनस्योपवर्षादनन्यत्वे बोधायनवृत्तिरस्ता सि ध्येदिति बिभ्यत् प्रथमं तस्य तद्-

-न्यत्वसाधने प्रवृत्त तदनन्यत्वाभिधायिवाक्यघटित तत्तत्टीकाग्रन्थमा दाय स्वकीय कल्पनाकौशल प्रकटयति ।

> वृत्तिकारोपज्ञ स्वमतमाह—शब्दस्येति । अत्र शाबरम्—गौरि त्यत्र क श द । गकारौकारविसर्जनीया इति भगवानुपवर्ष ।
>
> वृत्तिकारस्य बोधायनस्यैव ह्युपवर्ष इति स्यान्नाम ।

इति स मन्य । अन्तिम वाक्य बोधायन उपवर्ष एवेति ज्ञापयत् शास्त्रिण अरुन्तुद भवति । अत स्वप्रतिभा स घुक्षयन्, 'नेय श्रीदे-शिकोक्ति । किन्तु कनचित् कृता टिप्पणी । वृत्तिकारोपज्ञ स्वमतमित्यत्र वृत्तिकारा हि भगवद्बोधायनकृतामिति श्रीभाष्यकारेण सबहुमान कीर्तितो बोधायन एव भवितुमर्हति । तत्र 'इति भगवानुपवर्ष' इति शबरनिर्दिष्टोपवर्षमतोदाहरण न सङ्गच्छते । अत कश्चित् सङ्गतत्वाय अयमुपवर्ष बोधायन एवेति टिप्पणीं लिलेख । सा क्रमेण ग्रन्थान्तर्गता बभूव' इत्युक्त्वा अतिनिगूढानन्यावलभ्यपरमार्थोपलम्भाभिमानजनित विस्मयाध्मातचेता इत्थ मुखरीभवति—

> अत्याश्चर्योऽय महिमा टिप्पणीकारस्य, तत्कोशलेखकस्य, तद्ग्रन्थमुद्रणकारस्य च, येनाविच्छिन्नतया पश्चात्तनपुरुषाणा भ्रमपरम्परा समजनि । जनिष्यते च ।

इति ।

५६ अथ कथ तस्य वाक्यस्याग्रन्थत्व टिप्पणीत्व चाध्यवसीयत इत्यत्राह—अत्र प्रथम निर्दिष्टो वृत्तिकार' मीमासावृत्तिकारः उपवर्ष एव । तद्वाक्यस्यैवोपरि प्रदर्शनात् । तत्र बोधायनस्यैव उपवर्ष इत्यपर नामेत्युक्तेः क प्रसङ्ग कथमन्वय । अतस्तथा निर्णय इति । अत्र बुद्धिमन्त एन पृच्छेयु —ननु वृत्तिकारेति सामान्यशब्दोऽयम् । स मीमासावृत्तिकार एवेति कथमुच्यत इति । स प्रतिवदेत्—अनन्तरवाक्ये तत्कीर्तनादित्युदमिति । ते पुनर्ब्रूयुः—तृतीयवाक्यानुरोधेन स वृत्ति

कारो बोधायन एव। ग्रन्थश्चैव व्याख्येयः। बोधायनोपज्ञं स्वमतमाह-शब्दस्यैकरूपत्वमपि न साधीय इति। तदुपज्ञमिदं मतमिति कथं ज्ञायत इत्यत्राह अत्र शाबरमिति। नन्वत्र उपवर्षमतमुच्यते, न बोधायनमतमित्यत्राह—वृत्तिकारस्य बोधायनस्यैव ह्युपवर्ष इति स्यान्नामेति। अत्र का असङ्गतिः? कोऽनन्वयः। तस्मात् प्रतिपर्वं मौर्ख्यदौर्जन्ये विना नान्यत् किमपि शास्त्रिणा प्रकाश्यत इति तत्त्वमस्माभिरगत्या वक्तव्यं भवति। बोधायनोपवर्षयोरनन्यत्वपक्षोपक्षेपतत्परोऽस्य तत्त्वटीकाग्रन्थः। अन्यथा श्रुतप्रकाशिकाग्रन्थवदेव स्यात्। इदं ज्ञातुं सर्वथा अक्षमः शास्त्री।

५७ ननु सेश्वरमीमांसायामुपवर्षं खण्डयति श्रीवेङ्कटनाथः। स चेत् बोधायन एव, भगवद्बोधायनेति श्रीभाष्यकारबहुमतस्य तस्य खण्डनं कथमयं कुर्यादिति चेत् स्वस्यात्यन्तबहुमतस्य सूत्रकारस्य खण्डनं श्रीशङ्करो यथा करोति तथेति ग्रहणे कः क्लेशः। प्रामाणिक इति दृढगृहीतार्थविषये प्रतीपभाषिणां महतामपि मतं प्रौढा आचार्या निरस्यन्ति। परन्तु प्रौढिवाद इति अन्वारुह्यवाद इति ब्रुवाणा आत्मनो विनयं रक्षन्त्येव। न तेषां तिरस्कारे अल्पाऽपि मतिः।

अथोपवर्षस्य विंशतिलक्षणीवृत्तिकारत्वेन प्रसिद्धत्वात् तस्यैव बोधायनत्वे 'बोधायनो विंशतिलक्षणीं मीमांसां व्याख्यादिति वृद्धा विदांचक्रुः' इति वृद्धोक्त्या तद् ज्ञायत इति सेश्वरमीमांसाया साधनं किमर्थमिति चेत् श्रूयताम्। उपवर्षस्य तथात्वं कुतः प्रसिद्धम्? न हि शबरशङ्करकालादनन्तरं उपवर्षवृत्तिः प्रचारे अवर्ततेत्यत्र किञ्चित् प्रमाणमस्ति। शबरशङ्करोक्त्यैव तत्प्रसिद्धिरिति चेत् तदेवोक्तं श्रीदेशिकचरणैः 'वृद्धा विदांचक्रुः' इत्यनेन। बोधायननाम्नैव तस्य तादृशवृत्तिकारत्वं प्राचीनैरन्यैर्ग्रन्थकारैः स्वग्रन्थेषूक्तं स्यात्। तच्च कर्णपरम्परया श्रूयमाणमभिप्रेत्य वृद्धा विदांचक्रुरित्युक्तम्।

अत्र पुनरप्युन्मत्तडिण्डिम ताडयति शास्त्री। उन्मत्तेनैव तत्र प्रति पटहस्ताडनीय । स्यामेति पक्षभेदमात्र ज्ञापितं श्रीदेशिकै । उपवर्ष बोधायनयोर्भेदपक्षो न निरस्त । भेदपक्षेऽपि बोधायन उपवर्षवत् विश तिलक्षण्या स्वकायवृत्त्यन्तकार इत्यभिप्रेत्य च तत्र प्रमाणतया वृद्धा विदामाशुरित्युक्ति ।

५८ दण्डकृता अवन्तिसुन्दरीकथा श्रीमदनन्तपुरे मुद्रिता प्रका शिता उपलभ्यते। अस्यां कथायां कवि स्वस्य सर्वज्ञता प्रकाशयन् लोकशास्त्रकलासम्बन्धिनः सर्वान् विषयान् यथोचित तत्र तत्र घटयित्वा वर्णयति। तत्र स स्पष्ट बोधायनं नाम्ना कीर्तयन् तस्यैव उपवर्षत्व ज्ञापयति।

स्वामिगृहे सुब्रह्मण्य ब्रह्मविशाहेतो अभ्यधार(रा)धयम्। आज्ञप्त च देवेन, एनमेतत्सख पुरस्कृत्य बोधायनपार्श्वमगमत्। अन स्माकौ चायमर्थः। भाजनं च दिव्याध्ययनस्यैव दीर्घायु। अतो विसृज्येतरप्रमदासुलभ स्नेहकातरत्वमिदमस्मासु पुत्रप्राप्तेन निक्षिप्यताम्। कृते चार्थे हस्त एव ते प्रत्यर्पयिष्याम इति।

इतीन्द्रदत्तनाम्न कस्यचिद्वाक्य तत्रास्ति। अत्र बोधायनपार्श्वगमनोक्ति स्पष्टा। इय दुस्सह शिरःशूल शास्त्रिणो जनयति। अतोऽस्या विध्व सनमेव तावन्निरसेऽध्यवसाय तत्करोति।

"आदिष्ट च स्वामिना श्रुतधरमादाय उपवर्षं भजस्वेति व्या हियाक्यच्छायामनुसृत्य आज्ञप्त च देवेन एनमेतत्सख पुरस्कृत्य बोधाय न उपवर्षभजनम्। माशी चायमर्थ" इति इन्द्रदत्तवाक्यस्य शोधनं कर्तव्यम्। नः व्याडीन्द्रदत्तवररु चीना बोधाय सांख्यवद्ग्रहणाय उपवर्षभजन देवेन आज्ञप्त मित्यर्थः" इति।

५९ एव कृत्वाऽनुपदं वदति— अत्र कश्चिदर्वाचीना, ग्रन्थविप

र्यासं वा शोधनं वा मध्ये प्रक्षेपं वा निष्कासनं वा सर्वं धाष्ट्र्येन कर्तुं कुशलाः इत्यादि ।

"श्रुतिश्रेणीचूडापदबहुमते लक्ष्मणमते
स्वपक्षस्थान् दोषान् वितथमतिरारोपयति यः ।
स्वहस्तेनोत्क्षिप्तैः स खलु निजगात्रेषु बहुल
गलद्भिर्जम्बालैर्गगनतलमालिम्पति जडः ॥"

इति श्रीसूक्ते प्रथमोदाहरणतामयं भजते । बोधायनेति रूढः सञ्ज्ञाशब्दः श्रूयते । तं 'बोधाय नः' इति विपर्यासयति । 'न' इत्येतत् 'नः' इति शोधयति । उपवर्षभजनमिति मध्ये प्रक्षेपं करोति । गमनं श्रुतं निष्कासयति । एवमतिधाष्ट्र्येन सर्वं कुर्वन्नयं परान् एवंविधधार्ष्ट्यभाजोऽभिशंसति । यद्यथाऽवगम्यते तत् तथा नास्ति । यद्यथा नावगम्यते तत् तथाऽस्ति, इति यत्र साधयितुमिष्यते तदद्वैतदर्शनमिति अस्य लक्षणमाहुः । जगदस्तीति सर्वैः प्रमाणैरुपलभ्यते । तन्नास्तीति साधने व्यग्रा भवन्ति । निर्विशेषं वस्तु किञ्चिदस्तीति न येन केनापि प्रमाणेनोपलभ्यते । तदस्तीति साधनाय बहु प्रयस्यन्ति । एतद्दर्शनाभ्यासजनितरूढमूलवासनाविसरवासितान्तःकरणोऽयं परमसात्त्विकान् प्रामाणिकमूर्धन्यान् पापभीरून् महतः साहसकारिणो वापयति । सर्वं साहसं बुद्धिपूर्वं दौर्जन्यकाष्ठायां स्थित्वा कुर्वन् प्रामाणिकमिव परमार्थवादिनमिव आत्मानं दर्शयितुं यतते । वाक्यग्रन्थवाक्येषु ईदृशं साहसमनेन कृतं पूर्वं प्रादर्शयाम । अत्र दाण्डवाक्ये एकत्र समुच्चित्य सर्वं करोतीति विशेषः ।

नारिकेलापजिहीर्षया तद्वृक्षमारूढः चोरः कश्चित् कुत एवमारूढ इति पृष्टः वत्सस्य घासग्रहणायेत्यवोचदिति अस्ति कश्चिदाभाणकः । तया रीत्या स्वकीयस्य दुःशोधनस्य हेत्वाभासान् उपन्यस्यति । तत्र "इन्द्रदत्तवाक्ये ब्रह्मविद्याहेतोरिति वेदान्तविद्यापरं न भवितुमर्हति । पूर्वं साङ्गवेदविद्याया एव प्रस्तुतत्वात् । व्याडीन्द्रदत्तवररुचीनां वैया-

करणत्वेनैव प्रसिद्धत्वाच्चे"ति यदुच्यते तद् बालभाषितम्। पूर्वं "चतुर्भिर्वेदैरङ्गैश्च षड्भि" इत्याह स्माव । तत्र किं वेदान्तभागवर्जमेव चत्वारो वेदा विवक्षिता । आमत्यपि चवेदर्भिनिविष्ट । तत्र नास्माभिरुत्तरं वक्तव्यम्। विद्वत्कुलपरिहास एव त प्रतिभाषवन्त करिष्यति। महावैयाकरणत्वप्रसिद्धिः क्व तथा वेदान्तविद्याकामत्वे तदध्येतृत्व च विरुध्यते। ब्रह्मणा वाथ सर्वे वेदा मह्रीयन्ते 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्यः' 'स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठां' इत्यादिभि प्रतिपाद्य महान्तमर्थं मनसि निधाय प्रथम चतुर्भिर्वेदैरिति निर्दिष्टानेव वेदान् पुन ब्रह्मविद्यात्वेन निर्दिशतीति क्व रसमय भाव ग्रहीतुमनुभवितु च 'दम्भो दर्पोऽतिमानश्च क्रोधः पारुष्यमेव च। अज्ञानं च' इति भगवदुक्ता आसुरी सम्पदभिजातस्यास्य नास्ति प्रसङ्ग ।

पूर्वं व्याडिवाक्ये उपवर्ष इत्येवोक्तम्। उपरि च उपवर्ष इत्येव प्रोच्यते। मध्ये पर बोधायन इति विलक्षणनामकरणस्य श्रोतु पूर्वापरानुसन्धानवन् कोऽयमिति संशयावहस्य प्रसक्तिर्नास्ति।

इति यदुच्यते तत् स्थूलदृष्टेः कविहृदयानभिज्ञतानिबन्धनम्। कविर्हि प्रथमं 'वररुचिं नाम सुतमसूत' इति, उपर्यपि 'ननैव वररुचिमुखेन' इति वररुचिनाम निर्दिशन्नपि मध्ये 'श्रुतधरमादाय' इति, 'एकेन कात्यायन' इति च वररुचिमेव श्रुतधरेति कात्यायनेति द्वाभ्यां नामान्तराभ्यां निर्दिशति। वररुचे एवमपि द्वे नाम्नी आस्तामिति स्पष्टोक्ति कविमार्गानुरूपामाकलय्य वक्रमार्गेण तद्व्यञ्जयति । एवमेव उपवर्षस्य बोधायन इति नामान्तरमासीदिति व्यञ्जनायात्र बोधायननामनिर्देशः। एतदभिप्रायेणैव 'वृत्तिकारस्य बोधायनस्यैव हि उपवर्ष इति स्यान्नाम' इति तत्त्वटीकायामुच्यते । कवितार्किकसिंहो हि स्वकालविद्यमानसर्वग्रन्थदर्शी। 'नामूलं लिख्यते किञ्चित्' इति च प्राचां मतम्।

अथ यत्तु 'बोधाय, न, इति पदद्वये एकपदत्वभ्रान्त्या परेणाम'

इति, तत्र ब्रूमः। सुरापायी किल कश्चिदुवाच—न न सुरां पिबेदिति नकारद्वयवति श्रुतिवाक्ये एकनकारभ्रान्तिः शठानामिति। 'बोधायनपार्श्वमगमत्' इत्यनन्वित वाक्यमिति सत्यमेतत्। "बोधाय नः उपवर्षं भजन्तं इत्येव शुद्धः पाठः" इति तु 'न न सुरां पिबेत्' इत्येव शुद्धः पाठः इत्येतत्तुल्यम। आज्ञप्तमित्यस्य विशेष्यमपेक्ष्यते। यावता तल्लाभः तावत् शोधन कर्तव्यम्, न त्वधिकम्। अनाकाङ्क्षितत्वात्। तत्र बोधायनेति पार्श्वेति च पदद्वयमपेक्षितविशेष्यसमर्पणे अक्षमम्। तदनन्तरश्रुतगम्यर्थो गमन तत्क्षमम्। तत्र लुङर्थो भूतत्व नान्वेति। अतस्तन्मात्र परित्यज्य गमनमिति शोधनमपरिहार्यतया कर्तव्यं भवति। तथा च "आज्ञप्तं च देवेन बोधायनपार्श्वगमनम्" इत्यन्वयाथया सामञ्जस्यात् अन्यत् यत् किमपि कल्प्यमानमप्रामाणिकम्।

एवमपि 'अनम्भावी चायमर्थ' इत्युपरि दृश्यमानमनवगतार्थमेव अवतिष्ठते। तदर्थं 'बोधायनपार्श्वगमनमनु भावी' इति वा 'बोधायनपार्श्वगमनेन भावी' इति वा शोधन साधीयः। अत्र 'आज्ञप्त च देवेन' इति प्राक्तन उत्तरत्र नान्वेति। स्वतन्त्रवाक्यमेव भवति। कृता च कर्तव्यविषये आज्ञा देवेनेत्यर्थः। कर्तव्य च व्याडिवाक्यज्ञातमेवेति पुनरिह स्पष्ट नोच्यते। किन्तु उत्तरवाक्येन व्यज्यते। बोधायनपार्श्वगमनेन भावी चाय ब्रह्मविद्याप्राप्तिरूपोऽर्थः' इत्युक्त्या हि तत्पार्श्वं गन्तव्यमित्येवरूपा सा आज्ञेति अक्लेशं प्रतीयते युक्त च। आवश्यक च आज्ञप्त चेत्यस्य पृथग्वाक्यत्वम्। 'आदिष्ट च स्वामिना श्रुतधरमादायोपवर्षं भजेति' इति व्याडिवाक्य इवेह इतिशब्दाश्रवणात्। 'कृते चार्थे हरन एव ते प्रत्यर्पयिष्याम इति' इतीन्द्रदत्तवाक्यावसान एव तच्छ्रवणात्। अतः एनमेतत्सखमित्यादि इन्द्रदत्तस्य स्ववाक्यमेव। न त्वाज्ञाभिलापकम।

एवं प्रमाणप्रतिपन्नार्थैकवादिनो विशिष्टाद्वैतिनः। अणुमात्रमपि न-

स्वय किमपि कल्पयेयुरिति स्थितम्। अन्ये तु नैवम्। तदिदं किञ्चिदत्र निदर्शनीय मात्स म यामहे। महापानपदि नारायणानुवाक

स ब्रह्मा स शिव सेन्द्रः सोऽक्षरः परमः स्वराट्।

इत्यस्मदीय पाठः। अत्र सेन्द्र इत्यत पर 'स हरिः' इति स्सार्वपाठाऽधिको दृश्यते। पूवत्र नारायण विष्णु परमात्मेत्यभिधाय तद्विभूतिभूताना देवानामत्र निर्देशात विभूतिमत परमात्मनो विष्णोरिह ग्रहणे नास्त्यौचत्यम्। अपि च अनुष्टुप्छन्दोबद्धोऽयं मन्त्रः। साऽपि लोपे चेत् पादपूरणमिति पाणिनिसूत्रानुरोधेन सुलोप कृत्वा सेन्द्र इति सन्धि तया अक्षरनियमोऽत्र रक्ष्यते। तस्मात् विष्णुपारम्यासहै छन्दोभङ्गमप्यगणयित्वा धाष्टर्याद् वैदिकमन्त्रेऽपि स हरिरिति प्रक्षेप कृत इति सुस्पष्ट पश्याम। अथान्येष वदतोऽस्मान् प्रति 'भवद्भिरेव सहरिरित्यस्योद्धाप कृतः' इति परे प्रत्ययतिष्ठेरन्। तै

अत्र विष्णोरग्रहणेऽपि कैवल्योपनिषदि श्रूयते—

इत्यनुपपत्त्यधिकरणश्रीकण्ठभाष्य, तत्रत्या

नारायणानुवाके विष्णोरन्यास्यविभूति (त्व) विवक्षायामपि तदनभिधानमुपासकत्वनिर्देशेनैव तल्लाभात्'

इति शिवाकमणिदीपिका च यथावदवगन्तव्ये। दीक्षिताद्यर्वाचीनैः कल्पितोऽयमाधाप इति स्पष्टम्। न चात्र भाष्ये 'विष्णोरग्रहणेऽपी'त्यपि श्रवणात् ग्रहणपक्षोऽप्यस्तीत्यभिप्रायो गम्यत इति शङ्क्यम्। अत्र अग्रहणेऽपि कैवल्योपनिषदि ग्रहणात् नारायणस्य परमेश्वरविभूतित्व सिद्ध्यतीति प्रतिपादनन अर्थविरोधार्थत्वात्। पक्षान्तरसमुच्चयार्थत्वाभावात्। व्याख्यानग्रन्थे स्पष्टमेतत्।

६० कथासरित्सागरविसंवादात् अवन्तिसुन्दरीकथा न प्रमाणमिति वदन्ति। स्वतन्त्रनानाग्रन्थसंवादात् तद्विषये इयमेव प्रमाणतया ग्राह्या। कविप्रतिभाधीनकल्पनाविशेषवन्तः कथासरित्सागरादयो

ग्रन्थाः। न हि अनर्घगाथवचादिवशेन रामायणकथा शोचनीया भवति। ग्रन्थपातादिदुस्थिताऽप्यवन्तिसुन्दरी प्रकृतविषये स्पष्टार्थैव।

६१. विशिष्टाद्वैतदूषणाभिनिवेशसंनिपातज्वराभिभूतबुद्धिः पुनर्जल्पति—

> किञ्च अशुद्धमुद्रितदाण्डिकृतावन्तिसुन्दरीग्रन्थानुसारेण बोधायन एव उपवर्ष इति कथञ्चिदवगतावपि भक्तिनऽ.प लशुन इत्याभाणकरीत्या न परेष्टसिद्धिः। यतस्तत्र दण्डिग्रन्थे बोधायनाभिमतस्यापवर्षस्य शिवकुमारसुब्रह्मण्यभक्त्वमवगतम्। पराभिमतश्च बोधायनः परमैकान्ती देवतान्तरस्मरणमात्रमप्यसहमानः

इत्यादि। 'काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः। क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा।' इत्युक्तरीत्या विद्यार्थं स स्कन्दमाराधयामास शीघ्रफलसिद्ध्यर्थम्। ब्रह्मविद्याधिगमानन्तरं स परमैकान्त्येव। परब्रह्मभूतविष्णुपरमैकान्त्यपि स्वपितृवदेव परमवैष्णवे स्कन्दे आचार्यप्रतिपत्तिं न विजहौ। न खल्वाचार्यभक्तिः पारमैकान्त्यविरुद्धा। प्रत्युत व्यतिरेके अनर्थकरी। विद्यार्थिजनसाधारणीः शङ्काः अथ प्रौढवादिजनोपक्षेप्यमहाप्रश्नवदाविष्करोति।

६२. मणिमेखलानाम्नि प्राचीने प्रौढे द्रविडभाषाकाव्यग्रन्थे 'वेदव्यासः कृतकोटिः जैमिनिरित्येते आचार्याः दश अष्टौ षट् च प्रमाणानि स्वस्वमतेन अवोचन्' इत्युक्तम्। अथ कृतकोटिः बोधायनापरनामा उपवर्ष इति दण्डिवाक्यं स्मरता निश्चिता धीर्न नोन्मिष्यात्। एवं चेत् अहो बत विशिष्टाद्वैतसिद्धान्तप्रवर्तकमूलपुरुषः प्राचीनो वस्तुसन् सिद्धो भवतीति समुत्थितासूयानलज्वालामालाप्रदीप्तसर्वाङ्गः अयमन्यः कृतकोटिरिति प्रदर्शने यतते। ननु वेदव्यासः सूत्रकारः। तथा जैमिनिरपि। अनयोर्मध्ये वृत्तिकारस्य कथं गणना भवेत्। न चायं

सूत्रकार वेदव्यासजैमिनिमतविरुद्धा प्रमाणसङ्ख्या भवेत् इति युक्तमाह। 'अत कृतकारैरिति वचनाचार्य बादरायणजैमिनिवदेव कस्यचित् सत्रयस्य कर्ता प्रमाणसङ्ख्याविषये तद्विरुद्धवादी भवितुमर्हतीति प्रतीयते' इति सिद्धा तमाचष्टे। प्रतीयत इत्याह। निश्चीयत इति तत्प्रकृत्यनुगुणं वक्तव्यम्। तत्तस्य हृदयमेव नूनं नानुमेन।

अत्र धीमद्भिरय प्रष्टव्य—सूत्रकारो वेदव्यासः कुत्र प्रमाणानि दशेत्याह? जैमिनिः कुत्र षडित्याह। आचार्यमतविरुद्धं कथं जैमिनि षडिति ब्रूयात्। अतोऽत्र कीर्तितौ व्यासजैमिनी अपि अन्यावेव यत्किञ्चिद्ग्रन्थकारौ, न प्रसिद्धमीमांसाकाण्डद्वयसूत्रकाराविति कुतो न भवतीति। न जानीमः तपस्वी किमुत्तरं प्रतिपद्येतेति। अत्रेदं तत्त्वम्। अनुपलब्ध्यन्तैः षड्भिः प्रमाणैः सह ऐतिह्यसम्भवचेष्टालिपीर्मेलयित्वा दश प्रमाणानीति मतं पौराणिकानामिति प्रसिद्धम्। 'अष्टादशपुराणानां कर्ता सत्यवतीसुत' इति भगवतो व्यासस्य सर्वपुराणकर्तृत्वप्रसिद्धेः प्रमाणविषयं तत्पौराणिकमतं व्यासप्रोक्तत्वेनैवाभिहितम्। चेष्टालिपी वर्जयित्वा अष्टौ प्रमाणानि पूर्वोत्तरमीमांसावृत्तिकारेण कृतकोटिना अभ्युपगतानीति तदनुसारेण अष्टानां कृतकोटिप्रोक्तत्वोक्तिः। शबरादिभिः षण्णामेव प्रतिपादनात् एतदुक्तमपि षट्त्वं सूत्रकारजैमिनिमतमिति कृत्वा तत्प्रोक्तत्वोक्तिः। कृतकोटिवृत्तेः विंशतिलक्षणात्मककृत्स्नमीमांसाव्याख्यानरूपत्वात् न तन्मतं जैमिनीयत्वेन वा बादरायणीयत्वेन वा वक्तुं शक्यम्। अतस्तस्य विशिष्य निर्देशः। शबरोक्तस्य षट्कस्य तु 'सूत्रेष्वेव हि तत्सर्वं यद्भाष्ये यच्च वार्तिके' इति न्यायेन जैमिनीयत्वेनैवाभिधानं सुशकमिति तथाऽभिधानम्। दश अष्ट षडिति क्रमेण सङ्ख्यानिर्देशे कर्तव्ये, तदनुरोधेन च आचार्यनिर्देशे क्रियमाणे सूत्रकारवृत्तिकारत्वकृतो विशेषो न कश्चिदुद्भवति निरापद भवेत् विना दोषान्वयप्रसङ्गात् मेयकल्पनीकृतशेषुपीकमेन अस्थानसद्भावमोदयमोद्धतत्तीक्ष्णलेख-

मीशब्रिण शाखिगम् । तदय मागमेवनापन्थाऽपि कृतकोटिनामकस्य मीमांसाग्रन्थकारस्य न चानस्य स्थितत्वे अबाधित प्रमाणमेवाति ।

६३ उक्तस्य द्राविडकाव्यग्रन्थस्य मुद्रणाय शोधने प्रवृत्तः प्रौढः पण्डित. कश्चित् उक्तप्रमाणमद्रुभ्य.पराणा पङ्क्तीना भावं जिज्ञासमानः तदवगमनक्षमान् अभिज्ञान् कांश्चिदुपेत्य पृष्ट्वा प्रश्नहृदय.भिज्ञान ग्रन्थ प्रमाणीकृत्य तैरुक्तान् अर्थान् टिप्पण्या प्रकाश्य ग्रन्थं मुद्रयामास । स्वभमनप्रचारसमयमनोच्छिणः विशिष्टाद्वैतिनः एव तस्य वाचन कृत्वा महदन्याय्यं चक्रुरिति सन्तापमेव भजते। नूनमय स्वप्नेषु विशिष्टाद्वैतिव्याघ्रान् उत्पत्य स्वोपरि पततः पश्यति ।

६४ स्वकायाया श्लोकवार्तिकव्याख्याया काशिकाया सुचरितमिश्रः शाबरभाष्ये वृत्तिकारमतनिरूपणप्रकरणे उपमानानन्तर अर्थापत्ति-निरूपणे हेतुमाह—"ततः पाराशर्यमतेनार्थापत्तिरुक्ता । तदुत्तरकालमेव तन्मतानुसारिणा कृतकोटिना उक्तत्वात्" इति । गद्यकारो दण्डी, द्राविडकाव्यकारः तद्भाषाकविः मीमांसाग्रन्थकार. सुचरितमिश्रः इत्येते सर्वे यथा विद्यु. तथा प्रसिद्धः कृतकोटिराचार्य इति निस्सन्दिग्ध-मवगच्छामः । अयं बोधायनापरनामा उपवर्ष इति दण्डिवाक्यादभिध्यायते । अत्र शाखा नाय मीमांसावृत्तिकार उपवर्ष. कृतकोटि. । अपि तु शाखा-न्तरग्रन्थकारोऽन्यः कश्चिदिति साधनाय प्रयस्यति ।

काशिकाकारः 'ननु वृत्तिकारमते' इत्युपक्रम्य प्रत्यक्षानन्तर शास्त्र-मेव निरूपणीयम् । कुतोऽनुमानेन तदन्यवबोधने' इत्याक्षिप्य "सत्यमे-वम् । अयं तु तन्त्रान्तरानुसारेण क्रम आश्रित" इत्यादिना न्यायवंशे पिकादिमतनिर्देशपूर्वक समाधानमाह । अत्र प्रथमनिर्दिष्टो वृत्तिकार उपवर्ष. 'अयं तु, तन्त्रान्तरे'ति निर्दिष्ट तन्त्रान्तर मीमांसातन्त्रादन्यदेव तन्त्रम् । ईदृशतन्त्रान्तरानुसारिक्रमनिरूपणप्रकरणे च पाराशर्यमता-नुसारी कृतकोटिरुक्तः । तदिमौ पाराशर्यकृतकोटी अमीमांसकौ यौ

सूत्रकार वेदव्यासजैमिनिमतविरुद्धा प्रमाणसङ्ख्या भवेत् इति युक्तिमाह । 'अत कृतकोटाविति यत्राचार्ये बादरायणजैमिनिवदेव कस्यचित् सत्र अस्य कर्ता प्रमाणसङ्ख्याविषये साङ्कद्धवादी भवितुमर्हतीति प्रतीयते' इति सिद्धान्तमाचष्टे । प्रतीयत इत्याह । निश्चीयत इति

तत्प्रकृत्यनुगुणं वक्तव्यम् । तत्तस्य हृदयमेव नूनं नानुमेनं ।

अत्र धीमद्भिरयं प्रष्टव्यः — सूत्रकारो वेदव्यासः कुत्र प्रमाणानि दशेत्याह ? जैमिनिः कुत्र षडित्याह । आचार्यमतविरुद्धं कथं जैमिनिः षडिति ब्रूयात् । अतोऽत्र कीर्तितौ व्यासजैमिनी अपि कल्पनावेन यत्किञ्चिद्ग्रन्थकारौ, न प्रसिद्धमीमांसाकाण्डद्वयसूत्रकर्ताराविति कुतो न भवतीति । न जानीमः तपस्वी किमुत्तरं प्रतिपद्येतेति । अत्रेदं तत्त्वम् । अनुपलब्ध्यन्तैः षड्भिः प्रमाणैः सह ऐतिह्यसम्भवचेष्टालिपीर्मेलयित्वा दश प्रमाणानीति मतं पौराणिकानामिति प्रसिद्धम् । 'अष्टादशपुराणानां कर्ता सत्यवतीसुतः' इति भगवतो व्यासस्य सर्वपुराणकर्तृत्वप्रसिद्धेः प्रमाणविषयं तत्पौराणिकमतं व्यासप्रोक्तत्वेनैवाश्रितम् । चेष्टालिपी वर्जयित्वा अष्टौ प्रमाणानि पूर्वोत्तरमीमांसावृत्तिकारेण कृतकोटिना अभ्युपगतानीति तदनुसारेण अष्टानां कृतकोटिप्रोक्तत्वोक्तिः । शबरादिभिः षण्णामेव प्रतिपादनात् एतदुक्तमपि षट्त्वं सूत्रकारजैमिनिमतमिति कृत्वा तत्प्रोक्तत्वोक्तिः । कृतकोटिवृत्तेः विंशतिलक्षणात्मककृत्स्नमीमांसाव्याख्यानरूपत्वात् न तन्मतं जैमिनीयत्वेन वा बादरायणीयत्वेन वा वक्तुं शक्यम् । अतस्तस्य विशिष्य निर्देशः । शबरोक्तस्य षट्कस्य तु 'सूत्रेष्वेव हि तत्सर्वं यद्भाष्ये यच्च वार्तिके' इति न्यायेन जैमिनीयत्वेनैवाभिधानं सुशकमिति तथाऽभिधानम् । दश अष्ट षडिति क्रमेण सङ्ख्यानिर्देशः कर्तव्ये, तदनुरोधेन च आचार्यनिर्देशे क्रियमाणे सूत्रकारवृत्तिकारयोः कृतो विशेषो न कस्यचिद् गणनापदं भवेत् विना दोषान्वेषणअक्षोन्मेषकलुषीकृतशेमुषीकेन अस्थानसङ्ग्रामोद्यमाद्भवतीत्युल्लेख-

न्नीशब्रिण शब्रिणम्। तदयं मणिमेखलाग्रन्थोऽपि कुतकोटिनामकस्य मीमांसाग्रन्थकारस्य प्राचीनस्य स्थितत्वे अन्यतमं प्रमाणमेवेति।

६३ उक्तस्य द्राविडकाव्यग्रन्थस्य मुद्रणाय शोधने प्रवृत्तः प्रौढः पण्डितः कश्चित् उक्तप्रमाणमञ्जूषापराणां पङ्क्तीनां भावं जिज्ञासमानः तदवगमसमान् अभिज्ञान् कांश्चिदुपेत्य पृष्ट्वा अपञ्चहृदयाभिधानं ग्रन्थं प्रमाणीकृत्य तैरुक्तान् अर्थान् टिप्पण्या प्रकाश्य ग्रन्थं मुद्रयामास। स्वमतप्रचारसमयसमीचिणः विशिष्टाद्वैतिनः एव तस्य बोधनं कृत्वा महदन्याय्यं चक्रुरिति सन्तापमेव भजते। नूनमयं स्वप्नेषु विशिष्टाद्वैतिव्याघ्रान् उत्पत्य स्वोपरि पततः पश्यति।

६४ स्वकायायां श्लोकवार्तिकव्याख्यायां काशिकायां सुचरितमिश्रः शाबरभाष्ये वृत्तिकारमतनिरूपणप्रकरणे उपमानानन्तरं अर्थापत्तिनिरूपणे हेतुमाह—"ततः पाराशर्यमतेनार्थापत्तिरुक्ता। तदुत्तरकालमेव तन्मतानुसारिणा कृतकोटिना उक्तत्वात्" इति। गद्यकारो दण्डी, द्राविडकाव्यकारः तद्भाषाकविः मीमांसाग्रन्थकारः सुचरितमिश्रः इत्येते सर्वे यथा विदुः तथा प्रसिद्धः कृतकोटिराचार्य इति निस्सन्दिग्धमवगच्छामः। अयं बोधायनापरनामा उपवर्ष इति दण्डिवाक्यान्निश्चीयते। अत्र शास्त्री नायं मीमांसावृत्तिकार उपवर्षः कृतकोटिः। अपि तु शास्त्रान्तरग्रन्थकारोऽन्यः कश्चिदिति साधनाय प्रयस्यति।

काशिकाकारः 'ननु वृत्तिकारमते' इत्युपक्रम्य प्रत्यक्षानन्तरं शास्त्रमेव निरूपणीयम्। कुतोऽनुमानेन तदूव्यवधीयते' इत्याक्षिप्य "सत्यमेवम्। अयं तु तन्त्रान्तरानुसारेण क्रम आश्रित" इत्यादिना न्यायवंशे पिकादिमतनिर्देशपूर्वकं समाधानमाह। अत्र प्रथमनिर्दिष्टो वृत्तिकार उपवर्षः 'अयं तु, तन्त्रान्तरे' ति निर्दिष्टं तन्त्रान्तरं मीमांसातन्त्रादन्यदेव तन्त्रम्। ईदृशतन्त्रान्तरानुसारिक्रमनिरूपणप्रकरणे च पाराशर्यमतानुसारी कृतकोटिरुक्तः। तदिमौ पाराशर्यकृतकोटी अमीमांसकौ यौ

कीचित्। एवं सति कृतकोटिरेव बाधायनः स एव चोपवर्ष इति कथं भवेत्, इति पृच्छति। अत्राप्यय भ्रान्त । यदुक्तं तन्त्रान्तरप्रकरणे पाराशर्यकृतकोटा निर्दिष्ट विति तन्नास्ति। 'तेनेहापि तावत् प्रत्यक्षा-नन्तरमनुमानमुक्तम् इत्यनेन तत्प्रकरणस्य समाप्तत्वात् । "तथा महा-विषयतया प्रकृतत्वेन पुरुषार्थोपयिकत्वेन च शास्त्रम्" इत्यत्र क्रमे तन्त्रा-न्तरानुसारस्याभावादनुक्तत्वाच्च। महाविषयतया प्रकृतत्वं हि 'चोदना लक्षणोऽर्थो धर्मः' इति सूत्रोक्तलक्षणघटकतया उपादेयतत्वमभिप्रेत्यो-च्यते। न्यायविस्तरे अनुमानानन्तरमेवोपमाननिरूपणात्तदनुसारिक्रम न सम्भवति च। शब्दानन्तर उपमाननिरूपणे त तन्त्रान्तरप्रसिद्धि पुनर्हेतुतयोक्ता—'तदनन्तरं च यत्क्वचन वाच्ये बहूना प्रसिद्धमित्यु-पमानमुक्तम्। न्यायविस्तरे हि प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमान मित्युक्तम्' इति। इति बहूना, न केवलमस्मदीयाना, अपि तु परेषाम-पीत्यर्थः। शब्दोपमानयो अत्र आदृतस्य क्रमस्य तन्त्रान्तरसिद्धत्वा-भावेऽपि स्वरूपतस्तावत् इमे द्वे अपि तत्र प्रसिद्धे एव। अर्थापत्तिस्तु स्वरूपतोऽपि तत्र न प्रसिद्धा। न हि चतुर्थ्याऽधिकप्रमाणवादिनः तन्त्रा-न्तरकाराः केचन सन्ति। अत स्वकीय एव तन्त्रे प्राचीनेषु ग्रन्थेषु प्रसि द्धत्यमाह—'ततः पाराशर्यमतेनार्थापत्तिरुक्ता' इति। पाराशर्येणातिरिक्त-प्रमाणतया अङ्गीकृता या अर्थापत्ति सा उपमानादनन्तर भाष्यकारेणो क्तेत्यर्थः। पाराशर्यो व्यास इति सर्वविदितम्। अर्थापत्ते पाराशर्य सम्मतत्वे उपमानानन्तर्ये च कि मानमित्यत्राह—'तदुत्तरकालमेव तन्मतानुसारिणा कृतकोटिनोक्तत्वात्', इति। उपमाननिरूपणानन्तरं 'अर्थापत्तिरपि प्रमाणमिति भगवान् पाराशर्यः' इत्येवमर्थक किञ्चिदुक्त्वा तन्निरूपणं कृतकोटिना कृतम्। अतः भाष्यकारेण वृत्तिकारमतानुसारि विवरणावसरे तथैव कृतमित्यर्थ। एवमभावोऽपि कृतकोटिनोक्तत्वा-देव भाष्यकारेणोक्त इति सुचरितमिश्रस्याभिप्राय। मणिमेखलोक्तिमनु-

स्य सम्भवैतिह्ये अपि कृतकोटिना पृथक्प्रमाणतया अङ्गीकृते इति, भाष्ये तयोरनुक्तेः शबरस्वामी नाङ्गीचकारेति च ज्ञायते। अत्र भाष्य-काराभिप्रायमाह वार्तिककारः—

इह भवति शतादौ सम्भवाद् या सहस्रा-
न्मतिरवियुतिभावात् साऽनुमानादभिन्ना।
भवति बहु न सत्यं निर्-मैतिह्ययुक्तं
भवति तु यदि सत्य नागमाद् भिद्यते तत्॥

इति। एवं प्रत्यक्षशब्दातिरिक्तप्रमाणानामिहाभिधानं तन्त्रान्तरानुसारेणेत्युक्त्वा तदनुसरणस्य प्रयोजनमाह—किं पुनरित्यादिना। अत्र तन्त्रान्तरेत्येतत् समानतन्त्रग्रन्थान्तरस्याप्युपलक्षणम्। उपपत्तेरुक्तत्वात्। अन्यथा ग्रन्थकारस्य शून्यहृदयत्वापत्तेः। तस्मात् मीमांसाग्रन्थकारः कश्चित् कृतकोटिनामाऽभवदित्यत्र काशिका प्रमाणं भवत्येव।

६५ प्रपञ्चहृदये मीमांसाशास्त्रस्य पूर्ववृत्तं सुस्पष्टमुच्यते।
तत्र विंशत्यध्यायनिबद्धस्य मीमांसाशास्त्रस्य कृतकोटिनामधेयं भाष्यं बोधायनेन कृतम्। तद् ग्रन्थबाहुल्यभयात् उपेक्ष्य किञ्चित् संक्षिप्त उपवर्षेण कृतम्।

इति कृत्स्नमीमांसाशास्त्रव्याख्यातृत्वं बोधायनस्य सन्देहगन्धलवलेशानास्पदसुविशदसुनिश्चितार्थैरक्षरैरावेद्यते। वृद्धा विदामासुरिति यत् श्रीदेशिकचरणैरुक्तं तदनेन सत्यापितं भवति। अत्राप्रामाण्यं वक्तुमुद्युक्तः पाठान्तरं शरणीकृत्य किञ्चिदाह। 'कृतकोटिना भाष्यं बोधायनेन कृतम्' इति पुस्तके अधस्तात् पाठान्तरं दृश्यते। उपरितनपाठे भाष्यस्य नाम कृतकोटीति। अन्यत्र कर्तुर्बोधायनस्य नाम। तथा च सन्देहापादकपाठभेददूषितं प्रपञ्चहृदयमिदमप्रमाणमित्याह। ननु कृतकोटिनामकत्वं कर्तुर्वा ग्रन्थस्य वेति कामं सन्देहोऽस्तु। मीमांसाशास्त्रस्य कृत्स्नस्य व्याख्याता बोधायन इत्यत्र तु न सन्देहगन्धः। कृतकोटिनाम-

धेयमित्यत्र लेखकप्रमादेन वा स्वनामेति कुर्नश्चिद्वाक्यस्थे शोधन कार्य मिति मत्वा वा 'मधय' इति त्रीण्यक्षराणि परित्यक्तानि। अत 'कृत कोटिना' इति पाठप्रवृत्ति । अथवा 'कृतकोटिना' इति स्थिते ग्रन्थनाम धेयमिति अतयता केनचित् 'मधेय' इत्यक्षरत्रय योजितमिति पाठान्तरा पलम्भः। इति पाठभेदोपलम्भोपपत्ति । तत्राचार्यतसुन्दर्यनुरोधेन कृतना-मत्व निश्चीयते। कृतनाम्नैव ग्रन्थानामपि व्यवहारस्य 'माघ पठामि, भारवि पठामि' इति बहुलमुपलम्भात प्रकृतेऽपि तथाव्यवहार आसी दिति युक्तमभ्युपगन्तुम्। कथमपि नाय पाठभेद प्रपञ्चहृदयस्याप्रामा ण्यापादक । अन्यमपि पाठभेदमवलम्ब्य किञ्चिदाह। प्रथम बोधायन तत उपवर्षश्च कृत्स्नमीमासाशास्त्रव्याख्याता। अनन्तर जैमिनीयपाड शलक्षणीमात्र देवस्वामी भवदासश्च व्याख्यातवन्तौ। तत पर द्वादश लक्षणीमात्रस्य शाबर भाष्यमिति एकस्मिन् पाठे उच्यते। पाठान्तर तु बोधायनानन्तरमेव शबरस्याभिधानम्। पूर्वस्मिन् पाठे कृतकोटिबोधा यनाद् भिन्न उपवर्षः। उत्तरस्मिन् न तथा प्रतीतिः। एव सदेहकारणा अननापि पाठभेदेन न प्रामाण्य प्रपञ्चहृदयस्येति। पूर्ववदेव इदमपि दूषणमन्यत्राशमिति न विस्तरेण वक्तव्यम्। कृत्स्नमीमासावृत्तिकारा बोधायन आसीदित्येतत् गोपुरमग्रामप्रदीपार्चिरिव प्रकाशते। स बोधायन कृतकोटिनामा भवतु वा मा वा। उपवर्ष एव भवतु वा मा वा। किमनेन अस्माकम्। ये तु भगवद्बोधायनकृतामिति भाषितवत भग वद्रामानुजस्य धूवता स्थापयितुमुत्सुक्षवे तेषा शिरसि गाढ प्रहार दत्वा सञ्चूर्णितहृदयतामापादयतीद प्रपञ्चहृदयम्।

'उपवर्षस्य बोधायन इति नाम्नि विप्रतिपत्तिरस्माकम्" इत्युच्यते। अर्थान्तसुन्दरी अत्र भावकोटिमवलम्बते। प्रपञ्चहृदये एकः पाठः प्रमादपक्षम्। कालविप्रकर्षात् मतिभेद दत्तस्त आसीत्। तेन एको ग्रन्थकारः स्वेनार्थितेव पक्षमाश्रयात। अपर स्वनाकर्णितमन्यम्।

ग्रन्थानुपलम्भेन निर्णयस्य कर्तुमशक्यत्वादत्रास्माभिरुदासीनैर्भाव्यम्।
उपवर्षबोधायनौ यदि मिथो भिन्नौ तर्हि उभाभ्यां कृते वृत्ती बभूवतुरिति,
यदि न भिन्नौ तर्हि एकैव वृत्तिरासीत्। सा एकैव उपवर्षवृत्तिरिति
कैश्चित् बोधायनवृत्तिरित्यन्यैश्च व्यवहृता बभूवेति तु निश्चप्रचमिदम्।
'न बोधायन आसीत्। नापि तत्कृता वृत्ति'रिति शास्त्रिणा यदभिमतं
तत् साधयितु सर्वशक्तोऽपि न शक्तः।

अत्यद्भुत लिखति शास्त्री—"पाठभेदबहुलाप्रामाण्यास्कन्दितप्रप-
ञ्चहृदयमात्रात निश्चेतु न शक्यम्। यतः 'कृतकोटिना भाष्य बोधायनेन
कृतम्' इति स्थाने 'कृतकोटिना भाष्य कृतम्' इति बोधायनपद विहाय
पाठः स्यादिति ऊहितु शक्यते।"

"'कृतकोटिना भाष्य' इति अधो मुद्रित पाठान्तरमेव तस्य ज्ञाप-
कम्। बोधायन इत्यपि पद यदि स्यात् 'कृतकोटिना बोधायनेन भाष्य'
इति किल पाठान्तर प्रदर्शनीयम्। न तु कृतकोटिना बोधायनेन इति
समानाधिकरणपदयोर्मध्ये भाष्यमिति निवेशः समञ्जसः।"

"तेन ज्ञायते 'कृतकोटिना भाष्यं कृतमित्येव पाठः। परैः रन्ध्रान्वे-
षिभिः बोधायनेनेति अस्थाने योजित पदमिति।"

"परेषु च केचित् बोधायनोपवर्षभेदकल्पकाः। अपरे ऐक्यकल्पकाः।
उभयेऽपि क्रमेण पूर्वनिर्दिष्ट उपरि अधश्च मुद्रित बोधायनोपवर्षभेदग-
मक तदगमक च पाठद्वय कल्पयामासुः।" इति

इद पठन्तः शास्त्रिणि पक्षपातिनाऽपि भक्ता अपि च भवन्तः प्रज्ञावन्तः
नूनमयमत्यन्तमस्वस्थबुद्धिः इति अनुपजातप्रत्यया भवितु न शक्नुयुः।

अधस्तने पाठे बोधायनेनेति पद किष्कासयति। "अस्माकं श्रुत-
ज्ञानाश्रुतकल्पनाधिकारः परिपूर्णः। अतो नास्मासु यथेच्छ यत्किमपि
कुर्वत्सु काचन वाच्यते"त्यभिमन्यत इव। श्रुतपदोद्वापो यदि कर्तव्यः
तर्हि 'कृतकोटिना' इत्येतदेव कुतो न परित्यज्यते। बोधायनेनेत्येतत्

परित्याज्यमिति कुत , इति अत्र धीम त पृच्छ्यु ? 'तथा सति मया क्रियमाणस्य परदूषणस्यावकाशो न स्यात्', इत्येव जडेन निर्लज्ज प्रतिवक्तव्यम् ।

अथ परपरित्यागस्य हेतु समानाधिकरणयो पदयोर्मध्ये भाष्यपद निवेशो न युज्यत इति । इदमयुक्तस्य कृतकोटिरित्यस्य परित्यागेऽपि परिहृत भवति । 'मीमासाशास्त्रस्य भाष्य बोधायनेन कृतम्' इति पाठ निष्पत्ते । अथवा न किञ्चित् परित्याज्यम् । पाठान्तरानुरोधात् अक्षरत्र योजनेन 'कृतकोटिनामधेय भाष्य बोधायनेन कृत मित्येव शोधनस्य युक्तत्वात् । समानाधिकरणपदमध्ये पदान्तरनिवेशनमसमञ्जसमिति च वाक्यशैलीविशेषसस्तवशून्यस्य वचनम् । वाक्यशोभा मन्वाना हि ग्रन्थकारा बुद्धिपूर्वमेव पदानि पदान्तरैर्व्यवदधति । यथा—

तस्माद् यथाऽनधीयानस्येष्टो निषादस्थपतेरधिकारो वचनात्

इति भामत्यां अपशूद्राधिकरणपूर्वपक्षान्ते । य पुनरन्ते परियाद स तेनावश्यकर्तव्य एव । अभिज्ञहृदयङ्गमाभिर्युक्तिभिरभिमतमर्थं साधयितु मत्तमस्य कोपेनैव पूरणस्य कर्तव्यत्वात् । पाठद्वयस्यापि कल्पितत्व वदति । अन्यतरपाठेनापि हीन कता प्रथम लिलेखेव । पाठद्वयकल्पनं च किं मातृकावस्थायामेव, उत मुद्रणावसरे । मुद्रणकारा के शोधन कारा क । ग्रन्थकार क । मातृका कुत्र स्थिता । कै रचिता । कुत्र लब्धा । किं तत्र विशिष्टाद्वैताभिनिविष्टा कश्चिदगच्छन् , इत्यादि पर्यो लोच्य हि कल्पनापत्त उत्प्रेक्षणीयः । लोकशास्त्रमर्यादयो अत्यन्ता नभिज्ञोऽय

वृश्चिकाना विष पुच्छे मक्षिकाणा शिरस्पदे ।
दुर्जनाना पुनर्लोके सर्वाङ्गीणमवस्थितम् ॥

इति वर्णितानां व्यक्तिविशेषाणामपेसरः दुर्भाषते ।

६६. अवन्तिसुन्दर्यां उपवर्षकृतकोटिबोधायनसञ्ज्ञावान् एक एवं आचार्य इत्युच्यमानं मुपपन्नमित्युपापीपदाम । मणिमेखलायामुक्तः कृतकोटिरपि स एवेत्यदीदृशाम । एव सुचरितमिश्रकीर्तितः कृतकोटिरपि स एवेति । प्रपञ्चहृदयेऽपि कृतकोटेरेव बोधायनत्वं, 'तस्योपवर्षादन्यत्वे पृथग् वृत्त्यन्तरकर्तृत्व च स्फुट प्रतीयत इति न्यरूरुपाम । अतः उपवर्षा दन्यो वा अनन्यो वा कृत्स्नमीमांसाशास्त्रवृत्तिकारः बोधायनो नाम महात्मा आसीदित्यप्रकम्प्यमेतत् । "नास्तीत्येवास्माक निश्चय इति सिद्धम्" इति यदुपसंह्रियते तत् काम युक्तम् । शास्त्रिण एवं निश्चय इति हि सिद्धमेव । द्वेषपारवश्यकृतेन आन्ध्येन सतोऽपि वस्तुनः वीक्षणाक्षमत्वात् । अनेनानुसृतया नीत्या भेदश्रुतयः घटकश्रुतयश्च रन्ध्रान्वेषिभिः विशिष्टाद्वैतिभिः कल्पयित्वा उपनिषत्सु प्रक्षिप्ताः, न वस्तुत श्रुतय इत्युक्त्वा सुखमद्वैतं प्रतिष्ठापयितु शक्यते । प्राञ्चोऽद्वैतिनः किल न तथा बुद्धिमन्तः यथाऽय शास्त्री । अय नूनमचिरात् तथापि वक्ष्यति ।

६७. परेषामयोग्यत्वनिरूपणसंरम्भात् पुनरपि 'हिरण्मयः पुरुषो दृश्यत इति प्राज्ञः सर्वान्तरः स्यात्' इत्यादिवाक्यतद्भाष्यग्रन्थविषय वेदान्तसारादिक प्रति किञ्चिदाह । अयं वेदान्तसारग्रन्थः—

> तदेतद्वाक्यकारश्चाह—'हिरण्मय' पुरुषो दृश्यत इति प्राज्ञः सर्वेश्वरः स्यात् लोककामेशोपदेशात्, तथोदयात्पाप्मनाम्' इत्युक्त्वा, तद्रूपस्य कार्यत्वं मायामयत्व वेति विचार्य 'स्याद्रूप कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्' इति निरसनीयं मतमुपन्यस्य 'रूप वाऽतीन्द्रियमन्त करणप्रत्यक्षनिर्देशात्' इति ।
>
> व्याख्यात च द्रमिडाचार्यैः —'न वा मायामात्रम् । अञ्जसैव विश्वसृजो रूपम् । तत्तु न चक्षुषा ग्राह्यम् । मनसा त्वकलुषेण साधनान्तरवता गृह्यते

इति। अत्र 'न वा मायामात्रम्' इति द्रमिडभाष्यस्थतया पठ्यमान मसद्वम ना बहु लिखति। अत्र भगवतोऽप्राकृतनित्यरूपवत्त्वसाधकतया वाक्यभाष्य अद्वैतप्रतिकूले पर्वणि सम्यङ्निरूपितम्। अथापि स अप्रतिकूले इति कुर्वन् 'न वा मायामय' इत्येतत् प्रतिपक्षभिमत प्रतजानाते। सगुणब्रह्मविषय रूपवचनमित्यतत् पर्यायेन मिथ्यात्वप्रतिपादनमेवेति पूर्वमेवोक्तम्। शालाया वस्तुसत्व इतिवत् शब्दभेदमात्रमिति तत्र भयान् यातिरस्कार। न वा मायामयमित्यसद्भिनाऽपि मायामात्रत्वनिरासपरं भाष्यमिति दर्शितमेव श्रीसुदर्शनसूरिभिः।

एन्द्रजालिकवस्तुवत् मायाकृतमिति शङ्काव्युदासार्थमाह—
तत्तु इति। मिथ्याभूतं दुष्टेन्द्रियग्राह्यम्। अदुष्टकरणग्राह्यस्य श्रवणात् परमार्थभूतमिस्य भगाय।

इति हि तेषा विवरणम्। पञ्चत्रिंश पर्वणि इदं विवरणमुदाहृत्य शास्त्री अलिखत्— 'अत्र द्रमिडभाष्यकारवाक्यतात्पर्यापरिज्ञाननिबन्धनम्' इत्यादि। अत्र धीमान्द्रष्टव्य विवचनीयम्। भाष्य अतीन्द्रियमिति बाह्येन्द्रियाग्राह्यत्वमुक्त्वा अकलुषेण मनसा साधनान्तरवता गृह्यते' इत्युच्यते। अत्रत्येन विशेषणद्वयेन केवलेन मनसा ग्राह्यत्व व्यवच्छिद्यते। तत्र अकलुषेणेत्यनेन क्षयदोषहानिरुक्ता। 'साधनान्तरवता' इत्यनेन भक्तिकृतयोग्यताविशेषविशिष्टत्वमुक्तम्। एव सर्वदोषविनिर्मुक्त समग्रयोग्यतासम्पन्नान्तःकरणजनितप्रत्ययविषये अपारमार्थिकत्वस्य सर्वथाऽसम्भवात् पारमार्थिकत्व साधु प्रतिपादितं भवति। अयमाह—

भाष्यवाक्य तु "भगवद्रूपं चक्षुषा न गृह्यते। किंतु विशुद्धमनसा गृह्यते" इति वस्तुतस्त्व बोधयति। न तु चक्षुरग्राह्यत्वेन विशुद्धमनोग्राह्यत्वेन च पारमार्थ्यं साधयति।

इति। इदमयुक्तम्। चक्षुरग्राह्यत्वेन पारमार्थ्यसिद्धिर्न कस्यचिदभिमता। विशुद्धमनोग्राह्यत्वेन तत्सिद्धिरित्येतत्तु दुरपलपम्। अदुष्टकरणजन्य

प्रत्यययाथार्थ्याय तद्विषयतथात्वाय च अपेक्षणीयान्तराभावात्। अद्वैतं त्वस्त सर्वोदति भवता भीतिरप्रीतिराक्रोशो वा प्रमाणस्वभावं प्रमेयस्वभावं वा विपर्येसितु नालम्। यदुच्यते

> अङ्गसेति पदेनोक्त यथाभूतत्व न हीति वाक्येन शास्त्रस्य यथाभूतवादित्वेनोपपाद्यते

इति, तत् तथा। यथाभूतत्व च पारमार्थिकत्वमेव। न मायामात्ररूपत्वम्। मायया प्रदर्शितस्य अयथाभूतत्वात्। यथाप्रतीति सत्त्व हि यथाभूतत्वम्। यत्तु 'यथाभूतत्वमसत्त्वाभावमात्र, न पारमार्थिकत्वम्' इति, तत् घटत्व घटभिन्नभेदमात्र, न तु जातिविशेष इतिवदुपहास्यम्। असत्त्वाभावस्य सत्त्वरूपत्वात्। सत्त्वस्यैव पारमार्थिकत्वशब्देनोक्तेः। नन्वद्वैतिनामस्माकं नैवमिति चेत् काम तथा। पारिभाषिकसत्त्वासत्त्वादिकल्पनात्। द्रमिडभाष्यवाक्याना तु लोकप्रसिद्धार्थस्यैव वक्तव्यत्व त्। यदपि

> पारमार्थिकत्वार्थत्वाभिप्रायेण च परकीयमद्वैतवाददूषण, "परमेश्वरस्यापि सर्वशक्तत्वात् उपासकानुग्रहाय रूपोपादानसम्भवत्। किं मायामयं रूपम्। नेति ब्रूमः। पारमार्थिकमेवैतत्। यथाभूतार्थज्ञापकं हि शास्त्रम्।" इति भास्करग्रन्थार्थचौर्यरूपम्।"

इति चौर्यव्यपदेशेन निन्दन, तेन दूषणस्य कः परिहारः। द्रमिडभाष्यग्रन्थ मनसि निधायैव हि एवं भास्करो भाषते। अनेन 'स्याद्रूपं कृतक' मिति पूर्वपक्षवाक्य सिद्धान्ततया स्वीकृत्य तत्र कृतकमित्यस्य मायामयमिति शाङ्करं यद् विवरण तद् द्रमिडभाष्यविरुद्धं, अत एवोपेक्ष्यमिति हि भास्कराभिप्रायः स्फुटीभवति। यो हि कामलोपहतः कश्चित् शङ्खपीतिमवादी तं प्रथमं 'तात, शङ्खो न पीत, अपि तु पाण्डर एव' इति प्रतिबोध्यापक्रान्ते देवदत्ते, यदि यज्ञदत्तोऽपि तथा प्रतिबोधयेत् तत्र यज्ञदत्तो देवदत्तोक्तार्थचोरत्वाभिधानमात्रेण शङ्खपीतिमा न जातु

सेत्स्यति । नापि यज्ञदत्तवाक्यस्याप्रामाण्यम् ।

एव 'न वा मायामात्र' इत्यस्य द्रमिडभाष्ये असत्त्वऽपि तस्य माया मयत्वनिरासपरत्व हि मतमेवेति मत्यपादि । तेन वृथैव शास्त्री तत्र तद् सत्त्वानकरणैवमथमवलम्ब्य मलिनमात्मान मलिनतर करोति । श्री वेदा तसारे

'कार्यत्व मायामयत्व वात स्याद्रूप कृत कमनुमहाथ तयेनसा मैरयथात् इति निरसनीयमतमुपन्यस्य'

इति शुद्ध समीचीन पाठः । कार्यत्व मायामयत्व वेति यत् निरसनीय मत तत् 'स्याद्रूप' इत्यनन वाक्यनापन्यस्येति याजना अर्थश्च । कृतक क्रियया निष्पादितम् । तत्त्व च घटादे कार्यत्व पर्यवसितम् । ऐन्द्रजा लिकस्तुनः मायामयत्व पर्यवसितम् । द्विविधमपीद कृतकत्व निरसना यम् । रूप वा' इति सिद्धान्तवाक्यस्य साक्षाद्विवरणपर भाष्य 'अज्ञ सैव विश्वसृजा रूपम्' इति । ततः पूर्व मर्थसिद्ध पूर्वपक्षनिराकरण 'न वा मायामात्र' इत्यत्र क्रियते । इत प्राक् 'न कार्य' इत्यपि पठितं स्यादिति भाति । कार्यत्व मायामयत्वं वेति कोटिद्वय हि निरसनीयस्य मतस्य प्रारुक्तम् तत् द्रमिडभाष्य ' न कार्यं न वा मायामात्रं, अज्ञसैव विश्व सृजा रूपम्' इति स्थित बुद्धौ कृतैवात्तमिति हि दृश्यते । 'न कार्यं' इत्येतदत्र कथञ्चित् 'विचार्य' इति विकृत सत् पाठक्रमभेदेन 'मायामयत्व वेति' इत्यस्यानन्तर पठितमासीदित्यपि भाति ।

मायामयत्व पूर्वपक्षतयैवोक्त द्रमिडभाष्य इति भास्करभाष्यवेदार्थ संग्रहाभ्या स्पष्टम् । तत् श्रीशङ्कराः सिद्धान्ततयैव परिजगृहुः । द्रमिड-भाष्यावरोध जानन्नपि अगत्या तत्र वाक्ये च उपेक्षणीय मेन । अत्र शास्त्रिण विपरीतसाधनप्रयासो वृथा ।

६८ यथा द्रव्यभूम्ना तथा रागभूम्नाऽपि मिथ्यात्वप्रयासु प्रसितः शास्त्री । सूत्रभाष्यसमन्वयाधिकरणान्ते गौणमिथ्यात्मनाऽसत्त्वे'

इत्यादि श्लोकत्रयमुदाहृतं सुन्दरपाण्ड्यवार्तिकस्थमिति चिरात्पूर्वं अस्मद्द्वितीयमीमांसागुरवः म० म० श्री कुप्पुस्वामिशास्त्रिवर्या निरूपितवन्तः। इदं श्लोकत्रय द्रविडाचार्यकृतमिति श्रीबालकृष्णानन्दसरस्वतीनामा अत्यन्तमर्वाचीनः कश्चित् स्वकीये ग्रन्थे वदति। अतो द्रविडाचार्यः अद्वैतीति ज्ञायत इत्याह। इदं श्लोकत्रय सुन्दरपाण्ड्यकृतमित्याप्ततरेण माधवाचार्येण विशिष्योक्तत्वात् स द्रविडाचार्यः सुन्दरपाण्ड्य एव, न वाक्यभाष्यकारो द्रमिडाचार्य इति सुस्पष्टमेतत्। तदपेक्षयैव अय अभिनवद्रविडाचार्यः। यदि त्वय बालकृष्णानन्दसरस्वती द्रमिडभाष्यकारमेव अभिप्रैतीति गमकं किञ्चित् स्यात् तर्हि स भ्रान्त इति सर्वोऽववारणीयम्। 'तथा सुन्दरपाण्ड्यवार्तिकमपि देहात्मप्रत्यय इति' इति विशिष्य सुस्पष्टं माधवाचार्येणोक्तत्वात्। सुन्दरपाण्ड्य इत्यभिधा अस्य द्रविडदेशीयत्वमवगमयति। अतोऽयमेव द्राविडार्यत्वेन अभिनवद्राविडार्यस्याभिमत इति ग्रहणे माधवाचार्योक्तिविरोधोऽपि परिहृतो भवति। सुन्दरपाण्ड्यग्रन्थस्य वार्तिकमिति नाम। बालकृष्णानन्दसरस्वत्यपि स्वग्रन्थं वार्तिकमित्येवाचष्टे। अतोऽयमभिनवसुन्दरपाण्ड्यः सन् अभिनवद्राविडाचार्यो भवतीति सुसङ्गतमेतत्।

सुन्दरपाण्ड्या इति प्रसिद्धाः प्राचीनाचार्याः उभयमीमांसाचार्या अद्वैतसम्प्रदायस्य प्रवर्तका इति स्फुटमवगम्यते

इत्याह स्वयमेव शास्त्री। उभयमीमांसाचार्यत्व न प्रवचनेन। अपि तु ग्रन्थकरणेन। कुमारिलेन शङ्करेण च तद्ग्रन्थोदाहरणादेव तत्सत्ताया अवगम्यमानत्वात्। द्रमिडभाष्यकारस्य तदितरग्रन्थकर्तृत्वं न केनापि प्रमाणेनावगम्यते। इद शतकृत्व आम्रेडयामास शास्त्री। एवमपि "द्रविडाचार्याणामेव सुन्दरपाण्ड्या इत्यपि नाम स्यादिति कल्पने माधवाचार्यवचन च अविरुद्ध भवेत्' इति स्वमतानुरागातिशयेन

कल्पनप्रमोदानुभवे प्रवर्तते। 'सदृश चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि'। किं पुनरितरः। एवं कल्पनमुपोद्बल्य अनुपद

'सर्वथा द्राविडाचार्या अद्वैतसम्प्रदायप्रवर्तका इत्यत्र नाक्षेपलेशस्याप्यवकाश इति सुधीरमुद्घोषयाम। इत्यलम्।'

इत्युपसंहरति। यावत् कण्ठनिरोधं यावद् वाग्बन्धं घोषणं सुकरम्। प्राज्ञास्तु प्रमाणमपेक्षेरन्। न खलु परगर्हामात्रेण कश्चिदर्थसिद्धिर्भवेत्। किं तावद् द्रमिडाचार्यस्य तद्वाक्यं यत् तस्याद्वैतित्वं बोधयति?

१ व्याधसंवर्धितराजकुमारविषयं

२ मधुविद्याफलभागकालविषयं

३ शूद्रशब्दव्युत्पादनविषयं

४ प्रश्नोपनिषद्पदविवरणपरं

५ सर्वगंधपदव्युत्पत्तिप्रदर्शनपरं वा

द्रमिडभाष्यवाक्यं छान्दोग्यभाष्यसूत्रभाष्यभामतीषु उदाहृतं न द्रमिडाचार्यस्य अद्वैतसिद्धान्तावलम्बित्वबोधनक्षमम्। तत्त्वबोधनपरत्वाभावात्।

६ अन्तर्गुणमेव देवता भजते।

इत्येतत् अन्तर्गुणमित्यस्य अपार्थकरणेन अद्वैतानुगुणतया हठात् योजितमिति, तत्र शास्त्रिणा क्रियमाणः प्रत्यग्गुणामित्यधिकपदप्रक्षेपोऽप्रामाणिक इति चोक्तम्। अतो यथास्थितं तत् नाद्वैतपरमिति स्पष्टम्। वाक्यान्तराणि चास्मदुपोदाहृतानि सगुणविषयतया योज्यन्ते। पाठशोधनं च तत्र क्रियते। एवं सङ्कोचान्यथाकरणाद्यनुकूलं किमपि वाक्यं नास्ति। तस्मात् यथास्थितं अद्वैतपरं एकमपि वाक्यं द्रमिडभाष्यस्थं स्वग्रन्थेषु परग्रन्थेषु वा उदाहृतं दर्शयितुं न शक्यते। एवं च तस्य अद्वैतित्वघोषणं ऊर्मिमाल्यूर्मिमालाघोषनिर्विशेषम्।

६६ एवं अद्वैतपरं एकमपि ब्रह्मनन्दिवाक्यं वा द्रमिडभाष्यवाक्यं वा नास्तीति सुविशदं निरूपितम्। निर्विशेषं ब्रह्म नास्ति, जगतो

मिथ्यात्व नास्ति. इति परमतस्य कण्ठोक्त्या निरसनविरहेऽपि ब्रह्मणो रूपगुणमहिमादिप्रतिपादनात् अद्वैतनिरसनमर्थसिद्धम् । निर्गुणवाक्यसत्त्वे हि वाक्यान्तराणां सगुणपरत्वेन सङ्कोचः सिद्ध्येत् । तदभावात् सगुणमेव तेषां मते सोपानपद परम तत्त्वमिति निश्चीयते । अद्वैतस्य ततोऽर्वाचीनतया तयोः काले असत्त्वादेव ताभ्यामनिराकरणम् ।

'आत्मेत्येव तु गृह्णीयात सर्वस्य तन्निष्पत्तेः' इत्येतत् ब्रह्मनन्दिवाक्यं तदैक्षत बहु स्यां प्रजायेयेति छान्दोग्योपदिष्टसर्वस्रष्टपरामर्शि । तत्र बहु स्यां प्रजायेयेति उपादानत्वस्य तदैक्षतेति निमित्तत्वस्य चोपदेशात् पुन 'तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजते ति निमित्तत्वोपादानत्वोपदेशानुवर्तनात् तन्निष्पत्तेरिति वाक्ये तस्मादुपादानभूतान्निमित्तभूताच्च उत्पत्तेरित्यर्थो विवक्षित इति स्पष्टम् । तत्र निमित्तत्वेन भेदस्य उपादानत्वेन अभेदस्य च प्रतीतेः शरीरशरीरिभावोऽर्थात् सिद्ध्यति । स उपरिष्टात् सन्मूलाः सोम्येत्यादिना स्पष्टीक्रियत इति च वाक्यार्थाभिप्रायः । अतः शरीरात्मभाव एव जगद्ब्रह्मणोर्वाक्यकारविवक्षितः । न त्वधिष्ठानविवर्तभावः । अस्य वाक्यस्य तदर्थत्वाभावात् । वाक्यान्तरस्य भवदीयैरप्यप्रदर्शनात् । प्रत्युत शरीरशरीरिभावप्रत्यायनेन तस्यार्थतः प्रतिक्षिप्तत्वात् । सर्वस्य तन्निष्पत्तेरिति परैः कल्पितमिति, अन्यथात्वेऽपि विवर्तपरतया नेयमिति भवदुक्ते प्रलापमात्रत्वात् । तस्मात् वाक्यभाष्यग्रन्थौ अद्वैतप्रतिक्षेपकौ विशिष्टाद्वैततत्परावित्येतत् सुप्रतिष्ठितम् ।

७०–७१ श्रीमद्भाष्ये ब्रह्मसूत्रवृत्तिकारो भगवान् बोधायनो नाम्ना-कीर्तितः । तदीयानि वाक्यानि चोदाहृतानि । समस्तेष्व स्थलेषु तद्वाक्योदाहरणमिति गणयित्वा कुतोऽधिकानि वाक्यानि नोदाहृतानीति जडप्रश्न करोति पामरः । वाक्यद्रमिडभाष्याभ्या त्रिचतुराण्येव वाक्यानि बुद्धौ कृत्वा श्रीशङ्करः तत्र तत्र किञ्चिदुक्तवान् । तत् कुत इति त पृष्ट्वा तस्मात् यदुत्तर लभ्यते तदेव प्रकृतेऽपीति प्रतिबोधनादधिकं

किमपि वक्तु नेच्छाम । अथवाऽस्य तं प्रतिकूलत्वात् यान्यद्रमिडभाष्य योरनुदाहरण शाङ्करग्रन्थेषु । बाधायनवृत्तिस्तु विशिष्टाद्वैतैकपरा । तस्याः प्रतिपदमुदाहरणे श्रीभाष्ये ग्रन्थविस्तरो भूयान् भवेदिति तद्वर्जनम् ।

७२ 'सुमनसो भौमा पिबन्त्वमृतम्' इति श्रीभाष्यश्लोकव्याख्या नावसरे भौमपदकृत्य निष्कृष्यन्तो व्याख्याता 'देवादीना वृत्तिग्रन्थादिभि' सुगमत्वाद् भौमा इत्युक्तम्' इत्याद्याहुः । एव श्रीदेशिका अपि "स्वता विदुषा स्वर्गादिभुवा प्रायो न सूत्रव्याख्यानापेक्षा । सत्यामपि तस्या विशालधीयाम्यै' ग्रन्थ्यादिभिस्ते चरितार्था । अतो न वृथाऽत्र भौमत्वाप्तिः ।' इति । अत्र अनभिज्ञो बहु जल्पति । एवं वदद्भि' वृत्ति ग्रन्थ स्वर्गादिलोक एव वर्तते, न भूलोक इति स्पष्टमुक्त भवतीत्याह । अतिविस्तृतत्वात् अतिसङ्क्षिप्तत्वाच्च वृत्तिवाक्यादयो ग्रन्था विशिष्ट बुद्धिशक्तिमता देवादीनामुपयोगार्हा भवन्ति । अतो न तेषा अभिनव भाष्यापेक्षा । अतादृशाना मनुष्याणा तु एतदपेक्षा विद्यत इति भौमपदा भिप्राय व्याख्याता वदन्ति । अत्र वृत्तिग्रन्थस्य मूलोत्सन्नत्व कथमुक्त भवति । यद्युक्त भवति तर्हि वाक्यद्रमिडभाष्यग्रन्थयोरपि तदुक्त भवति । अतिविस्तृतस्येव अतिसङ्क्षिप्तस्याप्यत्र व्यावर्तितत्वात् । तत्र वृत्तिमा त्रस्य मूलोत्सन्नत्व स्वयमेव एवं स्पष्टीकृतमित्युक्ति अज्ञत्वदौरात्म्य प्रकाशनमात्रफला ।

यच्च स्वय प्रतिभातमेदत्तदर्था देवा इति तत्र वक्तव्य, कथं देवेन्द्र शरीरातिरिक्तात्मविज्ञानाय एकशत वर्षाणि प्रजापतौ ब्रह्मचर्यमुवासेति । मनुष्यापेक्षया पटुतरकरणा अपि आत्मज्ञाने आचार्यशास्त्रसापेक्षा एव देव । 'सर्वेऽस्मै देवा बलिमावहन्ती'ति श्रुतिव्यक्षितया रीत्या ब्रह्म विन्मनुष्योऽपि देवाना पूज्यो भवति ।

'बोधायनवृत्तिः शशशृङ्गायमाणा कुत्रापि नास्ति ।" सत्यं नास्ति ।

किमपि वक्तुं नेच्छाम । अथवाऽत्यन्त प्रतिकूलत्वात् वाक्यद्रमिडभाष्य योरुदाहरणं शाङ्करग्रन्थेषु । बोधायनवृत्तेस्तु विशिष्टाद्वैतैकपरत्वात्तस्या प्रतिपदमुदाहरणे श्रीभाष्ये ग्रन्थविस्तरो भूयान् भवेदिति तदूवर्जनम् ।

७२ 'सुमनसो भौमा पिबन्त्व मधु' इति श्रीभाष्यश्लोकव्याख्यानावसरे भौमपदस्य विभुएवन्तो व्याख्याताः 'देवादीनां वृत्तिग्रन्थादिभिः सुगमत्वाद् भौमा इत्युक्तम्' इत्याहुः । एवं श्रीदेशिका अपि "स्वतो विदुषा स्वर्गादिभुवां प्राप्तो न सूत्रव्याख्यानापेक्षा । सत्यामपि तस्या विशालधीभार्ग्यैः वृत्त्यादिभिस्ते चरितार्थाः । अतो न वृथाऽत्र भौमत्वोक्तिः ।' इति । अत्र अनभिज्ञो बहु जल्पति । एवं वदद्भि वृत्तिग्रन्थ स्वर्गादिलोक एव वर्तते, न भूलोक इति स्पष्टमुक्तं भवतीत्याह । अतिविस्तृतत्वात् अतिसङ्क्षिप्तत्वाच्च वृत्तिवाक्यादयो ग्रन्था विशिष्टबुद्धिशक्तिमतां देवादीनामुपयोगार्हा भवन्ति । अतो न तेषां अभिनव भाष्यापेक्षा । अतादृशानां मनुष्याणां तु एतदपेक्षा विद्यत इति भौमपदाभिप्रायं आचार्या वदन्ति । अत्र वृत्तिग्रन्थस्य भूलोकावृत्तित्वं कथमुक्तं भवति । यद्युक्तं भवति तर्हि वाक्यद्रमिडभाष्यग्रन्थयोरपि तदुक्तं भवति । अतिविस्तृतस्यैव अतिसङ्क्षिप्तस्याप्यत्र व्यावर्तितत्वात् । तत्र वृत्तिमात्रस्य भूलोकावृत्तित्वं स्वयमेव एतैः स्पष्टीकृतमित्युक्तिः आशयदौरात्म्यप्रकाशनमात्रफला ।

यत्र स्वयं प्रतिभातयेद्तदर्थो देवा इति तत्र वक्तव्यं, कथं देवेन्द्र शरीरातिरिक्तात्मविज्ञानाय एकशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमुषासेति । मनुष्यापेक्षया पटुतरकरणा अपि आत्मज्ञाने आचार्यशास्त्रसापेक्षा एव देवाः । 'सर्वेऽस्मै देवा बलिमावहन्ती'ति श्रुतिव्यञ्जितया रीत्या ब्रह्मविन्मनुष्योऽपि देवानां पूज्यो भवति ।

' बोधायनवृत्तिः शशशृङ्गायमाणा कुत्रापि नास्ति ।" सत्यं नास्ति ।

वाक्यद्रविडभाष्ये अपि न स्तः । ननु ते आस्ताम् । ननु साऽप्यासीत् । कुत इदं ज्ञायते । तत् कुतः । आचार्याभिदिष्टत्वात् इति चेत् तुल्यम् । अस्मदाचार्यनिर्दिष्ट उदाहृतं च तत् । कृतिस्तु न तथा । अतो न सा आसीदिति चेत् । किं ब्रह्मदत्तस्य पितृत्वेन निर्दिष्टत्वात् देवदत्तस्य पिता-महो नासीदिति निश्चयो भवितुमर्हति । ननु आचार्यान्तरेः स्थितत्वे किं प्रमाणम् । ननु "भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं" इति भगवद्रामानुजोक्तिरेव प्रमाणम् । न सा प्रमाणम् । स्वमतस्यार्षत्व-प्रकटनाय कल्पनया तेन तथोक्तमिति चेत् सा कल्पनेत्यत्र किं प्रमाणम् ? कल्पनात्वनिश्चयो हि प्रमाणसापेक्षः । विशिष्टाद्वैतनैष्ठुरःस्थापित दूषणी-यमित्यभिनिवेशं विना न खलु किमपि तत्र प्रामाणिकं वक्तुं शक्यते ।

यथेदं भवद्भिरवगन्तं भवतु तथा किञ्चिद् ब्रूमः, श्रूयताम् । सूत्रभाष्ये समन्वयाधिकरणान्ते अपि चाहुरित्युक्त्वा पठितं श्लोकत्रयं शङ्कराचार्येण स्वयं कल्पितम् । स्वकीयमद्वैतं पूर्वमप्यासीदिति प्रकटनार्थम् । तत्रान्यस्य कर्तुः शशशृङ्गायमाणत्वात् 'अत्रैव ब्रह्मविदो गाथामुदाहरन्ति' इति सामान्येनाह वाचस्पतिः । शङ्करकृतां वञ्चनां छादयितुकामः माधवा-चार्यः 'तथा सुन्दरपाण्ड्यवार्तिकमपि' इत्युपक्षेपपूर्वकं तत् श्लोकत्रयं पपाठ स्वकृतायां सूतसंहितान्यव्याख्यायाम् । कुमारिलवार्तिके निःश्रेण्या-रोहणप्राप्यमित्यादिश्लोकोदाहरणात् तत्कर्ता सुन्दरपाण्ड्यः पूर्व-मीमांसाग्रन्थकार इत्येतद्युक्तम् । अद्वैतपरं उत्तरमीमांसाग्रन्थमपि स चकारेति तु केवला कल्पनाऽद्वैतस्य प्राचीनत्वस्थापनाय कृता । अत एव कल्पतरुकारेण वेदान्ताधिकरणे सुन्दरपाण्ड्यनामनिर्देशपुरस्सरं एत-दीयान् श्रुतिलिङ्गाधिकरणश्लोकान् पठताऽपि समन्वयाधिकरणे गौण-मिथ्यात्मन इत्यादिश्लोकाः सुन्दरपाण्ड्यवार्तिकस्था इति नोक्तम् । अवश्यवक्तव्यं ह्येतत् । यस्मान्नोक्तं तस्मात्तिरश्चीयते "नैते श्लोकाः सुन्द-रपाण्ड्यस्ये"ति स मेने, इति । यदि श्रीरामानुजसुदर्शनसूरिप्रभृतयः

अनृजवः अयोग्या, वञ्चनपराः, शङ्करमाधवप्रभृतयो नेति क प्रत्ययः।

वस्तुतस्तु बोधायनवृत्तिं निर्दिशत्येव शङ्कराचार्यः। 'नं वह कर्मावबोधानन्तर्यं विशेष' इत्यनेन निरसनायोपात्तं हि मतं 'वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा' इति वदतो बोधायनस्यैव। 'अपरे तु वादिनः पारमार्थिकमेव जैवं रूपमिति मन्यन्ते, अस्मदीयाश्च केचित्' इति दहराधिकरणे केचिदित्युक्तो बोधायन एव। तस्य पारमार्थिकजीवस्वरूपस्येष्टत्वात्। वेदान्तित्वेन च 'अस्मदीया' इति विशिनष्टि। श्रीभाष्ये यत्र यत्र वृत्तिकार उदाहृतः तत्र तत्र बोधायनमतानुसारित्वं तन्निराकरणपरत्वं च शङ्करस्य ज्ञापितम्। अतो बोधायनस्य स्वकीयग्रन्थेष्वनिर्दिष्टत्वात् तद्वृत्तेः कल्पितत्वं सुवचमिति वृथा मनोरथं कुर्वन् शास्त्री खलजनचण्णे पथि सुदूरं गत इति शोचनीयमेतत्।

७१ ब्रह्मसूत्रवृत्तिकारस्य बोधायनस्य शाङ्कराद्वैतमाख्यातामुपपादयितुकामः प्रथमं तस्य श्रौतगृह्यधर्मसूत्रकारबोधायनमहर्षेर्व्यतिरिक्ततां साधयितुं प्रवृत्तः अयं महर्षिः परमाद्वैती शिवभक्तश्चेति प्रतिजानीते। तस्याद्वैतित्वे प्रमाणं किमपि न प्रदर्शयति। शिवभक्तस्याद्वैतित्वं स्वतः सिद्धमिति मन्यत इव। तत्तु न। शैवसिद्धान्ते जगत्सत्यत्वस्य जीवानामीश्वरात् अन्योन्यं च भेदस्य चाभ्युपगमात्। शिवाद्वैतादेरत्यन्तमर्वाचीनत्वात्। शाङ्करस्याद्वैतस्य गौडपादात्मत्वेन ततः प्राक् सर्वथा अप्रसिद्धत्वाच्च। अपाणि काले यद्यप्यात्माद्वैतं ब्रह्माद्वैतमित्येवमात्मकं किञ्चिदद्वैतं स्थितं तथाऽपि तस्यैकस्यात्मनो ब्रह्मणो वा निर्गुणत्वं चपलचैतन्यरूपत्वं जगन्मिथ्यात्वं च न येन केनापि श्रुतिपुणा अनृषिणा वा मनसाऽपि चिन्तितमासीत्। सर्वमिदं सौगतप्रतिभाविलसितं गौडपादेन परिगृहीतम्। तस्मात् अस्मात्प्राचीनो यः कोऽपि अद्य विद्यमानाद्वैति तुल्योऽद्वैती बभूवेत्येतदसम्भवदुक्तिकम्।

शिवभक्तत्वं च किं शिव एव भक्तत्वं अथवा शिवेऽपि भक्तत्वमिति

चिन्तनीयम्। अत्र आद्यपक्षोपयुक्तं न किञ्चिदुक्तम्। 'रुद्रपुरुषसूक्तयो-स्तुल्यं पावनत्वं बोधयति' इति उभयभक्तत्वं तु ज्ञापितम्। द्वितीयपक्षे तु सूर्यज्येष्ठादिकलाविधानात् तद्भक्तत्वमपि प्रसज्येत। मोक्षप्रदस्य सर्वेश्वरस्य एकत्वात् नानादेवताभक्तत्वे स न मोक्षार्थीति परतत्त्वज्ञान-शून्य इति च वक्तव्यं स्यात्। यत्तु त्रिपुण्ड्रधारणं भस्मसम्पादनतद्धा-रणप्रकारं च बोधायनो विधत्त इति ततः किम्? "होमपूजादिसमये सायं प्रातः समाहितः। ऊर्ध्वपुण्ड्रधरो विप्रो भवेच्छुद्धो न चान्यथा" इत्यूर्ध्वपुण्ड्रधारणं सविशेषतो विधत्ते। तेन एकजातिप्रायाणां द्विजातीनां त्रिपुण्ड्रधारणं व्यवतिष्ठते। इदं वचनं स्मृतिरत्नाकरे वैदिकसार्वभौमे-नाप्युदाहृतम्। इदं वचनं कल्पितमिति चेत् भवता प्रयुक्तोऽयं बाणः भवन्तमेव प्रहरति—'अथातो द्विजातीनां त्रिपुण्ड्रधारणविधिं' इत्यादि शैवैः कल्पितमिति।

श्रीसच्चरित्ररक्षायां देशिकचरणैरुदाहृतस्य,'होमपूजादिसमये' इत्यादि-श्लोकस्य स्वेनारोपितं कल्पितत्वं द्रढयितुमना जडः अन्यदप्याह—

> एवमेव वेङ्कटनाथः स्वीयाभिनिवेशेन 'अथातो महापुरुषस्या-हरहः परिचर्याविधिं व्याख्यास्यामः' इत्यादिबोधायनवचने "इदं विष्णुर्विचक्रमे' इत्येतया चरुं प्राश्नीयात्' इति अहं वैष्णवोऽस्मीति यः प्रतिब्रूयात् तस्मै शेषं प्रदद्यात्। एतैरेव मन्त्रैः प्राश्नीयात्।" इति अधिकमप्यंशं कल्पितवान्। स चाधिकभागः स्मृतिमुक्ताफलादिनिबन्धेषु न दृश्यते। वैदिकः बोधायनमहर्षिश्च कथं तान्त्रिकं निर्माल्यभक्षणादिकं विद-ध्यात्। तस्मात् तत् वेङ्कटनाथकल्पितमेव। एवं च प्रसिद्धो बोधायनमहर्षिः परमाद्वैती शिवभक्तश्च।

इति। अत्र तत्त्वमनुपदं विशदीकरिष्यामः। द्रमिडात्रेयदर्शनाभिधाने अस्मिन् निबन्धने कामक्रोधादिप्रबलान्तःशत्रुवर्गोपहतचेताः शास्त्री

जायमानकटाक्षविशेषेषु आर्जवनिधिषु प्रामाणिकमूर्धन्येषु अपार नीतिसागरपारगेषु वेदान्तार्थविचक्षणेषु ब्रह्मवित्सु अस्मदाचार्येषु असदपचारपरम्परां महतीमाचरितवान् तस्येमद् विज्ञाय आत्मत्यागपर्यन्तमात्मनः प्रायश्चित्तं यदि व्यवस्थत् तदपि पर्याप्तं न भवेति संशेमहे। 'जिह्वामुत्पाट्य सपदि मर्तव्यं ननु मानिना' इत्यन्यत्र क्वचिदस्माकं वक्तव्यमासीत्। तदिदानीं स्मृतिपदमायाति। अस्मदाचार्या सत्यैकनिष्ठाः सत्यैकबलाः। अहिंसा प्रथमं पुष्पमित्यारभ्य 'सत्यमष्टविधं पुष्पं विष्णोः प्रीतिकरं भवेत्' इत्युपदिष्टैरष्टाभिः पुष्पैः भगवदर्चनपराः। तैरुदाहृतं वचनं यद्याकरे न दृश्यते तर्हि तत्र ग्रन्थपात इति वा अभिनिविष्टैः कैश्चिदुद्धापः कृत इति वा सपदि अध्यवसातव्यम्। न त्वाचार्येषु अनार्जवं मनागपि शङ्कनीयम्। तेषां स्वभावस्यात्यन्तविरुद्धत्वात्। इदं विष्णुर्विचक्रम इत्येतया चरुं प्रश्नीयादित्यादि सच्चरित्ररक्षायामुदाहृतं बोधायनवचनं तदीये गृह्यसूत्रे अस्ति च दृश्यते च। तत्तु न महापुरुषनित्यपरिचर्याविधिप्रकरणे। अपि तु तत उत्तरं विष्णुकल्पविधानप्रकरणे। तत्रान्ते एवं पठ्यते—

> इदं विष्णुर्विचक्रम इत्येतया चरुं प्राश्नाति। एवं घोषयेत्—यो वैष्णव इत्याह। वैष्णवोऽस्मीति य प्रतिब्रूयात् तस्मै शेषं दद्यात्। एवैरेव मन्त्रैः प्राश्नाति। प्राश्याप आचम्य द्वादशाक्षरं जपित्वाऽश्वमेधफलमाप्नोति सकृदिष्ट्वा सनातनमिति।
>
> [ मैसूर् मुद्रणे ७५ ६ पुटयोः ]

इति। शिवविष्णुपूजयोरुभयोरपि विधानेऽपि शिवस्योत्कर्षं सूचयति बोधायन इति

> बोधायनश्च शिवपूजाविधौ ब्रह्मविष्ण्वोरावरणे निवेशात् देवतान्तरपूजाविधिषु शिवस्यावरणदेवतात्वनिवेशाच्च तस्य सर्वोत्कर्षं सूचयामास।

इति शिवतत्त्वविवेके दीक्षितोक्तमुदाहरन्नाह । स्पष्टार्थैर्वचनैः सुप्रतिष्ठितैः समीचीनैर्न्यायैश्च देवतापारमार्थ्ये आचार्यैरवधार्यमाणे पामरैकहृद्याभिः श्वासमात्रविधूननीयाभिरीदृशीभिः क्षुद्रयुक्तिभिः किं भविष्यति । शिवः स्वरूपेणाशिवः । अतः तस्य रुद्र इति स्वनाम्ना कीर्तनं कीर्तयितामशिवावहमिति स शिवशब्देनोच्यते । *यथा* नालवर्धनमिति छेदनं वर्धनशब्देनोच्यते तथा । अत एव 'रुद्रः पशूनामधिपतिः' 'मानः स्तोके तनये' इत्यादिभिर्मन्त्रैः रुद्रहोमे कृते 'अप उपस्पृश्य' इति वदन्तः अपामुपस्पर्शनं कुर्वन्ति । रुद्रो बहुशिरा बभ्रुरिति भगवत्परतया प्रयुज्यमानस्य रुद्रनाम्नः रुग्द्रावकत्वव्युत्पत्तावपि शिवपरतया प्रयुज्यमानस्य हि रोदितीति वा रोदयतीति वा व्युत्पत्त्या अशुभार्थप्रत्यायकत्वं भवति । 'एषा वा अस्य घोरा तनूर्यद्रुद्रः' इति च श्रुतिः । अतो यत्र तस्य पूजा क्रियते तस्य देशस्याप्यशुद्धिप्रसङ्गात् तत्परिहाराय 'पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्' इति प्रथितप्रभावस्य विष्णोः तदावरणे निवेशनम् । विष्णुपूजास्थलस्य स्वयं पूतत्वात् अशुद्धिप्रसङ्गस्य परिहार्यत्वाच्च न शिवस्य तत्र निवेशनमिति विभाव्यम् । शिवनिर्माल्यं सर्वं प्रतिषिद्धम् । विष्णवे समर्पितं तु सर्वं 'यज्ञशिष्टाशिनः सन्तः' इत्युक्तरीत्या परमपावनम् । विष्णवे असमर्प्य उपयुज्यमानं तु सर्वं पापाय । शास्त्रैः प्रतिषिद्धम् ।

अत्रेदं बोध्यम् । "कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । तं तं *नियममास्थाय प्रकृत्या नियताः स्वया ।*" इत्युक्तरीत्या नानाप्रकृतीनां जनानां तत्तदधिकारानुगुणविविधक्रियोपदेशं कुर्वाणा ऋषयः स्वग्रन्थेषु विहितं सर्वं स्वयमप्यन्वतिष्ठन्निति ग्रहणं मूढकृत्यम् । यो यो यां यां तनुं भक्तः, न बुद्धिभेदं जनयेत्, इत्यादिनीत्या अप्रबुद्धानामनुग्रहाय तदवलम्बितस्यैव मार्गस्य सम्यगनुवर्तनप्रकारं प्रदर्शयन्ति । भगवन्नारायणेतरभजनपराः सर्वे 'तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम्' इति

भगवदुक्तक्रमेण अविधिपूर्वककर्मकारिण इति जानन्तो महर्षय 'अनन्याश्चिन्तयन्तो माम्' इत्येतद्रीत्या स्वयं परमैकान्तिन एवाभवन्। एवमतस्मात्श्राचार्योऽपि श्रीशङ्कर स्वयं परमैकान्त्यभवत्। स खलु गीताभाष्ये एवमाह—

यान्ति मद्याजिनः मद्यजनशीला वैष्णवा मामेव यान्ति। समानेऽप्यायासे मामेव न भजन्ते अज्ञानात्। तेन ते अल्पफलभाजो भवन्तीत्यर्थः।

इति। एवमुक्तवान् स किमज्ञानां पन्थानमनुसृतवान् भवेत्। आहुश्च आदेशिकाः सर्वतन्त्रस्वतन्त्राः तात्पर्यचन्द्रिकायाम्— शिवाचरन्तिदेवगुप्तशङ्करपादयप्रकाशभास्करनारायणार्ययज्ञस्वामिप्रभृतिभिः स्व स्व मतमास्थितैः परश्शतैर्भाष्यकाद्भ अस्मत्सिद्धान्तवार्थश्चैव भगवद्यामुनाचार्यभाष्यकारादिभिः आविगीतपरिगृहीतोऽयमत्र सारार्थः— 'भगवानेव परं तत्त्वम्। अनन्यशरणैर्यथाधिकारं तदेकाश्रयणं परमधर्मः।' इति। इति। प्राचीनाऽद्वैतग्रन्थकाराः प्रायेण वैष्णवा एव। शङ्करमठसन्यासिनोऽपि नारायणस्मृतिमेव' सदा कुर्वन्ति, न शिवस्मृतिम्। मोक्षाश्रमो हि सन्यासः। मोक्षप्रदश्च जनार्दनः। 'ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः। प्रतिबुद्धा न सेवन्ते यस्मात्परिमितं फलम्" इति पञ्चमे वेदे भगवान् व्यासः देवतान्तरभजनमप्रतिबुद्धविषयमवधारयति। गृहस्था अपि स्मार्ताः पूर्वं शैवत्वेनाभिहिताः क्वचिद्अभवन्। चन्दनाद्यूर्ध्वपुण्ड्रधारिण आसन्। भस्मधारिणोऽपि श्राद्धकाले तद्धारणं वर्जयन्ति स्म।

शास्त्राणि सर्वजनविषयाणि। तत्र यस्य यदधिकारानुरूपं तत् तेन तेन भाव्यम्। यावानर्थ उदपाने, त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इति भगवदुपदेशं मानद्भिः निश्श्रेयसकामैः तदन्यमैकान्तिभावाद्‌न्यं मनसाऽपि न चिन्तनीयम्। परब्रह्माभिधानः सर्वेश्वर एक एवेति वेदा

उपदिशन्ति। तस्य लक्षणं जगज्जन्मादिस्थितिलयकारणत्वम्। परन्तु इदमन्यच्च परब्रह्मलक्षणं बहुत्र श्रूयते। इन्द्रसोमसूर्यादिषु। अथाप्येषां सृष्टिवचनात् योगेन वा अपर्यवसानवृत्त्या वा एषां शब्दानां परब्रह्माभिधायित्वं वक्तव्यं भवति। अत इन्द्रादीनां न परब्रह्मता। एवमेव रुद्रस्यापि। सृष्टिश्रवणात्। विष्णोः सृष्टिश्रवणं अवतारपरम्। अजायमानो बहुधा विजायत इति श्रुत्यैव विवरणात्। न च शिवस्य अवताराः कैश्चिदिष्यन्ते ज्ञायन्ते वा। न ब्रह्मा नेशान इति प्रलये तदभावश्चाम्नायते। न च भगवत एव क्वचिदसत्त्वश्रवणमस्ति। नारायणानुवाकेन, अग्निरवमो देवतानां विष्णुः परम इत्यनेन च कण्ठोक्त्या भगवतः परत्वं सिद्धम्। साक्षादुपादानकारणस्यैव परब्रह्मभावमुपनिषदः श्रावयन्ति। तन्त्रोक्तं शिवमारभ्य वैदिकं चिकीर्षन्तोऽपि साक्षादुपादानत्वं शिवस्य नेच्छन्ति। सृज्यमानो रुद्रोऽन्यः। परमेश्वरो रुद्रोऽन्यः। अयं विष्णुद्वारा उपादानमिति कल्पयन्ति। उपादानव्यतिरिक्तः परो नास्तीति औपनिषदः सिद्धान्तः। अतो रुद्रस्य परत्वश्रवणं इन्द्रादिपरत्वश्रवणवदुपपद्यत इति रुद्रान्तरकल्पने न किञ्चित् प्रमाणमस्ति। तस्मात् विष्णुरेव परं तत्त्वमिति महर्षीणां सर्वेषां प्राचामाचार्याणां च एकः सिद्धान्तः।

"गीतिज्ञो यदि योगेन नाप्नोति परमं पदम्।
रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते॥"

इति योगप्राप्यात् परमपदस्थात् अन्यः अर्वाचीनो देवो रुद्र इति स्पष्टमाह याज्ञवल्क्यः। न चायं सिद्धान्तः यैः कैश्चिदप्यन्यथा कर्तुं शक्यः। एवं तत्त्वनिर्णयं कृतवन्तः प्राज्ञाः तदभिरूपपरमपुरुषार्थकांक्षिणां तदनुरूपां वृत्तिमपि व्यवस्थापयामासुः। तदवगमाय वृद्धहारीतस्मृतिश्लोका इमे इहोदाह्रियन्ते—

द्वितीयेऽध्याये—

शुभ्रेणैव मृदा पश्चाद् विभृयात् सुसमाहित ॥५७
त्रिसन्ध्यासु सदा विप्रो यागशाले विशेषत ।
श्राद्धे दाने तथा होमे स्वाध्याये पितृतर्पणे ।५८
श्रद्धालुरूर्ध्वं पुण्ड्राणि बिभृयाद् द्विजसत्तम ।
तद्धारयेद्धरेर्नित्यमूर्ध्वपुण्ड्रविधानत ॥५९
श्राद्ध होमस्तथा दान स्वाध्याय पितृतर्पणम् ।
भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्र विना कृतम् ॥ ०
ऊर्ध्वपुण्ड्रं विना यस्तु श्राद्ध कुर्वीत स द्विज ।
सर्वं तद्राक्षसैर्नीत नरक चाधिगच्छति ॥६१
ऊर्ध्वपुण्ड्रविहीन तु य श्राद्धे भोजयेद् द्विजम् ।
अश्नन्ति पितरस्तस्य विण्मूत्र नात्र सशयः ॥६२
तस्मात्तु सततं धार्यमूर्ध्वपुण्ड्र द्विजन्मना ।
धारयेन्न तिर्यक्पुण्ड्रमापन्नपि कदाचन ॥६३
तिर्यक्पुण्ड्रधर विप्र चण्डालमिव सन्त्यजेत् ।
सोऽनर्हं सर्वकृत्येषु सवलोकेषु गर्हितः ॥६४

अष्टमेऽध्याये—

नारायणः पर ब्रह्म विप्राणा दैवतं सदा ।
तस्य भुक्तावशेष तु पवनं मुनिसत्तमाः ॥७१
हरिभुक्तोज्झित दद्यात् पितृणा च दिवानिशम् ।
तदेव जुहुयाद्वह्नौ भुञ्जीयात्तु तदेव हि ॥७२
हरेरनर्पितं यत्तु देवानामर्पित च यत् ।
मधुमाससम प्रोक्त तद् भुञ्जीयात् कदाच न ॥७३
हरे. पादजल पाद्यं नित्य ना यद् (?) दिवौकसाम् ।
सुराणामितरेषा तु फलपुष्पजलादिकम् ॥७४

निर्माल्यमशुभ प्रोक्तमस्पृश्य हि कदाचन।
विधिर्ह्येष द्विजातीना नेतरेषा कदाचन ॥७५
शिवार्चन त्रिपुण्ड्र च शूद्राणा च विधीयते ॥
हरिर्यस्य गृहे भुङ्क्ते तस्य भुङ्क्ते जगत्त्रयम् ॥८०

स्कान्दे वैष्णवखण्डे मार्गशीर्षमासमाहात्म्ये पञ्चदशाध्याये स्थिता इमे श्लोकाः—

भोक्तव्यं मम चोच्छिष्ट मम भक्तिपरायणैः।
पवित्रकरण पुत्र पापिनामपि मुक्तिदम् ॥२१
अनर्पयित्वा यो भुङ्क्ते अन्न पान च यत् ( मम )।
श्वानविष्ठासम चान्नं पान च मदिरासमम् ॥२८
तस्मान्मामर्पयेत् पुत्र अन्नपानादि चौषधम्।
भक्षयेत्परया भक्त्या अशुचेः शुचिकारणम् ॥२९
तीर्थयज्ञादिकफल कलिदोषविनाशनम्।
ममोच्छिष्ट सुगतिदमपि दुष्कृतकर्मणाम् ॥३०
अन्येषा दैवताना च न गृह्णीयाच्च भक्षितम् ॥

( कलकत्ता-मनसुखराय मोर-प्रकाशने ५४५-६ पु )

अत परापरतत्त्वयाथात्म्यवित् सूत्रकारो महर्षिर्बोधायन श्रीमन्नारायण-परमैकान्त्येवेति तदपह्नवेन तस्य वृत्तिकारादन्यत्वसाधनमशक्यमिति सिद्धम्। महादेवप्रतिष्ठादिक विदधानोऽपि हि सः प्रथमं महापुरुष-प्रतिष्ठादिक विधाय तदनन्तरमेव विधत्ते। उपरिकल्पविधाने वाचकत्वेन प्रणवकल्प प्रथम, तत्प्रसङ्गादन्यान् काश्चन कल्पान् अनन्तरं, विदधा-नोऽपि ततः पर विष्णुकल्पं विधाय ततः परमेव रुद्रकल्प विधत्ते। अतस्तस्य रुद्रादुत्कर्षं स्वाराध्यदेवत्व च स्पष्टमेव ज्ञापितवान् बोधा-यनः। इति।

७४ . ८५ एषु दशाधिकेषु पर्वसु सङ्कर्षकाण्ड इति व्यवह्रियमाण

मीमांसाशास्त्रस्य काण्डविशेषं प्रस्तुत्य अस्मदाचार्यदूषणानि कुर्वन् महान्तं कालाहलं वितनोति। अत्र चत्वारिंशतो वत्सरेभ्यः पूर्वं अस्मदार्ये मीमांसाभ्युदयनाम्नि विमर्शग्रन्थे यदुक्तमस्माभिः तदुदाहरामः –

'एषामपि कर्ता भगवान् जैमिनिरिति ग्रहयः। कश्चित्तु काशकृत्स्न इति ४। अत्रान्यतरावधारणमस्मच्छक्तिमतीत्य वर्तत इति प्राज्ञ एवाशेरते ५। आस्त पुनरभ्यूहितुमवकाश काशकृत्स्नेन कृत एकं देवताकाण्डं जैमिनिना चापर इति देवताकाण्डद्वयमासीदिति ।६ (१ ३ पुटे)

६ 'स खलु जैमिनिः साध्यधर्मविचारार्थं द्वादशाध्यायीं प्रणीय तत्राविचारितोऽपि कियानंशोऽस्तीत्यालोच्य तद्विचारार्थं पुनः सङ्कर्षणाख्यां चतुरध्यायीं प्रणिनाय",

[शिवार्कमणिदीपिकाप्रथमसम्पुटे ३५. पुटे]

"सङ्कर्षणकाण्डोऽप्यविचारितकर्मविशेषविषय एव। जैमिनिः द्वादशलक्षणीं प्रणीय तत्राविचारितांशमालोच्य पुनरपि चतुर्लक्षणीं प्रणिनायेति प्रसिद्धिः। अत एव हि संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति वृत्तिग्रन्थोऽपि सङ्गतः। अत एव प्रदानवदेवताधिकरणे भाष्ये यत् संवादतयोक्तं 'नाना वा देवता पृथक्त्वात्' इति, तत् जैमिनीय एव दृश्यते, न तु देवताकाण्डे काशकृत्स्नीये। अतोऽपि सङ्कर्षं कर्मविषय एव। तत्रैव केषाञ्चिद् देवताकाण्डव्यवहारोऽप्यस्तीति।"

[श्रीरङ्गरामानुजमुनिविरचितायां ग्रन्थाक्षरमुद्रितायां अनप्रकाशिकाव्याख्यायां भावप्रकाशिकायां ४४ पु० ]

काशकृत्स्नसम्बन्धो मीमांसाया आसीदिति 'भितश्च तत्प्रत्ययाम्' (४ ३ १५५) इति सूत्रमहाभाष्यग्रन्थेनाप्यनेन ज्ञायते—

काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी ।
तामधीते काशकृत्स्ना ब्राह्मणीति ।"

अनेन वस्तुस्थितिरियमत्र प्रदर्शिता भवति । तत्त्वरत्नाकरे काशकृत्स्नकृतो देवताकाण्डः कीर्तितः । मेघनादारिसूरिणा 'देवताकाण्डस्तु अस्माभिरदृष्टचरः । अतस्तत्प्रक्रिया मृग्या' इति वदता स्वस्य तददर्शनं ज्ञापयताऽपि तत्सत्ता ज्ञापितैव । प्रपञ्चहृदये चायं काण्डः देवताकाण्ड इत्येव निर्दिष्टः । एवं श्रीदेशिकोऽपि 'तत उपरि चतुर्लक्षणी देवतार्था' इति देवताकाण्डसंज्ञां बुद्धौ कुर्वन्नेव इदमाह । एवमेषामैककण्ठ्यात् देवताकाण्डः कश्चिदासीदित्यत्र न सन्देहः । परन्तु शबरादिभिर्व्यवहृतत्वात् सङ्कर्षकाण्डः कश्चिदासीदित्यत्रापि न सन्देहः । तत्त्वरत्नाकरकारप्रभृतयः कुमारवरदाचार्यपर्यन्ता आचार्याः सङ्कर्षकाण्डं वा देवताकाण्डं वा स्वयमनवलोकितवन्तः स एक एव द्विनामा काण्ड इति मेनिर इति स्पष्टं ज्ञायते । अतः सम्प्रदायतः पूर्वाचार्यग्रन्थेभ्यश्च ये विषयाः यानि च सूत्राणि सङ्कर्षस्थतया वा देवताकाण्डस्थतया वा अवगतानि तानि ते तत्र एकत्रैव स्थिततया अगृह्णन् । "तदुक्तं सङ्कर्षे 'नाना वा देवता पृथक्त्वात्'" इति, इति भाष्योक्तेः इदं सूत्रं, ग्रन्थान्तरेषु 'अन्ते हरौ तद्दर्शनात्' 'स विष्णुराह हि' 'तं ब्रह्मेत्याचक्षते तं ब्रह्मेत्याचक्षते' इत्येषां सूत्राणां देवताकाण्डस्यान्ते स्थितत्वेन प्रतिपादनात् एतानि च तथैवेति जगृहुः । एकस्य ग्रन्थस्य जैमिनिकृतत्वकाशकृत्स्नकृतत्वविप्रतिपत्तौ क्वचिदुपचरितत्वं कृत्वा निर्वाहः कार्य इत्यप्यवोचन् । कल्पतरुकारोऽमलानन्दसरस्वत्यपि सङ्कर्षं देवताकाण्डं च एकं मत्वा 'देवताकाण्डाधिकरणस्य प्रदानभेदविषयस्य पूर्वपक्षं सिद्धान्तं चाह' इति भामतीग्रन्थमवतारयति । अप्पय्यदीक्षितकाले तु सङ्कर्षकाण्डः देव (भव) स्वामिभाष्येण सह उपलब्ध आसीत् । तेन सः सङ्कर्षकाण्डं सभाष्यं स्वयमवलोक्य तस्य देवताकाण्डत्वानुपपत्तिं, तेन कल्प-

तदुक्तेरनुपपन्नतां च पश्यन् तत्परिहाराय

यद्यपि सङ्कर्षकाण्डो न देवताविचारार्थं प्रवर्तितः तथापि इत्यादि देवताविचारभूयस्त्वात् भूम्ना सङ्कर्षकाण्डस्यैव देवताकाण्ड इत्यपि व्यवहारोऽस्तीति तस्य तेनोपादानम् ।

इति शङ्कासमाधाने अकरोत् । अनया रीत्या द्वादशलक्षण्यपि देवताकाण्डो भवितुमर्हति । बहुष्वधिकरणेषु देवताविषयविचारसत्त्वात् । अत कल्पतरुक्तिसमर्थनाय कर्मशेषविचारपरस्यैव सङ्कर्षस्य देवताकाण्डव्यवहारौचित्यमुपपादयन्नपि दीक्षित देवताविचारतत्परमन्थान्तरसत्तायां न विप्रतिपद्यत इति स्फुटं ज्ञायते । अस्मिन् काले सङ्कर्षकाण्ड पुनः प्रचारमलभत । तत्र 'वचनात् सर्वेषां सहाधदोयेत इति परिमलोदाहृतं सूत्रं 'सहावदोयेरन्' इति बहुवचनान्ततया षष्ठभारुते दृश्यते । एवं 'तेषां पृथक्प्रदानमवदानैस्त्वात्' इति तत्र स्थिते अत्र 'तेषां सह प्रदानं इति दृश्यते । अयमेव पाठः सङ्गतः । तेषामपृथक्प्रदानमिति साधीयान् पाठ उपलब्धः । न्यायमयूखमालिकायां दीक्षित

"जैमिनिना तु उदाहृत देवताध्यानविधानं तत्र देवतावाचिशब्दध्यानविषयमिति निरूपितं सङ्कर्षे"

इति जैमिनीय सङ्कर्षकाण्ड पृथगवोचत् । तत परं–

वृत्तिकारेण संहितमेतत् जैमिनीयेन षोडशलक्षणेनेति कर्मविचारार्थया द्वादशलक्षण्या देवताविचारार्थया चतुर्लक्षण्या च ऐकशास्त्र्यं प्रतिपादितमित्युदाहृतं भाष्ये । तत्र कर्मविचारभागे द्वादशानां लक्षणानां धर्मप्रमाणभेदशेषशेषित्वप्रयुक्तिक्रमाधिकारातिदेशोहबाधतन्त्रप्रसङ्गरूपार्थभेदः सुप्रसिद्धः । देवताविचारभागे चतुर्णां लक्षणानामर्थभेदं इत्थमाहुः —स्वरूपमादौ तद्भेदस्तदुपासनपूर्वकम् । फलं च देवताकाण्डे देवतानां तु कथ्यते ॥" इति ।

इत्याह। अत्र देवताविचारभागः कश्चिदस्ति । स तु भागान्तरवत् न सुलभः। अतस्तदर्थः पूर्वाचार्यसूक्त्यैवावगन्तव्य', इति दीक्षितो वदतीति स्पष्टम्। अत्र अधिकप्रसङ्गी 'देवताकाण्डः शशशृङ्गायमाणः' इति दीक्षितः स्पष्टं सूचयतीति कल्पना करोति। तस्य काण्डस्य प्रचार-विरहात् 'तत्प्रतिपाद्योऽर्थः साक्षात् ज्ञातुं न शक्यत इत्येतावदत्राहेति अनभिनिविष्टानां सुगममेतत् । देवताविचारार्थया चतुर्लक्षण्या' इति वदन् हि तत्सत्तामङ्गीकरोति। सङ्कर्षकाण्ड देवताकाण्डश्च एक एवेति मतिं तु व्यावर्तयति 'जैमिनिना तु निरूपित सङ्कर्षे' देवताविचारार्थया चतुर्लक्षण्या' इति विभज्य वदन्। यत्तु 'देवताविचारार्थया चतुर्ल-क्षण्या च ऐक्यतन्त्र्य प्रतिपादितमित्युदाहृत भाष्ये' इत्ययमाह। तन्न तथेति भावप्रकाशिकाकारा वदन्ति। 'जैमिनीयेन षोडशलक्षणेन' इत्ये-तावन्मात्र हि तत्रोक्तम्। तत्र चरमा चतुर्लक्षणी देवताकाण्डरूपेति भाष्यकाराभिप्राय इति कथं लभ्यते । जैमिनिकृतकर्मविचारपरसङ्कर्ष-काण्डोपलम्भात् पूर्वं यद्यपि तस्यैव देवताकाण्डत्व पूर्वे व्याख्यातारो मेनिरे तथापि तदुपलम्भात् परं तेनैव षोडशलक्षणत्वोपपत्तेः ततः पृथग्भू-तस्य काशकृत्स्नकृतस्य देवताविचारपरस्य अत एव मुख्यवृत्त्या देवता-काण्डस्य तत्रान्तर्भावो न युक्तः कर्तुम्। तदिदं पूर्वोदाहृतात् भावप्रका-शिकाग्रन्थात् स्पष्टम्।

जैमिनीयः सङ्कर्षकाण्डः काशकृत्स्नीयो देवताकाण्डः उभावपि मन्दप्रचारावभवताम्। अतः कालक्रमेण तयोरैक्यबुद्धिरुदभवत्। तत्र सङ्कर्ष इत्येतदपेक्षया देवताकाण्ड इत्येव व्यवहारो निरूढ आसीत्। अत एव तत्त्वरत्नाकरकारः आनन्दतीर्थः प्रपञ्चहृदयकारः अमलानन्दः श्रीवेङ्कटनाथः कुमारवरदाचार्य इति सर्वे इमे तथैव व्यवहरन्ति। देवता-काण्डस्य काशकृत्स्नकृतत्वप्रसिद्धिं 'काशकृत्स्ना प्रोक्ता मामासा' इति महाभाष्योक्तिः प्रामाणिकीं करोति। स्वयमनवलोकितदेवताकाण्डा अपि

वृद्धाना मुखात् पूर्वग्रन्थेभ्यो वा तत्रत्यानि सूत्राणि कानिचित् अध्या यानामर्थांश्च स्वग्रन्थेषु न्यबध्नन्। अत एव हरौ तद्दर्शनादित्यादीनि सूत्राणि देवताकाण्डस्थानीत्येतत् 'स्वरूपमाद्यो' इत्युक्ता देवताकाण्डा ध्यायार्था इत्येतच्च सूपपन्नम्। इमे च प्रपञ्चहृदये संवादमृच्छन्ति। यस्तु यथाशील प्रपञ्चहृदयस्याप्रामाण्यप्रतिपादनप्रयासः शास्त्रिण स मुधा।

यदुच्यते विरुद्धबहुविधपाठभेदयुत तदिति तत्रोक्त अपेक्षितप्रामाण्यांशे न स पाठभेदो विरोधीति। एतेन विरुद्धनानार्थबोधक तदित्येतदपि प्रत्युक्तम्। अपेक्षितांशे प्रामाण्यविघटनविरोधविरहात्। यदप्य ज्ञातनामधेयेन कृतमिति तत् अज्ञातकर्तृकत्वस्य अप्रामाण्यानापादकत्वा दनुपपन्नम्। यास्कनिरुक्तव्याख्येयस्य पदसमाम्नायस्य तैत्तिरीयप्राति शाख्यस्य च कर्ता क इति न ज्ञायते। तौ च सर्वैरत्यन्तमाहतौ महाग्रन्थौ। यच्च आधुनिकेन कृतमिति तत्र आधुनिकत्वमेव अप्रामाण्य हेतुश्चेत् भवत सर्वं वाक्य अप्रमाणमिति स्वयमभ्युपगतं भवता। अप्पय्यदीक्षितादिभ्यश्चिरप्राचीन स इत्यत्र च न सदेह। श्रीशङ्कर भगवत्पादेति व्यवहरन् सः अद्वैती। विशिष्टाद्वैतिभि स जातसमागम इत्यत्र न किञ्चित् प्रमाणम्। अतो यदुत्प्रेक्ष्यते 'प्रायश तदनुसारेण देवताकाण्डप्रमेयं प्रपञ्चहृदये उपवर्णितमिति तद्भवतः अप्रामाणिककार्यकल्पनाशीलत्वस्यापर निदर्शनम्। अत्र देवताकाण्डप्रमेयवर्णन प्रकारः वस्तुत स्वतन्त्रमूलान्तरानुसारित्व सुस्पष्टमावेदयति।

अन्यदिदमत्यन्तमवधेयम्। अखण्डं कृत्स्नमाण्ड अङ्गे पिधातुमिच्छति शास्त्री। माण्डूक्योपनिषत्कारिकाविवरणे "अग्नीन्द्रादयो देवास्तत्क लदातारः, नेश्वरस्तथा इति देवताकाण्डीयाः" इत्यानन्दगिरिणा उक्तं देवताकाण्डपदमपि प्रसिद्ध सङ्कर्षकाण्डमेवाभिप्रैति। न पराभिमत देवताकाण्डमिति वाच्यम्।' इत्याह। किमानन्दगिरिवाक्यादेव बोद्धु

पण्डितः कश्चिदलम् ? शब्दमयी देवता, अपूर्वं फलप्रदमिति हि जैमिनिमतं सुप्रसिद्धम्। "जैमिनिना तु उदाहृत देवताध्यानविधान तत्तद्देवतावाचिशब्दध्यानविपर्यमिति निरूपितं सङ्कर्षे" इति नयमयूखमालिकाया दीक्षितेनोक्तं स्वयमय सप्तसप्ततितमे पर्वणि उदाहरत्। तादृशे जैमिनीये सङ्कर्षकाण्डे अग्नीन्द्रादिदेवाना फलप्रदत्वप्रतिपादन कथ भवेत्। कथ सङ्गत स्यात्। अनेन "वं ध्यम्" इत्युक्ते सर्वैः तदाज्ञावशवर्दैः अविचार्य तथैव बोद्धव्यम्, तथैव भोत्स्यन्ते सर्व इति अत्युच्छ्रिताहङ्कारमहीधरोत्तुङ्गशिखरारूढो नूनं मन्यते।

आनन्दगिरिवाक्यमिदमेकं पर्याप्त देवताकाण्डस्थितिपारमार्थ्यप्रत्यायनाय। सुस्पष्टोक्तिमिमा स्वाभिमतसिद्धिपरिपन्थिनी यथात्रदवगन्तुमनम महतामावलेपे उद्युक्त इति जित कलिना।

८६ 'तस्य निमित्तपरीष्टिः' इति पूर्वमीमांसासूत्र नञध्याहारेण उपवर्षवृत्तौ व्याख्यातम्। तदयुक्तमिति श्रीदेशिकः सेश्वरमीमासायामाह। अतो वृत्तिकारभक्ता अपि तत्खण्डनपरा एते, इति परिवाद करोति। 'नञमध्याहृत्यातिमहता क्लेशेन व्याख्यातम्। तदप्यनेन निरस्तम्' इति निरास कृतवताऽपि अनुपद 'अतो भगवानप्युपवर्षोऽपरीक्षणीयत्वपूर्वपक्षमन्वारुरोह' इति तस्मिन् स्वबहुमानातिशयमाविष्कुर्वता तस्य वस्तुतोऽनभिमत एव नञध्याहारपक्ष इति प्रत्यपादि। अत्राह शास्त्री 'बहिर्मधुरवचोविन्यासेन खण्डनं न कृतवानिव चाभिनयति। अहो महामायित्वं वेङ्कटनाथस्ये'ति। स्वबहुमतेषु ग्रन्थेषु तत्र तत्र व्याख्यातारः 'अय प्रौढिवादः' 'अभ्युपेत्यवादः' इति वाक्यानि योजयन्तीति सर्वसाधारणमेतत्। न ते मायिनः। अयं तु सम्प्रति जनान् मोहयितुं अवस्तुनि घोरा पिशाचीं, इन्द्रजाले भास्वत्स्वरूपं च प्रदर्शयिष्यामीति सङ्कल्प्य मायाकलामभ्यस्यति।

प्राचीनवृत्तिकारखण्डन बहुधा करोति शङ्कराचार्य इति पदे पदे

शङ्कां प्रदर्शयन्ति । तेऽथापि न दोषं दर्शयिष्यामीति मतिं कृत्वा शास्त्री औद्देशिकं उपवर्षखण्डनकारं इत्यवोचत् । उपवर्षादय एव ब्रह्मसूत्र वृत्तिकाराः बोधायन इति पक्षे अस्य दूषणस्य प्रसङ्ग एव नास्तीत्यास्ता मेतत् । अथान्यदाह—

> सूत्रकारस्य चिन्तने भाष्ये ज्यायस्त्व प्रामाणिकत्वमि त्यर्थं ' इति, श्रु० प्र० या 'ज्यायस्त्वशब्दश्रवणात् व्यस्तोपासन पक्षोऽपि सूत्रकाराभिमत इति चेन्न । वाक्यभेदादिप्रसङ्गात् । ज्यायस्त्वशब्दस्तु प्रामाणिकत्वाभिप्रायेणाप्युपपन्न । इति च वृत्तिकारमतखण्डनं कृतम् । भगवत्पादभाष्येऽपि वृत्तिकारमेत मेतत् खण्डितम् । कोऽयं वृत्तिकारः वृत्तिकारमतानुसारी वृत्तिकारभक्त पर एव प्रष्टव्यः ।

इति । ज्यायस्त्वशब्दस्वारस्यमाश्रित्य व्यस्तोपासनस्यापि सूत्रकारानुमतत्वशङ्कातत्परिहारौ शङ्करभाष्ये स्थितौ श्रीमद्भाष्ये व्याख्यातौ, श्रु० प्र० या कण्ठोक्तौ । प्राचीनवृत्तिकारेण केनचित् स्ववृत्तिग्रन्थे तथोक्तमिति न शङ्करेणोच्यते, न वाचस्पतिना, नाप्यन्येन केनचित् । शङ्करसमकालिक एव कश्चित् पण्डितः एवं कथितवान् भवेत् । अथवा तच्छिष्येष्वेव कश्चित् पृष्टवान् भवेत् । अथवा इयमुन्नेयपक्षत्वात् तथाऽप्येवं प्रतीयत इति स्वयमेव इमां शङ्कां कृत्वा अधिकरणेषु पूर्वपक्ष कल्पनन्यायेन 'केचित् कथयन्ति' इति श्रीशङ्कर 'काश्चित्' कल्पयित्वाऽवदादित्युपपद्यते । शङ्कराचार्योक्तोऽयं शङ्कापरिहारः उपपन्नत्वात् अवश्य वक्तव्यत्वाच्च श्रीभाष्यश्रुतप्रकाशाभ्यामप्याहृत । अत्र स्वकीयपरकीय ग्रन्थजालं सर्वं सहसा श्रमेणान्विष्य अवगाह्य इमान् 'काश्चित्' वृत्तिकारत्वेन स्वयं व्यपदिश्य तत्खण्डनकरणात् वृत्तिकारखण्डनकारित्व विशिष्टाद्वैतिष्वप्यस्तीति प्रदर्शनाय शास्त्री यं प्रयासं वृथैव अङ्गीचकार सत्र नूनमयमनुकम्पनीयः । कोऽयं वृत्तिकार इति पृच्छति । य कोऽपि

नेत्येव समञ्जसमुत्तरम् । अथापि ब्रूम । अत्यन्तापशदः कश्चित् । न भगवान् बोधायनः । नापि तादृशोऽन्य कश्चिदिति ग्रहणे क्लेशः ।

८७ प्राचीनवृत्तिकारखण्डनं बहुधा करोति श्रीशङ्कर इत्येतदप्रत्याख्येयम् । तत्र प्राचीनवृत्तिकारा बहवः । तेषु ये सम्प्रदायानुसारिणः तानाद्रियत एव शङ्करः । अन्यान् निरस्यति । तत्र का वाच्यतेत्याह शास्त्री ।

सम्प्रदायविदां उपवर्षसुन्दरपाण्ड्यब्रह्मनन्दिद्रविडाचार्यगौडपादप्रभृतीनामुक्तयः बहुत्र भगवत्पादैः प्रमाणीक्रियन्ते । 'वेदान्तार्थगहनसम्प्रदायहीन' इत्येव भास्कराचार्यः पञ्चपादिकाविवरणादिषु तिरस्क्रियते ।

इति च । अत्र भगवानिति विशेषणदानमात्रेण उपवर्षस्य अद्वैतित्वं न सिध्यतीति पूर्वमेवोक्तम् । शबरोऽप्याह भगवानुपवर्ष इति । किं तेन तस्य निरीश्वरमीमांसकत्वं भवितुमर्हति । न चाद्वैतपरं उपवर्षग्रन्थं केचिदुदाहृतवन्तः । अतस्तस्याद्वैतित्वमप्रामाणिकम् । "न चाहम्प्रत्ययो व्यामोह इति शक्यते वक्तुम् । बाधकप्रत्ययाभावात् ।" 'तस्मान्न विज्ञानमात्रम्" इति शबरेण उपवर्षमते आत्माऽहम्प्रत्ययविषयः विज्ञाता च न तु विज्ञानमात्ररूप इति प्रतिपादनात् उपवर्षस्य अद्वैतित्वं वह्नेः शीतत्वमिवेति ज्ञेयम् । सुन्दरपाण्ड्यस्याप्यद्वैतग्रन्थकारत्वं नास्तीत्येव निश्चेतव्यं भवति । कल्पतरुकृता हि समन्वयाधिकरणे 'गौणमिथ्यात्मनोऽसत्त्वे' इत्यादि श्लोकविवरणावसरे तन्नाम अवश्यं कीर्तनीयं यदि स तेषां कर्ताऽभविष्यत् । अतः अवश्यकीर्तनीयस्य कीर्तनाभावं तस्य तदकर्तृत्वमेव प्रत्याययति । माधवाचार्योक्तिस्तु अनाप्तवाक्यश्रवणाद्वा सम्भावनामात्राद्वा भवन्मार्गानुसारेण कल्पनामात्राद्वा । तस्य तत्कर्तृत्वं कृत्वा चिन्तायामपि तस्य आत्माद्वैतित्वमेवोदाहृतैः श्लोकैः सिध्येत् , न विश्वमिथ्यात्ववादित्वम् । ततोऽप्रतीतेः ।

ब्रह्मनन्दिद्रविडाचार्ययोरकमपि वाक्यमद्वैतपरं नोदाहृतमिति सुनि-रूपितम् । अतो गौडपाद एकः परिशिष्यते । एतदुपज्ञं शङ्कराद्वैत सम्प्रदायः । एतत्सम्प्रदायहीनत्वेनैव भास्कराचार्यनिराकरणं पञ्चपादिकादिषु ।

गौडमहानन्दशिष्यः अभिनवद्रविडाचार्यपदभाक् बालकृष्णानन्द सरस्वती उपवर्षादिप्राचीनवृत्तिकारानुरोधेन सूत्रभाष्यमारचितमिति स्वकीये वार्तिके वदतीत्याह । वाचस्पतिप्रभृतिभिरदृष्टा उपवर्षवृत्ति रस्तना बालकृष्णानन्द किल साक्षात् दृष्ट्वा एव वदति । तस्मादनून परमं प्रमाणं तस्य वाक्यम् । अहो अहो अत्यद्भुता, सयथा दुर्निरसा इयं युक्तिः । अयं किल महान् वार्तिककारः जन्मादिसूत्रभाष्यं त्रिविधमिति विभागमुक्त्वा "प्रथमं प्राचीनवृत्तिकारमताभिप्रायेण लोकसिद्धलक्षणपरम् ।" इत्याह । लोकसिद्धलक्षणपरमिदं सूत्रमिति, इदं प्राचीन वृत्तिकारमतमिति च ज्ञापकं भाष्ये न किञ्चिदस्ति । श्रुतिसिद्धमेव लक्षणं विलक्षणब्रह्मसद्भावसम्भावनासिद्धये शास्त्रमनुपादायोक्तम् । इदं एतदधिकरणारम्भ एव 'श्रुतिनिर्देशस्तावत् यतो वा इमानि' इत्यादिना, शास्त्रयोनित्वाधिकरणे 'पूर्वसूत्रोक्तरेण स्पष्टं शास्त्रस्यानुपादानात्' इत्यादिना च भाष्येण स्पष्टम् । न च शास्त्रैकवेद्यस्य ब्रह्मणः लोकसिद्धलक्षणं भवितुमर्हति । वृत्तिकारप्रस्तावस्तु न भाष्ये न च व्याख्यानेषु । अतः श्रोतृणां प्राचीनसम्प्रदायानुरोधित्वधीजननाय कल्पनामात्रमिह स्थितम् । व्युत्पत्तिसिद्धे अर्थे अक्षरशः उच्यमाने वृत्तिकारमतस्य कः प्रसङ्गः ? ।

८८ शङ्करात् पूर्वं विशिष्टाद्वैतमतावलम्बी वृत्तिकारः य कोऽप्यासीत् । सत्ये कथमनेन खण्डनं न कृतम् । स्वमतविरोधिसर्वखण्डनकारो ह्ययम् । अखण्डनादसत्त्वं सिद्ध्यतीत्याह । अत्र प्रतिबोधनं कुर्मः । परस्य ब्रह्मणः निर्गुणत्वं साधयन् सगुणत्ववादः खण्ड्यति । तेन पूर्वं

सगुणपरब्रह्मवादिन आसन्नित्येतत् सिद्धम्। जीवब्रह्मभेदं जीवनानात्वं च खण्डयति। तेन एतद्वादिन आसन्नित्येतत् सिद्धम्। विश्वस्य तदुपादानभूतायाः प्रकृतेश्च पारमार्थिकत्वं खण्डयति। तेन तद्वादिन आसन्नित्येतत् सिद्धम्। इतःपरं विशिष्टाद्वैतिनां प्रति तन्त्रसिद्धान्तभूतस्य शरीरशरीरिभावस्य खण्डनादर्शनात् तद्वादिनः पूर्वं नासन्निति प्रतिज्ञायेत। तत्रेदं तत्त्वम्। 'यस्य पृथिवी शरीरं, जगत्सर्वं शरीरं ते, 'सोऽभिध्याय शरीरात् स्वात्' इत्यादिश्रुतिस्मृतिषु जगतः परमात्मशरीरत्वस्य स्पष्टमभिधानात्, जगत इव शरीरशरीरिभावस्य व्यावहारिकस्य अद्वैताविरोधित्वाच्च एतत्खण्डनमकर्तव्यं शङ्करो मेने। शुद्धचैतन्यस्य सर्वज्ञत्वादिकारणतया जडद्रव्यस्य शरीरत्वव्यवहारमुपपादयति च प्रकरणग्रन्थे कस्मिंश्चित्। तदन्यत्रोदाहृतवन्तः स्मः। अतः अखिलहेयप्रत्यनीककल्याणैकतानं परं ब्रह्म, ततो भिन्नान् नाना जीवान्, सत्यां त्रिगुणां, अर्चिरादिगम्यां परमां मुक्तिं, तत्साधनं भक्तिं चाभ्युपगच्छन्तः बादरायणीयब्रह्मसूत्रवृत्तिकाराः वेदान्तग्रन्थान्तरकाराश्च प्राञ्चः सर्वे जगद्ब्रह्मणोः शरीरशरीरिभावाभ्युपगन्तारो विशिष्टाद्वैतिन एवेत्यत्र न सन्देहगन्धः। अर्वाचीनास्त्वद्वैतिनः परैरुक्तं सर्वं निराकरणीयमिति मूढग्रहेण जगतो ब्रह्मशरीरत्वनिराकरणे सम्भ्रमं बिभ्रति।

बौद्धतार्किकपरिवृढा वदवेदान्तसिद्धान्तविध्वसने बद्धपरिकरा अभवन्। तानभियोद्धुं प्रवृत्ताः नैयायिकाः तेषां प्रसरं निरुन्धाना अपि वेदान्तसिद्धान्तपरिपालने न श्रद्धामकुर्वन्। नापि तत्र ते समर्था आसन्। अतो वेदान्तदर्शनस्य आत्यन्तिकलोपदशा उपस्थिता बभूव। अस्यां स्थितौ गौडपादः तत्परिरक्षणाय किञ्चित् कर्तव्यं मेने। वेदान्तसम्प्रदायस्तदानीं ग्रन्थमात्रशरण आसीत्। प्रवचनकाराः प्रसिद्धा आचार्या नासन्। तस्मात् स्वबुद्धिबलेनैव उद्देश्यनिर्वर्तनं तस्य कर्तव्यमभवत्। तत्र वेदान्तविद्यासाध्यस्य मोक्षस्य

नित्यत्वोपपादनं प्रथमकर्तव्यं कष्टतमं चासीत्। क्रियासाध्या हि मोक्षः स्वर्गवदनित्य एव स्यात्। एकविंशतिदुःखध्वंसो मोक्ष इति नैयायिकाः, पुण्यपापात्मकसर्वकर्मध्वंसो मोक्ष इति मीमांसकाश्च प्रतिपेदिरे। एकैकस्मिन्नपि जन्मनि उत्तरोत्तरं शुभाशुभकर्मणां क्रियमाणत्वात् अवर्जनीयत्वाच्च उक्तोभयविधोऽपि ध्वंसोऽसम्भवीति परमार्थ एषः। अतः अज्ञानेन संसारः तत्त्वज्ञानेन तन्निवृत्तिर्मोक्ष इति एतत्परमेव वेदान्तदर्शनं भवितुमर्हतीति च गौडपादा निश्चिक्युः। सकलाशापकथा परमधत्याग इति नीत्या शुद्धचैतन्यात्मकं ब्रह्म रक्षन् विश्वमिथ्यात्वमूरीचकार। इममर्थं कारिकासु निबध्य तदनुगुणं प्रस्थानत्रयं योजयितुं इमं सिद्धान्तं लोके सर्वत्र प्रथयितुं च समर्थं कञ्चन महापुरुषमन्विष्य आस्त। तस्य प्रशिष्यः नैसर्गिकबुद्धिबलसम्पन्नः श्रुताढ्यस्तेजस्वी धीरः श्रीशङ्करः तां धुरं बभार। प्राचार्यमधन्यमनोरथं चकार। अथ लोकितप्राचीनविविधवेदान्तग्रन्थोऽपि भगवतः स्वरूपरूपगुणविभवैश्वर्यलीलादिपुष्कलश्रुतिस्मृतिशताधिगतेषु यत् किमप्यनपह्नुत्य वेदान्तदर्शनं प्रतिष्ठाप्य मोक्षनित्यत्वं चोपपाद्य सकलनिर्वाहक्षमे चिरन्तने सम्प्रदाये शिक्षां प्राप्तुं अलब्धावसरः गौडपादोपदिष्टवर्त्मनैव प्रवचनग्रन्थनिर्माणं चाकरोत्। गुरुभजने वा सम्प्रदायानुसरणे वा श्रीशङ्करस्य श्रद्धावैकल्यं न कश्चिन्मेने न कश्चिदघोषत्। नवीनसम्प्रदायनिष्ठागतस्य तस्य प्राचीनसम्प्रदायसिद्धार्थप्रतिक्षेपः अगत्या कर्तव्य आसीत्। तं निष्कम्पं चकार। श्रुतिवाक्यान्यपि हठात् स्वाभिमतार्थे योजयामास। ब्रह्मसूत्राण्यपि स्वच्छन्दं व्याचख्यौ। भूयिष्ठेषु स्थलेषु खण्डनमेव भाष्यव्यपदेशेनाकार्षीत्।

एतद्दर्शी भास्करः अतीव हृदयसंतापं भेजे। परन्तु तस्यापि चिरन्तनसम्प्रदायपरिचयो दुर्लभो बभूव। अतः स्वबुद्धिबलमात्राश्रयेण वेदान्तदर्शनं परिष्कर्तुं प्रावर्तत। तथा यादवप्रकाशोऽपि। अस्य

सकाशे चिरं विद्यार्थिभावं गतः श्रीरामानुजः अनेन गुरुभाष्याभ्यां च कृतैः वेदान्तवाक्यार्थविवरणैः अत्यन्तमत्युग्रः विपरणैः ईर्ष्यान भगवद्यामुनमुनिशिष्यमहापूर्णसेवासमधिगतप्राचीनसम्प्रदायार्थः परम सन्तुष्टः न परं बहुसहस्रसङ्ख्येभ्यः शिष्येभ्य उपदेशेन अपि तु श्रीभाष्यादिग्रन्थप्रणयनेनापि चिरन्तनं अत्यन्तसिद्धान्तं लोके पुनः प्रवर्तयामास। एषां ग्रन्थानां विशेषमित्थं वर्णयन्ति श्रीदेशिकचरणाः—

लक्ष्यं बुद्धेर्लेलिनरसनानाम्यन लानिदानं
शुद्धास्वादं किमपि जगति श्रोत्रदिव्यौषधं नः।
लक्ष्यालक्ष्यैः स्थिरजलधिवद्भाति तात्पर्यरत्नै—
र्लक्ष्मीकान्तस्फटिकमुकुरो लक्ष्मणार्योपदेशः॥

आकर्षणानि निगमान्तसरस्वतीनां—
मुच्चाटनानि बहिरन्तरपल्लवानाम्।
पथ्यानि घोरभवसञ्ज्वरपीडितानां
हृद्यानि भान्ति यतिराजमुनेर्वचांसि॥

इति। एवमुपनिषदां तात्त्विकोऽर्थः सर्वलोकवेद्यः कृतः। अस्य खण्डनमशक्यम्। न हि सूर्ये सूर्यत्ववादः खण्ड्यत इत्यस्मिन् सम्भवः। वस्तुतत्त्वे एवं स्थिते अमर्यादुष्पिशाचीग्रहपरवशः शास्त्री उच्चावचं जल्पति।

८९ उन्मत्तोक्तीनामनुन्मत्तैरुत्तरं न देयम्। तथापि शास्त्रिणः उन्मत्ततामजानन्तः केचिन्मा भ्रमिषुरिति अवश्यवक्तव्यमुच्यते। यामुनाचार्यप्रभृतीनां श्रीमद्वेङ्कटनाथस्य च अपारा भक्तिः श्रीमन्नाथमुनौ। वेदान्तगुरुपरम्परायां प्रथमत्वात्। यद्यपि ततः पूर्वं शठकोपसूरिरस्ति। तथाऽपि तस्मिन् चिरात्पूर्वं मुक्तिं गते श्रीमन्नाथमुनिः योगमहिम्ना तं साक्षात्कृत्य तदुपदिष्टं औपनिषदं तत्त्वं विज्ञाय स्वशिष्यपरम्परया लोके प्रकाशयामास। यदि नायमेवमकरिष्यत् तर्हि लोके प्राचीन-

वेदान्तविद्यासम्प्रदायस्य पुनः प्रवृत्तेरेव अभावव्यत् । अतो नाथापर्द प्रवृत्तमिदं दर्शनमित्याहुः ।

श्रीमन्नाथमुनिभिः कृतः न्यायतत्त्वाभिधानो ग्रन्थः न ब्रह्मसूत्राणां उपनिषदां वा विवरणपरः । अपि तु वेदान्तदर्शनानुगुणतया प्रमाणप्रमेयव्यवस्थापनपरो न्यायशास्त्रग्रन्थः । अक्षपादे न्यायसूत्रे वेदान्तविरुद्धांशा बहवः सन्ति । तान् विमृश्य न्यायशास्त्रपरिष्कारोऽत्र कृतः । आर्षत्वेऽपि न्यायशास्त्रस्य वेदविरुद्धांशाः स्मृत्यधिकरणन्यायेन अनादरणीया इति श्रीदेशिकचरणा आहुः । ब्रह्मसूत्राणां आर्षाणां आर्षमेव अविरुद्धमनुकूलं च व्याख्यानमस्ति चेत् तदेव ग्राह्यं, मन्वाद्यर्थवद्यथावत्, न तु विरुद्धमनार्षं च शाङ्करादिकमिति श्रु० प्र० यामुक्तम् । उभयमिदं सुसङ्गतम् । इत्थं न्यायशास्त्रपरिष्कारस्य श्रीमन्नाथमुनिभिः स्वग्रन्थेन कृतत्वेऽपि तैः कृतं वेदान्तप्रवचनं बादरायणसूत्रतत्कालस्थिततद्वृत्तिविशेषादिग्रन्थमुखेनैव श्रीमन्नाथमुनेः शिष्याः अष्टौ परिगणिताः । आत्मसिद्धौ यामुनाचार्यैर्निर्दिष्टः श्रीवत्साङ्कमिश्रः शङ्करानन्तरकालिकः न नाथमुनिशिष्यः । अथ श्रीवत्साङ्कमिश्रः सूत्राणां साक्षाद्व्याख्यानकारः, न तु द्रमिडभाष्यव्याख्यातेत्यादि प्रागुक्तम् । तदत्र 'कह' इत्युपक्रम्य असम्बद्धं बहूक्त्वा निश्चयश्चमित्युपसंहरन् तपस्वी दुर्भिनिविष्टचित्तविकारः शोच्यः ।

९० बोधायनवृत्तेः अतिविस्तृतत्वात् सम्यक्प्रचारविरहात्, सर्वत्र प्रचारे वर्तमानानामेव ग्रन्थानां कीर्तनस्याभिप्रेतत्वाच्च भगवद्यामुनमुनिः बोधायनं न निर्दिष्टवानित्युक्तम् । एतन्मतानुसारिणो ब्रह्मनन्दिद्रमिडाचार्ययोः निर्देशादेव तस्मिन्नपि उपकारस्मृतिः कृतैव । अथात्र पूर्वं षोडशे पर्वणि कृतां अद्भुतां काञ्चन कल्पनां उपबृंहयन् वदति—आत्मसिद्धौ 'द्रमिडभाष्यकृता' इति निर्दिष्टः न ब्रह्मनन्दिवाक्यभाष्यकारो द्रमिडाचार्यः । द्रमिडाचार्य इत्येव निर्देशे कर्तव्ये द्रमिडभाष्यकृदिति तस्य

निर्देशायोगात्। किन्तु शठकोपकृतं यद् द्राविडगाथासहस्रं तद् द्रमिडभाष्यम्। तस्य कर्ता शठकोप एव द्रमिडभाष्यकृत्। अस्मिंश्च महती भक्तिर्यामुनाचार्यस्य। प्रतीकग्रहणपूर्वकं ब्रह्मसूत्राणां विवरणाकरणेऽपि तत्तात्पर्यस्य गम्भीरतया विवरणकरणात् गाथासहस्रं तद्भाष्यं भवतीति स मेने। 'विवृतानि च तानि (ब्रह्मसूत्राणि) परिमितगम्भीरभाषिणा द्रमिडभाष्यकृता' इति ह्याह यामुनाचार्यः। सूत्राणां साक्षाद्भाष्यमिदमिति हि प्रतीयते। वाक्यभाष्यग्रहणे वितथवादी स्याद्यामुनाचार्यः। यदि च वाक्यभाष्यकार एवेहाभिप्रेतः स्यात् तर्हि तदीयं वाक्यं किञ्चिद् ग्रन्थे उदाहृतं स्यात्। तदभावात् स नाभिप्रेत इति स्पष्टम्। शठकोपवाक्यमपि एकमपि नोदाहृतमिति युक्तम्। तस्य द्रविडभाषामयस्य संस्कृतग्रन्थे उदाहरणानौचित्यात्—इति।

अस्मत्सम्प्रदायबाह्यानां बुद्धिवैपरीत्यस्य ईदृशमुदाहरणान्तरं मृग्यम्। केषुचिदपराधेषु जिह्वाच्छेदं कशाघातं च दण्डं विदधति। दैवात् एवमादिकिञ्चित्करणे वयमत्यन्तमशक्ता इति प्रमोदामहे। अन्यथा हि 'यथाशक्ति निगृह्णीयात् देवतागुरुनिन्दकान्' इति तादृशे घोरे कर्मणि प्रवर्तयितुं पर्याप्तपारुष्या इमा दुरुक्तयः। ननु भो द्रमिडाचार्य इति वक्तव्ये द्रमिडभाष्यकृदित्युक्तिर्भावगर्भेति गाढमवगाह्य उच्यते। 'रामानुजभाष्यकारः' (६६ पु) इति, 'रामानुजभाष्यकारैश्च' (१०६ पु) इति च वदतस्तव को भावः। किं रामस्यानुजं भाष्यं किञ्चित्। तत्कर्तेति। द्रमिडभाष्यमिति ग्रन्थस्य रूढं नाम। अतस्तत्कर्तृत्वेन आचार्यं निर्दिशन्ति। भवानीपतिः मृडानीपतिरित्यादिवत् तत्र कुकल्पनायाः कोऽवकाशः? बाधितं च शठकोपार्थत्वम्। न हि शठकोपगाथासहस्रं कस्यचिन्मूलग्रन्थस्य भाष्यमित्यस्मत्सम्प्रदाये कैश्चिदिष्यते। अपि तु वेद इति उपनिषदिति च। तथा च नाथमुनिकृतः मधुरकविस्तुतिश्लोकः—

अविदितविषयान्तरः शठारेरुपनिषदामुपगानमात्रभोगः ।

इति । श्रीशठकोपस्तुतिश्लोकश्च—

भक्तामृतं विश्वजनानुमोदनं
सर्वार्थदं श्रीशठकोपवाङ्मयम् ।
सहस्रशाखोपनिषत्समागमं
नमाम्यहं द्राविडवेदसागरम् ॥

इति । एतेन 'तदूर्ध्वतनो यामुनस्तु शठकोपभक्तोऽपि सन् 'उपनिषत्' इति उक्तोपगमतिप्रसङ्गादनुचितं मन्वान' इति पामरजल्पितं परास्तम् । तत्पितामहेनैव तथा घोषणस्य कृतत्वात् । एवंविधेषु विषयेषु औचित्यानौचित्यविवेचने मादृशप्रायाणामनधिकारित्वात् । यदपि साक्षाद्भाष्याग्रहणे वितथवादी स्यादाचार्य इति तद् ब्रह्महत्याशीलस्य मशकवारणसंत्रासकल्पम् । आचार्याणां प्रतारकत्वमुच्यते । अत्र तस्य वितथवादित्वापत्तेः का भीतिः । 'सप्तमे पर्वणि 'छान्दोग्योपनिषद्भाष्यकार' इति नृसिंहाश्रमोक्तौ 'अत्र छान्दोग्योपनिषद्भाष्यमिति पदेन 'छान्दोग्योपनिषद्वाक्यभाष्यमित्यर्थो ग्राह्यः' इत्युपादिष्टवता त्वया आत्मसिद्धौ 'तानि च विधुतानि' इत्यत्र तथाऽर्थग्रहणासम्भवादिव वितथवादित्वापत्तिं कथमुद्भाव्यते । इदं हि नृशंसत्वं नाम । अथ यत् द्रमिडभाष्यवाक्यं न किञ्चिदुदाहृतमिति, उदाहरणीयमिति को निर्बन्धः । अथवा सूत्रेषु, वृत्तिषु, वाक्ये, तद्भाष्ये च स्पष्टमुक्तानेवार्थान् उपेक्षमाणाः खण्डयन्तश्च अवमन्यन्ते परे । तर्कबलमेवाश्रित्य विपरीतसिद्धान्तं साधयितुमुद्युञ्जते । तान् प्रति किं पूर्वाचार्यग्रन्थोदाहरणेन । तर्कबलेनैव तान् निराकरिष्यामीति यामुनाचार्यो मेने । अनेनैव हेतुना द्राविडवेदसूक्तीनामपि अनुदाहरणम् । न तु द्राविडभाषामयत्वेन । संस्कृतेन परिवर्त्य उदाहर्तुं शक्यत्वात् । तथा करोति च श्रीवेङ्कटनाथगुरुः यातयामं गतरसमित्यत्र तात्पर्यचन्द्रिकायाम्—

एतेन परमात्मस्य भक्ताङ्घ्रिरेणोर्भाषागाथाऽपि निर्व्यूढा। एवं हि सा संस्कृतेन विपरिणस्यते—"दिव्यैरवेत्रविभवात् यदि व्रचन्ति माध्वीमनोज्ञतुलसीक यदीति चाहुः। उनक्रिया अपि परानपि कारयन्तो भुक्ताधिकं ददति चेन्ननु तन् पवित्रम्।"

इति। 'यदन्त्या मीमासा श्रुतिशिखरतत्त्व व्यवृणुत। तदादौ गाथाभिः' इत्यभियुक्तश्लोकेनापि ब्रह्ममीमासया निर्धारिता य. उपनिषदर्थः स गाथाभिः प्रतिपाद्यत इति उपनिषदर्थप्रतिपादकत्वमेवाच्यते, न तु ब्रह्मसूत्रव्याख्यानरूपत्वम्। अतः अत्रापि 'सम्भावने'त्युपक्रम्य 'मनागपि नाक्षेपावकाशः' 'असन्दिग्धमावेदयती'त्युपसंहारः शास्त्रिणः अस्वस्थ-चित्ततामेव प्रकाशयति। आत्मसिद्धौ द्रमिडभाष्यकृतेत्यत्र 'भाष्यकृता' इत्येव पाठो दृश्यते। अत्र शास्त्रिणः कुकल्पनाया नैवावकाशः।

९१ महत आचार्यान् प्रति अन्तरमालः पदेपदे परिवहनः इयतः क्रोधस्य द्वेषस्य च मूलकारणमत्र प्रकटयति शास्त्री। श्रीदेशिकः शत-दूषण्या 'अतः तद्वचनकारिषु व्यासादिसमाख्या सङ्केतेन प्रक्षिप्य धर्म-सूनुरिव सत्यवादी भव' इत्याह। अतः ईदृशं दोष न पर देशिके अपि तु सर्वेष्वेव विशिष्टाद्वैताचार्येषु वक्ष्यामीति सङ्कल्प्य तदनुसारेण अस्मिन् ग्रन्थे सर्वं वदामीति वदति। मार्जारः किल व्याघ्रं दृष्ट्वा स्वाङ्गेषु तापा-नकरोदिति कश्चिदाभाणकः। सोऽत्र स्मर्यते। शतदूषणीशातनं कृत-वानस्मीति लिखति। द्रविडात्रेयदर्शनग्रन्थादेव शास्त्रिणो वैदुष्य विमर्श पाटव आर्जव प्रामाणिकत्व लेखनचातुर्यं सर्वं सुव्यक्तम्। अथापि तद् दृष्टिपथमागच्छेच्चेत् कर्तव्यमवश्य करिष्याम.।

बोधायनवृत्त्यपह्नवस्य स्वेन साभिनिवेशं क्रियमाणस्य कारणान्तर-मपि ज्ञापयति। शाङ्करे सूत्रभाष्ये बहुषु स्थलेषु बोधायनवृत्तिविरोधः श्रीभाष्यकारैः प्रदर्शितः। स विरोधः परिहर्तुमशक्यः। नास्तीति वक्तु

न शक्यते। अत "बोधायनवृत्तिरेव नासीत्। भवद्भिः कल्पिता काचन वृत्तिः सा। तद्विरोधो न परिहरणीयः" इत्युक्त्वा सङ्कटादात्मानं मोचयिष्यामीत्यध्यवस्यति स्म। अत गम्भीरमिव लिखति—

एवं च यानि वृत्तिग्रन्थवचनानि सप्त सप्तसु स्थलेषु रामानुजभाष्ये निर्दिष्टानि तानि नाथशिष्यश्रीवत्साङ्कमिश्रकृतवृत्तिग्रन्थस्थान्येवेति न तद्विरोधः परिहरणीयोऽस्माकम्।

इति। साक्षात् सूत्रकारमेव खण्डयति शङ्कर आनन्दमयाधिकरणे गुहाधिकरणे इतरव्यपदेशाधिकरणे कार्याधिकरणे चेत्युक्तम्। अतो वाचस्पतिस्पष्टोक्तिरीत्या श्रुतविरोधात् सर्वमिदमन्यथाकरणं सम्यगिति शङ्करा मन्यत इति ऋजुप्रकृतिभिरङ्गीकर्तव्यम्। तदनुगुणहृदयगाम्भीर्यस्य धैर्यस्य च विरहात् परपरिवादमार्गेऽवतीर्णः शास्त्री मलिनमात्मानं मलिनतरीकरोति।

६२ "वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा" इति वृत्तिकारवाक्यमुदाहृतं श्रीभाष्ये। इदं शङ्करानन्तरकालिकस्य कस्यचिद् वाक्यम्, न तु प्राचीनवृत्तिकारस्य, इति कथमपि प्रदर्शनीयमिति प्रबला आशापिशाची शास्त्रिणं जग्राह। अतो विलक्षणां स्वप्रतिभा सोऽत्र व्यापारयन्नाह—"'नन्विह कर्मावबोधानन्तर्यं विशेषः' इति भगवत्पादभाष्ये आशङ्क्य निरस्तोऽर्थः प्राचीनः साम्प्रदायिकः स्यादिति भ्रान्त्यैव भास्करेण भगवत्पादप्रद्वेषिणा स्वग्रन्थे निबद्धः—'तस्मात् पूर्ववृत्तात् धर्मज्ञानादनन्तरं ब्रह्मजिज्ञासेति युक्तम्' इति। अत्र ज्ञानपदस्थाने अधिगमपदं जिज्ञासापदस्थाने विविदिषापदं च घटयित्वा भास्करभाष्यपङ्क्तिरेव बोधायनस्वाभिमतनाथशिष्यश्रीवत्साङ्कमिश्रवृत्त्यावनूद्यते 'वृत्तात् कर्माधिगमादनन्तरं ब्रह्मविविदिषा' इति, भास्करोक्तार्थः सम्प्रदायागतः स्यादिति भ्रमेण" इति। एवं भास्करं श्रीवत्साङ्कमिश्रं यामुनाचार्यं भगवद्रामानुजं अन्यांश्च भ्रान्तान् अयोग्यान् घोषयति शास्त्री स्वयमयो

ग्यानामग्रताम्बूलग्राही सन् । 'नन्विह कर्मावबोधानन्तर्यं विशेषः' इति शङ्करेण स्वयमाशङ्कितोऽर्थः, न तु साम्प्रदायिक इति. तस्य साम्प्रदायिकत्व असन्दिग्ध सुनिश्चित च सम्यग् जानन्नपि स्वान्तरात्मान वञ्चयन् लोकवञ्चनार्थं लेखिन्या मुद्रयित्वा प्रकटयति, अभीतोऽनृतवादात्, अभीतो दैवात् । ८७ तमे पर्वणि शङ्करात् पूर्वं बहवा वृत्तिकारा आसन्, इति निरूपणाय अनेन

पञ्चपादिकायामपि 'तथा च वृत्त्यन्तरे वर्णितम्' 'अन्यैरपि स्ववृत्तौ वर्णितम् ।

इति पञ्चपादिकाग्रन्थ प्रदर्शितः । तत्र 'तथा च वृत्त्यन्तरे वर्णितम्' इत्यतः पर " आनन्तर्यवचनोऽथशब्दः । अधिगतानन्तरम् ।" इत्यस्ति । "अन्यैरपि स्ववृत्तौ वर्णितम्" इत्यतः परं "अथेति पूर्वप्रकृता धर्मजिज्ञासामपेक्ष्य अनन्तर ब्रह्मजिज्ञासाप्रारम्भार्थः ।" इत्यस्ति । एव ब्रह्मजिज्ञासासूत्रे अथशब्दः कर्मविचारानन्तर्यपर इत्येतत् चिरन्तनसम्प्रदायसिद्धम् । अस्य सम्प्रदायस्य प्रवर्तकः बोधायनः । तस्योक्तिः—वृत्तात् कर्माधिगमादनन्तर ब्रह्मविविदिषेति इमा बुद्धौ निधायैव 'अधिगतानन्तर' इत्येको वृत्तिकार आह । 'पूर्वप्रकृता धर्मजिज्ञासामपेक्ष्य अनन्तर' इत्यपरः । "पूर्ववृत्तात् धर्मज्ञानादनन्तर" इति भास्कर. । एवमेषु किञ्चित् किञ्चिद्विपर्यस्य स्वोक्त्या तमेवार्थं वदत्सु श्रीभाष्यकृतः तामेव शब्दानुपूर्वीमुदाजह्रुः । इत्थ चिरन्तनसम्प्रदायसिद्धं अथशब्दस्यानन्तर्यार्थत्व मुक्तिसाधनतया स्वाभिमते ज्ञाने कर्मनैरपेक्ष्यवादी शङ्करः अनुचित असङ्गत च मन्यमानः प्रतिक्षिपति । शास्त्री तु प्रामाणिकाः पर्यालोचयन्तु, सहृदया. पश्यन्तु इति निष्पक्षपातत्वतत्त्वोपलम्भवैयग्र्यश्रमसात्त्विकमात्रादिक स्वस्य 'पदे पदे घोषयन् स्वकीय विप्रलम्भकत्व न कोऽपि ज्ञास्यतीति गाढविस्रम्भः अवशात् स्वस्वरूपमिह सम्यगाविश्चकार । सूत्रभाष्ये कृता शङ्का प्राचीन-

वृत्तिमाराध्यार्थविपर्येति पञ्चधा दृश्याया स्फुटमुच्यत इति जानन्नेव भाष्य कारेण स्वयं कृतेयं शङ्केति शुद्धमनृतं वदन् परेषु भ्रान्तिं विप्रलिप्सां च आरोपयन् अयं शास्त्री कः इति वाच्य इति स्वयं प्रामाणिकाः परिशील यितुमर्हन्ति ।

६३ अत्यन्तजुगुप्सावहाः कल्पना पुनरप्यत्र प्रकाशयति । ताः सर्वा पूर्वं कृतैरेव निरूपणैर्विध्वस्ता इति न किञ्चिदिह वक्तव्यं पश्याम । श्रीवत्साङ्कमिश्रः द्रमिडभाष्यविस्तृतव्याख्यातृत्वेन यामुनाचार्यैः कथित इति भ्रमं पुनरत्र प्रकटयति । द्विः कीर्तितं श्रीवत्साङ्कमिश्रं एकत्र 'श्रीकण्ठ' इति पाठं परिष्कुर्वन् अन्यत्र नाथमुनिरेव श्रीवत्साङ्क मिश्र इति प्रमत्तैर्लिखित इति कल्पयञ्च अभावसात् करोति । न्यायतत्त्वं नाम नाथमुनिग्रन्थः न्यायशास्त्रग्रन्थः वेदान्तदर्शनानुकूलतया प्रमाण प्रमेयव्यवस्थापक इत्युक्तम् । अस्येदृशं स्वरूपं श्रीदेशिकचरणैः न्याय-सिद्धाञ्जनादिषु ग्रन्थेषु असकृदुदाहृतैस्तद्वाक्यैरपि स्फुटमवगम्यते । इदं न्यायतत्त्वं शठकोपकृतद्रमिडभाष्यस्य विस्तृतं व्याख्यानमिति अयं महानुभावः अत्यन्तमतिसमञ्जसं नितान्तात्यन्तनिकामप्रकामरमणीयं च वावदीति । ज्ञानसम्बन्धनाम्नः शिवभक्तस्य द्राविडगाथामालिकैव द्रमिडभाष्यम् । तस्य विस्तृतव्याख्यानां गौडदेशं गत्वाऽधीत्य निवृत्त, तेन हेतुना गौडपाद इति प्रथितो द्राविडः कश्चित् । तदुपजीवनेन स्वग्रन्थानकरोत् शङ्कर इत्ययो महानुभावः कथयति । तदेव परिशीलयतु । एतदानुगुण्येन सर्वपरिवर्तने सर्वकल्पने च सति इदं तत्त्वं कुतो न स्यात् ? अत्रापि तर्कयाम इत्युपक्रमः । तत्त्वं सर्वे परिशीलयन्तु, इति उपसंहारः ।

६४ द्रमिडभाष्यकृतेति पाठेऽपि द्रमिडभाष्यमिति शठकोपगाथासहस्रं नैव मेने यामुनाचार्यः । गाथाः पठन् यः कोऽपि इदं भाष्य मिति भ्रममपि न प्राप्नुयात् । अयमुन्मत्तः तत्स्वरूपस्य अत्यन्तानभिज्ञः

तथा स मेने, इति कल्पयित्वा प्राक् बह्ववोचत्। अथाद्य यामुनाचार्य यत् तथा आह तन्न युक्तम्। स्वतन्त्रग्रन्थ एव शठकोपद्राविडग्रन्थः, न ब्रह्मसूत्रभाष्यमिति तस्य खण्डनं करोति। अन्यदप्याकुलं बहु जल्पति।

उभयमीमांसेत्यत्र मीमांसाशब्दोऽवयवपरः। उभयी मीमांसेति। उभयविधा मीमांसेति वा विवक्षा। अत एव हि कर्मकाण्डः ब्रह्मकाण्ड इति व्यवहारः। अत एव चोभयोरैकशास्त्र्यम्। नैव उभयवेदान्त इत्यत्र। न हि संस्कृतकाण्डः द्राविडकाण्ड इति व्यवहारोऽस्ति। अतोऽत्र पार्थक्यमेव, उपनिषदामन्योन्यमिव तत्र ऐकप्रबन्ध्यस्य कः प्रसङ्गः।

गुरुपरम्पराश्लोके ब्रह्मसूत्रकारव्यासादीनामप्रवेशे न्यूनतां पश्यति। गुरुत्वं ग्रन्थकारत्वं च नैकम्। गुरुपरम्परायां अन्येषां कथं प्रवेशः स्यात्। अधीयमानमहाग्रन्थकारा अपि वन्दनीया एव। वन्द्यन्ते च। "सम्यङ् न्यायकलापेन महता भारतेन च। उपबृंहितवेदाय नमो व्यासाय विष्णवे।" इति श्रु० प्र० आरम्भे स्थितः श्लोकः श्रीभाष्याध्ययनकाले सर्वैरेवानुसन्धीयते। 'विभूषणं मौनमपण्डितानां' इत्येतद् विस्मृत्य शब्दायते शास्त्री।

९५. पूर्वं ६१ तमे पर्वणि अद्वैतभाष्ये प्राचीनवृत्तिग्रन्थविरोधान् श्रीभाष्यकारैः प्रदर्शितान् प्रति श्रीवत्साङ्कमिश्रवृत्तिविरोधा इमे नास्माभिः परिहरणीया इति गम्भीरमुक्तवानपि "कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः" इत्युक्तरीत्या पुनस्तत्र चापलं करोति। 'संहितमेतच्छारीरकं जैमिनीयेन षोडशलक्षणेनेति शास्त्रैकत्वसिद्धिः' इति वृत्तिग्रन्थबोधितं पूर्वोत्तरमीमांसयोरेकशास्त्रत्वं अभ्युपगतमेवास्माभिः। अतो न तद्विरोध इत्याह। एवं वदन्नेव 'भगवत्पादभाष्यटीकयोरपि प्रौढ्या तदभ्युपगतमेव' इत्युपस्करोति। परमार्थत एव तत्र तदभ्युपगतम्। अप्पय्यदीक्षितः तद्विपर्यासे अभिनिविष्टः। एवमेकशास्त्रत्वे स्थिते 'अथ कर्मविचारानन्तरं ब्रह्मजिज्ञासा' इत्यानन्तर्यार्थत्वमथशब्दस्य स्वरसतः

सिद्ध्यति। इदं तु नेष्टम्। अत इदं प्रतिषेधन्नाह—ऐकशास्त्र्यस्याभ्युपगमेऽपि न कर्मविचारानन्तर्यस्य ब्रह्मविचारे प्रसक्तिः। 'भाष्योक्तरीत्या ब्रह्मविचारे कर्मानुष्ठानस्यापेक्षानियमाभावेन तदप्रसक्तेः' इति परिमले व्यक्तम्।—इति। अत्र परिमलवाक्ये कर्मानुष्ठानस्येत्येतत् कर्मविचारस्येति वा कर्मावगमस्येति वा शोधनीयमिति भाति। 'धर्मजिज्ञासायाः प्रागप्यधीतवेदान्तस्य ब्रह्मजिज्ञासोपपत्तेः' इति भाष्यस्यैवात्र अभिप्रेतत्वात्। ब्रह्मविचारे कर्मानुष्ठानापेक्षायाः केनाप्यनुक्तत्वाच्च। एकशास्त्रत्वे अथशब्दस्य कर्मविचारानन्तर्यार्थत्वं स्वरसतः प्राप्नोति। परन्तु करिष्यमाणस्य ब्रह्मविचारस्य नियमेन तदपेक्षाविरहात् तदानन्तर्यपरत्वं परित्यज्यते। कर्मविचारात् पूर्वमपि ब्रह्मविचारस्य कर्तुं शक्यत्वात् तदपेक्षा नास्तीति हि स्पष्टमेतत्। एवं प्रथममुक्तवान् परिमलकार एव अपेक्षानियममुपरि स्वयं दर्शयति—

> ननु सगुणज्ञानानन्तरं तदुपासनानिष्ठस्य कर्मानुष्ठानमपेक्षितम्। फलभूयस्त्वार्थं सहकारित्वेन तदपेक्षितं च भवति। तथैव चाचार्यैः 'अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्' इत्यधिकरणे वक्ष्यते। सगुणतदुपासनात् सगुणोपासनाफलविचारः अत्रैव शास्त्रे महता प्रबन्धेन करिष्यते। तद्विचारसाध्यं च तदनुष्ठानम्। अतः सगुणोपासनासहकारिकर्मानुष्ठानापेक्षितकर्मावबोध इति तदानन्तर्यमथशब्दार्थं कुतो न भवेत्।

इति। कर्मकाण्डोक्तन्यायापेक्षानियमं चास्मदाचार्या आहुः।—

> कोऽसावुपयोग इति चेत्। न्यायोपजीवनं तावत्। तथा हि। बाह्यान्तरानभिज्ञाप्रामाण्यनिराकरणेन प्रमाणलक्षणं तावत् कृत्स्नोपयुक्तम्। भेदलक्षणोपजीवी च गुणोपसंहारपादः। तार्तीयाश्च श्रुतिलिङ्गादयः सार्वत्रिकाः। प्रयुक्तिश्च वर्णाश्रमधर्माणां विद्याप्रयुक्तत्वाश्रमप्रयुक्तत्वादिविमर्शे निर्णीयते। गतिचिन्तायाः

पाञ्चमिकः क्रमः । कर्ता विद्याधिकारिचिन्तने विशेष्यते ।
अतिदेशादयश्च 'तदेव रूप यदमुष्य रूपम्' इत्यादिषु ।

इति शतदूषण्याम् ।

'कर्मविचारोक्तकृत्स्नन्यायसापेक्षत्वाद् ब्रह्मविचारस्य' । एतन्न्यायसापेक्षत्व सङ्कर्षसापेक्षत्व च ब्रह्मविचारे तत्र तत्र द्रष्टव्यम्'

इति श्रु० प्र० याम् । एवं ब्रह्मविचारस्य नियमेन कर्मविचारसापेक्षत्वात् शङ्करोक्त तन्निरपेक्षत्वमनुपपन्नमिति परिमलकार एवाह । अथाप्ययं भाष्यानुरोधेन अथशब्दस्य साधनचतुष्टयसम्पत्त्यानन्तर्यपरत्वमेव समर्थयन् 'यः प्रधानविचार तदपेक्षितमेव पूर्ववृत्त वक्तव्यम् । निर्गुणविषयश्च प्रधानविचारः । अतस्तदपेक्षितमेव,पूर्ववृत्तं वाच्यम् । न त्वप्रधानसगुणविचारापेक्षितः कर्मावगमः' इत्याह । अत्र कश्चिदाक्षेपः । साधनचतुष्टयसम्पन्नाः परमविरक्ताः निर्गुणैकनिष्ठाः । ते सगुणोपासनां नैव कुर्युः । ये तु इमा कुर्युः तेषा साधनचतुष्टयसम्पत्त्यभावात् अनधिकारित्वेन ब्रह्मविचारप्रसङ्ग विरहात् सगुणोपासनोपयुक्तज्ञानाभावात् तेऽपि इमा कर्तु न क्षमन्ते । तथा च सगुणोपासनविधिवैयर्थ्यप्रसङ्ग इति । अत्र दीक्षितस्य समाधानम् । ब्रह्ममीमासाविद्भ्यः उपदेशेन सगुणोपासकैः स्वापेक्षित ज्ञानमधिगन्तव्यमिति । अनया दिशया अन्ये अपि आक्षेपसमाधाने इह वक्तव्ये । ननु ब्रह्मविचारप्रवृत्ताः तत्र सूत्रनिर्दिष्टाना अन्येषा च उपयुक्ताना सुबहूना कर्ममीमासान्यायाना ज्ञानमपेक्षन्ते । कर्माङ्गोपासना विचारोपयोगितया तत्तत्कर्मतदङ्गादि ज्ञानं च । तत् तैः कथ सम्पाद्यमिति चेत् धर्ममीमासाविदां सकाशादुपदेशेनेति ।

अत्र प्रामाणिकाः पर्यालोचयन्तु । वेदार्थविचाररूपत्वेन उभयोर्मीमासयोरेकशास्त्रत्व स्वरसप्राप्त परित्यजन्ति । भाष्यटीकोक्तमपि प्रौढिवाद इति कल्पयन्ति । एकशास्त्रत्वं कृत्वाऽपि स्वरसप्राप्तं अथशब्दस्य

कर्मविचारानन्तर्यपरत्व प्रतिक्षिपन्ति। प्राचीनेषु वृत्तिकारेषु यः कश्चिदेकोऽपि स नास्ति यः कर्मविचारस्य पूर्ववृत्तत्व नेच्छति, अन्यस्य वा कस्यचित् पूर्ववृत्तत्व ब्रवीति। अद्वैतग्रन्थेषु वा, प्रतिक्षेपाय विशिष्टाद्वैतादिग्रन्थेषु वा अनुदाहरणात्। श्रीशङ्कर एकः स्वाभिमतसिद्धान्तप्रतिकूलत्वात् तथा करोति। निर्विशेषचैतन्यमेक पारमार्थिकम्। अन्यत् सर्वं मिथ्या। तद्ब्रह्मावाप्तिरेव मुक्ति। तत्साक्षात्कार साधनम्। अनयो साध्यसाधनयो क्वचिदपि कर्मणो नापयोग। प्रत्युत विरोध तत्। अत शङ्करः तद्विचारानन्तर्यरूपमर्थं साग्रह निराकरोति। एव च कर्मविचारानन्तर्यरूपाऽथशब्दार्थ अद्वैतसिद्धान्त इत्युभयमिदं परस्पर विरुद्धम्। तेन तदानन्तर्यार्थवादिन प्राञ्च सर्वे नाद्वैतिन इति अथशब्दार्थे शङ्कर प्राचीनसम्प्रदायाननुरोधी तद्विरोधी चेति स्पष्टम्। न हि उपवर्ष साधनचतुष्टयानन्तर्यमर्थमाचष्ट। न च ब्रह्मनन्दी द्रविडाचार्यो वा तमर्थं ज्ञापयामास। तस्मात् तेषा अद्वैतस्य च कृतयुगारम्भस्य तत पर कलियुगारम्भस्य च यावद् तरं तावदन्तरमिति ज्ञेयम्।

समञ्जसस्य वाक्यव्यवस्थाभावात् सुखमस्तीति भाषमाणः शास्त्री 'वक्ष्यति च कर्मब्रह्ममीमासयो रैक्यम्' जल्पति—कुत्र वक्ष्यति? को वा तद्देदेत्यादि। यत्र क्वाप्युक्तवान् भवतु। किं प्रदेशविशेषेण ज्ञातेनाज्ञातेन वा। किं नाम संहितमेतज्जैमिनीयमेति वृत्तिवाक्य सन्दिग्धार्थं, येन निर्णयाय प्रकरणापेक्षा भवेत्।

शारीरकं ब्रह्ममीमासाशास्त्रम्। शारीरः सर्वशरीरः परमात्मा। तत्प्रतिपादकत्वात्। अत्राह—'इदं सूत्रकृतोऽनभिमतम्। 'अनुपपत्तेस्तु न शारीरः' इत्यादिषु जीवस्यैव शारीरपदेन तेनोक्तेः' इति। इदमपि सूत्रकारानभिमतमेव। ब्रह्मजिज्ञासेति सूत्रणात्। शारीरजिज्ञासेति वा जीवजिज्ञासेति वा असूत्रणात्। श्रुतिविरुद्ध च। 'तस्यैष एव शारीर

आत्मा' इति परमात्मन्येव शारीरपदप्रयोगात्। अतः सूत्रेषु प्रकरणानुरोधेन कर्मकृतशरीरवद्ग्रहणेऽपि अन्यत्र असङ्कोचन्यायेन सर्वशरीरकस्यैव ग्रहणं न्याय्यम्। अन्यथा जीवमीमांसेति प्रतीतिप्रसङ्गात्। जीवस्य ब्रह्मत्वप्रतिपादकमीमांसेति कल्पनाया गौरवात्। प्रक्षालनाद्धि पङ्कस्येति न्यायात्। अद्वैतिभिर्नवीनस्वमतानुरोधेनोच्यमानस्यास्यार्थस्य प्राचीनवृत्तिग्रन्थोक्तिषु बाधितत्वाच्च। ऐतदात्म्यमिदं सर्वमित्यनेन अस्य सर्वस्य तच्छरीरत्वमर्थसिद्धम्। इदं 'यस्य पृथिवी शरीर'मिति स्पष्टमाम्नायते। अतः तस्यैष एव शारीर इति परमात्माऽभिधीयते। एतदनुसारेणैव वृत्तिकृता शास्त्रं शारीरकमिति व्यवहृतम्। अतस्तस्य जगद्ब्रह्मणोः शरीरशरीरिभावसम्बन्धत्वादित्वं स्फुटमनेन ज्ञायते। शारीरकमित्येषा शास्त्रसञ्ज्ञा प्राचीनेषु प्रसिद्धैव श्रीशङ्करेणाप्युपयुक्ता। तस्याः स्वकीयनवाद्वैतसिद्धान्तानुगुण्याय शारीरस्य जीवस्य प्रत्यगर्थाभेदबोधकशास्त्रमिति सूत्रभाष्यव्याख्यातारोऽर्थविपर्यासं चक्रुः। सूत्रकारस्तु हेयसम्बन्धस्फोरणाय जीवे शारीरपदं प्रयुञ्जानः प्रकरणादिवशात् जीवपरत्वं ज्ञास्यन्ति श्रोतारः, न परमात्मपरत्वभ्रमं प्राप्स्यन्तीति मेने।

९६ विशिष्टाद्वैतमतस्य नवीनत्वं वेङ्कटनाथ एव वदतीति प्रतिज्ञाय 'यतिप्रभृतिदृष्टं मतमिह नवीनं तदपि किम्' इति यतिराजसप्ततिश्लोकस्य प्रथमपादमात्रं पठति।

ततः प्रागेवान्यद्वद तदपि किं वर्णनिकषे।
निशाम्यन्तां यद्वा निजमततिरस्कारनिगमा-
न्निरातङ्काण्टङ्कद्रमिडगुहदेवप्रभृतयः॥

इत्यवशिष्टं पादत्रयम्। वादतो ग्रन्थतो वा विशिष्टाद्वैतं छेत्तुं अद्वैतं स्थापयितुं च अशक्ताः केचित् प्रतिपक्षिणः श्रीशङ्कररामानुजयोः कालतः पौर्वापर्यमाश्रित्य अस्मन्मतं प्राचीनं युष्मन्मतं नवीनमिति वदन्ति

आसन्। तत्र प्राचीनत्वनवीनत्वे साधुत्वासाधुत्वयो सर्वथा अप्रयोजके। न हि प्राचीना मृत्पिण्ड उत्कृष्यते, नवीन स्वर्णपिण्ड अपकृष्यत इति भवति। अत दृशनया ,प्रमाणता युक्तत्व सामीची यासामीची यविवक क्रियताम्, इति विवकजननाय प्रथमभ्युपेत्य वाद पूर्वार्धे। वस्तुतः प्राचीनत्वनवीनत्वे उक्तरात्या न स्त। विशिष्टाद्वैत हि टङ्कद्रमिडगुहदेवप्रभृतिभिरादृत स्वस्वग्रन्थेषु निबद्ध च मतम्, इति तत्त्वोद्घाटनं उत्तरार्धे। अत्रात्तराधमुपे य पूर्वार्धप्रथमपादमात्रमादाय स्वमतस्य नवीनत्व वेङ्कटनाथेनैवाभ्युपगतमिति लिखति। अनभिज्ञप्रतारणमात्रोद्देश्यम्। अपि वा मातर गच्छेम गच्छाद् देवदारिकामित्यत्र प्रथमपाद स्वार्थमनुमन्यत एवेत्येष नून वदात।

सङ्कल्पसूर्योदये नवीनत्वमुपक्षिप्तम्। न च तत्प्रतिक्षिप्तमिति ब्रवीति। यतिराजसप्ततौ कृतः प्रतिक्षेपः पयाप्त इत्यभिप्राय। अथवा 'गुरु—भद्र, किमेतै क्लिश्यत्तानै। अपरे पुनरर्धसत्त्वशिदापवादिन प्रतिक्षिप्यन्ताम्' इत्यनेन अर्थशून्यशब्दमात्रेण दूषणा नवीनत्ववादिनः इति, वस्तुता नवोनत्व नास्तीति च तत्प्रतिक्षेप कृत एव। उपरि

नाथाश्लेषसनाथनात् श्रुतिवधूवैधव्यखेदच्छिद

प्राचीना नयपद्धति यतिपतिः प्राचीकशच्छेष धेत्।

इत्यादिभिः प्राचीनत्व स्थापितमेव।

तदेव बोधायनस्य वा तदीयवृत्तिग्रन्थस्य वा अपलपितुमशक्यत्वात्, तस्य तदनुयायिबहुवृत्तिग्रन्थजातस्य चात्यन्तविरुद्धत्वात्, शङ्करसन्निकृष्टानन्तरकाले स्थितेन भास्करेण 'सूत्राभिप्रायसंवृत्या स्वाभिप्राय प्रकाशनात्' इति वस्तुस्थिते स्पष्टमभिहितत्वाच्च बादरायणोपज्ञस्य वेदान्तसम्प्रदायस्यात्यन्तमतीप गौडादिभिः स्वकपोलकल्पितमद्वैतमिति सिद्धम्। भाष्यभाष्यकारयोरप्यर्वाक् दृद्रमिडाचार्ययोरपि निर्गुणब्रह्मवादित्वे जगन्मिथ्यात्ववादित्वे च प्रमाणलेशाभावात् प्रत्युत परिणामवाद-

भगवदैश्वर्यं, रूप, जगत्कारणत्वाद्यभ्युपगमस्य तद्वाक्यैरवगम्यमानत्वाच्च तन्मतविरुद्धमेव नवीनमिदमद्वैतमित्यपि सिद्धम् ।

९७. 'यथार्थं सर्वविज्ञानमिति वेदविदां मतम्' इति श्रीभाष्यश्रीसूक्तौ वेदविदामित्यस्य व्यासार्याणां विवरणं—भगवद्बोधायननाथमुनिमिश्रादीनामित्यर्थः. इति । अत्र सम्प्रदायबाह्यत्वात् विपर्यासाभिज्ञः शास्त्री यथाशील कुकल्पनाः करोति । बोधायननाथमुन्योर्मध्ये ब्रह्मनन्दिद्रमिडाचार्ययोरकीर्तनं अनयोः विशिष्टाद्वैतसम्प्रदायप्रवर्तकत्वाभिप्रायेणैव । अत इमौ अस्य सम्प्रदायस्य पूर्वाचार्यौ न भवत इति विवरणग्रन्थेनानेन स्फुटमवगम्यत इति । अत्र तत्त्वमिदम् । उपदेशेन ग्रन्थप्रणयनेन च विशिष्टाद्वैतसम्प्रदायप्रवर्तकाना आचार्याणां परम्परे द्वे । भगवद्बोधायनोपक्रममेका । अत्र ब्रह्मनन्दिद्रमिडाचार्यश्रीवत्साङ्कमिश्रा अन्तर्भवन्ति । योगे शठकोपमुनिं साक्षात्कृत्य उपदेशं लब्ध्वा श्रीमन्नाथमुनिभिः प्रवर्तिता अपरा । अनयोरुभयोः परम्परयोः प्रथमप्रवर्तकौ द्वौ नाम्ना निर्दिश्य व्यासार्याः इतरान् आदिपदग्राह्यान् अमन्यन्त । अतोऽत्र दुर्भाषणस्य न कश्चिदवकाशः ।

९८ व्यासपूजाकाले अद्वैतिभिः द्रविडाचार्यः पूज्यते । तेन सः अद्वैतीति निश्चीयत इत्याह । व्यासः पूज्यते । किं तेन सः अद्वैती । सूत्रैस्तथाऽनवगमात् । न च द्रमिडभाष्यवाक्यादेरस्मात् तस्याद्वैतित्वं ज्ञायते । अतोऽद्वैतस्य प्राचीनत्वप्रख्यापनाय केवलं तस्य पूजेति निस्सन्दिग्धमिदम् । किञ्च ब्रह्मनन्दिनोऽपूजनात् स नाद्वैतीति निश्चितमिदम् । न च तस्य व्याख्यानकारः अद्वैती भवितुमर्हति । अतोऽयमन्यः शङ्करवत् गोविन्दपादशिष्यो वा एतद्वत् गौडपादशिष्यो वा द्रविडाचार्यः । न द्रमिडभाष्यकारः । गौडपादशिष्यपरम्पराघटकत्वात् । शङ्कराचार्य एव वा स्वाचार्यैः आचार्याभ्यां प्रशिष्याभ्यां च सह पुनः पूज्यत इति युक्तम् । शिष्यमात्रसाहित्यमेकत्र । आचार्यप्राचार्यव्यवहितशिष्यसाहित्यमपरत्र । भाष्या-

द्विग्रणयनेन वादेषु वादिनां विजयेन च सम्प्रदायप्रतिष्ठापकत्वात् स्थान-द्वयपूजा शङ्करस्य युज्यत एव। अनेनैव हेतुनाऽस्य मध्ये निवेशनमपि।

अन्यदनोक्त पूतिगन्धि। अनुवादस्याप्यनहम्।

आपूर्य वक्त्रं लशुनैर्विधाता
किं निम्बसारे कुधियामसिञ्चन्।
नो चेत् कथं वाचि ततः क्षरन्त्या
स पूतिगन्धः स च तिक्तभावः॥

इति नीलकण्ठीया उत्प्रेक्षा साधिष्ठा।

६६ अद्वैतस्थापनपरायाः शतदूषण्या स्थाने विशिष्टाद्वैतप्रवर्त-काचार्यपरम्पराकुत्सनपरा अभिनवां शतदूषणीं करिष्यामीति सङ्कल्प्य सम्बद्धमसम्बद्धं वाच्यमवाच्यं पुनरुक्तं बाधितं विप्रतिषिद्धं सर्वमुक्त्वाऽपि शतसंख्यायाः पूरणमपश्यन् कथञ्चित् पूरणाय अन्ते आचार्यवन्दनं अद्वैतदर्शनस्य सर्वोपास्यत्वप्रतिपादनं च प्रतिज्ञाय वन्दनानन्तरं

"अद्वैतदर्शनं भुवि गौडद्राविडाखिलद्विजैः सेव्यम्।"

इति सर्वोपास्यत्वमघोषत्। आन्ध्रकर्णाटिकादिद्विजसेव्यत्वव्यवच्छेदे न तात्पर्यमिति मन्यामहे। सर्वोपास्यत्वप्रतिज्ञानात्। अथापि विशिष्य गौडानेव द्राविडानेव चाभिप्रैतीति उत्तरार्धेन प्रतीयते—

"द्राविडादि द्राविडान्तं प्रथितं गौडादि गौडान्त्यम्।"

इत्यनेन। अद्वैतं गौडादि। तदुपज्ञत्वात्। गौडान्त्यम्। गौडस्य ब्रह्मा-नन्दस्य गौढम्यकारेषु चरमत्वात्। इदं प्रथितं प्रसिद्धम्। तद्वदेव द्रविडादि द्रविडभाष्यकारादि। द्रविडान्तं अप्पय्यदीक्षितान्तम्, इत्यपि प्रसिद्धिः इत्याह। प्रथमा प्रसिद्धिरस्ति। जानीमो वयम्। चरमा तु शास्त्रिमुखादिदम्प्रथमं श्रूयते। द्रमिडाचार्यस्य अद्वैतित्वस्थापनायागि-तया अयं कल्पयति। अनुपपन्ना चेयं अप्रसिद्धा प्रसिद्धिः। मूलकारं ब्रह्मनन्दिनं विहाय कथं भाष्यकारस्य आदित्वम्। न च वाक्यस्य द्रमिडभाष्यमेकं प्रस्थानमद्वैतपरम्। मतान्तरपरमन्यत्प्रस्थानमासीत्,

येन अद्वैतप्रस्थानस्य द्रमिडाचार्य आदिमत्वं । तस्मात् द्रमिडादित्वमनुपपन्नम् । तदन्तत्वमपि तथा । गौडब्रह्मानन्दान्तत्वे स्थिते ततः प्राक्तन दीक्षितमादाय तदन्तत्वकथनानुपपत्तेः । अन्यथा ततोऽपि पूर्वं विद्यारण्यमादाय आन्ध्रान्तत्वस्यापि वक्तु शक्यत्वात् । स्वसिद्धान्तानुरागातिशयकृतेन आन्ध्येन स्वोक्ता प्रथमा प्रसिद्धिरेव प्रसिद्ध्यन्तरकल्पनापरिपन्थिनीति शास्त्री न पश्यति । गौडादित्वप्रसिद्धिर्हि ततः प्राक्तनस्यादित्वकल्पनावकाशं निरुन्धे । अत एव गौडपादस्य शुकशिष्यत्वमपि केवलकल्पनामात्रम् । तथा प्रसिद्धिविरहात् । शुकस्य सर्वसिद्धान्तसाधारण्याच्च । तस्य पूजा तु व्यासपुत्रत्वात् भागवतप्रवक्तृत्वाच्च । न ह्याचार्यकोटौ निवेश्यास्य पूजा क्रियते । अतः अद्वैतस्य गौडोपज्ञत्वप्रसिद्धिबलादपि द्रमिडाचार्यस्य नाद्वैतित्वम् ।

१००. अन्तिमेऽस्मिन् पर्वणि एतद्ग्रन्थप्रधानकर्तव्यं अस्मदाचार्यदूषणं शाङ्करसूत्रभाष्ये मङ्गलं प्रति यत् तैरुक्तं तदाश्रित्य करोति । श्रीभाष्ये उपक्रमस्थौ द्वौ श्लोकौ न भाष्यत्वमर्हतः । तल्लक्षणाभावात्, इत्याक्षेपं समाधातुं प्रवृत्ताः व्यासार्याः —

> किञ्च मङ्गलाचरणं प्रारिप्सितग्रन्थाविघ्नपरिसमाप्त्याद्यर्थतया तदुपयोगीति तदन्तर्भाव्येव । शाबरशांकरादिभाष्येषु नमस्कारादर्शनादत्र नमस्कारकथनमयुक्तमिति चेन्न । नमः प्रवरगुणास्पदायेति द्रमिडभाष्ये देवतागुरुनमस्कारश्रवणात् । शाबरशांकरयोस्तु ईश्वरानभ्युपगमात् जीवब्रह्मभेदानभ्युपगमाच्च नमस्कारानादरः । अत्र तु सिद्धान्तानुरूप्यान्नमस्यात्यन्तोपपन्ना । शांकरग्रन्थोपक्रमे च व्याख्यातृभिः नमस्काराद्यभावात् कुग्रन्थत्वमाशंक्य युष्मदित्यादिग्रन्थेन प्रत्यगर्थानुसन्धानेन अर्थान्मङ्गलाचारः कृत इति परिहृतम् ।

इत्याहुः । अत्र शङ्करभाष्यदूषणं न किमपि दृश्यते । समाधानं तु-

वक्तम्। जीवस्यैव शुद्धबुद्धमुक्तस्वभावब्रह्माभेदबोधकं शास्त्रमिति प्रति पादयन् शङ्कर तद्विरोधेन न तु नन्त्रव्यभावेन भेदगमं नमस्कारकरणं ग्रन्थारम्भे अनुचितं मेने। तस्मादवश्यकर्तव्यमपि न चकारेत्येकं समाधानम्। आरम्भवाक्य प्रत्यगर्थानुसन्धानेन मङ्गलं कृतमिति व्याख्यातृभिरुक्त अपरं समाधानम्।

तत्त्वटीकायां श्रीदेशिकचरणास्तु "स च मङ्गलाचार केषुचिद् ग्रन्थेषु अदृष्टोऽपि निमित्तफलाभ्यामुन्नेय" इति प्रथमं मङ्गलमनुमेयमुक्त्वा तदनन्तरं 'अथवा शबरशङ्करयोः' इत्यादिना श्रुतप्रकाशिकोक्तं प्रथमं समाधानमभिदधु। तत परं कृतस्य मङ्गलस्य ग्रन्थे निवेशनमप्यावश्यकमिति प्रतिपादयन्तः तदुपष्टम्भकप्रदर्शनावसरे 'अत एव युष्मदस्मदित्यादौ कुमन्थत्वमाशङ्क्य प्रत्यक्तत्त्वानुसन्धानेन (स)मङ्गलत्वमाचख्युर्व्याख्यातार' इति द्वितीयमपि समाधानमन्ववदन्। परन्तु वस्तुतः इदं समाधानमयुक्तमिति मत्वा

'तच्च मन्दम्। युष्मदर्थानुसन्धानस्यैव तत्रापि प्राथम्यात्।

मध्यलघुत्वेन वह्निदैवत्यस्य रगणस्य निवेशाच्च'

इत्यग्रथन्। बहिर्ग्रन्थं मङ्गलमाचरितम्। औचित्यविरहात् ग्रन्थे अनिबन्धनमित्येव वाच्यमित्येषामभिप्रायः। तदेषामपि सूत्रभाष्यदूषणाभिप्रायो नैव लक्ष्यते। अत्र मङ्गलादर्शनात् श्रीभाष्ये दृश्यमानं मङ्गलं न युक्तमित्याक्षेपपरिहाराय तत्रापि मङ्गलमाचरितमेव। ग्रन्थेऽनिवेशनं तु औचित्यविरहात्, इत्येतावत् ते वदन्ति। तद्वयमन्तुमहम शास्त्री वृथा अपराध्नोति।

उपनिषदो भिन्ना। वेदभेदेन शाखाभेदेन च पृथक् पृथगाम्नानात्। अतस्तद्भाष्याण्यपि भिन्नान्येव। वेदान्तपदवाच्यभाष्यरूपस्य सर्वस्य एकग्रन्थत्वाभिधानं केवलमहत्त्वनिबन्धनम्। सूत्रभाष्यस्य मङ्गलवत्त्वसिद्ध्यै उपनिषद्भाष्याणां प्रथमरचितत्व, तेष्वपि तैत्तिरीयभाष्यस्य

प्राथम्य, तत्र केनापि लेखकेन लिखितस्य श्लोकद्वयस्य शाङ्करत्वमित्यादिकल्पनासाम्राज्ये परिवर्तते शास्त्री । एकस्या एव कस्याश्चिदुपनिषदः पदभाष्यं वाक्यभाष्यमित्युभयमस्ति । अतः सूत्रभाष्यस्य वाक्यभाष्यत्वमित्येतदनुपपन्नम् । यथा चायमर्थः सर्वेषां वेदान्तानामिति सूत्रभाष्यवाक्ये 'उपनिषद्भाष्यमुखेन च विवृतो योऽयमर्थः' इति शास्त्रिणा योज्यमानोऽर्थो नैव प्रतीयते । स्वकीयमुरस्कारमप्रामाणिकं नापेक्षते तद्वाक्यमिति ज्ञातुमर्हति सः । उपनिषद्भाष्याणां पूर्वप्रणीतत्वे वक्तव्ये व्याख्येयानामुपनिषदां भाष्यं प्रथमम्, व्याख्यानभूतानां सूत्राणां भाष्यं पश्चादित्युचितमिति औचित्यं हेतुतया वक्तुं युक्तम् । किमनया कुकल्पनया । उपनिषद्भाष्येषु तैत्तिरीयभाष्यं प्रथममित्यपि प्रमाणान्तराभावे शास्त्रिणः कुकल्पनैवेत्यवसेयम् । प्रसिद्धक्रमानुरोधे ईशावास्यं प्रथमम् । महत्त्वप्राधान्याद्यनुरोधे छान्दोग्यं बृहदारण्यकं वा । तैत्तिरीयप्राथम्यस्य तु कः प्रसङ्गः । यत्तु श्लोकद्वयं, तस्य भगवत्पादकृतत्वप्रत्याशा न कार्या । अद्वैतस्थापनधुरन्धरस्य, जीवस्य शुद्धचैतन्यात्मकब्रह्माभेदनिरूपणैकतत्परस्य तस्य वस्तुतो भेदगर्भस्य नमनस्य ग्रन्थारम्भे निवेशने औचित्यलेशस्यापि विरहात् । तदन्यैस्तु स्वस्य व्यवहारदशानतिलङ्घित्वपर्यालोचनेन तादृशमङ्गलनिबन्धनात् । श्लोकस्वरूपमेव अन्यकर्तृकत्वं प्रख्यापयति । पारमार्थिकं हि कारणत्वं धारकत्वं च प्रथमश्लोक आह । तृतीयपादे च पूरणक्लेशमनुभूतवता कविना एवकारो व्यर्थः प्रयुक्तः । न च श्री शङ्करे एतदुभयं सम्भाव्यते । द्वितीयश्लोके च सर्ववेदान्तव्याख्यातारो गुरवो नम्यन्ते । किं नाम शङ्कराचार्येभ्यः प्राक् सर्ववेदान्तव्याख्यातारः केचन गुरव आसन्, यानेते नमस्कुर्युः । पुस्तकस्वामिनो लेखका वा स्वयमुपनिषत्प्रतिपाद्यं कारणत्वं पुरस्कृत्य दैववन्दनं सर्वोपनिषद्भाष्यकारशङ्कराचार्यवन्दनं च कृत्वा श्लोकद्वयं पुस्तके व्यलिखन् । एतद्विवेचनासमर्थोऽयं "महिषः प्रसूतः" इति वाचं श्रुत्वा 'साधु ।

वत्स रत्न' इति सम्यो दत्तप्रतिवचनो जड इव तदुपरि बहुभूमं प्रासाद निर्मातु प्रवर्तते।

सूत्रभाष्य मङ्गल नास्तीति साधन न कस्यचित् प्रवृत्तिरित्युक्तम्। मन्यान् वाह इत तदुन्नेयमिति श्रीदेशिका। अथातो ब्रह्मजिज्ञासेति सूत्रानुस धानपुरस्सर भाष्यस्यापक्रान्तत्वात् समङ्गलत्वमिति शाखिणा उच्यमान साध्वेव स्यात् यदि भाष्यमेतदनुमन्येत। तत्त नैतदनुमन्यते। शाबरे अथातो धर्मजिज्ञासेति सूत्रपाठानन्तरमेव 'लोके येष्वर्थेषु' इति भाष्योपक्रम। तत्र सूत्रपाठ एव मङ्गलमिति सम्भवति। शाङ्करे तु उपोद्घातं समाप्य तदनन्तर व्याचिख्यासितस्य वेदान्तमीमांसाशास्त्रस्य इदमादिम सूत्रमित्यवतरणिका दत्वैव सूत्रपाठ। अतो न तत्सम्भवः। उपोद्घातात्पूर्वमेव इद सूत्र पपाठेति चेत् इदं सूत्रमेव पठितम्। न तु शुक्लाम्बरधर श्लोकादिकमिति कथ निश्चयः? 'अनालोच्यैव यत् किञ्चि दसम्बद्ध वदत किमुत्तर देयम्' इति श्रीमद्वेङ्कटनाथ प्रत्याह। 'यदन्तरं वायसवैनतेययो' इत्युक्तमन्तर स्वपरयोरेव तपस्वी न वेद।

अथ यत् 'युष्मदस्मत्' इत्यत्र प्रत्यगर्थानुसन्धानात्मक मङ्गलमस्तीति, तद्देशिका न रोचयन्त इत्युक्तम्। भाष्य मङ्गलयुक्तमेवेति पक्षद्वयेऽपि समानम्। उन्नेयमेव मङ्गलम्। न प्रत्यगनुसन्धानरूप तत्। प्रथमश्रुतेन युष्मत्पदेन सर्वोपप्लवस्यैवाशुभस्योपस्थापनात्, इत्येते वदन्ति। 'निष्प्रत्यूह मुपास्महे' इति मुरारि श्लोके निष्प्रत्यूहपदवत् अखिलपद अशुभव्यावृत्त बोधयत् न मङ्गलविघाताय भवति। प्रकृत युष्मत्पदं तु प्रथमश्रुत हेयमुपस्थापयति। निवर्तनायैव एवदुक्तावपि अस्य प्रथमोपस्थितिन शोभनेति मन्यन्ते। अविनीतः शास्त्री

अखिलहेयप्रत्यनीक निखिलकल्याणगुणाकरो भगवान्' इति भगवदनुसन्धानस्थलेऽपि हेयस्यैव प्रथमानुसन्धानात्र मङ्गला चरण सम्पद्येत।

इत्युद्धृतं लिखति। यदि ग्रन्थारम्भे क्वचिदेवमुच्येत, निश्चित तत् न सम्पद्येतैव मङ्गलम्। श्रीमद्गीताभाष्ये प्राचार्यवन्दनात्मकमङ्गलाचरणा-नन्तरमपि "श्रियः पतिर्निखिलहेयप्रत्यनीक" इति ग्रन्थमारभते भगवान् भाष्यकारः। शरणागतिगद्ये च श्रीप्रपत्तितदुत्तरप्रार्थनिवन्धनानन्तर-मेव 'अखिलहेयप्रत्यनीककल्याणैकतान' इति भगवत्प्रपदनमारभते। सर्वतन्त्रस्वतन्त्र श्रीसूक्ति गौरवमजानन् शास्त्री विवृत्य वृतात् आत-पत्रात् ग्रामीणशकटवृषभ इव सम्भ्रान्तः अपथे दूर धावति। युष्मत्प-दस्य हेयोपस्थपकतया अमङ्गलत्वे स्थिते वह्निदेवत्यरगणरूपत्वमपि तत्राभ्युच्चययुक्ततया कथितम्। अग्निमीले इत्यादौ तु अग्रनयन समर्थ-महाप्रभावशालि देवताविशेषस्मरणात्मकोत्तममङ्गलेन सर्वक्षुद्रदोषनि-वृत्त्या रगणरूपत्व न गणनीयम्। 'मा निषादेति न ग्रन्थारम्भश्लोकः। ननु स एव लौकिक श्लोकेषु प्रथमः। रामायणे मध्ये निबद्धोऽपि स एव हि वाल्मीकिवदनात् प्रथम निर्गतः, इति चेत् तर्हि मानिषादेति महालक्ष्मीनिवासभूतवक्षःस्थलस्य भगवतः परममङ्गलस्योपस्थापनेन 'मा' इत्यनेनैव महालक्ष्म्याः मङ्गलदेवताया उपस्थापनेन च सर्वाशुभ-निवृत्ते सिद्धत्वान्नानुपपत्तिः काचित्।

> भगवत्पादाना भाष्य निःश्रेयसकामैरुपास्यम्। अद्वैतानुभवश्च सम्पादनीयः। तेन परां च शान्तिमृच्छेत्।

इत्यव्युत्पन्नवाक्येन दूषणपुस्तकमवसाययति शास्त्री। उपास्यं, 'सम्पाद-नीयः, इति बहुकर्तृकः कर्मणि प्रयोगः। अथ ऋच्छेदिति अत्र तैक-कर्तृकः कर्तरि प्रयोगः। अतोऽव्युत्पन्नता ब्रूमः। अतिक्षुद्रमेतत्। नायं दोषः अस्माकमुद्भावनार्हः। अथापि एवमेत लेखयन् सर्वेश्वरः 'तानह द्विषतः क्रूरान्' इति स्वयमेवोक्तरीत्या आसुरीषु योनिषु क्षेपायैव एवमेत ग्रन्थं लेखयामासेति इद स्खलितं सूचयतीति ज्ञापनाय इदं प्रदर्शनीय-मभूत्। आस्तामेतत्। निश्श्रेयसकामै. भगवत्पादाना भाष्यमुपास्य-

मित्याह। इद अथ अन्या वा अद्वैतज्ञो महात्मा सम्यङ् निरूपयेचेत् अस्माकं परम सन्तोषः स्यात्। ससारनिवृत्त्यनन्तर यद् भवति तद् भवतु। तन्निवृत्तिः निःश्रेयसमित्यत्र नास्ति विप्रतिपत्तिः। तत्कामस्य कथ मुपकरोति इद भाष्यम्। एकजीववादे शुकवामदेवादीन् पूर्वमेव मुक्ततया प्रसिद्धानपि अमुक्तान् करोति। तदास्ताम्। त्व असंसारि शुद्धचैतन्य मिति श्रावणं बाधयति। प्रत्यक्षमह संसार्यस्मि। कथमससारीति स पृच्छति। भ्रमसिद्धोऽयं ससारः न वस्तुसन्। अतस्त्वमससार्येवेत्युत्त रम्। कस्य भ्रम इति पुनः प्रश्न। यस्त्वं पृच्छसि तस्य त इत्युत्तरम्। अहमसंसार्यात्मा उक्त। कथ मे भ्रम इति पुनः प्रश्न। एव प्रबोधे नास्ति कस्यचिद् भ्रम इत्युत्तरम्। अनेन प्रष्टुर्स्समाधानं भवति। पूर्वं भ्रम आसीत्। स पश्चान्निवृत्त इति वाऽभिप्राय। पूर्वमपि नासीदिति वा। आद्ये भ्रान्तः ससार्येवायम्। अहमसंसार्यास्मीति प्रत्यक्षबाधितमनुसन्धानं नैव भवेत्। अन्त्ये नित्यमुक्तोऽयम्। न मुक्तिः काम्या साध्या वा। नित्य सिद्धत्वात्। नापि तत्साधनमन्वेषणीयम्। अनुष्ठानस्य का कथा। अत्र भाष्य किं ब्रवीति? इदमेव ब्रवीति, नान्यदित्याह तत्र भवान् वाचस्पत —

परमार्थस्तु न विभ्रमो नाम कश्चित्। न च ससारो नाम। किन्तु सर्वमेतत् सर्वानुपपत्तिभाजनत्वेन अनिर्वचनीयमिति युक्तमुत्पश्याम। तदनेनाभिसन्धिनोक्तम्—यथैव प्रतिबुद्धोऽसि नास्ति कस्यचिदप्रतिबोध इति। अन्येऽप्याहुः—'यथाद्वैते न लोपोऽस्ति मुक्त एवासि सर्वदा' इति।

इति आत्मेति तूपगच्छन्तीत्यत्र। अद्वैततत्त्वमिह निस्सन्देह सुस्पष्ट प्रतिपादितम्। मुमुक्षया वेदान्तश्रवणे प्रवृत्तिः। श्रवणनिश्चिततात्पर्या वेदान्ता किं वदन्तीति चेत् वस्तुवृत्त्या नाहस्य तदधीनसंसारस्य चाभावात् नित्यमुक्त एवात्मा। मुक्तिकामना वा तदर्थ प्रवृत्तिर्वा न

कर्तव्या । तर्हि शास्त्राणि किमर्थं मुक्तिसाधनमुपदिशन्तीति चेत् शास्त्राणि, तत्कृता उपदेशाः, सर्वमिदं मिथ्या । सर्वमनुपपन्नमनिर्वचनीयम् । अत एवात्मनो नित्यमुक्तत्वे लोकव्यवहारः सर्वः किंहेतुक इत्यादि-प्रश्नानामनवकाशः । सर्वस्यानुपपन्नत्वेन अयं हेतुः अयं स्वभावः इत्यादेर्निर्वक्तुमशक्यत्वात् । अनुपपन्नतैकस्वभावे उपपत्त्यन्वेषणस्यायोगात् । ननु वस्तुतत्त्वे एवं स्थिते शास्त्रमेव व्यर्थमिति चेत् काम तथा । अथ कथं तदादर इति । स्वप्नवत् । एवं च अद्वैतं न निःश्रेयसार्थम् । तस्य नित्यप्राप्तत्वात् । न त्रिवर्गार्थम् । साक्षाद्विरोधित्वात् । वध्यघातुकभाव एव हि लोकस्याद्वैतस्य च सम्बन्धः ।

इत्थं निष्फलमद्वैतमथवा सप्रयोजनम् ।
इतरैः कलहार्थत्वाज्जीविकालम्भनेन च ॥

न च शक्यमिदं वक्तुं विशिष्टाद्वैतदर्शने ।
ऐहिकामुष्मिकश्रेयोहेतुभक्तिविवर्धने ।'

भगवद्गुणचिन्तोत्थपरमानन्ददायिनि ।
अस्मिन् कालेऽपि सर्वेषां प्रपत्त्या मुक्तिसाधने ॥

सर्वेषामपि मानानां न्यायानामपि सर्वशः ।
श्रुतीनामपि सर्वासामेकानुग्रहभाजने ॥

इत्युक्तमन्तरं किञ्चित् स्वपक्षपरपक्षयोः ।
दैवाद् भीतेन ऋजुना सौजन्ये दत्तदृष्टिना ॥

सात्त्विकदूषणोपः
शान्तिकृतः स्वात्मदूषणैकफलः ।
दर्पादिह मुष्ट्यभिघातो
मुष्टिरुजाहेतुरभिहन्तुः ॥

अज्ञानविप्रलिप्साकामक्रोधभ्रमोपहतबुद्धेः ।
दूषणयत्नो महता मलिनीकरणोद्यमो विफलः ।

विहाय तृष्णां परदूषणेषु
तत्त्वोपलम्भेषु निधाय दृष्टिम् ॥
विमर्शमार्गे प्रतिपद्यते यः
सभाजनीयः स सतामतीव ॥

---

# अनुबन्धः २.

## (भूमिका)

शतसङ्ख्येषु पर्वसु विस्तरेणोक्तान् अपार्थान् सङ्गृह्णन् काञ्चिद् 'भूमिका' लिखितवान् शास्त्री । तत्रापि वक्तव्य किञ्चिद् ब्रूमः ।

१–२. टङ्कापरनामा ब्रह्मनन्दी छान्दोग्योपनिषदः अतिसङ्क्षिप्त-विवरणकारः । तस्य विवरणस्य वाक्यमिति नाम । अस्य वाक्यस्य व्याख्यान द्रमिडाचार्यकृतं भाष्यमिति प्रसिद्धम् । उभाविमावाचार्यौ ग्रन्थौ च विशिष्टाद्वैतपरौ । ग्रन्थेषु उदाहृतेभ्यो वाक्येभ्यस्तथा प्रतीतेः । न त्वद्वैतपरौ । श्रीशङ्करप्राचार्यगौडाचार्यात् प्राक् जगन्मिथ्यात्वनिर्गुण-ब्रह्मवादिनोऽद्वैतस्य अत्यन्ताभावात् । वाक्यग्रन्थात् भाष्यग्रन्थाद्वा तथाविधाद्वैतगमकस्य एकस्यापि वाक्यस्य अद्वैतभाष्यकारेणान्येन वाऽनुदाहरणाच्च ।

३ छान्दोग्योपनिषदि नानाफलानि बहून्युपासनानि विधीयन्ते । तत्र प्रथमाध्यायप्रभृति उपदिष्टाः अन्तरादित्यविद्या, शाण्डिल्यविद्या, मधुविद्या, वैश्वानरविद्या, उपकोसलविद्या, पञ्चाग्निविद्या, सद्विद्या, भूमिविद्या, इतीमाः सर्वा ब्रह्मविद्याः मुक्तिफलाः । विद्या उपासनरूपा एकविधैव । न तु उपासनातिरिक्त ज्ञान नाम मुक्त्युपायोऽस्ति । ब्रह्म च सविशेषमेकमेव । न तु निर्विशेष ब्रह्म किञ्चिदस्ति । षष्ठसप्तमाध्याययो-रिव अष्टमाध्यायस्य एकविद्यापरत्वे वक्तव्ये विद्याद्वयपरत्वकल्पनं, उत्तमाधिकारिविषयनिर्विशेष ब्रह्मविद्यापरतयाऽभिमते चरमेऽध्यायत्रये मध्ये मध्यमाधिकारिविषयदहरविद्योपदेश कल्पन च अद्वैतस्य उपनिष-दभिप्रायबहिर्भूतत्व सुस्पष्टं प्रकाशयति । सविशेषमुपास्यमेकमेव सर्वासूपनिषत्सु उपदिश्यमानं ब्रह्म । निर्विशेष ज्ञेयमित्येवंरूपमन्यत् किमपि कुत्रापि नास्ति ।

४ "वाक्यभाष्ये उभे अपि नष्टे, अदृश्यतां गते" इति वदन्नेव "तयोरुभयोरपि 'उभयविधमपि ब्रह्म स्पष्टं प्रकाशितम्" इति प्रतिजानीते शास्त्री । केवलं साहसमेतत् ।

५ अद्वैतविशिष्टाद्वैत ग्रन्थेषु यानि त वाक्यग्रन्थभाष्यग्रन्थवाक्यान्युदाहृतानि तानि सर्वाणि आलस्यं विना बहु परिश्रम्य उपलभ्य गणयित्वा दर्शितानीति अभिनन्दनीयमेतत् । किन्तु परोन्नीतात्परतयैव तत् कृतमिति शाङ्करस्थान तन्द्भवति । वाक्यग्रन्थे अष्टौ, भाष्यग्रन्थे नव, आहत्य सप्तदश वाक्यानि अद्वैतग्रन्थेषु उदाहृतानि । वाक्यग्रन्थे द्वाविंशतिः, भाष्यग्रन्थे एकादश, आहत्य त्रयस्त्रिंशद्वाक्यानि विशिष्टाद्वैत ग्रन्थेषु उदाहृतानीत्याह । तत्र 'सिद्धन्तु निवर्तकत्वात्' इत्येतत् छान्दोग्यवाक्यकार ब्रह्मनन्दिवाक्यमिति कैयटुकमपि व्याकरणवाक्यकार कात्यायनवाक्यमिति साभिसन्धि वदन् मधुसूदनसरस्वती प्राचामुक्तिः कात्यायनग्रन्थादर्शनजनितभ्रान्तिमूलेति स्फुटयावेदयति । श्रीभाष्येऽनुदाहरणात् नेदं ब्रह्मनन्दिवाक्यमिति शक्यमध्यवसातुम् ।

६-७ श्रीशंकरेण वाक्यकारनामनिर्देशः क्वचिदपि न कृतः । भाष्यकारनिर्देशोऽपि अनेकेषु स्थलेषु 'सम्प्रदायविद' इत्यादिप्रकारेण सामान्यतोऽपि न कृतः । अथापि वाक्यभाष्यग्रन्थवाक्यानि बुद्धौ कृत्वा तत्सच्छायानि वाक्यानि शंकराचार्यो लिखतीति श्रीभाष्ये वाक्यकार भाष्यकारनामनिर्देशपूर्वकं साक्षात् तद्वाक्योदाहरणादेव ज्ञायते ।

८ कप्यासं पुण्डरीकमित्यत्र षष्ठ्यां वाक्यकारेणोक्ता इति, तत्र 'आदित्यश्चिप्त वा श्रीमत्स्यात्' इति अभ्यतमार्थप्रतिपादकं वाक्यम् अथ वाक्यमिति च सुदर्शनसूरिवचनादेव ज्ञायते । स्वयं वाक्यग्रन्थमदृष्टवतोऽपि पूर्वाचार्यकृत ग्रन्थविशेषोक्तत्वादेव तस्य तद् ज्ञातमासीदिति वक्तव्यम् । षट्सु अर्थेषु एकस्मिन्नपि स्वस्य आदरं श्रीशङ्करो न प्रदर्शयति स्म । एकस्मिन् अर्थे प्रसक्त हीनोपमादोषपरिहारमात्रमुवाच ।

एवमप्यत्र सदृशलक्षणादोषोऽस्तीति पूर्वपक्षत्व वदन्ति। अत्र यदुच्यते योगापेक्षया रूढिपूर्वकलक्षणा वरमिति तन्न। कपिशब्दरूढ्यनुसारेण कप्यासशब्देन वानरजघनोपस्थितौ समभिव्याहृत पुण्डरीकपदार्थे तदनन्वयात्, आसशब्देन तदन्वययोग्ये क्षिप्तं विकासितमित्यर्थे शक्त्या उपस्थिते लक्षणया सदृशग्रहणायोगात् तदानुगुण्येन कपिशब्दस्य यौगिकादित्यपरत्वाश्रयणस्यैव युक्तत्वात्। योगापेक्षया रूढिपूर्वकलक्षणा वरमिति च नास्ति। न हि शूद्रशब्दस्य स्वघटितचातुर्वर्ण्यघटकत्वेन क्षत्रिये लक्षणा आश्रीयते। अपि तु यौगिकत्वमेव। शुगस्येति सूत्रकरणात्। कपिपदस्य यौगिकार्थेषु क्वापि अल्पमपि क्लिष्टत्व नास्ति।

९ 'स्याद्रूपं कृतकमनुग्रहार्थं तच्चेतसामैश्वर्यात्'। 'रूप वाऽतीन्द्रियमन्तःकरणप्रत्यक्ष तन्निर्देशात्।' इति ब्रह्मनन्दिवाक्यद्वय भगवद्रामानुजेनोदाहृतत्वादेव ज्ञायते। अत्र वाक्यद्वये प्रथम पूर्वपक्षात्मकम्। अत एवात्र द्रमिडभाष्यम्—'नानित्य, न मायामयम्। अञ्जसैव विश्वसृजो रूपम्। तत्तु न चक्षुषा ग्राह्यम्। मनसा त्वकलुषेण साधनान्तरवताः गृह्यते।" इति।

१० कार्याधिकरण इवात्र वाक्यग्रन्थेऽपि पूर्वपक्षमेव स्वमतानुरोधेन सिद्धान्त करोति श्रीशङ्करः। तद् विपरीतार्थवर्णनमिति प्रदर्शनायैव भगवद्रामानुजमुनिः वाक्यभाष्यग्रन्थमुपन्यस्य पूर्वोत्तरपक्षौ विभज्य दर्शयति। बुद्धिपूर्वं श्रीशङ्कर इह वाक्यभाष्यग्रन्थविरुद्ध भाषते।

११ "रूप वा" इति वाक्य 'रूप च' इति विपर्यस्यति शास्त्री। साहसमेतत्। विस्तरेयेद निरूपितं प्राक्तने पञ्चत्रिंशे पर्वणि।

१२-१४ 'यथाभूतवादि हि शास्त्रम्' इति द्रमिडाचार्योक्तौ यथाभूतमिति पारमार्थिकमित्येवार्थः। लोकव्युत्पत्तिसिद्धत्वात्। व्यावहारिकमित्यपि तदेकार्थम्। अपारमार्थिकस्य व्यवहारानुपयुक्तत्वात्। व्यावहारिकस्य अपारमार्थिकत्वायोगात्। अद्वैतिभिः क्रियमाणस्य व्यावहारि-

स्त्वपारमार्थिकत्वयाभेदकल्पनस्यात्यन्तमर्वाचीनत्वेन वाक्यद्रमिडभाष्य काले अप्रसिद्धत्वात्। 'न। सव्यवहारमात्रत्वात्' इति वाक्यस्य सत्कार्यवादस्थापकत्वमेव, न तु मिथ्यात्वसाधकत्वमिति निरूपितत्वात्। वाचारम्भणं विकारो नामधेयमिति श्रुतिवाक्यार्थनिरूपणेनैव एतद्वाक्यमपि सुनिरूपितार्थमिति एतद्विवरणे पूर्वाचार्याणामप्रवृत्तिः। संव्यवहारशब्दश्रवणात् अद्वैतानुकूलमेतदिति मत्वा अमलानन्दप्रभृतयः पूर्वग्रन्थेषु पठितमिदं स्वयमपि पठन्ति।

१५-१६ 'युक्तं तद्गुणकोपासनात्' इति वाक्यं तस्य द्रमिडभाष्यं च हठादद्वैतं प्रति कर्षन्ति सङ्क्षेपशारीरकादिकारा इति पूर्वं ३० प्रभृति पदसु पर्वसु निरूपितमन्त्रं स्मः। अन्तर्गुणेति भाष्ये गुणशब्देन सर्वविद्यानुयायिनः सत्यज्ञानानन्दामलत्वरूपाः पञ्च स्वरूपनिरूपकगुणाः सर्वजगत्कारणत्वादयः तत्तत्प्रकरणप्रतिपाद्या विशेषगुणाश्च विवक्षिता इति ग्रन्थेषु स्पष्टमुक्तम्। 'परे तु कोऽसौ गुण इति प्रश्नस्य प्रतिवचनमनुक्त्वैव गुणस्यान्तर्विद्यमानत्वमात्रं वदन्त" इत्यादि लिखति शास्त्री। "नैष स्थाणोरपराधो यदेनमन्धो न पश्यति।"

१७ सिद्धन्तु निवर्तकत्वादिति व्याकरणवाक्यं, न तु छान्दोग्य वाक्यमित्यवोचाम। तस्य च, भक्तिविरोधिकर्मनिवर्तकत्वादुपासनात्मकस्य वेदनस्य मोक्षनिरूपत्वादिशास्त्रप्रामाण्य स्थितमेवस्येवमर्थकत्वात् नास्ति अद्वैतसम्मतमिथ्यासंसारनिवर्तकत्वपरत्वम्। अस्य मन्नन्दि वाक्यत्वाभावादेव सङ्गतार्थत्वेऽपि श्रीभाष्यकारैरनुदाहरणम्। व्याधकुल वृद्धराजकुमार दृष्टान्तः श्रीभाष्यकारैः समन्वयाधिकरणे श्रादेशिकचरणैः श्रीसारशास्त्रे च सुनिरूपितः।

१८ 'आत्मेत्येव तु गृह्णीयात्' इति वाक्येन परमात्मन जीवाभिन्नतया चिन्तनमुदितं वाक्यकारै', इत्याह। केन शब्देनात्र परमात्मनो जीवाभेदो बोध्यते? उपासकः परमात्मानं स्वस्य आत्मेति गृह्णीयात्,

इति हि अस्य वाक्यस्यार्थः। स स्वस्य आत्मेत्युक्ते स्वयं तस्य शरीरमित्यर्थाल्लभ्यते। अभेदस्य तु कः प्रसङ्गः। 'सर्वस्य' तन्निष्पत्तेरिति हेतुनिर्देशाच्च भेद एव प्रस्फुटः। अद्वैतसम्प्रदायविरुद्धं चेद परमात्मनः जीवाभिन्नतया चिन्तनाभिधानम्। यदाह श्रीशङ्करः 'न ह्यीश्वरस्य संसार्यात्मत्व प्रतिपाद्यत इत्यभ्युपगच्छामः। किं तर्हि? संसारिणः संसारित्वापोहेन ईश्वरात्मत्व प्रतिपिपादयिषितमिति।' इति आत्मेति तूपगच्छन्तीत्यत्र।

१९. सगुणपराणि ब्रह्मनन्दिवाक्यानि बहूनि सन्ति, उपलभ्यन्ते चेति सम्प्रतिपन्नम। एकमपि तु निर्गुणपरं वाक्यं नास्ति। न केनचिदुदाहृतम्। तत्र 'अद्वैतिभिरनूदित निर्गुणपरवाक्यभाष्यग्रन्थवाक्यजातन्तु' इत्यादिलेखन विस्मयाय कल्पते। निर्गुणगन्धोऽपि नाघ्रातो वाक्यभाष्यकाराभ्याम्। निर्गुणवादस्य अत्यन्तमर्वाचीनत्वात्।

२०. 'अञ्जसैव विश्वसृजो रूपम्' इति सिद्धान्त भाष्यम्। इतः पूर्वं पूर्वपक्षनिराकरणपर भाष्यम्—'न कार्यं न वा मायामयम्' इति। 'तस्य च रूपस्य अनिदंतादि वाक्यकारेणैव प्रतिपिद्धम्' इति हि वेदार्थसंग्रहश्रीसूक्तिः। 'तद्रूपस्य कार्यत्वं मायामयत्वं वेति निरसनीयं मतमुपन्यस्य' इति सारश्रीसूक्तिश्च। एवं च न कार्यं न वा मायामयं, अञ्जसैव विश्वसृजो रूपम' इत्येव भाष्यग्रन्थ इति स्पष्टम्। अत्र 'न मायामयम्' इत्यस्य कल्पितत्वकल्पन कल्पकस्य अल्पता कल्पयति।

२१ 'नमः प्रवर गुणैभास्पदाय' इत्यादि द्रमिडभाष्यस्थमेव मङ्गलम्। द्रमिडभाष्यकारभक्तः मीमांसान्यायकोशकारः तदेव वाक्यरूपं मङ्गल तत उद्धृत्य स्वग्रन्थारम्भे निवेशयामास। एतल्लेखको वा कश्चित्। भास्करादनन्तरकालिकेषु वेदान्त ग्रन्थकारेषु विना भगवद्रामानुज अन्यो यः कोऽपि वाक्यग्रन्थ वा भाष्यग्रन्थ वा नैव अवलोकितवानिति निश्चीयते।

२२ छान्दोग्य वा अन्या वा उपनिषत् अद्वैतपरा न काचिदस्ति। अतएव तद्विवरणपर वाक्यं एतद्विवरण भाष्य च नैवाद्वैतप्रतिपादकम्। विस्तृत ब्रह्मसूत्र वृत्तिकारबोधायनमतानुसारिणी इमे द्वे चिरन्तनवैदिकसम्प्रदायसिद्ध विष्णुविशिष्टाद्वैतनिष्ठे। ब्रह्मनन्दिद्रामडाचार्यौ ब्रह्मसूत्रवृत्तिकाराविति प्राज्ञः कोऽपि न वदन्ति।

२३ यामुनाचार्य आत्मसिद्धौ द्रमिडभाष्यकार इति शठकोपमुनिमाहेति विकटरवीना भणितुमुचितम्। न गम्भीरविमर्शनप्रवणाना विचक्षणानाम्। आत्मसिद्धौ भाष्यकारेणेत्येव पाठ उपलभ्यते। तत्र हास्यपरतयाऽपि अन्यार्थकथनमशक्यम्।

२४ जात्यन्धा रूपविशेषविषय सिद्धान्तमिव शास्त्री शठकोपमुनिकृतदिव्यप्रबन्धविषय उपहास्य कल्पनाजाल करोति। शठकोपगाथासहस्रस्य श्रीवत्साङ्कमिश्रकृतं व्याख्यानं नैवासीत्। अत्र वक्तव्यं सर्वं पूर्वं ६० पत्रादिषु सविस्तरमुक्तम्।

२५ पाञ्चरात्रस्य प्रामाण्ये अप्रामाण्ये वा औपनिषदस्य विशिष्टाद्वैतसिद्धान्तस्य न कश्चन विशेष। न ह्यय सिद्धान्त पाञ्चरात्रप्रामाण्यावष्टम्भेन प्रवृत्त। न हि श्रीभाष्य पाञ्चरात्राधिकरण विनाऽन्यत्र क्वापि पञ्चरात्रवचन प्रमाणतयोदाहृतम्। अथापि परमतप्रतिक्षेपपरे पादे विचारात् पाञ्चरात्रप्रामाण्यमपि प्रतिक्षेप्यमिति केषाञ्चिद् भ्रमं सूत्राणा यथावद्व्याख्यानेन निवर्तयन्त यामुनाचार्य प्रभृतय पाञ्चरात्राप्रामाण्यमेव प्रतिक्षेप्यं, न तु प्रामाण्यमिति सूत्रकाराभिमत वस्तुतत्त्वं निरूपितवन्तः। श्रीवत्साङ्कमिश्राश्च विरुद्धांशे अप्रामाण्य कृत्वाचिन्तान्येन व्याचक्षत। बोधायनवृत्तेरत्यन्त विरलप्रचारत्वाद् भास्करादिभिरनुदाहरणम्।

२६ अतिविस्तरभीरुभि यत्र अवश्य मूलग्रन्थवाक्यमुदाहर्तव्य भाति तत्रादा क्रियते। अन्यत्र तदुक्ता अर्था तन्नामनिर्देश विना स्ववा

क्यैरेव प्रतिपाद्यन्ते। 'तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति प्रतिज्ञाय अभिहिताः सूत्रार्थाः सर्वे पूर्वाचार्योक्ता एवेति हि स्पष्टमवगम्यते। अथशब्दस्य कर्मविचारानन्तर्यार्थत्वं, मुक्तिसाधनतया वेदान्तविहितस्य वेदनस्य उपासनरूपत्वं, उपासनस्य च कर्मापेक्षत्वं, अर्चिरादिमार्गेण देशविशेषे मुक्तेः प्राप्यत्वं च वृत्तिवाक्यभाष्यग्रन्थोदाहरणपूर्वकं विस्तरेण निरूपितवद्भिः सर्वपूर्वाचार्यमतविरुद्धत्वमद्वैतस्य सुप्रदर्शितम्। प्रथमसूत्रे प्रथमपदस्य स्वरसप्राप्तं कर्मविचारानन्तर्यार्थत्वं प्रतिक्षिपन्तः स्वबुद्ध्या अर्थान्तरं कल्पयन्तश्चाद्वैतिनः चिरन्तनवेदान्तसम्प्रदायप्रतीपगामिन इति सर्वसुग्रहमेतत्। एतद्ज्ञापनायैव श्रीभाष्ये अथशब्दार्थविवरणावसर एव अद्वैतस्य विस्तरेणापन्यस्य निरसनम्।

२७ श्रीकण्ठः सुदर्शनसूरिवेङ्कटनाथादिभ्यः अर्वाचीन इति सम्यङ् निरूपितवन्तः स्मः।

२८. विशिष्टाद्वैतमतचोरः श्रीकण्ठ इति कैश्चिदुच्यमानं पारमार्थिकमेव। न तत् केनापि प्रतिक्षेप्तुं शक्यम्। स्वसिद्धान्तस्य मूलं इत्थं प्रकाशयति भगवद्रामानुजमुनिः—

> तदेतत् नानाविधानन्तश्रुतिनिकर शिष्टपरिगृहीततद्व्याख्यानपरिश्रमादवधारितम्, इति, भगवद्बोधायन टङ्क द्रमिड गुहदेव कपर्दि भारुचि प्रभृति अविगीत शिष्टपरिगृहीत पुरातन वेदवेदान्त व्याख्यान सुव्यक्तार्थ श्रुतिनिकर दर्शितोऽयं पन्थाः, इति च।

अत्र प्रथमवाक्ये तत्त्वविषये सामान्यत उक्तमेव द्वितीयवाक्ये उपायविषये विशेषत उक्तम्। भगवद्बोधायन टङ्क द्रमिडाः पुरातन वेदान्त व्याख्यानकाराः। गुहदेवः कपर्दी च पुरातनवेदव्याख्यानकारौ। तत्र गुहदेवः साक्षाद् वेदव्याख्यातेति रामाण्डारवृत्तितो ज्ञायते। कपर्दी आपस्तम्बश्रौत सूत्र व्याख्यातेति एतद्भाष्यस्याद्योपलम्भाद् ज्ञायते।

स साक्षाद् वेदव्याख्याननमन्यत् कृतवानिति न ज्ञायते। श्रौतसूत्रभाष्यमेव बहूनां वेदभागानां विवरणात्मकतया वेदव्याख्यानमित्युक्तमिति मन्तुमुचितम्। भाष्यकारैरपि वेदव्याख्यानकार इति भाति। वेदव्याख्यातारः सर्वे वेदान्तविद एव आसन्। वेदभागा अपि हि बहवः वेदान्तार्थगर्भा भवन्ति। अतो व्याख्यातृभिः वेदान्तबोध्या अर्थास्तत्र प्रतिपादनीया भवन्ति। तस्माद् वेदान्तव्याख्यानानीव वेदव्याख्यानान्यपि तत्त्वं जिज्ञासमानानां उपकारकाणि उपजीव्यानि च भवन्ति। अद्वैतप्रादुर्भावात् प्राक् वेदान्तदर्शनं विप्रतिपत्तिरहितं एकरूपमासीत्। पदार्थवाक्यार्थविषये भेदः कश्चित् कामं स्थितः स्यात्। तत्त्वहितपुरुषार्थेषु तु एकरूपा सर्वेषां मतिः। विधिर्थिधेयस्तकश्च वेद इत्युक्तरीत्या ब्रह्मसूत्राणामपि वेदान्तेऽन्तर्भावात् तेषां प्रथमव्याख्यानकारात् भगवद्बोधायनात् प्रभृति प्रवृत्तः वेदान्तदर्शनसम्प्रदायः टङ्कद्रमिडादिगुरुपरम्परया चिरमनुवृत्तः क्वापि सन्तस्थे। ततः श्रीशठकोपमुनिद्वारा पुनः प्रावर्तत। एतत्कृतप्रबन्धानां द्राविडभाषारूपत्वेऽपि ते वाचा च तेनोपदिष्टार्थाः चिरन्तनसम्प्रदायप्राप्ता वेदान्तार्था एव। मनागपि भेदो नासीत्। एवमेकरूपतया अनुवृत्तं वेदान्तदर्शनं शाङ्कराद्वैतप्रादुर्भावानन्तरं अत्यन्तलोपावस्थाप्रसक्तिमलभत। तदात्वे यामुनाचार्याः सिद्धित्रयादिग्रन्थकरणेन प्रवचनेन च पुनः प्राचीनसम्प्रदायप्रतिष्ठापने अयतन्त। तेषां प्रशिष्याः भगवद्रामानुजमुनयश्च श्रीभाष्यादिप्रणयनेन तं प्रतिष्ठापयन्ति स्म। तस्माद् विशिष्टाद्वैतमिति पश्चाल्लब्धसंज्ञमिदं वेदान्तदर्शनं चिरन्तनमिति ज्ञेयम्।

२९--३० भगवद्बोधायनं तत्कृतवृत्तिग्रन्थादिविषये शास्त्रिणा कृता कुत्सितविपरीतवादाः सर्वे विध्वस्ताः।

३१ मीमांसाया देवताकाण्डो नाम कश्चिद् भाग आसीदिति वेदान्तग्रन्थकारैः प्रायः सर्वैः तन्निर्देशात् अवगम्यते। तथा सङ्कर्षकाण्ड

इतरपि। उभयनामाऽय एक एव भाग इति बहूना मात । परन्तु अद्य सङ्कर्ष काण्डमध्योपलभ्यमानत्वात् तत्र देवता काण्डप्रतिपाद्यतया ये अर्थाः प्रसिद्धा. तेपामदर्शनात, सङ्कर्पस्य जैमिनिकृतत्वेन देवता काण्डस्य च काशकृत्स्नकृतत्वेन प्रसिद्धत्वाच्च मिथो भिन्नौ द्वाविमौ काण्डौ। तत्र देवताकाण्डोऽत्यन्त लुप्त इति वक्तव्य भवति।

३२. 'वृत्तात् कर्माधिगमादनन्तर ब्रह्मविविदिषा' इति वृत्तिकार-वाक्य श्रीभाष्ये उद्धृत वस्तुतो न वृत्तिकारवाक्यम्। भास्करभाष्य दृष्ट्वा कल्पितमित्याह शास्त्री। अस्य विप्रलम्भकत्व ६२ पर्वणि प्रदर्शितम्।

३३. सम्प्रदायबाह्योऽय श्रीसुदर्शनसूरिवाक्य यथावदवगन्तु न क्षमत इत्युक्तवन्तः स्मः। सूत्रभाष्ये समन्वयाधिकरणान्ते पठित श्लोकत्रय सुन्दरपाण्डयापरनामधेय द्रमिडाचार्यकृत, यद्वा शङ्करा-चार्येणैव कृतमित्यब्रूम।

३४ व्यासपूजाकाले अद्वैतिभिः पूज्यमानो द्रमिडाचार्यः ब्रह्म-नन्दिर्विनाकृतत्वात् न भाष्यकारद्रमिडाचार्यः अपि तु श्रीशङ्कर एवेति प्रत्यपादयाम।

३५ अद्वैत औपनिषद न भवति। जगद्ब्रह्मणोर्भेदस्य, सृज्य-मानतया जगतः सत्यत्वस्य, जीवभेदस्य, मुक्त्युपायतया उपासनस्य, देशविशेषे प्राप्यस्य सगुणब्रह्मप्राप्तिरूपस्य फलस्य च तत्रोपदेशात्। एषा विशदीकरणाय प्रवृत्तं ब्रह्मसूत्रमपि अद्वैतं नानुगृह्णाति। ज्ञान-वासिष्ठ केवलकर्मठाना ज्ञाने आभिमुख्यजननाय प्रवृत्तं अर्थवादरूप न तत्त्वनिर्णयपरम्। उपवर्षस्य अद्वैतस्य च कालिकसम्बन्धोऽपि नास्ती-त्युक्तम्। गौडपादोपज्ञं प्रवृत्तमिदमिति परमार्थोऽयम्। श्रीशङ्करादिभिः प्रौढैर्बहुभिरपि ग्रन्थकारैः अद्याप्यलब्धप्रतिष्ठ तु तत्। सहस्रच्छिद्रतया अतिदुर्बलत्वात्। '*अनाद्यविच्छिन्नसम्प्रदायागत*' मिति मिथ्या। जग-

स साक्षाद् वेदव्याख्यानमन्यत् कृतवानिति न ज्ञायते। श्रौतसूत्र भाष्यमेव बहूनां वेदभागानां विवरणात्मकत्वात् वेदव्याख्यानमित्युक्तमिति ग्रहीतुमुचितम्। भारुचिरपि वेदव्याख्यानकार इति भाति। वेदव्याख्यातारः सर्वे वेदान्तविद एव आसन्। वेदभागा अपि हि बहवः वेदान्तार्थगर्भा भवन्ति। अतो व्याख्यातृभिः वेदान्तबोध्या अर्थास्तत्र प्रतिपादनीया भवन्ति। तस्माद् वेदान्तव्याख्यानानीव वेदव्याख्यानान्यपि तत्त्वं जिज्ञासमानानां उपकारकाणि उपजीव्यानि च भवन्ति। अद्वैतप्रादुर्भावात् प्राक् वेदान्तदर्शनं विप्रतिपत्तिरहितं एकरूपमासीत्। पदार्थवाक्यार्थविषये भेदः कश्चित् क्वापि स्थितः स्यात्। तत्त्वहितपुरुषार्थेषु तु एकरूपा सर्वेषां मतिः। विधिर्विधेयस्तर्कश्च वेद इत्युक्तरीत्या ब्रह्मसूत्राणामपि वेदान्तेऽन्तर्भावात् तेषां प्रथमव्याख्यानकारात् भगवद्बोधायनात् प्रभृति प्रवृत्तः वेदान्तदर्शनसम्प्रदायः टङ्कद्रमिडादिगुरुपरम्परया चिरमनुवृत्तः क्वापि सन्तस्थे। ततः श्रीशठकोपमुनिद्वारा पुनः प्रावर्तत। एतत्कृतप्रबन्धानां द्राविडभाषारूपत्वेऽपि तैः वाचा च तेनोपदिष्टार्था चिरं तत्सम्प्रदायप्राप्ता वेदान्तार्था एव। मनागपि भेदो नासीत्। एवमेकरूपतया अनुवृत्तं वेदान्तदर्शनं शाङ्कराद्वैतप्रादुर्भावानन्तरं अत्यन्तलोपावस्थां सत्त्विमलभत। तदात्वे यामुनाचार्याः सिद्धित्रयादिग्रन्थकरणेन प्रवचनेन च पुनः प्राचीनसम्प्रदायप्रतिष्ठापनं अयतन्त। तेषां प्रशिष्याः भगवद्रामानुजमुनयश्च श्रीभाष्यादिप्रणयनेन तं प्रतिष्ठापयन्ति स्म। तस्माद् विशिष्टाद्वैतमिति पश्चाल्लब्धसंज्ञमिदं वेदान्तदर्शनं चिरन्तनमिति ज्ञेयम्।

१९ २० भगवद्बोधायनं तत्कृतवृत्तिग्रन्थादिविषये शाक्तिणा कृताः कुत्सितविपरीतवादाः सर्वे विध्वस्ताः।

२१ मीमांसायां देवताकाण्डं नाम कश्चिद् भाग आसीदिति वेदान्तग्रन्थकारैः प्रायः सर्वैः तन्निर्देशात् अवगम्यते। तथा सङ्कर्षकाण्ड

न्मिथ्यात्ववादस्य सुगतापज्ञत्वात् । गौडपादेन ततो गृहीतत्वात् । परमानन्दावहमित्यपि मिथ्या । अहमर्थ विनाशधियो दुःखावहत्वात् । परमशान्तिप्रदमित्यपि तथा । तदविगतवतस्तत्र घोरपापकर्मनिरति दर्शनात् । 'अद्वैतदर्शने यथाधिकार ससेव्य' इत्यर्थशून्यं वचः । इहा मुत्रफलभोगविराग शमदमादिसम्पत्तिश्च यस्य स्त स किल तत्सेवना धिकारी । किमयमधिकारस्तत्वाप्तिः । अथवा अयं यस्य कस्यचिल्लोके । नित्यमुक्तस्य अद्वैतिनः कृत्यं च किञ्चिन्नास्ति, प्राप्यं च । तत्र कृत कृत्या प्राप्तप्राप्याश्च भवन्त्विति किं प्रार्थ्यते ?

२६ 'ऋषेरभिप्राय ऋषिरेव च वदितुमर्हन्ति, न तु अधमतिरितरो जनः' इत्यादि वदन्त न अद्वैतादिषु दर्शनान्तरेषु असूयालवः । न हि साङ्ख्यसौगतादि निरस्यन् भगवान् बादरायणः तस्मै अभ्यसूयति । अपि तु लोकानुग्रहाय वेदान्तदर्शनस्य यथावत् प्रतिपादने यथा बादरायण तथैव इमे श्रद्धालवः । नहि निन्दान्यायः प्रसिद्ध । तत्र क्रोधः पामर लक्षणम् ।

२७ जगद्गुरुपदे स्थिता अपि अयशात् पश्चे वर्तन्ते । अद्वैत सेषा स्वसिद्धान्ते । तेन तथा तत्र आदरो । यायः आवश्यक पर तु तस्य यथावत् अवगमे, प्रतिष्ठापने, तदुपयोगितया मतान्तरविमर्शे च पर पण्डिताः प्रोत्साहनीयाः । न तु तत्सर्वं विहाय पाण्डित्यनिर्भाक्- यया निष्कारणपरपरिवादमात्रे । एतद्विहाय अन्यत् किमपि न कृत प्रसिद्धाश्रेयदर्शनकृता । स्वकीयत्वाभिमानेन मिथ्याप्रशंसामात्र कृत्या अद्वैतस्य परित्राण दुष्करम् । अद्वैतज्ञा सम्प्रति विरला । तेन स्वमतो पपादनादपि, न्याय्येन मार्गेण परमतखण्डनादपि पामरवृत्त्या परमत प्रवर्तकाणामाचार्याणां परिवादेषु रमन्तेतराम् । शमप्रधानै लोकहित कामैः ईदृशप्रवृत्तिनिरोधे परमो यत्न आस्थेय ।

२८ शाखी अद्वैती तद्ग्रन्थाभ्यासी । विशिष्टाद्वैतग्रन्थेषु अद्वैतस्य

खण्डनात् तत्र तस्य प्रबलो द्वेषोऽजायत। ब्रह्मसूत्राणां प्रथमवृत्तिकाराद् भगवद्बोधायनादारभ्य प्रवृत्तस्य सम्प्रदायस्यानुरोधे स्वयं अत्यन्त-श्रद्धाप्रकाशनेन अद्वैतस्य तदननुरोधित्वप्रदर्शनेन च महतामाचार्याणां विषये महती असूया अजनि। अस्यामवस्थायां प्रोत्साहनमपि किञ्चिद्-लभ्यत। एषामनुरूपं विमर्शं ग्रन्थं च कर्तुं प्रावर्तत। तत्र अनुसृता पद्धतिरियम्—१ प्राचीनाचार्येषु येषां नाम अद्वैतग्रन्थेषु निर्दिष्टं ते अद्वै-तिनो वक्तव्याः। २ येषां नाम न निर्दिष्टं ते गगनकुसुमायमानाः परैः कल्पिता वक्तव्याः। ३ ग्रन्थान्तरेषु तन्नामनिर्देशदर्शने यथाकथञ्चित् तेषां ग्रन्थानामप्रामाण्यं अत एवानुपादेयत्वं प्रतिपादनीयम्। ४ यानि पूर्वाचार्यवचनानि अद्वैतग्रन्थेषु अनुदाहृतानि विशिष्टाद्वैतग्रन्थेषु उदाहृतानि तानि परैः कल्पितानि वाच्यानि। ५ उभयत्रोदाहृतेषु वचनेषु यत्र अद्वैतग्रन्थोक्तार्थविरुद्धपरतयार्थयोजनं क्रियते तत्र वचनविपर्या-सादिकं परैः कृतमिति कृत्वा अद्वैतानुकूलतया अन्यथाकरणमावश्य-कम्। अद्वैतविरुद्धोऽर्थो नैव ग्राह्यः। ६ परकीयाः सर्वे पूर्वाचार्याः अनृत-वादिनः वञ्चनपराः अयोग्याः प्रकटनीयाः। ७ यावच्छक्ति तेषां गर्हा कर्तव्या।

इत्थं सप्तलक्षणां पद्धतिमाश्रित्य मतद्वयसम्बन्धिषु ग्रन्थेषु अन्वेषणं बहु कृत्वा तत्त्वं अतत्त्वमिव अतत्त्वं तत्त्वमिव प्रदर्शयन् द्रमिडात्रेयदर्शनं शास्त्री प्रकटयामास। एतेनास्य ग्रन्थस्य गौरवं सुव्याख्यातम्। "नारा-यणावतारस्य व्यासमहर्षेः अभिप्रायं शङ्करावतारो भगवत्पाद एव तत्त्वतो वेदितुमर्हति" इत्याह। सत्यम्। कुर्मस्तावदेवम्। स वेदैव। परं तु तदनुसारेण ग्रन्थान् न चकार। 'त्वं हि रुद्र महाबाहो मोहशास्त्राणि कारय' इति भगवदाज्ञावशंवदः दुष्कृद्विनाशाय मोहग्रन्थानेव चकार। कथमिदमवगम्यत इति चेत् उपनिषद्ब्रह्मसूत्रखण्डनरूपत्वात् तद्ग्रन्था-नाम। सर्वपूर्वाचार्यमतविरुद्धमतप्रवर्तकत्वात्। वेदबाह्यसुगतमतपरि-

महाय। पाद्मोत्तरखण्डस्य २३५ २३६ अध्यायौ इह पठितव्यौ।

२३६ अध्यायस्था केचन श्लोका उदाह्रियन्ते—

मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते।
मयैव कथ्यते देवि कलौ ब्राह्मणरूपिणा॥

अपार्थं श्रुतिवाक्यानां दर्शयल्लोकगर्हितम्।
कर्मस्वरूपत्याज्यत्वं यत्र वै प्रतिपाद्यते॥

परेशजीवयोरैक्यं मयाऽत्र प्रतिपाद्यते।
ब्रह्मणोऽस्य परं रूपं निर्गुणं वक्ष्यते मया॥

सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे।
वेदार्थवन्महाशास्त्रं मायावादमवैदिकम्॥

मयैव वक्ष्यते देवि जगतां नाशकारणम्॥

(कलकत्ता—मनसुख राय मोर—प्रकटितायां गुरुमण्डलग्रन्थमालायां अष्टादशे पुष्पे ८१६ पृष्ठे।)

३६ विप्रलम्भपदवीवैदेशिकैर्देशिकैः निराडम्बरसमञ्जसार्थवाक्यविन्यासतत्त्वरैः प्रतिपादिते वस्तुतत्त्वे दुर्विमर्शकारिणा शास्त्रिणा, परिपूते धान्यराशौ अवकरराशिमभिवर्षता दुर्वातेनेव जाता अशुद्धि परिशिष्टवता इद सानुब धं शतपर्णं व्यलखि। मन्ये एतदवलोकनेन शास्त्रिणोऽपि धियं प्रसन्नां करिष्यति।

"जयति यतिराजसूक्ति-
जयति मुकुन्दस्य पादुकायुगली ।
तदुभयधनास्त्रिवेदी-
मवन्ध्ययन्तो जयन्ति भुवि सन्तः ॥"

श्री

# उद्यानपत्रिका

नाम

संस्कृतमासपत्रिका

वार्षिकमूल्यम्—३ रू०

---

# विशिष्टाद्वैतकोशः

मूल्यम्—२० रू०

---

# मीमांसाभ्युदयः

मीमांसाशास्त्रसम्बन्धिग्रन्थग्रन्थकार-

प्रमाणप्रमेयादिप्रतिपादको

विमर्शग्रन्थ । मूल्यम्—२ ५० रू०

---